पुनःसिंहावलोकनन्यायेननिर्गुणस्यब्रह्मणोवाच्यत्वंयुक्त्यंतरेणप्रतिपादयत्सूत्रमुपन्यस्यतदुपात्तश्रुतिमेवो दाहरति ॥ श्रुतत्वाच्चेति ॥ एकःप्रधानःसर्वभूतेषुगुप्तयाऽवस्थितः ॥ नकेवलंभूतेषुसर्वव्यापीच ॥ नसर्वभूतेषुस्थितिमात्रंसर्वभूतांतर्यामीच॥अध्यक्षोऽधिपतिः ॥ सर्वभूतानामाश्रयः ॥ सर्वंसाक्षादीक्षतइतिसाक्षी॥ चेताज्ञानरूपः ॥ केवलोजडामिश्रः ॥ निर्गुणःसत्त्वादिगुणहीनइतिश्रुतौनिर्गुणस्यश्रुतत्वाच्चनासावशब्दइ

एकोदेवःसर्वभूतेषुगूढःसर्वव्यापीसर्वभूतांतरात्मा ॥ कर्माध्यक्षःसर्वभूताधिवासःसाक्षी

## ॥ ॐ श्रुतत्वाच्च ॐ॥ ११॥

चेताकेवलोनिर्गुणश्चेति ॥ नह्यशब्दःश्रूयते ॥ नचाप्रसिद्धंकल्प्यम् ॥ सर्वशब्दावाच्यस्यलक्षणाऽयुक्तेः ॥ ११ ॥ अ०५ ॥

त्यर्थः ॥ श्रुतत्वेप्यशब्दःकिंनस्यादित्यतआह ॥ नहीति ॥ अशब्दस्यापिब्रह्मणोलक्षणयाश्रुतत्वंकिंनस्या दित्यतआह ॥ नचेति ॥ अवाच्यस्यलक्ष्यत्वाप्रसिद्धेः ॥ नाप्रसिद्धमवाच्यस्यब्रह्मणोलक्ष्यत्वंकल्प्यमि त्यर्थः ॥ ननुगंगापदावाच्यस्यापितीरस्यतल्लक्ष्यत्वंप्रसिद्धमितिवेदावाच्यस्यापिब्रह्मणस्तल्लक्ष्यत्वंकिंन स्यादित्यतआह ॥ सर्वेति ॥ भवेदेवतीरादेर्गंगादिपदावाच्यस्यापिलक्ष्यत्वंपदांतरवाच्यत्वान्नतुब्रह्मणः ॥ तस्यसर्वशब्दावाच्यत्वात् ॥ सर्वशब्दावाच्यस्यापिलक्षणायाविप्रतिपन्नंनलक्ष्यंकेनापिपदेनावाच्यत्वाद्धि

धर्म्येणतीरवदितियुक्तिविरुद्धत्वादित्यर्थः ॥ सर्वपदार्थानांलक्षणायोग्यत्वान्नसपक्षसत्त्वम् ॥ ननुवाच्यत्वंलक्षणायांकथमुपयोगियेनतदभावेनलक्षणायोगः ॥ किंप्रयोजकांतरमाशंकसेप्रयोजकत्वप्रकारमेववापृच्छसि ॥ नाद्यः॥ केवलान्वयिनिकेवलव्यतिरेकिणिचोपाधिशंकानुदयात् ॥ केवलान्वयिनिसाध्याभावाभावेनतदविनाभाव्यभावत्वाभावात् ॥ केवलव्यतिरेकिणिचसपक्षाभावेनव्याप्त्यनिश्चयात् ॥द्वितीयेव्याप्तिरेवेतिब्रूमः ॥ किंनिबंधनोऽसावपीतिचेत् ॥ न ॥ द्रव्यत्वसंयोगित्वादौकिंनिबंधनाअवाच्यस्यलक्षणायांकिंलक्ष्यमितिप्रश्नस्यनिरुक्तत्वात् ॥ नचतदेवपदंवक्तुंयुक्तम् ॥ नहिगंगापदेनकिंलक्ष्यमितिप्रश्नस्यगंगैवेत्युत्तरम् ॥ अथतत्रपदांतरम् ॥ तेनापिकिंलक्ष्यमितिप्रश्नस्योत्तराभावात् ॥अथकिंचित्पदमस्तिवाचकमितिचेत् ॥ किंपदांतरेणापराद्धम् ॥ लक्ष्यपरपदस्यस्वरूपमात्रपरस्यवाचकत्वंयुक्तम् ॥ पदांतराणांगुणाभिधायिनांनिर्गुणेवृत्तौलक्षणैवशरणमितिचेन्न ॥ लक्षणपदानामपिलक्ष्यगतविशेषावलंबेनवाचकत्वोपपत्तेः ॥ लक्षणपदानांस्वरूपमात्रपरतेतिचेन्न ॥ पर्यायतापातात् ॥ प्रयोजनबाहुल्यादपर्यायतेतिचेन्न ॥ वाच्येविशेषराहित्येप्रयोजनशतेनापिपर्यायताऽपरिहारात् ॥स्वरूपमात्रकथनस्यप्रश्नाननुगुण्याच्च ॥ नहिस्वरूपमज्ञात्वाकश्चंद्रइतिप्रश्नोयुज्यते ॥ अतोनलक्षणपदानामपिलक्षकत्वमित्यस्त्येववाच्यत्वस्यलक्षणोपयोगः ॥ तस्माद्वाच्यत्वाद्ब्रह्मणोऽखिलजगत्कारणतयाशास्त्रयोनितायुक्तेतिलक्षणंनातिव्याप्तम् ॥ ततश्चतद्युक्तब्रह्मणोविष्णुत्वाद्युक्तैवतज्जिज्ञासेतिसिद्धम् ॥ ११ ॥ अ० ५ ॥

रूपभूतआनंदः॥ तत्तत्प्रवर्तकतयाचतत्तद्यपदेशइति ॥ब्रह्मणोवयवत्वोक्तावपिकिमर्थमानंदमयस्यविष्णुत्व
समर्थनमित्यतआह॥ नहीति॥ यद्यानंदमयोब्रह्मणोन्यस्तदानब्रह्मजिज्ञासासंभवति॥ अवयविनएवानंदम
यस्यजिज्ञास्यत्वप्राप्तेः॥अवयविजिज्ञासांविनाअवयवमात्रजिज्ञासाऽयोगात्॥ब्रह्मजिज्ञासाचश्रुत्युक्तान
हातुंशक्या॥अतआनंदमयस्यविष्णोरन्यत्वेनब्रह्मजिज्ञासासंभवतीतियतोऽतोब्रह्मजिज्ञासासिद्ध्यर्थमानंद
नह्यवयविनंविनाऽवयवमात्रस्यज्ञेयतेत्यतआह ॥ आनंदमयोब्रह्मादिःप्रकृतिर्विष्णुर्वा ॥

## ॐ आनंदमयोभ्यासात् ॐ ॥ १२ ॥

ब्रह्मशब्दाद्धिरण्यगर्भस्यप्राप्तिःशतानंदनाम्नाच ॥ अष्टमूर्तित्वात्सूर्येप्रोक्तत्वाच्चरुद्रस्य॥
एवमन्येषामपि ॥ ममयोनिर्महद्ब्रह्मेतिब्रह्मशब्दाद्बहुभावाच्चप्रकृतेः ॥

मयोभ्यासादित्यानंदमयस्यविष्णुत्वमाहसूत्रकारइतिभावः॥एवंसंगतिमुक्त्वाविषयसंशयौदर्शयति ॥आनं
दमयइति॥अत्राऽऽनंदमयोविषयः॥सकिंब्रह्मादिजीवसमूहउतचेतनप्रकृतिः॥अथाचेतनाकिंवाविष्णुः॥ब्र
ह्माणिजीवाः॥ममयोनिर्महद्ब्रह्म॥पंचभिःपंचभिर्ब्रह्मेत्यादिनाजीवादिषुब्रह्मशब्दप्रयोगःसंदेहबीजमितिभा
वः ॥ तत्रसयुक्तिकंपूर्वपक्षानाहब्रह्मशब्दादित्यादिना ॥ आनंदमयमधिकृत्यास्तिब्रह्मेतिचेद्वेदेति हिरण्यग
र्भनिष्ठब्रह्मशब्दश्रवणात्तस्यानंदमयत्वंयुज्यते॥ ब्रह्मशब्दस्यान्यत्रापिदत्तेः ॥ [illegible] न्निश्चयइतिचेत् ॥

आनंदमयशब्दार्थत्वच्छतानंदनाम्नाचहिरण्यगर्भैर्विद्यमानेनतस्यप्राप्तेः ॥रुद्रस्यवाऽऽनंदमयत्वप्राप्तिः ॥ यश्चासावादित्यइत्यानंदमयस्यसूर्येप्रोक्तत्वाद्रुद्रस्यसूर्याद्यष्टप्रतिमत्वात् ॥ तथाचविष्णुपुराणे ॥ सूर्योजलंमहीवह्निर्वायुराकाशमेवच ॥ दीक्षितोब्राह्मणःसोमइत्येतास्तनवःक्रमादिति ॥ एवमिंद्रबृहस्पत्यादीनामपिसूर्याधिष्ठातृत्वादिनाऽऽनंदमयत्वप्राप्तिः ॥ चित्प्रकृतेर्वाआनंदमयत्वप्राप्तिः ॥ आनंदमयनिष्ठब्रह्मशब्दस्यममयोनिर्महद्ब्रह्मेतिचित्प्रकृतौप्रयोगात् ॥ कथंसावकाशब्रह्मशब्देनायंनिर्णयइतिचेत् ॥ सोकामयतबहुस्यामित्यानंदमयस्यबहुभावश्रवणात् ॥ तदभिमानित्वाच्चित्प्रकृतेः ॥ अचित्प्रकृतेर्वानंदमयत्वप्राप्तिः॥

बृहजातिजीवकमलासनशब्दराशिष्वितिब्रह्मशब्दादेवसर्वजीवानाम् ॥ अन्नमयत्वादेश्च ॥

बहुभावादेव ॥ तत्तद्देहगतसर्वजीवानांवाऽऽनंदमयत्वप्राप्तिः॥बृहजातिजीवकमलासनशब्दराशिष्वितिधातोर्जीवेष्वपिब्रह्मशब्दात् ॥ नचवाच्यंब्रह्मशब्दस्यसाधारण्यान्ननिश्चायकत्वमिति ॥ अन्नरसमयःप्राणमयइत्युक्त्वाऽन्नमयादीनामन्नादिविकाराभिमानित्वेनजीवत्वात्॥तत्प्रायपठितानंदमयत्वेपिजीवानांप्राप्तेः॥यद्यपिब्रह्मशब्देनविष्णोरप्यस्तिप्राप्तिस्तथापिनासावानंदमयः ॥विष्णोरानंदमयावयवत्वोक्तेः ॥ तस्यचाऽऽनंदमयत्वेतदवयवत्वविरोधात्॥ तथाचाऽऽनंदमयस्याब्रह्मत्वेनतदवयवब्रह्मजिज्ञासासंभवतीत्याशंयः ॥

सिद्धांतयति ॥ तथापीति ॥ यद्यप्येवमन्येषांप्राप्तिस्तथापीत्यर्थः ॥ कस्तर्हीत्याशंक्यसंगत्यर्थमुदाहृतसूत्रप्रतिज्ञाभागंव्याचष्टे ॥ किंत्विति ॥ कुतोविष्णुरेवानंदमयइत्यतःसौत्रंहेतुंव्याचष्टे ॥ तदेवेति ॥ असन्नेवसभवति असद्ब्रह्मेतिवेदचेत् अस्तिब्रह्मेतिचेद्वेदेत्यानंदमयेब्रह्मशब्दाभ्यासाद्विष्णुरेवानंदमयः॥ब्रह्मशब्दस्य




तथापिनतआनंदमयशब्देनोच्यंतेकिंतुविष्णुरेव ॥ तदेवब्रह्मपरमंकवीनाम् ॥ एतमेवब्रह्मेत्याचक्षते ॥ ब्रह्मशब्दःपरेविष्णौनान्यत्रक्कचिदिष्यते ॥ असंपूर्णाःपरेयस्मादुपचारेणवाभवेत् ॥ ब्रह्मेतिपरमात्मेतिभगवानितिशब्द्यते ॥ वासुदेवात्मकंब्रह्ममूलमंत्रेणवायतिरित्यादिषुतस्मिन्नेवप्रसिद्धब्रह्मशब्दाभ्यासात् ॥ १२ ॥

तदेवब्रह्मेत्यादिश्रुतिस्मृतिषुविष्ण्वेकनिष्ठत्वोक्तेः ॥ नचततएवहिरण्यगर्भादीनांप्राप्तिःशंक्या ॥ तेषामपूर्णत्वेनब्रह्मशब्दमुख्यार्थत्वाभावस्याप्युदाहृतश्रुत्यादिसिद्धत्वात् ॥ मुख्यार्थत्यागेनामुख्यार्थग्रहणायोगादितिभावः ॥ १२ ॥

उक्तार्थमाक्षिप्यसमादधत्सूत्रंपठित्वाव्याचष्टे ॥ विकारेति ॥ नायमानंदमयोविष्णुःकिंतुप्रागुक्तप्रकृत्या दयएव ॥ विकाराभिधायकमयट्शब्दप्रयोगात् ॥ विकारार्थशब्दवाच्यत्वंहिविकारित्वविकाराभिमा नित्वाभ्यांसंभवति ॥ तथाचविकारात्मकत्वादचित्प्रकृतेश्चेतनप्रकृत्यादीनांविकाराभिमानित्वात्तेषुमयट् शब्दोयुज्यतेनविष्णोस्तस्याविकारित्वात्तदभिमानित्वाच्चेतिशंकामाभूत् ॥ यतःप्रचुरानंदत्वादानंदमयपदे नानंदमयःकथ्यतेनत्वानंदविकारत्वात् ॥तादात्म्यार्थेविकारार्थेप्राचुर्यार्थेमयट्त्रिधेतिप्राचुर्येपिमयट्प्रयो

विकारात्मकत्वात्तदभिमानित्वाच्चयुज्यते ॥ प्रकृत्यादीनांमयट्शब्दोनतुपरमात्मनइ

## ॥ ॐविकारशब्दान्नेतिचेन्नप्राचुर्यात् ॐ ॥ १३ ॥

तिमाभूत् ॥ प्रचुरानंदत्वाद्ध्यानंदमयोनतुतद्विकारित्वात् ॥ अन्नादीनांचप्राचुर्यमेव ॥

गादितिभावः॥आनंदप्रचुरइतियथास्थिताभिधानेब्राह्मणप्रचुरोग्रामइत्यादिवदनानंदमयस्यापिप्राप्तेःप्रचु रानंदइतिविपरीतसमासःकृतः ॥ प्रचुरानंदइत्यभिधानेपूर्णानंदइत्येवप्रतीतेः ॥ नायमानंदमयशब्दःप्र चुरानंदतामभिधत्तेकिंतुविकारार्थत्वमेव ॥ अन्नादिविकारार्थान्नमयादिशब्दैःसहपठितत्वादित्यतआ ह ॥ अन्नादीनांचेति ॥ भवेत्पायपाठविरोधोयद्यानंदमयपदेनैवानंदप्राचुर्यमुच्यतइत्यभ्युपगतिः ॥ नासा वस्ति ॥ अन्नादीनांचप्राचुर्यमेवान्नमयादिशब्दार्थइत्यभ्युपगमादितिभावः ॥ ननुकथमत्रान्नमयंशब्दो

ऽन्नप्राचुर्यार्थः ॥ अन्नप्राचुर्यकथनस्यात्यल्पत्वादित्यतआह ॥ अद्यतइति ॥ अन्नप्राचुर्यंचान्नमयश
ब्दार्थोयुज्यते ॥ अत्रान्नशब्देनभूताद्यत्वतदत्तृत्वस्याभिधानेनाल्पार्थत्वाभावात् ॥ प्रसिद्धान्नार्थत्व
एवतत्प्राप्तेः ॥ कुतोयमन्नशब्दार्थोनप्रसिद्धान्नंयेनाल्पार्थत्वाभावः ॥ अद्यतेत्तिचभूतानि तस्मादन्नं
तदुच्यतइत्यन्नशब्दव्याख्यानात्प्रसिद्धान्नस्यभूतात्तृत्वायोगादितिभावः ॥ ननुप्रचुरभूताद्यत्वंकथमभि
संहितंब्रह्मणइत्यतआह ॥ उपजीव्यत्वमेवेति ॥ ओषधीभ्योन्नं अन्नात्पुरुषइतिप्रसिद्धान्नविकारदेह
मुक्त्वासवाएषपुरुषोन्नरसमयइतितत्परामर्शात्कथमन्नमयशब्दस्तत्प्राचुर्यार्थइत्यतआह ॥ सइति ॥ भ

अद्यतेत्तिचेतिव्याख्यानात्तत्प्राचुर्यंचयुज्यते॥उपजीव्यत्वमेवाद्यत्वम्॥सवाएषइत्यन्यप्रारंभात्॥

वेदेतद्यदिप्रसिद्धान्नविकारपुरुषपरामर्शोयंभवेत् ॥ नचैवंयस्मादात्मनआकाशादिकमुत्पन्नंसएषइत्यात्म
परामर्शोपपत्तेरित्यर्थः ॥ किमर्थमसौपरामृश्यतइत्याशंकापनोदायपरामर्शादितिवक्तव्येप्रारंभादित्याह॥

आत्मनआकाशादिकारणत्वमुक्त्वातस्यैवान्नमयादिपंचरूपत्वप्रदर्शनायपुनःप्रक्रांतत्वान्नतत्परामर्शवैय
र्थ्यमितिभावः ॥ एवंप्राणमनःशब्दयोश्चेष्टकत्वाववोधार्थत्वेनप्राचुर्यार्थतयाऽल्पार्थतापरिहरणीयेति ॥ ॥ २६ ॥
नन्वेवंमयट्शब्दस्योभयार्थेप्रयोगादत्राप्युभयपक्षेदोषादर्शनात्किंप्राचुर्यमेवार्थोनविकारित्वंपंचमयटा
मित्यत्रनियामकम् ॥ अन्नमयादिपंचानांब्रह्मनाभ्युपगतावेकमेवाद्वितीयमित्यादिश्रुतिविरोधश्चस्यादित्य

तआह॥ येऽन्नमिति॥ येऽन्नंब्रह्मोपासते येप्राणंब्रह्मोपासते आनंदंब्रह्मणोविद्वान् विज्ञानंब्रह्मचेद्वेद अस्ति ब्रह्मेतिचेद्वेदेत्यन्नमयादीन्प्रत्युदाहृतश्लोकेषुतद्विषयत्वेनब्रह्मशब्दश्रवणादुभयथापिसंभवतांमयटामनन्यथासिद्धतत्समभिव्याहारान्नविकारित्वमर्थोऽपितुप्राचुर्यमेवेतिनिर्श्चीयते ॥ नचान्नमयादीनांपंचानामपि ब्रह्मत्वाभ्युपगतावेकमेवाद्वितीयमित्यादिश्रुतिविरोधः ॥ एकस्यैवब्रह्मणोबहुरूपत्वेनपंचत्वोपपत्त्याश्रुत्यविरोधादितिभावः ॥ एवमन्नमयादिपंचकमपिब्रह्मतद्गतमयटांप्राचुर्यार्थैतवसावकाशस्यानिरवकाशब्रह्म

येऽन्नंब्रह्मोपासतइत्यादिब्रह्मशब्दाद्बहुरूपत्वाच्चनविकारित्वमविरोधश्च॥नचपृथक्कल्पनायुक्ता ॥

शब्दबलादेकार्थत्वोपपत्तिरित्युक्तम् ॥ अन्येत्वानंदमयएवब्रह्मतद्गतमयटएवप्राचुर्यार्थतेतिकल्पयंतितदयुक्तमित्याह ॥ नचेति॥ नचेयंकल्पनायुक्ता ॥ प्रायपठितमयटामर्थद्वैविध्यकल्पनस्याक्लिष्टत्वात् ॥ ततश्चैकस्यैवब्रह्मत्वंक्लिष्टमितिभावः ॥ नचसूत्रविरोधः ॥ यदाखलुब्रह्मशब्दादानंदमयस्यब्रह्मतामसाधयत्सूत्रकारस्तदाब्रह्मशब्दवतामन्नमयादीनांचब्रह्मतामनुजज्ञे ॥ तथैवसूत्रंनेयमन्यथाऽन्नमयादिषुसन्नपिब्रह्मशब्दोब्रह्मतामसाधयन्कथमानंदमयस्यापिसाधयेत्कथंचान्नमयादिषुस्थितोमयट्शब्दःप्राचुर्यार्थतामलभमानआनंदमयेश्रुतोलभेत ॥ नचास्तितत्रबाधकविशेषोयेनद्वैविध्यंकल्पेत ॥ अन्नमयादीनामपितर्हिब्र

ह्मतांकिनासूत्रयदितिचेत् ॥ सूत्रस्याल्पाक्षरत्वादेव ॥ आदिमत्वेप्यन्नमयादीनामानंदमयस्यसंगतत्वेनग्र
हणम् ॥ यस्त्वन्नमयादीनांपंचानामप्यब्रह्मतांब्रूतेसतुसूत्रकारेणैवपूर्वपक्षीकृतइतिनतत्पक्षंप्रत्याक्षिपद्भा
ष्यकारः ॥ नन्वानंदादिस्वरूपस्यब्रह्मणःकथंप्रचुरानंदत्वादिकंघृतप्रचुरओदनइत्यादौभेदएवप्रयोगादित्य
तआह॥ स्वरूपेचेति॥ यथाप्रकाशस्वरूपेऽपिरविबिंबेविशेषेणप्रचुरप्रकाशोरविरितिव्यपदेशस्तथाऽऽनंदा
दिरूपेऽपिहरौविशेषेणतद्व्यपदेशोयुज्यतइत्यर्थः ॥ १३ ॥ एवंप्रचुरानंदत्वेनानंदमयपदवाच्योविष्णुरेवब्र

स्वरूपेचयुज्यतेप्रचुरप्रकाशोरविरितिवत् ॥ १३ ॥ कोह्येवान्यात्कः

## ॥ ॐ तद्धेतुव्यपदेशाच्च ॐ ॥ १४ ॥

प्राण्यात् यदेषआकाशआनंदोनस्यादिति ॥ १४ ॥

ह्मशब्दाभ्यासादित्युक्तंतदेवहेत्वंतरेणप्रतिपादयत्सूत्रमुपन्यस्यतदुपात्तश्रुतिमेवोदाहरति ॥ तद्धेत्विति ॥
आसमंतात्काशमानोविष्णुर्यदिपूर्णानंदोनस्यात्तदासौनलोकंप्रवर्तयेत् ॥ आनंदोद्रेकमंतरेणतत्प्रवृत्तौकार
णाभावात् ॥ तथाचकोलोकंचेष्टयेद्धर्मादौचप्रवर्तयेत् ॥ अन्यस्यास्वातंत्र्यात् ॥ अतोलोकचेष्टाऽन्य
थानुपपत्त्यातत्कर्ताविष्णुःपूर्णानंदःस्यादित्यानंदमयप्रकरणेविष्णोरेवानंदपूर्णत्वएवलोकचेष्टकत्वाख्यहे
तुव्यपदेशाद्विष्णुरेवानंदपूर्णतयाऽऽनंदमयइतिभावः ॥ १४ ॥

यदुक्तंब्रह्मशब्दादन्नमयादीनांविष्णुत्वमितिनतद्युक्तम् ॥ ब्रह्मशब्दस्यापरब्रह्मण्युपपत्तेः ॥ ब्रह्मशब्दस्यपर
ब्रह्मणिमुख्यत्वेपिविष्णोरानंदमयावयवत्वोक्त्यादिनामुख्यस्यैवग्रहणोपपत्तेरित्याशंकांपरिहरत्सूत्रंपठि
त्वाव्याचष्टे ॥ मांत्रवर्णिकमेवचेति ॥ नेदमानंदमयादिपंचकमपरंब्रह्म ॥ यतःसत्यंज्ञानमनंतंब्रह्मेतिमं
त्रवर्णेलक्षणवत्तयोक्तंपरमेवब्रह्मान्नमयादिशब्दपंचकेनगीयते ॥ तत्कुतइत्यतउक्तंशब्दानुसंधानादिति ॥
सत्यज्ञानानंतशब्दानामन्नमयादिशब्दानांचार्थानुसंधानेसत्यैकार्थत्वप्रतीतेः ॥ मंत्रवर्णेपिब्रह्मेत्येवोक्तत्वा

ब्रह्मविदाप्नोतिपरमितिसूचयित्वासत्यंज्ञानमनंतंब्रह्मेतिमंत्रवर्ण

## ॥ ॐ मांत्रवर्णिकमेवचगीयते ॐ ॥ १५ ॥

लक्षितंपरमेवब्रह्मशब्दानुसंधानाद्गीयते ॥

त्कथंतदर्थभूतानामप्यन्नमयादिशब्दानांपरब्रह्मार्थतेत्यतउक्तंब्रह्मविदिति ॥ ब्रह्मविदाप्नोतिपरमितिसूच
नयापरब्रह्मतज्ज्ञानतत्प्राप्तिकथनेकिंतत्परंब्रह्मकथंचतद्वेदनंकीदृशीचतत्प्राप्तिरितिशंकात्रयमुदेति ॥ तत्रा
दिशंकापनोदायपरब्रह्मणोलक्षणमुच्यते ॥ सत्यमिति ॥ योवेदेतिवेदनंसोश्नुतइतिप्राप्तिः ॥ अतोमंत्र
वर्णेपरंब्रह्मैवोच्यतइतितदुक्तंपरमेवब्रह्मशब्दानुसंधानादन्नमयादिशब्दैर्गीयतइतिनापरब्रह्मशंकाप्रकार्ये
तिभावः ॥ चशब्दोविष्णोरानंदमयत्वेयुक्तिसमुच्चयार्थः ॥ ननुकथंविष्णोरानंदमयत्वंतस्यानंदमयावयव

त्वादवयविनश्चावयवत्वाप् ध्यादित्यतआह ॥ नचेति ॥ नविष्णोरानंदमयत्वेतदवयवत्वविरोधः ॥ सशि
रइत्यादिश्रुतावयविनएवावयवत्वोक्तेरवयवाद्यभेदादितिभावः ॥ अवयविनोऽवयवत्वंविरुद्धमित्याशं
कांपरिहर्तुंस्मृतिंचाह ॥ शिरइति ॥ अघटितघटकेश्वरशक्त्यानावयविनोऽवयवत्वंविरुद्धमित्यर्थः॥ किंच

नचावयवत्वविरोधः ॥ सशिरःसदक्षिणःपक्षःसउत्तरःपक्षःसआत्मासपु
च्छमितितस्यैवावयवत्वोक्तेश्चतुर्वेदशिखायाम् ॥ शिरोनारायणःपक्षोद
क्षिणःसव्यएवच॥प्रद्युम्नश्चानिरुद्धश्चसंदोहोवासुदेवकः ॥ नारायणोथ
संदोहोवासुदेवःशिरोपिवा ॥ पुच्छंसंकर्षणःप्रोक्तएकएवचपंचधा ॥अं
गांगित्वेनभगवान्क्रीडतेपुरुषोत्तमः ॥ ऐश्वर्यान्नविरोधश्चचिंत्यस्तस्मि
न्जनार्दने ॥ अतर्क्येहिकुतस्तर्कस्त्वप्रमेयेकुतःप्रमेतिबृहत्संहितायाम् ॥

किंप्रमाणेनावयविनोऽवयवत्वंविरुद्धमुतावयवीनावयवोऽवयवित्वाल्लोकवदितितर्केण ॥ नाद्यः॥असिद्ध
त्वात् ॥ द्वितीयंनिराचष्टे ॥ अतर्क्यइति ॥ अतर्क्यत्वात्कुतस्तस्मिंस्तर्कःसाधकोबाधकोवाभवेदित्यर्थः ॥
अस्तुवातस्यतर्क्यत्वंतथापिनतद्विरोधः ॥ लोकेपरिमितशक्तित्वेनविरोधात्॥विरोधोपयोगिपरिमितशक्ते
रपरिमितेभगवत्यभावादितिभावेनाह ॥ अप्रमेयइति ॥ यद्वादिसवाएषइत्यन्यपरामर्शोनान्नात्पुरुषइ

त्युक्तपरामर्शइति ॥ तदयुक्तम् ॥ आत्मनोदूरस्थत्वात् ॥ देहस्यसमीपस्थत्वात्समीपोक्तपरित्यागेनदूरस्थ
परामर्शग्रहणेकारणाभावात् ॥ प्रकृतस्यैवपुरुषशब्देनोक्तेरात्मनस्तदभावाच्च ॥ एकेनैवशब्देनद्विरुक्तेनभे
दश्रुतिंविनावस्तुद्वयोक्तिग्रहणायोगादित्यतआह ॥ रसेति ॥ सवाएषपुरुषइतिवाक्येनब्रह्मचैतन्यमेवपरा
मृश्यतेनदेहः ॥ नचतस्यदूरोक्तिविरोधःपुरुषपदेनाप्रकृतत्वविरोधश्च ॥ यतआकाशादिपुरुषांतशब्देरुक्त
माकाशादिसारभूतंब्रह्मचैतन्यमेवपरामर्शवाक्येनोच्यते ॥ एवंतर्हिपुरुषपदेनद्वयोरप्युक्तत्वादुभयपराम
र्शोयमस्त्वितिनवाच्यंकिंतुपुरुषसारभूतंब्रह्मचैतन्यमात्रमेवान्यद्विहायोच्यते ॥ कुतएतत् ॥ रसशब्देन

रसशब्देनविशेषणात्तत्तत्सारभूतंचिन्मात्रमेवोच्यते॥इदमितिचदृश्यमानसन्निहितत्वात्॥

विशेषणात् ॥ यथाप्रकृतिंपुरुषंचेतिपुरुषशब्देनद्वयोःप्रकृतत्वेपिदुःखानुभवितृत्वविशेषणेनपुरुषःप्रकृति
स्थोहीतिजीवएवोच्यते ॥ एवमन्नात्पुरुषइत्युभयोःप्रकृतत्वेपिसवाएषपुरुषोन्नरसमयइतिसारान्नमयत्व
विशेषणेनपरमात्मपरामर्शएवेतिज्ञायतइतिभावः॥उक्तंच ॥ बहूनांसहनिर्देशएकयाऽभिधयैवतु ॥ तथैवा
भिधयातेषांपरामृश्यैकमुच्यतइति ॥ एतच्चसविस्तरमुक्तमुत्तरप्रस्थानेब्रह्मशब्दोदिततस्मिन्नित्यादिना ॥न
न्वन्नमयप्राणमयमनोमयविज्ञानमयानंदमयामेशुध्यंतामितिस्थानांतरेप्रार्थितशुद्धीनामन्नमयादीनांकथं
ब्रह्मतोच्यतइत्यतोवाह ॥ रसेति ॥ अवेदेतद्यदिप्रार्थितशुद्धयोन्नमयादयोप्यत्रोच्यंते ॥ नैतदस्तिकिंतुतत्त

न्कोशगतंतत्तन्नियामकंब्रह्मचैतन्यमेवोच्यते॥कुतः॥ अन्नरसमयइत्यादौरसोवैसइत्यंतेचैतेषांकोशव्यावृ
त्त्यर्थमेवरसशब्देनविशेषणादित्यर्थः ॥ ननुयदिपरिदृश्यमानदेहएवनान्नमयःकिंतुब्रह्मैव ॥ कथंतर्हितस्ये
दमेवशिरइतिप्रत्यक्षनिर्देशोयुज्यते ॥ नचवाच्यमुपनिषद्द्रष्टामुनिर्ब्रह्मापरोक्षीकृत्यप्रत्यक्षतोनिर्दिशतीति ॥
तथासतितेनापरोक्षीकृतप्राणमयादौतत्प्रसंगात् ॥ निर्देशवैयर्थ्याच्चेत्यतआह ॥ इदमिति ॥ दृश्यमानशिरः

अनन्योप्यन्यशब्देनतथैकोबहुरूपवान् ॥ प्रोच्यतेभगवान्विष्णुरैश्वर्या
त्पुरुषोत्तमइतिब्रह्मांडे ॥ १५ ॥

पक्षादावन्नमयभगवच्छिरःपक्षादेःसंनिहितत्वाद्ब्रह्मप्रावृतजानुवदिदमितिचनिर्देशोयुज्यतइत्यर्थः ॥ न
नुतथापितस्माद्वाएतस्मादन्नरसमयादन्योंतरआत्माप्राणमयइत्यन्योन्यमन्यतयोक्तान्नमयादीनांकथंब्र
ह्मतेत्यतआह ॥ अनन्योपीति॥ अन्यशब्देनप्रोच्यतइत्यन्वयः॥एकोबहुरूपवान्भवतीत्यनेनबहुरूपत्वा
न्नविरोधइत्येतदपिप्रमापितंस्यात् ॥ १५ ॥ ॥२१॥

नन्वेवंमयटांप्राचुर्यार्थत्वमुक्त्वातथात्वेकथंचिदल्पार्थतांपरित्यज्यभूताद्यत्वस्यार्थांतरमभिधायपरामर्श स्यान्नपरत्वंसमर्थ्यंबहुभावस्यस्वरूपविषयत्वंगृहीत्वापुच्छत्वोक्तेरविरोधमापादयेदमितिनिर्देशस्यलाक्षणि कत्वमंगीकृत्यापिकिमन्नमयादीनांविष्णुत्वग्रहणेन॥ विरिञ्चादयएवानंदमयादयःसंतुतत्रापकसद्भावात् ॥ नचोक्तहेतुभ्यस्तद्ग्रहणम् ॥ ब्रह्मशब्दस्यापरब्रह्मस्वपिसंभवात् हेतुव्यपदेशस्यचविष्णुनिष्ठतयास्पष्टम

नचोक्तप्राप्त्याविरिंचादिरत्रोच्यते ॥ नह्यन्यज्ञानान्मोक्षउपपद्यते ॥ तमेवंविद्वानमृत

## ॥ ॐ नेतरोनुपपत्तेः ॐ ॥१६॥

इहभवति नान्यःपंथाअयनायविद्यतइतिश्रुक्तम् ॥ १६ ॥

प्रतिभानात् मंत्रवर्णार्थिकसमाख्यायाश्चसूत्रैप्रोक्तत्वादिलिंगेभ्योदुर्बलत्वेनसावकाशत्वात् अनन्यथा सिद्धहेत्वंतरस्यचाभावादित्यतआह ॥ नचेति ॥ तत्रहेत्वाकांक्षायांसूत्रमुपन्यस्यप्रतिज्ञांशस्यप्राचीन भाष्येणैवव्याख्यातत्वात्सौत्रमनन्यथासिद्धहेतुमेवव्याचष्टे ॥ नेतरइति ॥ नानंदमयादिर्विष्णोरितरः ॥ ब्रह्मविदाप्नोतिपरमित्यादावानंदमयादिज्ञानेनमोक्षश्रवणात् ॥ नचान्यज्ञानान्मोक्षउपपद्यतइत्यर्थः ॥ विष्णुज्ञानादेवमोक्षोनान्यज्ञानादितिकुतइत्यतआह ॥ तमेवंविदिति ॥ १६ ॥

हेरंतरेणब्रह्मादीनामानंदमयत्वं निराकुर्वत्सूत्रंपठित्वाव्याचष्टे ॥ भेदेति॥ नेतरइत्यनुषज्जते ॥ तेयेशतंप्रजापतेरानंदाः सएकोब्रह्मणआनंदइतिरुद्राच्छतगुणमात्रानंदत्वोक्तेर्नतावदानंदमयोविरिंचः ॥ यतोवाचोनिवर्तंते अप्राप्यमनसासह आनंदंब्रह्मणोविद्वान्नित्यानंदमयस्यापरिमितानंदत्वोक्तेः ॥ अतएवनरुद्रः तस्यहिरण्यगर्भाच्छतांशोनानंदत्वोक्तेः ॥ एवंनेंद्रबृहस्पत्यादयोपि॥अदृश्येत्स्वामिरहिते ॥ जैवगुणविधुरेवा॥साकल्येननिर्वचनागोचरे॥अपराश्रयेतस्मिन्नानंदमयेयोऽभयतयाध्यानरूपांप्रतिष्ठांविंदतेअनंतरंसउपासको

तेयेशतंप्रजापतेरानंदाः सएकोब्रह्मणआनंदइति ॥ अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयंप्रतिष्ठां

## ॥ ॐ भेदव्यपदेशाच्च ॐ ॥ १७ ॥

विंदते ॥ अथसोऽभयंगतोभवति ॥ सयश्चायंपुरुषइत्यादिभेदव्यपदेशात् ॥ नचतत्त्वमस्यहंब्रह्मास्मीत्यादिश्रुतिविरोधः ॥ नामानिसर्वाणियमाविशंतीतितत्तच्छब्दवाच्यत्वोक्तेः ॥

भयंभगवंतंगतोभवतीतिश्रुतौप्रकृत्याद्ययोग्यस्वातंत्र्यादिश्रवणान्नप्रकृत्यादीनामानंदमयत्वम् ॥ सयश्चायमित्यानंदमयस्यापकृष्टोत्कृष्टजीवेषुपुरुषादित्यपदोपलक्षितेषुस्थितिकथनान्नानंदमयोब्रह्मादिजीवसमूहइत्याशयः ॥ नन्वस्त्वानंदमयःपरंब्रह्मतथापिकथंतेनब्रह्मादीनांभेदःसंभवति ॥ तद्भेदस्यतत्त्वमसीत्यादिश्रुतिविरोधादित्यतआह ॥ नचेति ॥ अभेदतद्ध्येतच्छ्रुतीनामद्वैतार्थतास्यात् ॥ नचैवम् ॥नामानिसर्वाणीतिश्रुत्यातत्त्वमस्यादिशब्दैर्विष्णोरेववाच्यत्वोक्तेरित्यर्थः ॥ संतुचैताःश्रुतयोऽद्वैतपरास्तथापिनोक्तभेदस्य

तद्विरोधः भगवतःसकलस्वामित्वेनैक्यव्यपदेशोपपत्तेरित्येतत्प्रमाणेनाह ॥ इदमिति॥इदंविश्वंभगवानिवो
व्येतस्वयमितरोपिसन् ॥ यतःकारणाज्जगत्स्थाननिरोधोत्पत्तिकर्तेत्यर्थः॥ एतदेवाह ॥ असर्वइति॥वाक्यं
च ॥ ननुभेदज्ञानस्यमिथ्याज्ञानत्वात्कथंतदनुसारेणैक्यश्रुतयोयोज्यंतइत्यतआह ॥ विद्येति ॥ नचभिदा
याअबोधइतिव्याख्येयम् ॥अज्ञानस्यविद्यात्वाभावात् ॥ननुभेदज्ञानस्यापुरुषार्थहेतुत्वात्कथंतस्यविद्या

इदंहिविश्वंभगवानिवेतरोयतोजगत्स्थाननिरोधसंभवः॥ असर्वःसर्वइत्यपि ॥ विद्यात्मनिभिदाबो
धः ॥ भेददृष्ट्याभिमानेननिःसंगेनापिकर्मणा ॥ जुष्टंयदापश्यत्यन्यमीशमस्यमहिमानमितिवी
तशोकः ॥ असर्वःसर्वइवात्मैवसन्ननात्मेवप्रत्यङ्पराङिवैकईयते ॥ बहुधेयतेसपुरुषःसईश्वरः
सब्रह्मसर्वांतर्यामिकोविष्णुःसर्वनाम्नाभिधीयते ॥ एषोहंत्वमसौचेतिनतुसर्वस्वरूपतः ॥

त्वमित्यतआह ॥ भेददृष्ट्येति ॥ वेदगर्भोजीवेश्वरभेदज्ञानेनपरमेश्वरबहुमानेनचानंदादिगुणपूर्णब्रह्मप्रा
प्नइतिस्मृत्यर्थः ॥ सर्वसेव्यमीशंजीवादन्यंतदेतत्सत्यमित्यादिश्रुत्याप्रागुक्तप्रकारेणास्यमहिमानंचयदा
पश्यतितदामुक्तोभवतीतिश्रुत्यर्थः ॥एवंस्वामित्वार्थतयाऽद्वैतश्रुतीर्व्याख्यायांतर्यामित्वार्थतयापिताःश्रुति
स्मृतिभ्यांव्याचष्टे ॥ असर्वइति॥ असर्वात्मकोपिसर्वात्मकत्वेनांतर्याम्यप्यनंतर्यामित्वेनदेहांतर्गतोपिबहि
र्मात्रवृत्तित्वेनज्ञायतेतथैकएवबहुधाज्ञायतइत्यर्थः ॥अनेनांतर्यामित्वादसर्वस्यसर्वत्वोक्तिरितिसिध्यति ॥

विशिष्टैक्यार्थतयाचताःस्मृत्याव्याख्याति ॥ नैतदिति ॥ एतदित्यस्यविवरणंपुरुषमेकमिति ॥ अत्र पुरुषैक्यंनिराकृत्याद्वैतश्रुतिविरोधपरिहारायतदर्थत्वेनबहूनामितिविशिष्टैक्यमुच्यते ॥ नन्वेवमद्वैतश्रुत्यभावेकथमद्वैतंश्रुत्यादिनानिषिध्यते तस्याप्रत्यक्षत्वेनश्रुतिंविनाप्राप्त्यभावात् अप्राप्तस्यचनिषेधायोगादित्यतआह ॥ उक्ताचेति ॥ नचतत्त्वमस्यहंब्रह्मास्मीत्यादिश्रुतिविरोधइतिभाष्येऽद्वैतनिषेधायश्रुत्यर्थापरिज्ञाननिमित्तप्राप्तेरुक्तत्वाद्युज्यतेतन्निषेधइत्यर्थः ॥ नन्वेतच्छ्रुतीनामविरोधकत्वेपिब्रह्मैवसन्ब्रह्माप्येतीति

नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्वहेत्यादेश्च ॥ उक्ताचप्राप्तिः ॥ ब्रह्मैवस

न्नित्यपिजीवएवब्रह्मशब्दः ॥ उपपद्यतेचविरोधे ॥

श्रुतिविरोधस्तुभविष्यति ॥ अत्रब्रह्मैवेत्यब्रह्मतानिषेधेनतदधीनत्वादिनाऽतद्रूतेतद्व्यपदेशइत्युक्तगतेरसंभवादित्यतआह ॥ ब्रह्मैवेति ॥ नात्रपरब्रह्मत्वाभिप्रायोयमाद्योब्रह्मशब्दःकिंतुब्रह्माणिजीवाःसर्वेपीतिश्रुतेर्जीवपरएव ॥ तथाचजीवभावमविहायैवब्रह्माप्नोतीत्यर्थोपपत्तेर्नोक्तभेदस्यैतच्छ्रुतिविरोधइत्यर्थः॥ब्रह्मशब्दस्यपरब्रह्मणिमुख्यत्वान्नजीवेऽसावुपपद्यतइत्यतआह ॥ उपपद्यतेचेति ॥ परब्रह्मणिमुख्योपिब्रह्मशब्दोजीवेप्युपपद्यते ॥ जीवस्यपरब्रह्मत्वार्थतास्वीकारेब्रह्माप्येतीतिश्रुतब्रह्मप्राप्तिविरोधात् प्रमाणांतरविरोधाच्चेत्यर्थः ॥ ननुविस्मृतकंठमणिरपिस्मृतकंठमणिरित्येवोच्यतेन ॥ प्राप्तमणिरितिपरमंसाम्यमुपैतीत्यादाव

विशिष्टैक्यार्थतयाचताःस्मृत्याव्याख्याति ॥ नैतदिति ॥ एतदित्यस्यविवरणंपुरुषमेकमिति ॥ अत्र पुरुषैक्यंनिराकृत्याद्वैतश्रुतिविरोधपरिहारायतदर्थत्वेनबहूनामितिविशिष्टैक्यमुच्यते ॥ नन्वेवमद्वैतश्रुत्यभावेकथमद्वैतंश्रुत्यादिनानिषिध्यते तस्याप्रत्यक्षत्वेनश्रुतिंविनाप्राप्त्यभावात् अप्राप्तस्यचनिषेधायोगादित्यतआह ॥ उक्ताचेति ॥ नचतत्त्वमस्यहंब्रह्मास्मीत्यादिश्रुतिविरोधइतिभाष्येऽद्वैतनिषेधायश्रुत्यर्थापरिज्ञाननिमित्तप्राप्तेरुक्तत्वाद्युज्यतेतन्निषेधइत्यर्थः ॥ नन्वेतच्छ्रुतीनामविरोधकत्वेपिब्रह्मैवसन्ब्रह्माप्येतीति

नैतदिच्छंतिपुरुषमेकंकुरुकुलोद्भवेत्यादेश्च ॥ उक्ताचप्राप्तिः ॥ ब्रह्मैवस

न्नित्यपिजीवएवब्रह्मशब्दः ॥ उपपद्यतेचविरोधे ॥

श्रुतिविरोधस्तुभविष्यति ॥ अत्रब्रह्मैवेत्यब्रह्मतानिषेधेनतदधीनत्वादिनाऽतद्रूतेतद्यपदेशइत्युक्तगतेरसंभवादित्यतआह ॥ ब्रह्मैवेति ॥ नात्रपरब्रह्मत्वाभिप्रायोयमाद्योब्रह्मशब्दःकिंतुब्रह्माणिजीवाःसर्वेपीतिश्रुतेर्जीवपरएव ॥ तथाचजीवभावमविहायैवब्रह्मामोतीत्यर्थोपपत्तेर्नोक्तभेदस्यैतच्छ्रुतिविरोधइत्यर्थः॥ब्रह्मशब्दस्यपरब्रह्मणिमुख्यत्वान्नजीवेऽसावुपपद्यतइत्यतआह ॥ उपपद्यतेचेति ॥ परब्रह्मणिमुख्योपिब्रह्मशब्दोजीवेप्युपपद्यते ॥ जीवस्यपरब्रह्मत्वार्थतास्वीकारेब्रह्माप्येतीतिश्रुतब्रह्मप्राप्तिविरोधात् प्रमाणांतरविरोधाच्चेत्यर्थः ॥ ननुविस्मृतकंठमणिरपिस्मृतकंठमणि.रित्येवोच्यतेन ॥ प्राप्तमणिरितिपरमंसाम्यमुपैतीत्यादाव

नन्वस्त्वेवमानंदमयेनपरब्रह्मणाहिरण्यगर्भादिजीवानांभेदः सोपिसांसारिकोनपारमार्थिकोऽभिहितवाक्यानांसांसारिकभेदपरत्वेनोपपत्तेरित्याशंकांपरिहर्तुंसूत्रंपठति ॥ अस्मिन्निति ॥ अस्येतिनानंदमयपरामर्शोऽपितुनेतरइत्युक्तजीवस्यैवेत्याह ॥ अस्येति ॥ अस्यान्यस्यचेत्यन्यथाप्रतीतिनिरासायाह॥ युक्तीति॥ नकेवलंभेदव्यपदेशादानंदमयेनजीवानांभेदःकिंनामास्मिन्प्रकरणेऽस्यजीवस्यानंदमयेनसहमुक्तावपिसं

अस्यजीवस्ययुक्तिसमुच्चयेचशब्दः ॥ सोऽश्नुतेसर्वान्कामान्सह ब्रह्मणा

## ॥ ॐ अस्मिन्नस्यचतद्योगंशास्ति ॐ ॥ १९ ॥

विपश्चिता ॥ अनिलयनेभयंप्रतिष्ठांविंदते ॥ एतमानंदमयमात्मानमुप

संक्रामतीत्यादि ॥ १९ ॥ अ० ६ ॥

बंधमेवश्रुतिःशास्ति ॥ ततश्चतयोर्भेदएवनत्वैक्यम् ॥ नापिसांसारिकएवभेदः ॥ संबंधस्यभेदसापेक्षत्वादित्यर्थः ॥ किंतद्योगशासनमित्यतआह॥ सोऽश्नुतइति ॥ इत्यादीत्यस्यशास्तीतिसूत्रपदेनान्वयः ॥ अथवाहेत्वंतरेणदेहादीनामन्नमयादित्वनिरासकमेतत्सूत्रम् ॥ तदुक्तम् ॥ योगमन्नमयाद्यैर्यत्फलत्वेनास्यशंसति ॥ स्थानद्वयेप्यतःकोशाएतइत्यतिसाहसमिति ॥ तस्मात्सकलजीवादिभिन्नंपरब्रह्मैवान्नमयादिपंचरूपमितियुक्तातज्जिज्ञासेतिसिद्धम् ॥ १९ ॥ अ० ६ ॥

अत्रपरमात्मन्यन्यत्रप्रसिद्धेंद्रादीनामसमन्वयसिद्ध्यर्थमंतस्थत्वलिंगसमन्वयसमर्थनादस्तिशास्त्रादिसंगतिः ॥ श्रुत्यधिकरणसंगतीदर्शयति ॥ अदृश्यइति ॥ अदृश्येऽनात्म्येऽनिरुक्तेइत्यानंदमयस्ययददृश्यत्वमुक्तंतच्चांतःप्रविष्टमितिवाक्येकस्यचिदंतःप्रविष्टस्यसहैवसंतंनविजानंतिदेवाइत्युच्यते ॥ सोंऽतस्थोनिर्णेयो भवति ॥ तस्यविष्णोरन्यत्वेऽदृश्यत्वंचतस्यैवेत्यानंदमयस्यान्यत्वप्रसंगात् ॥ सोंऽतस्थोविषयः ॥ विष्णुर

अदृश्येऽनात्म्यइत्युक्तम्॥तच्चादृश्यत्वमंतःप्रविष्टंकर्तारमेतम् ॥ अंतश्चंद्रमसिमनसाचरंतम्॥सहैव

## ॥ ॐ अंतस्तद्धर्मोपदेशात् ॐ ॥ २० ॥

संतंनविजानंतिदेवाइत्यंतस्थस्यकस्यचिदुच्यते॥सचेंद्रोराजा समयुंजंतीत्यादिभिरन्यःप्रतीयते ॥

न्योवेतिसंदेहः ॥ अदृश्यत्वलिंगमिंद्रादिश्रुतिश्चप्राबल्याद्यविवेकेनसंदेहबीजमितिभावः ॥ तत्रसयुक्तिकंपूर्वपक्षयति ॥ सचेति ॥ सोंऽतस्थोऽन्यइंद्रादिःस्यात् ॥ इंद्रोराजाजगतोयईशइतींद्रश्रुतेः ॥ समयुंजंतिरथमेकचक्रमितिसूर्यलिंगात् ॥ अपांनेतारमितिवरुणलिंगात् ॥त्वष्टारंरूपाणिविकुर्वंतमितित्वष्टृश्रुतेः॥ ब्रह्मेंद्रमित्यादिश्रुतिलिंगेभ्यश्च॥ नचेंद्रादिशब्दाअन्यत्रनेतुंशक्यंते ॥ तेषांदेवेष्वेवरूढत्वात्तेषामैश्वर्यादिशब्दप्रवृत्तिनिमित्तवत्त्वाच्च ॥ नचादृश्यत्वलिंगेनांतस्थोविष्णुः ॥ श्रुत्यादिभ्योलिंगमात्रस्यदुर्बलत्वात् ॥

अतोऽन्यतरश्रुत्यादिबलादंतस्थोऽन्यएवेत्यर्थः ॥ पूर्वपक्षफलमाह ॥ तस्मादिति ॥ यतोंऽतस्थोऽन्यस्ततए वादृश्यत्वंचान्यस्यतस्माददृश्यत्वयुक्तानंदमयोपिकश्चिदिद्राद्यन्यतमस्तथाचान्यावयवस्यब्रह्मणोनपृथ ग्जिज्ञास्यतेत्यर्थः ॥ सिद्धांतयति ॥ इतीति ॥ तत्रहेत्वाकांक्षायांसूत्रमुपन्यस्यव्याचष्टे ॥ अंतरिति ॥ स

तस्मात्सएवानंदमयइतिनमंतव्यम् ॥ अतःश्रूयमाणोविष्णुरेव ॥ अंतःसमुद्रे
मनसाचरंतं ब्रह्मान्वविंदद्दशहोतारमर्णे ॥ समुद्रेंऽतःकवयोविचक्षते मरीची
नांपदमिच्छंतिवेधसः ॥ यस्यांडकोशंशुष्ममाहुरित्यादितद्धर्मोपदेशात् ॥

मुद्रेंतरर्णेजलेयथेष्टंचरंतंदशेंद्रियेषुविषयहोतारंब्रह्माव्यजानात् ॥ मरीचीनांजीवानामाश्रयंवेधसोभूतभ विष्यद्ब्रह्माणइच्छंति ॥ ब्रह्मांडकोशंयस्यवीर्यमाहुरितिसमुद्रस्थत्वब्रह्मांडवीर्यत्वादिविष्णुलिंगानामंतःप्र विष्टनिष्ठतयोपदेशादंतःप्रविष्टंकर्तारमित्यंतःश्रूयमाणोविष्णुरेव ॥ ततश्चतस्यैवादृश्यत्वमानंदमयत्वंचेति नान्यस्यतन्मंतव्यमित्यर्थः ॥ अत्रसमुद्रस्थत्वंनामक्षीराब्धिशायित्वंप्रलयसमुद्रशायित्वंचविवक्षितम् ॥ ॥ ३२ ॥

समुद्रस्थत्वादेर्विष्णुधर्मत्वंकुतइत्यतआह॥ सहीति॥अस्तुविष्णोःक्षीरसमुद्रशायित्वंलिंगम्॥ प्रसिद्धत्वात्॥
प्रलयार्णवस्थत्वस्यब्रह्मांडवीर्यत्वस्यचकुतोविष्णुधर्मत्वमित्यतआह ॥ सइति ॥ तदहेयंरश्मिप्रेरकंपूर्णष

सहिक्षीरसमुद्रशायी ॥ तस्यचवीर्यमंडकोशः ॥ सोऽभिध्यायशरीरा
त्स्वात्सिसृक्षुर्विविधाःप्रजाः ॥ अपएवससर्जादौतासुवीर्यमवासृजत् ॥
तदंडमभवद्धैमंसहस्रांशुसमप्रभम् ॥ यस्मिन्जज्ञेस्वयंब्रह्मासर्वलोकपि
तामहः ॥ आपोनाराइतिप्रोक्ताआपोवैनरसूनवः ॥ अयनंतस्यताःपूर्वं
तेननारायणःस्मृतइतिव्यासस्मृतेः ॥ अहंतत्तेजोरश्मीन्नारायणंपुरुषं
जातमयतः ॥पुरुषात्प्रकृतिर्जगदंडमितिचतुर्वेदशिखायाम् ॥ २० ॥

ड्गुणंनारायणाख्यंतेजःप्रलयेस्थितंतस्मात्पुरुषात्प्रकृतिश्चेतनाजगत्ब्रह्मांडंचजातमित्यर्थः ॥ २० ॥

यद्येवंसमुद्रस्थत्वादिलिंगादंतस्थोविष्णुस्तर्हितेनांतस्थेनविष्णुनेंद्रादीनामभेदोत्रास्तुविवक्षितः ॥ तत्प्रापक श्रुत्यादेरपिसद्भावात्॥ नचश्रुत्यादिनालिंगबाधेनान्यतरनिर्णयः॥ लिंगस्यनिरवकाशत्वात् ॥ नापिलिंगेन श्रुत्यादिबाधः॥श्रुत्यादेर्बलवत्त्वात् ॥एवंचपक्षद्वयेऽन्योन्यंबाध्यबाधकभावशून्येतदन्यथानुपपत्त्यांऽतस्थे नविष्णुनेंद्रादीनामभेदःप्राप्तइत्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ भेदेति॥ नात्रांतस्थेनेंद्रादीनामभेदो विवक्षितःशंकनीयःकिंत्वसाविंद्रादिभ्योऽन्यश्च ॥ तस्येंद्राद्यंतर्यामित्वतदंतस्थत्वकथनेनतेभ्योभेदव्यपदे

इंद्रस्यात्मानिहितःपंचहोता ॥ वायोरात्मानंकवयोनिचिक्युः ॥ अंतरादित्येमन

## ॥ॐभेदव्यपदेशाच्चान्यःॐ॥२१॥

साचरंतम ॥ देवानाꣳहृदयंब्रह्मान्वविंददित्यादिभेदव्यपदेशात्॥ २१ ॥ अ० ७ ॥

शात् ॥ नचोभयप्रापकाऽन्यथानुपपत्त्यैतत्कल्प्यम् ॥ लिंगेनश्रुत्यादिबाधोपपत्तेः ॥ नचश्रुत्यादीनांबलव त्वेनाबाध्यत्वम॥इंद्रादिशब्दानांभगवतिसावकाशत्वाल्लिंगानांतुनिरवकाशत्वात् ॥ दुर्बलेनापिनिरवकाशे नप्रबलस्यापिसावकाशस्यबाधोपपत्तेः ॥ नचेंद्रादिषुयोगरूढिभ्यांप्रवृत्तत्वाच्छब्दानांहरावमुख्यत्वेनेतिवा च्यम्॥ परमैश्वर्यादेर्भगवतिनिरवधिकत्वेनमहायोगसंभवात् अज्ञरूढितोपिविद्वद्रूढेरवप्राबल्यात् अन्यगत प्रवृत्तिनिमित्तस्यापिभगवदधीनत्वात्तत्रैवमुख्यत्वोपपत्तेरितिभावः॥ आत्मांऽतर्यामी॥ निहितःसर्वहृदये षु ॥ पंचहोतापंचेंद्रियेषुविषयहोता ॥ निचिक्युःपश्यंति ॥ हृद्ययनाद्धृदयम् ॥ नचात्रात्मशब्दःस्वरूप

परः ॥ षष्ठ्याऔपचारिकत्वप्रसंगात् ॥तस्मादशेषाधिदैवगततत्तच्छब्दवाच्योहरिरेवांतःप्रविष्टोऽदृश्योऽत
सएवानंदमयइतिसिद्धम् ॥ अत्रलिंगसमन्वयसमर्थनंबहुनामसमन्वयसिद्ध्यर्थम् ॥ नामनिर्णयेनलिंगनि
र्णयेऽपिलिंगस्यसंगतत्वाद्ग्रहणमिति॥२१॥अ० ७॥अत्रलोकतोऽन्यत्रप्रसिद्धाकाशनाम्नोब्रह्मणिसमन्वय
प्रतिपादनादस्तिशास्त्रादिसंगतिः ॥ कोह्येवान्यादित्याकाशशब्दआनंदमयेप्रयुक्तःसएवछंदोगश्रुतौपठ्यते॥
अस्यलोकस्यकागतिरित्याकाशइतिहोवाचसर्वाणिहवाइमानिभूतान्याकाशादेवसमुत्पद्यंतेआकाशंप्र
त्यस्तंयंत्याकाशोह्येवैभ्योज्यायानाकाशःपरायणंसएषपरोवरीयानुद्गीथःसएषोऽनंतइति ॥ सचाकाशो
यदिविष्णोरन्यस्तदाप्रागुक्तोपिसएवेत्यानंदमयोप्यन्यःप्रसज्यतेऽतःसनिर्णेयः ॥ सआकाशोऽत्रविषयः ॥
विष्णुरन्योवेतिसंदेहः ॥ आकाशशब्दस्यानंदमयेप्रयुक्तत्वमन्यत्रप्रसिद्धिश्चसंदेहबीजम् ॥ भूताकाशए
वायमितिपूर्वःपक्षः ॥ आकाशशब्दस्यतत्ररूढत्वात् ॥ नचवाच्यंयोगवृत्त्याकाशशब्दोविष्णौसावकाशइ
ति ॥ बाधकंविनाऽमुख्यार्थांगीकारायोगात् ॥ नचाकाशस्यभगवदधीनत्वेनतत्रैवाकाशशब्दोमुख्यइतियु
क्तम् ॥ आकाशस्याचेतनत्वेनान्याधीनत्वायोगात् ॥ चेतनस्यहिचेष्टादावन्याधीनत्वंसंभवतीति॥आका
शशब्दस्यावकाशेऽपिरूढत्वादत्रभूताकाशग्रहणेकोविशेषहेतुरितिचेत् ॥पृथिवीगतित्वोपपादनायसर्वाणि
हवाइमानिभूतान्याकाशादेवसमुत्पद्यंतइत्यादिनाऽऽकाशस्यसर्वभूतकारणत्वलयाधिकरणत्वादेरुक्तत्वा
त् ॥ तस्माकाशाद्वायुरित्यादिनाभूताऽऽकाशस्यैवप्रसिद्धमतोभूताऽऽकाशएवायमितिमनसिनिधायपूर्वपक्ष

फलमाह॥कोह्येवेति ॥ एवमाकाशेछंदोगश्रुत्युक्ते भूताकाशेसतिकोह्येवेतितैत्तिरीयश्रुत्युक्तोपिसएवस्यात्।।त
थाचलोकचेष्टकत्वहेतुराकाशस्यैवाऽऽनंदमयत्वेकथितःस्यान्नविष्णोस्ततश्चसएवाऽऽनंदमयोभवति॥ आ
काशस्याचेतनत्वेनानंदानुपपत्तावप्यभिमानिद्वारातदुपपत्तेरितिभावः ॥ अनेनैवाकाशशब्दस्याऽऽनंदमये
प्रयुक्तत्वाद्विष्णुराकाशःकिंनस्यादितिपरास्तम्॥रूढेर्बलवत्त्वेनतस्यापिबाधोपपत्तेरिति॥सिद्धांतयति॥इती
ति॥कुतोनमंतव्यमित्याशंकायांहेतुतयासूत्रमुपादत्ते॥ यतइति॥विषयादेःपूर्वंमुखतोऽनुक्तेस्तदनुवादपूर्वकं

कोह्येवान्यात्कःप्राण्यात् यदेषआकाशआनंदोनस्यादित्याकाशस्याऽऽनंदमयत्वेहेतुरुक्तोनतुवि

## ॥ ॐ आकाशस्तल्लिंगात् ॐ ॥ २२ ॥

ष्णोरितिनमंतव्यम ॥ यतः ॥ अस्यलोकस्यकागतिरित्याकाशइतिहोवाचेत्यत्रभूताकाशस्यप्रा
प्तिः ॥ नचासौयुज्यतेकिंतुविष्णुरेव ॥ सएषपरोवरीयानुद्गीथःसएषोनंतइत्यादितल्लिंगात् ॥

सूत्रंव्याचष्टे॥अस्येति॥यद्यप्यस्यलोकस्यकागतिरितिवाक्येभूताकाशस्योक्तरीत्याऽस्तिप्रतिपाद्यत्वप्राप्ति
स्तथापिनासावत्रवाच्योयुज्यतेऽपितुविष्णुरेवयुज्यते॥परोवरीयस्त्वादिविष्णुलिंगस्याऽऽकाशनिष्ठतयाश्रव
णात्॥एवंयतस्तल्लिंगाच्छंदोगश्रुत्युक्ताऽऽकाशोविष्णुस्ततश्चकोह्येवेत्यत्रापिसएवप्रतिपाद्यतइतितस्यैवानंद
मयत्वेहेतुरुक्तोऽनआकाशस्याऽऽनंदमयत्वेहेतुरुक्तइतिनमंतव्यमित्यर्थः ॥ परस्मादुत्तमंप्रोक्तंपरोइतिततः ॥ ३५ ॥
परम्॥परोवरंपरंतस्मात्प्रोक्तंपारोवरीयकमितिस्मृतिः ॥ उच्चत्वेनगीतउद्गीतसएवोद्गीथः॥ ननुसर्वोत्तमत्वानं

तत्वयोः कुतो विष्णुलिंगत्वमित्यत आह॥ विष्णोरिति ॥ विष्णोर्वीर्याणि को नु प्रवक्ति यो पि पार्थिवपरमाणून् गणयतीति तस्यानंतत्वमुच्यते ॥ परो मात्रयेत्यनेन सर्वोत्तमत्वम्॥ नन्वनंतत्वमनंताकाशवत्पश्य. न्नित्याकाश्यापि स्मर्यते ऽतः कथं विष्णौ लिंगमित्यत आह॥ अनंत इति॥ ननु श्रुत्यापूर्वपक्षिते कथं लिंगेन निर्णयो लिंगस्य श्रुतितो दौर्बल्यादित्यत आह ॥ नामानीति ॥ श्रुत्यापूर्वपक्षिते ऽपि लिंगमात्रेण निर्णयो घटते॥ आकाशश्रुतेर्नामानि सर्वाणीति श्रुतिबलेन विष्णौ सावकाशत्वाल्लिंगस्य चाऽऽकाशे ऽनवकाशत्वात्॥ दुर्बलेनापि निरवकाशेन प्रब

विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि ॥ परो मात्रया तन्वा वृधाने त्यादि

नातस्यैव हि तल्लिंगम् ॥ अनंतो भगवान्ब्रह्म आनंदेत्यादिभिः पदैः ॥ प्रोच्यते विष्णुरेवैकः

परेषामुपचारत इति ब्राह्मे ॥ नामानि सर्वाणि यमाविशंतीति चोक्तम् ॥ ॥ २२ ॥ अ० ८॥

लस्यापि सावकाशस्य बाधोपपत्तेरिति भावः ॥ अस्तु लिंगेन श्रुतेर्बाधस्तथापि विष्णौ श्रुतिरमुख्यैवाऽन्यत्र रूढत्वाद्विष्णौ यौगिकत्वादिति चेन्न ॥ आकाशस्य भगवदधीनत्वेन तत्रैव मुख्यत्वान्महायोगविद्रूढयोर्भावाच्च ॥ न चाकाशस्यापराधीनत्वम् ॥ नभो ददाति श्वसतां मार्गं यन्नियमाददइत्यादेः ॥ न च भूतकारणत्वोक्तिविरोधः॥ तस्य विष्णावेव संभवात्॥ तस्मादाधिभौतिकसर्वशब्दोपलक्षकाकाशशब्दवाच्यो विष्णुरेवेति स एवाऽऽनंदमय इति स्थितम् ॥ २२ ॥ अ० ८ ॥

अन्यत्राप्येवमितिज्ञापनार्थमत्रसूत्रमादावेवपठति ॥ अतएवेति ॥ अत्रलोकतोऽन्यत्रप्रसिद्धप्राणनाम्नो
विष्णौसमन्वयसमर्थनादस्तिशास्त्रादिसंगतिः॥विषयवाक्योदाहरणपूर्वकंसंगतिंविषयसंशयौचसूचयति ॥
तदिति ॥ यदुदितमानंदमयत्वं विष्णोस्तत्कस्यचित्प्राणस्यतद्वैत्वमितिवाक्येमहाभोगशब्देनप्रतीयते॥ यस्मा
द्ब्रह्मणोभोगान्करिष्यमाणःकुर्वाणोऽकार्षीश्चतस्मात्त्वंमहाभोगोऽभवः ॥ स्वस्यमहाभोगाभावेपरस्मैतद्दा
नानुपपत्तेः॥ यस्मात्पायुगुह्यैक्येननवेंद्रियाभिमानिनोदेवानचेष्टयश्चेष्टयसिचचेष्टयिष्यसिचतस्मात्त्वंप्राण

तद्वैत्वंप्राणोअभवः महान्भोगःप्रजापतेः भुजःकरिष्यमाणः यद्देवान्प्राणयोनवे

## ॥ ॐ अतएवप्राणः ॐ ॥ २३ ॥

तिमहाभोगशब्देनपरमानंदत्वंप्राणस्योक्तम् ॥ सचप्राणःप्रसिद्धोवायुरित्यापतति ॥
श्चाभवइतितस्यचप्राणस्यविष्णोरन्यत्वेऽन्यस्यैवाऽऽनंदमयत्वंस्यादित्ययंनिर्णयोभवति ॥ सप्राणोत्रविष
यः॥किंविष्णुरुतवायुरितिसंदेहः॥महाभोगत्वंप्राणशब्दस्यान्यत्रप्रसिद्धिश्चसंदेहबीजमितिभावः ॥ तत्रसयु
क्तिकंपूर्वपक्षयति ॥ सचेति ॥ सप्राणोवायुर्भवेत् ॥ प्राणशब्दस्यतस्मिन्प्रसिद्धेः ॥ नचमहाभोगत्वंश्रुति
बाधकम् ॥ श्रुतितोलिंगस्यदौर्बल्यात् ॥ नचसावकाशत्वादिनाबाध्यबाधकभावः ॥ महाभोगस्यैववा
यौसावकाशत्वात् ॥ प्राणश्रुतेर्विष्णावनवकाशात् ॥ नहितावत्प्राणपदस्यतत्ररूढिरस्ति ॥ नापियोगः

संभवति ॥ प्राणशब्दप्रवृत्तिनिमित्तजीवनकारणत्वस्यान्वयव्यतिरेकाभ्यांवायावेवदर्शनात् ॥ यस्मिन्नि
र्यत्परित्यागउत्पत्तिर्मरणंतथेत्यादेः ॥ तथाचनिरवकाशप्राणश्रुत्यामहाभोगत्वलिंगस्यसावकाशस्यसुत
रांबाधोपपत्तेर्वायुरेवायंप्राणःप्रागुक्तानंदमयश्च ॥ प्राणशब्दस्यान्यत्रवृत्तावपिमुख्येमुख्यःप्रकीर्तितइतिमु
ख्यवायावेवमुख्यत्वात्सएवप्राणोभवेदितिभावः ॥ सिद्धांतयति ॥ नचेति ॥ कुतोनैवमित्याशंकायांहेतु
तयासूत्रंव्याचष्टे ॥ यतइति ॥ यतोयंप्राणोविष्णुरेवेतिसएवानंदमयोऽतोवायुरयंप्राणआनंदमयश्चेत्येत
न्नयुक्तमित्यर्थः॥कुतोऽयंप्राणोविष्णुरेवेत्यतःसौत्रंहेतुमुपादायव्याचष्टे॥ अतएवेति ॥ श्रीलक्ष्मीपतित्वादि

नचैवम् ॥ यतोविष्णुरेवप्राणः ॥ अतएवश्रीश्चतेलक्ष्मीश्चपत्न्यौ
अहोरात्रेपार्श्वेइत्यादितल्लिंगादेव ॥ २३ ॥ अ० १ ॥

विष्णुलिंगात्प्राणोविष्णुरेवेत्यर्थः॥वक्षस्थलाश्रिताश्रीरितिसंप्रदायविदः ॥ कथंश्रुत्यापूर्वपक्षितेसतिलिंगेन
निर्णयइतिचेत्॥ लिंगस्यनिरवकाशत्वात्प्राणश्रुतेर्विष्णावपिसावकाशत्वात्निरवकाशेनसावकाशस्यबा
धोपपत्तेः ॥ रूढियोगयोरभावात्कथंविष्णौप्राणश्रुतेरवकाशइतिचेन्न॥ ईशानःप्राणदःप्राणइत्यादिवि
द्वद्रूढेर्महायोगस्यचसत्वात् ॥ नचजीवनस्यप्राणान्वयव्यतिरेकविरोधः ॥ प्राणगतजीवनकारणत्वस्या
पिभगवदधीनत्वात् ॥ तथाचश्रुतिः ॥ नप्राणेननापानेनमर्त्योजीवतिकश्चन ॥ इतरेणतुजीवंतियस्मिन्नेता
वुपाश्रिताविति ॥ तस्मादाध्यात्मिकाशेषशब्दोपलक्षकप्राणशब्दवाच्योहरिरेवेतिस्थितम्॥२३॥ अ० १॥

अग्रलोकतोऽन्यत्रप्रसिद्धज्योतिर्नाम्नोब्रह्मणिसमन्वयप्रतिपादनादस्तिशास्त्रादिसंगतिः ॥ श्रुत्यधिकरणसं
गतीविषयवाक्योदाहरणपूर्वकंविषयसंशयौचसूचयति ॥ योवेदेति ॥ योवेदनिहितंगुहायामित्यानंदमय
स्यहृदयगुहानिहितत्वमुक्तम् ॥ मंत्रवर्णोक्तस्यैवान्नमयादिशब्दैरुच्यमानत्वात् ॥ तद्गुहानिहितत्वंविमेक
र्णापतयतइतिकस्यचिज्ज्योतिषःप्रतीयते॥ मेकर्णौज्योतिषोविरुद्धंपततः॥चक्षुश्चविरुद्धंपतति॥यदिदंहृदय

योवेदनिहितंगुहायामित्युक्तम् ॥ तच्चगुहानिहितम् ॥ विमेकर्णापतयतोविचक्षु

## ॥ ॐ ज्योतिश्चरणाभिधानात् ॐ ॥ २४ ॥

र्वी३दंज्योतिर्हृदयआहितंयत् ॥ विमेमनश्चरतिदूरआधीःकिंस्विद्वक्ष्यामिकिम
नूमनिष्येइतिज्योतिरुक्तम् ॥ तच्चज्योतिरग्निसूक्तत्वात्प्रसिद्धेश्चाग्निरेवेतिप्राप्तम्॥

आहितंज्योतिस्तदप्यत्यंतंकर्णादिविरुद्धंवर्तते ॥ मेमनश्चातीवविरुद्धंचरति ॥ अतआत्मबुद्धिरप्यहंकिं
नुवक्ष्यामिकिंवेदानींचिंतयामीति ॥ एतच्चयदिविष्णोरन्यत्तर्ह्यानंदमयत्वंचान्यस्यैवप्रसज्येतेतिनिर्णयंभ
वतितज्ज्योतिरत्रविषयः॥किंविष्णुरुताग्निरितिसंदेहः ॥गुहानिहितत्वंज्योतिःशब्दस्याग्नौप्रसिद्धिश्चसंदेहबी
जमितिभावः॥तत्रसयुक्तिकंपूर्वपक्षयति ॥ तच्चेति ॥तज्ज्योतिरग्निरेवभवेत् ॥ एतत्सूक्तस्याग्निसूक्तत्वात्॥न ॥ ३७ ॥
चवाच्यंप्रकरणादपिलिंगस्यबलीयस्त्वाद्गुहानिहितत्वलिंगेनास्यबाधइति॥ज्योतिःश्रुतेरग्नावेवरूढत्वात् ॥

नहिलिंगंश्रुतिप्रकरणापबाधनेशक्तंयावताश्रुतितएवदुर्बलम् ॥ श्रुतिःसावकाशेतिचेन्न ॥ जाठरजातवेदसिलिंगस्यापिसावकाशत्वात् ॥ तथाचसावकाशलिंगमात्रात्सावकाशश्रुतिप्रकरणयोर्बलवत्वादग्निरेवेदंज्योतिस्ततश्चगुहानिहितत्वमानंदमयत्वंचतस्यैवेत्यर्थः ॥ सिद्धांतयत्सूत्रमवतारयति ॥ अतइति ॥ यस्मादितिप्राप्तमतआह ॥ सूत्रकारइत्यर्थः ॥ सूत्रंव्याचष्टे ॥ विष्णुरेवेति ॥ विष्णुरेवेदंज्योतिर्भवेत् ॥कर्णा

अतआह ॥ विष्णुरेवज्योतिः ॥ कर्णादीनांविचरणाभिधानात् ॥ सहि
परोमात्रयातन्वावृधानेत्यादिनाकर्णादिविदूरः ॥ २४ ॥ अ० १० ॥

दीनामेतज्ज्योतिर्विरुद्धचरणाभिधानात् ॥ कर्णादिविदूरत्वलिंगादित्यर्थः ॥ कर्णादिविदूरत्वाभिधानेपिकुतोविष्णुरिदंज्योतिरित्यतआह ॥ सहीति॥ मीयंतेविषयाअनेनेतिमात्राइंद्रियगणस्ततस्त्वंपरोसीत्यर्थः ॥ नचप्रकरणविरोधः ॥ लिंगेनप्रकरणबाधोपपत्तेः ॥ नचश्रुतिविरोधः ॥ श्रुतेर्विष्णावपिसावकाशत्वात् ॥ महायोगविद्वद्रूढिसद्भावेनमुख्यत्वाच्च ॥ निरवकाशलिंगेनसावकाशश्रुत्यादेर्बाधोपपत्तेः ॥ अतोविष्णुरेवेदंज्योतिरितितस्यैवगुहानिहितत्वमानंदमयत्वंचेतिसिद्धम् ॥ २४ ॥ अ० १० ॥

अत्रसूत्रमेवादौपठति ॥ छंदोभिधानादिति ॥लोकतोऽन्यत्रप्रसिद्धगायत्रीनाम्नोहरौसमन्वयसमर्थनादस्ति शास्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिविषयवाक्यविषयसंशयपूर्वपक्षतत्फलानिसूचयन्सूत्रंव्याचष्टे ॥ अथेति ॥ हृदयनिहितंज्योतिर्विष्णुरित्यभिहितंतच्चज्योतिश्छंदोगश्रुतौश्रूयते ॥ अथयदतःपरोदिवोज्योतिर्दीप्यते ॥ विश्वतःपृष्ठेषुसर्वतःपृष्ठेष्वनुत्तमेषूत्तमेषुलोकेष्विदंवावतद्यदिदमस्मिन्पुरुषेज्योतिरिति ॥ एतच्चगा

अथयदतःपरोदिवोज्योतिर्दीप्यतेइत्युक्तस्यज्योतिषोगायत्री

## ॥ ॐ छंदोभिधानान्नेतिचेन्नतथाचेतोर्पणनिगदात्तथाहिदर्शनम् ॐ ॥ २५ ॥

वाइदंसर्वमितिगायत्र्यासमारंभःकृतः ॥

यत्रीत्वेनपठ्यते ॥ गायत्रीवाइदंसर्वंभूतंयदिदंकिंचवाग्वैगायत्रीवाग्वाइदंसर्वमित्युपक्रमात् ॥ इयंचगायत्रीयदाविष्णोरन्यास्यात्तदेदंज्योतिश्चसास्यादितिगायत्रीनिर्णयोवश्यापेक्षितः ॥ सागायत्रीविषयः ॥ किंविष्णुरुतच्छंदोविशेषइतिसंदेहः ॥ ज्योतिःश्रुतिर्लोकप्रसिद्धिश्चसंदेहबीजम् ॥ तत्रगायत्रीछंदोविशेषएवेतिपूर्वःपक्षः ॥ गायत्रीशब्दस्यतत्रैवरूढत्वात् ॥ वाग्वैगायत्रीतिवाक्त्वविधानाच्च ॥ नचज्योतिःश्रुत्यागा

यत्र्यादिश्रुतिबाधः ॥ श्रुतेःश्रुतिबाधकत्वायोगात् ॥ नचसावकाशत्वादिनाबाध्यबाधकभावः ॥ गाय
त्र्यांतेजोवैब्रह्मवर्चसंगायत्रीतिज्योतिःशब्दानतिभिन्नार्थतेजःशब्दश्रवणेनज्योतिःश्रुतेरेवसावकाशत्वात्॥
नचगायत्रीश्रुतिर्विष्णाववकाशवतीरूढेरभावात् ॥ योगस्यचामुख्यवृत्तित्वात् ॥ नचगायत्र्याभगवदधी
नत्वेनतस्मिन्नेवतच्छ्रुतेर्मुख्यत्वमितिवाच्यम् ॥ गायत्र्यावेदविशेषत्वेननित्यत्वात् ॥ नित्यस्यचपराधीनता

तस्मान्नविष्णुरितिचेन्न ॥ तथाचेतोर्पणार्थंहिनिगद्यते ॥ अ
ग्निगायत्र्यादिशब्दार्थरूपोऽसावितिचेतोर्पणार्थंहिनिगद्यते ॥

योगात् ॥ तस्माद्गायत्रीनविष्णुरपितुछंदोविशेषएवततश्चेदंज्योतिरानंदमयश्चनासावितिभावः ॥ सिद्धांत
यत्सूत्रांशमनुकरोति ॥ नेति ॥ स्वपदानिवर्णयति ॥ अग्नीति ॥ अत्रगायत्रीशब्देनविष्णुरेवनिगद्यते ॥ त
स्माज्ज्योतिःशब्देनापिसएवनिगद्यते ॥ ततश्चसएवानंदमयः ॥ नचगायत्र्यादिशब्दैरुच्यतेतद्भेदविधाना
र्थंकिंतुगायत्र्यादिशब्दार्थगुणस्वरूपत्वेनोपासनार्थमेवेतिभावः ॥ आदिपदेनवाचोग्रहणम् ॥ अधिकरणां
तरेप्येतन्न्यायस्यानुसंधेयत्वंहिशब्देनसूचयति ॥ भवेज्ज्योतिषोपिविष्णुत्वंयदिगायत्रीयंविष्णुस्यात्तदेवकु

तइत्यतआह ॥ तथाहीति॥दर्शनंश्रुतिः ॥ एतद्गायत्र्यागानत्राणकर्तृत्वलिंगश्रवणात्तस्यचछंदस्यसंभ
वाद्विष्णुरेवगायत्रीततोज्योतिरपिसएवेतिभावः ॥ आदिपदेनयावैसागायत्रीयंवावसायेयंपृथिवीत्या
देःसंग्रहः ॥ ननुगायत्रीश्रुतेरन्यत्रनिरूढत्वात्कथंलिंगमात्रेणविष्णुत्वनिश्चयइत्यतआह ॥सर्वेति॥ गायत्री
श्रुतेःपौराणिकरूढ्याश्रुत्युक्तयोगेनगायत्र्याभगवदधीनत्वेनचविष्णावेवमुख्यवृत्त्यासावकाशत्वात् लिं

तथाहिदर्शनं गायतित्रायतिचेत्यादि ॥ सर्वच्छंदोभिधोह्येषसर्वदेवाभि
धोह्यसौ ॥ सर्वलोकाभिधाह्येषतेषांतदुपचारतइतिवामने ॥ २५ ॥

गस्यामुख्यवृत्त्याप्यन्यत्रानवकाशात् सावकाशश्रुतेर्निरवकाशलिंगेनबाधोपपत्तेर्युक्तोलिंगमात्रेणायंनि
र्णयइतिभावः ॥ नचनित्यस्यपराधीनत्वायोगः ॥ स्वभावजीवकर्माणिद्रव्यंकालःश्रुतिःक्रिया ॥ यत्प्र
सादादिमेसंतिनसंतियदुपेक्षयेतिनित्यानामपिभगवदधीनत्वश्रौतत्वात् ॥ अत्रदेवलोकपदाभ्यामग्निपृथि
व्यादिशब्दानांचभगवत्परत्वमुच्यते ॥ २५ ॥

हेत्वंतरेणापिगायत्र्याविष्णुत्वंसमर्थयत्सूत्रमुपन्यस्यतद्गृहीतश्रुतिमेवोदाहरति ॥ भूतादीति ॥ सैषाचतुष्प
दाषड्विधागायत्रीतिगायत्र्याःप्रागुक्तषड्विधत्वमनूद्यचतुष्पदत्वंव्यपदिश्यतत्रैवपुरुषसूक्तमंत्रःसंवादायोदा
क्रियतेतदेतदृचाभ्यनूक्तंतावानस्येति ॥ अस्यपुरुषस्यतावान्पूर्वोक्तोमहिमानकेवलमेतावान्किंतुपुरुषः
ततःपूर्वोक्तादपिमहिम्नोज्यायान् ॥ कथंसर्वाणिभूतान्यस्यैकःपादः ॥ अस्यामृतंस्वरूपभूतंपादत्रयंदि
तावानस्यमहिमाततोज्यायांश्चपुरुषः ॥ पादोस्यसर्वाभूतानित्रिपादस्यामृतंदिवीति ॥ सुवर्ण

॥ ॐ भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॐ ॥ २६ ॥

कोशंरजसापरिवृतम् ॥ देवानांवसुधानींविराजम् ॥ अमृतस्यपूर्णांतामुकलांविचक्षते ॥
पादंषड्ढोतुर्नकिलाविवित्सइतिश्रुतेः ॥ पादइतिएकदेशपरिमितंचतुर्भागबलइतिवद्भिन्नंच ॥
वितिष्ठतीति ॥ एवंगायत्र्याभूतादिपादव्यपदेशाच्चसाविष्णुर्भवेत् ॥ भूतादिपादव्यपदेशस्यविष्णावेवोपप
त्तेरन्यत्रानुपपत्तेश्चेतिभावः ॥ ननुभूतादिपादव्यपदेशोगायत्र्यामिवविष्णावपिनोपपद्यतेतस्यापिभूतभि
न्नत्वादित्यतआह ॥ सुवर्णमित्यादिना ॥ नायंपादशब्दोमृतपादत्रयवद्भूतानामपिस्वरूपांशत्वाभिप्रायः
किंतुयज्ञदत्तस्यचतुर्भागबलोदेवदत्तइतिवद्भिन्नमेवविश्वंतत्पादपरिमितसामर्थ्यंपादतयोच्यते ॥ अतोभूत
पादत्वंविष्णोरुपपद्यते ॥ तर्हिविश्वचतुष्टयसमोहरिरित्यागतमितिनमंतव्यम् ॥यतोऽत्रपादपदेनविश्वंदिष्णु

सामर्थ्यैकदेशपरिमितमुच्यतेनचतुर्थांशपरिमितम्॥ कुतएतत्॥ सुवर्णकोशमितिश्रुतेरेवेत्यर्थः॥ सौवर्णब्रह्मांड कोशंरजोगुणोपलक्षितावादिपरिवृतंब्रह्मणःशरीरंदेवानांवसुनिधानमंजूषांमुक्तैःपूर्णांतांपांडिंद्रियेषुविषय होतुर्विष्णोरेकदेशपरिमितामाचक्षते॥ पादपदेनपुरुषसूक्ताद्यागमाः॥ यतःसाचतुर्थभागसाम्यंनलेभेकिले

सहिपुरुषसूक्ताभिधेयः ॥ यज्ञेनयज्ञमयजंतेतियज्ञशब्दात् ॥ यज्ञोविष्णुर्देवतेतिहिश्रु
तिः ॥ तस्मिन्कालेमहाराजोरामएवाभिधीयते ॥ यथाहिपौरुषेसूक्तेविष्णुरेवाभिधी
यतेइतिचस्कांदे ॥ २६ ॥

त्यर्थः॥ नकेवलंभूतादिपादत्वस्यविष्णावेवोपपत्तेस्तल्लिंगत्वंकिंतुपुरुषसूक्तत्वाच्च॥ भूतादिपादत्वस्यपुरुषसू क्तोक्तत्वेपिकुतोविष्णुलिंगत्वमित्यतआह ॥ सहीति ॥ यज्ञशब्दःकथंतन्निश्चायकइत्यतआह ॥ यज्ञ इति ॥ अन्यप्रकरणेप्यन्यश्रुतिःप्रासंगिकीयंभवतु ॥ भूतादिपादेनदभावादित्यतोऽत्रस्मृतिंचाह ॥ तस्मि न्निति ॥ पुरुषसूक्तोक्तत्वंगायत्र्याविष्णुत्वएववापृथग्युक्तिःसमर्थ्यते ॥ सहीति ॥ २६ ॥

उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याक्षेपांशंनावद्याचष्टे ॥ उपदेशेति ॥ यदुक्तंगायत्रीज्योतिश्चविष्णुरि
तितद्भवेद्यदिगायत्रीज्योतिःप्रसंगयोरेकंवस्तूच्येत ॥ नचैवम्॥त्रिपादस्यामृतंदिवीतिगायत्र्याद्युस्थितत्वो
क्त्यापरोदिवइतिज्योतिषोदिवःपरत्वोक्त्याविरोधान्नैकंवस्त्वत्रोच्यते ॥ अतःकथमुभयोर्विष्णुत्वाध्यवसा
यइत्यर्थः ॥ सिद्धांतयत्सूत्रांशंव्याचष्टे॥नेति॥नात्रवस्तुद्वयमुच्यतेयेनोभयोर्विष्णुत्वाभावःकिंतूभयत्राप्ये
कमेव॥विवक्षाभेदेनसप्तमीपंचम्योरेकार्थत्वेनविरोधाभावात्॥तथाहि॥भूर्भुवःस्वरितिलोकत्रयाभिप्रायेण

त्रिपादस्यामृतंदिवीतिपूर्वोपदेशः ॥ परोदिवइतिपंचम्यंतःपश्चिमः ॥ तस्मान्नैकंवस्त्वत्रो

॥ ॐ उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् ॐ ॥ २७ ॥

च्यतइतिचेन्न ॥ त्रिसप्तलोकापेक्षयाउभयस्मिन्नप्यविरोधात् ॥ २७ ॥ अ० ११ ॥

लक्षयोजनोच्छ्रितांतरिक्षोपरितनश्वेतद्वीपानंतासनवैकुंठानांद्युत्वात्तद्गतरूपत्रयंदिवीत्युच्यते ॥सत्यलोका
पेक्षयाइंद्रसदनस्यद्युत्वाद्वैकुंठस्यदिवःपरत्वम् मेरोरपिद्युत्वात्तत्परानंतासनस्यदिवःपरत्वम् सूर्यमंडलस्या
पिद्युत्वेनतदुत्तरश्वेतद्वीपस्यदिवःपरत्वम तत्रस्थमूर्तित्रयस्यदिवःपरत्वंचयुज्यते ॥अतउभयथोपदेशेऽपिवि
रोधाभावादुभयत्राप्येकमेवविष्ण्वाख्यंवस्तूच्यतइतिभावः ॥ एवंपृथिव्यंतरिक्षस्वरात्मकसर्वलोकेभ्यःक्र
मेणानंतासनादीनामुच्चत्वेनसर्वतःपृष्ठत्वंतथामेरुवैजयंतसत्यलोकेभ्योब्रह्मसदनेभ्यस्तेषांक्रमेणोच्चत्वाद्वि
श्वतःपृष्ठत्वंचज्ञातव्यम् ॥ तस्माद्गायत्रीविष्णुरेवसएवज्योतिरानंदमयश्चेतिसिद्धम् ॥ २७ ॥ अ० ११ ॥

अत्रलोकतोऽन्यत्रप्रसिद्धप्राणनाम्नोविष्णौसमन्वयप्रतिपादनादस्तिशास्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिवि
षयवाक्यविषयसंशयसयुक्तिकपूर्वपक्षानुदर्शयति॥प्राणइति॥ तद्वैत्वंप्राणइत्युक्तःप्राणोविष्णुरित्युक्तम् ॥
ऐतरेयकेच कश्चित्तावाएताइत्यारभ्यबहुषुस्थलेषुप्राणःश्रूयते ॥ तस्यविष्णोरन्यत्वेप्राचीनोप्यन्यइतिशं
कास्यादित्ययमवश्यंविचार्यः॥सप्राणोऽत्रविषयः ॥ किंविष्णुरुतान्यइतिसंदेहः॥पूर्वोक्तन्यायोऽन्यत्रप्रसि

प्राणोविष्णुरित्युक्तम्॥तत्रतावाएताःशीर्षंच्छ्रियःश्रिताश्चक्षुःश्रोत्रंमनोवाक्प्राणइत्यत्रप्राणस्यवि
ष्णुत्वंनयुज्यते॥इंद्रियैःसहाभिधानादिति॥अतआह॥तंदेवाःप्राणयंतसएषोसुःसएषप्राणःप्राणश्च

## ॥ ॐ प्राणस्तथानुगमात् ॐ ॥ २८ ॥

चइत्येवविद्यात्॥ तदयंप्राणोऽधितिष्ठतीत्याद्यनुगमात् ॥ अत्रापिप्राणोविष्णुरेव ॥ विष्णुमेवान
यन्देवाविष्णुंभूतिमुपासते॥सएवसर्ववेदोक्तस्तद्वथोदेहउच्यतइतिस्कांदे॥ब्रह्मशब्दानुगमाच्च॥२८॥

द्धिश्चसंदेहबीजम् ॥ तत्रनप्राणोविष्णुःकिंतुवाय्वादिरेवेतिपूर्वःपक्षः॥ एतत्प्राणस्येंद्रियगणेगणितत्वात्॥न
चैतल्लिंगंविष्णावकाशंलभते ॥ उपपद्यतेचमुख्यप्राणादिष्वतस्तेषामन्यतमस्यैतत्प्राणत्वात्प्राचीनप्राण
आनंदमयोप्यन्यएवेतिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ तद्वैत्वंप्राणइतिश्रुताविवा
त्रापिश्रुतःप्राणोविष्णुरेव॥विष्णुलिंगानांदेवनोपदेश्यत्वादीनामस्मिन्प्राणेऽनुगमादनुवृत्तेरभ्यासादित्यर्थः॥

तथाशब्दःसमुच्चयार्थोऽतोत्रापीत्याह ॥ तंदेवाःप्राणयंतेति ॥ तंप्राणंदेवाःशिष्यादिषुसम्यक्नीतवंतः ॥ सएषोसुःसएषप्राणःसएषभूतिश्चाभूतिश्चतंभूतिरितिदेवाउपासांचक्रिरेइतिप्राणस्यभूतित्वेनदेवोपास्यत्वमुच्यते ॥ तावाएताःसर्वाऋचःसर्वेवेदाःसर्वेघोषाएकैवव्याहृतिःप्राणएवप्राणऋचइत्येवविद्यादितित्तस्यसर्ववेदोक्तत्वमुच्यते ॥ अथदेवरथस्तस्यवाग्द्धिःश्रोत्रेपक्षसीचक्षुषीयुक्तेमनःसंगृहीतातदयंप्राणोऽधितिष्ठतीतितस्यदेहरथित्वमुच्यते ॥ सचासावयंचेतितदयम् ॥ तदितिरथतयोक्तंशरीरंवा ॥ लिंगव्यत्ययोवा ॥ लिंगेनपूर्वपक्षितेकथंतेनैवसिद्धांतइत्याशंकानुदयायलिंगबाहुल्योक्तिः ॥ बाहुल्यस्यापिप्राबल्यहेतुत्वात् ॥ यदाहुः द्विविधंबलवत्त्वंचबहुत्वाच्चस्वभावतइति ॥ ननुसैद्धांतिकलिंगतोपिपूर्वपक्षलिंगमेवबलवन्निरवकाशत्वात् ॥ बाहुल्येनबलवतोपिस्वभावबलिनःप्राबल्यात् ॥ यतआहुः ॥ तयोःस्वभावोबलवानुपजीव्यादिकश्चसइति ॥ अतःकथंतैर्विष्णुत्वनिश्चयइत्यतोलिंगानामनन्यथासिद्धतांचस्मृत्यासाधयति ॥ विष्णुमेवेति ॥ एकप्रकारेणप्रबलात्प्रकारद्वयेनापिप्रबलस्याधिक्येननिर्णयोपपत्तिरितिभावः ॥ अभ्युपेत्यचेदमुदितम् ॥ यावताप्राणैःसहगणितत्वस्यांतर्यामिनिष्ठतासेत्स्यति ॥ यदाप्रकारद्वयेनापिदुर्बललिंगस्योभयथाप्रबललिंगतोबाधसंभवेनप्राणस्यविष्णुत्वसिद्धिस्तदाकिंवाच्यमेतद्ब्रह्म ॥ ब्रह्मणोलोकोब्रह्मेमंपुरुषमुदरंब्रह्मेत्यादिनिरवकाशब्रह्मशब्दाभ्यासादितिभावेनानुगमपदंप्रकारांतरेणव्याचष्टे ॥ ब्रह्मेति ॥ २८ ॥

उक्तमाक्षिप्यसमादधत्सूत्रंपठित्वाऽऽक्षेपांशंतावद्व्याचष्टे।नेति॥यदुक्तंविष्णुरयंप्राणइतितदयुक्तम्॥तमिंद्र
उवाचऋषेप्रियंवैमेधामोपागावरंतेददामीति सहोवाच त्वामेवजानीयामितितमिंद्रउवाच प्राणोवाअह
मस्म्यृषइतिबृहतीसहस्रवक्तुर्विश्वामित्रस्येंद्रेणप्राणतयात्मोपदेशात् ॥ नचायमिंद्रोपिविष्णुः॥प्रसिद्धस्यैवें
द्रोवैवृत्रंहत्वेत्यादौमहाव्रतयज्ञेयजमानत्वेनप्रकृतत्वात् ॥ नचास्योपदेशस्यसावकाशत्वंचास्ति॥ अतइंद्र
एवायंप्राणइत्याशयः॥ नञध्याहारेणसिद्धांतांशंव्याचष्टे।नेति॥ नेंद्रोयंप्राणःकिंतुविष्णुरेव॥प्रागुक्तप्रबल
तमलिंगादेः॥उपदेशविरोधइतिचेत्॥भवेदयंविरोधोयद्यत्रेंद्रेणप्राणतयात्मोपदेशःक्रियेत।नैतदस्ति॥यतोऽ
प्राणोवाअहमस्म्यृषइतिवक्तुरात्मोपदेशादिंद्रएवेतिचेन्न ॥ प्राणस्त्वं

## ॥ ॐ नवक्तुरात्मोपदेशादितिचेदध्यात्मसंबंधभूमात्यस्मिन् ॐ ॥ २१ ॥

प्राणःसर्वाणिभूतानीतिबह्वध्यात्मसंबंधोह्यत्रविद्यते ॥ २१ ॥

स्मिन्प्रकरणेस्वस्थितस्यप्राणोवाअहमस्मीतिपरमात्मत्वमुक्त्वातस्यैवप्राणाख्यपरमात्मनःप्राणस्त्वंप्राणः
सर्वाणिभूतानीत्यादिनाबहुस्थलसंबंधःसर्वगतत्वमेवेंद्रेणोक्तंविद्यतइत्यर्थः॥ अथवेंद्रेबहुपरमात्मसंबंधोवि
द्यतेतदपेक्षयैवायमुपदेशोनस्वापेक्षया॥कुतः॥प्राणस्त्वमित्यादिनाऽस्यप्राणस्याध्यात्मत्वेनांतर्यामित्वेनसर्व
गतत्वोक्तेर्विद्यमानत्वात्॥नचैतदिंद्रेजीवविशेषेयुक्तमित्यर्थः ॥अन्यथात्वामेवजानीयामितिज्ञातपूर्वेंद्रस्य
मुनेःप्रश्नस्यैवासंभवात्॥संभवेवाप्राणस्त्वमित्यादिपरिहारवाक्यासंगतेश्च॥अस्मत्पक्षेतुतेजोबाहुल्यादिंद्रेऽ

न्योपिवर्तंते॥ कोसौविष्णुश्चेत्सचकीदृशइत्यभिप्रायद्वयेनप्रश्नेसतिकस्त्वयीतिप्रश्नस्यप्राणोवाहमितिपरिहारः॥कीदृशोऽसावित्यस्योत्तरइतिवाक्ययोजनोपपत्तेरिति ॥२९॥ नन्वत्रयदिप्राणपदेनेंद्रेणापिविष्णुरेवस्वात्मादिसर्वगततयोच्यतेतर्हिमयिप्राणइत्यादिप्रयोगःस्यात्॥ विष्णावहमित्यादिरूपोपदेशायोगादित्याशंकांपरिहरत्सूत्रंपठित्वाशास्त्रपदंसप्रमाणकंव्याचष्टे॥शास्त्रेति॥एतत्प्राणस्यविष्णुत्वेपिप्राणोहमित्युपदेशोयुज्यते ॥ यतोऽयमुपदेशोंऽतर्यामिरूपभगवदपेक्षयेतिसूत्रार्थेस्थितेंऽतर्यामिण्यप्यहमादिप्रयोगःकथंसंभव

शास्त्रमंतर्यामी॥संविच्छास्त्रंपरंपदमितिहिभागवते॥ तत्तन्नाम्नोच्यतेविष्णुःसर्वशास्तृत्वहेतुतः ॥

## ॥ ॐ शास्त्रदृष्ट्यातूपदेशोवामदेववत् ॥ ॐ ॥ ३० ॥

नक्कापिकिंचिन्नामास्तितमृतेपुरुषोत्तममितिपाद्मे ॥ अहंमनुरभवंसूर्यश्चेत्यादिवत् ॥ ३० ॥

तीत्याशंकायांस्मृतिमेवाह ॥ तत्तदिति ॥ अंतर्यामिण्यप्यहमादिशब्दप्रयोगादर्शनात्तदयोगइत्यतःसूत्रोक्तंदृष्टांतंविवृणोति ॥अहमिति॥ यथांऽतर्यामिविवक्षयाऽहंमन्वादिशब्दान्प्रयुयुजेतथाऽयमुपदेशोयुक्तइतिभावः॥नचतत्रापिविवादः॥वामदेवस्यमन्वादित्वाभावात्॥चैतन्यैक्यविवक्षयोक्तिरितिचेन्न॥ किमन्नसाक्षादैक्यमुच्यतेलक्षणयावा॥ नाद्यः ॥ विरोधात् ॥ नद्वितीयः ॥ लक्षणायाअमुख्यत्वात् ॥ सममेतदितिचेन्न ॥ तत्तन्नाम्नोच्यतइतिसर्वशब्दानामंतर्यामिण्येवमुख्यत्वोक्तेः ॥ ३० ॥

पुनरुक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंतावद्व्याचष्टे ॥जीवेति॥अथापिनाप्रोक्तप्राणोविष्णुः।एषइमंलोकमभ्यार्चत्पुरुषरूपेणयएषतपतिप्राणोवावतदभ्यार्चत्प्राणोह्येषयएषतपतितंशतंवर्षाण्यभ्यार्चत्तस्माच्छतंवर्षाणिपुरुषायुषोभवंतीतिप्राणस्योक्तशतायुष्ट्वस्योपर्यपितावंतीत्यादिनाबहुस्थलेष्वनुसंधानात् ॥ शतायुष्ट्वस्यजीवलिंगत्वात् ॥ शतायुर्वैपुरुषइत्यादिश्रुतेः॥ताअहिंसंताहमुक्थमस्म्यहमुक्थमस्मी

तावंतिशतसंवत्सरस्याह्नांसहस्राणिभवंतीतिजीवलिंगंप्राणसंवादा

॥ ॐ जीवमुख्यप्राणलिंगान्नेतिचेन्नोपासात्रै
विध्यादाश्रितत्वादिहतद्योगात् ॐ ॥ ३१ ॥

दिमुख्यप्राणलिंगंतस्मान्नेतिचेत् ॥

तिप्राणस्येंद्रियैःसहकत्थनश्रवणात् ॥ प्राणउदक्रामत्तत्प्राणउत्क्रांतेपद्यतप्राणःप्राविशत्तत्प्राणेप्रपन्नउदतिष्ठदित्युत्क्रमणप्रवेशादिश्रुतेः ॥ तथाप्राणोवंशइतिस्थविरःशाकल्यस्तद्यथाशालावंशेसर्वेऽन्येवंशाःसमाहिताःस्युरेवमस्मिन्प्राणेचक्षुःश्रोत्रंमनोवागिंद्रियाणिशरीरंसर्वआत्मासमाहितइतिसर्वजीवेंद्रियदेहधारकत्वोक्तेश्च॥प्राणसंवादादीनांचमुख्यप्राणलिंगत्वेनाथहप्राणाअहंश्रेयसिव्यूदिरेइत्यादिश्रुतिसिद्धत्वात्॥उदासीनौचतावास्तांकेशवश्चाब्जसंभवइतिविष्णोर्विवादादावौदासीन्योक्तेश्च ॥ अतोऽत्रप्राणनिष्ठतयाजीवमु

ख्यप्राणलिंगसद्भावात्तयोःप्राणत्वमितिभावः ॥ परिहारांशंव्याचष्टे ॥ नेति ॥ विष्णुरेवायंप्राणोनजीवा
दिः॥लिंगानांतदंतर्यामिभगवद्विषयतयोपपत्तेः ॥ किमर्थमंतर्यामिकथनमितिचेत् ॥ अंतरादिभेदेनभग
वदुपासनस्यत्रैविध्यादेतत्प्रकरणेतत्त्रैविध्यस्योक्तत्वाच्चेतिभावः ॥ अत्रोपासात्रैविध्यमुच्यतेइत्यत्रकिं
लिंगमित्यतआह ॥ सइति ॥ सभगवानेतमेवमस्तकसीमानंविदार्यैतयाद्वारासुषुम्नयाहृदयंप्राप्तइत्यं

न ॥ अंतर्बहिःसर्वगतत्वेनेत्युपासात्रैविध्यादिहाश्रितत्वाच्च ॥ सएतमेव
सीमानंविदार्यैतयाद्वाराप्रापद्यत ॥ सएतमेवपुरुषंब्रह्मततममपश्यत् ॥
एतद्धस्मवैतद्विद्वानाहमहिदासऐतरेयइत्यादिना ॥ महिदासाभिधोजज्ञे
इतरायास्तपोबलात् ॥ साक्षात्सभगवान्विष्णुर्यस्तंत्रंवैष्णवंव्यधादितिचब्रह्मांडे ॥

तरुपासनायोच्यते ॥ सप्रागंतःस्थोभगवानेतंप्राप्तंपुरुषमात्मानंततमंब्रह्मापश्यदितिसर्वगतोपासनार्थमुच्य
ते ॥ महिदासइतिबहिरुपासनार्थमुच्यते ॥ नचवाच्यमत्रस्वरूपमात्रमुच्यतेनोपासनार्थमिति ॥ उपासनां
विनोक्तिप्रयोजनाभावात्॥नचमहिदासोमुनितयोच्यते ॥ वैयर्थ्यादेव ॥ महिदासस्यविष्णुत्वंकुतइत्यतआ
ह ॥ महिदासेति ॥ नन्वेकविधोपासनयाब्रह्मापरोक्षसंभवात्किमुपासात्रैविध्येनेत्यतःसूत्रशेषंव्याचष्टे ॥

तत्त्वदिति ॥ नैकविधोपासनयासर्वेषांब्रह्मज्ञानम् ॥ अंतरादिविविधोपासनयोग्यत्वादित्यर्थः ॥ कुतःपुरु
षाणामुक्तानेकविधोपास्तियोग्यतेत्यतआह ॥ केषांचिदिति ॥ अत्रैवविशेषप्रमाणमाह ॥ अग्नाविति ॥
अग्नौप्रतिमास्विति बहिरुपासनोपलक्षणम् ॥ अतोऽन्यलिंगानांतदंतर्यामिविवक्षयोपपत्तेर्विष्णुरेवायंप्राण

तत्तदुपासनायोग्यतयाचपुरुषाणाम् ॥ केषांचित्सर्वगत्वेनकेषांचिद्धृद
येहरिः ॥ केषांचिद्बहिरेवासावुपास्यःपुरुषोत्तमइतिब्राह्मे ॥ अग्नौ
क्रियावतांविष्णुर्योगिनांहृदयेहरिः ॥ प्रतिमास्वप्रबुद्धानांसर्वत्रविदिता
त्मनामितिच ॥ ३१ ॥ अ० १२ ॥ ॥ इतिश्रीमत्कृष्णद्वैपायन
कृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेप्रथमाऽध्या
यस्यप्रथमःपादः ॥ १ ॥

आनंदमयश्चेतियुक्तात्जिज्ञासेतिसिद्धम् ॥ ३१ ॥ अ० १२ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यवि
रचितस्यश्रीमद्ब्रह्मसूत्रभाष्यस्यटीकायांजयतीर्थमुनिविरचितायांश्रीमत्तत्त्वप्रकाशिकायांप्रथमाऽध्याय
स्यप्रथमःपादः॥श्रीकृष्णार्पणमस्तु ॥ श्रीगुरुभ्योनमः॥

श्रीवेदव्यासायनमः ॥ ॐ एतत्पादप्रतिपाद्यंदर्शयति ॥ लिंगेति ॥ लिंगात्मकानामितितद्धर्मविशिष्टधर्मि
वाचिनामित्यर्थः ॥ अन्यत्रप्रसिद्धानामितिसंयोज्यम् ॥ वैश्वानराधिकरणेनामसमन्वयसिद्धेःप्राधान्येने
त्युक्तम् ॥अत्रलोकतोऽन्यत्रप्रसिद्धाऽऽदित्यश्रुतिसहपठितसर्वगतत्वलिंगात्मकशब्दस्यपरब्रह्मणिसमन्वयप्र
तिपादनादस्तिशास्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिविषयसंशयौचसूचयति ॥ ब्रह्मेति ॥ ब्रह्मततममितिवि

हरिः ॐ ॥ लिंगात्मकानांशब्दानांविष्णौप्रवृत्तिदर्शयत्यस्मिन्पादेप्राधान्येन ॥ ब्रह्मततम
मितिसर्वगतत्वमुक्तंविष्णोः ॥ तच्चतस्यैतस्यासावादित्योरसइत्यादिनाऽऽदित्यस्यप्रतीयते ॥

## ॥ ॐ सर्वत्रप्रसिद्धोपदेशात् ॐ ॥ १ ॥

अतोब्रवीत् ॥ सयश्चायमशरीरःप्रज्ञात्मेत्यादिनासर्वत्रोच्यमानोनारायणएव ॥ तदेवब्रह्म
परमंकवीनाम् ॥परमंयोमहद्ब्रह्म ॥ वासुदेवात्परःकोनुब्रह्मशब्दोदितोभवेत् ॥ सहिसर्वगुणैः
पूर्णस्तदन्येतूपचारतइतितस्मिन्नेवप्रसिद्धब्रह्मशब्दोपदेशात् ॥ १ ॥

ष्णोःसर्वगतत्वमुक्तम् ॥ तदेवैतरेयकेएतंह्येवबह्वृचामहत्युक्थेमीमांसंतएतमग्नावध्वर्यवःएतंमहाव्रतेच्छंदो
गाएतमस्यामेतंदिव्येतंवायावेतमाकाशएतमप्स्वेतमोषधीष्वेतंवनस्पतिष्वेतंचंद्रमस्येतंनक्षत्रेष्वेतंसर्वेषुभू
तेष्वेतमेवब्रह्मेत्याचक्षतइत्याम्नायते ॥ तद्यदिविष्णोरन्यस्यस्यात्तर्हिप्राचीनप्रमाणोप्यन्यएवस्यादेकप्रकर

णत्वात् ॥ अतोऽवश्यंविचार्यंभवति ॥ तत्सर्वगतत्वंविषयः॥विष्णोरन्यस्यवेतिसंदेहः ॥ ब्रह्मततममित्युक्तिरा
दित्यश्रुतिश्चसंदेहबीजमितिभावः ॥ तत्रसयुक्तिकंपूर्वपक्षयति ॥ तच्चेति ॥ तत्सर्वगतत्वमादित्यस्यैवभवेत् ॥
तस्यैतस्यासावादित्योरसः यश्चासावादित्यस्तस्मात्पुरुषंपुरुषंप्रत्यादित्योभवतीत्यादिबह्वादित्यश्रुतेः ॥ सूर्य
आत्माजगतइतिसौरमंत्रोदाहरणाच्च ॥ एतमस्यामितिक्षित्यादिषूक्त्वाऽऽदित्येऽस्यानुक्तत्वलिंगाच्च॥ अन्य
थैतमादित्यइत्युक्तिःस्यात् ॥ सजातीयचंद्रादावुदितत्वात् ॥ अतएवनश्रुतेरंतर्यामिविषयत्वंयुज्यते ॥ सर्व
जीवानांवाएतत्सर्वगतत्वमुच्यते॥ चक्षुर्मयःश्रोत्रमयश्छंदोमयोमनोमयोवाङ्मयआत्मेतितल्लिंगश्रवणात्॥
नचतल्लिंगमंतर्यामिविषयम् ॥ तस्यापरिच्छिन्नत्वेनसर्वेषुभूतेष्वित्युक्तात्पौकस्त्वायोगाच्चक्षुर्मयत्वाद्ययो
गाच्च ॥ अतोविष्ण्वन्यस्यैवसर्वगतत्वादन्यस्यैवप्राणत्वमानंदमयत्वंचेतिभावः ॥ सिद्धांतयत्सूत्रमवतार्य
व्याचष्टे॥ अतइति ॥ सयश्चायमित्यादिनावाक्येनसर्वत्रपृथिव्यादिषूच्यमानोनारायणएव ॥ एतमेवब्रह्मे
त्याचक्षतइतिसर्वगतेब्रह्मशब्दोपदेशात् ॥ ब्रह्मशब्दस्यचश्रुत्यादौनारायणएवप्रसिद्धत्वादित्यर्थः॥ तथाच
श्रुतिः ॥ यच्चकिंचिज्जगत्सर्वंदृश्यतेश्रूयतेपिवा ॥ अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितइति ॥ अत्रसय
श्चायमितिवाक्योदाहरणंपूर्वंविषयवाक्यस्यानुदाहृतत्वात्कतमशरीरत्वयुक्तिसूचनार्थंच ॥ नहिनारायणे
तरचेतनानांस्वतोऽशरीरतासंभवति ॥ १ ॥

युक्त्यंतरेणविष्णोरेवात्रोक्तसर्वगतत्वंप्रतिपादयत्सूत्रमुपन्यस्यतदुपात्तश्रुतिमेवोदाहरति ॥ विवक्षितेति ॥ सयोतोऽश्रुतोऽगतोमतोनतोदृष्टोविज्ञातोनादिष्टःश्रोतामंताद्रष्टादेष्टाघोष्टाविज्ञाताप्रज्ञातासर्वेषांभूतानामंतरपुरुषइतिसर्वगतेअश्रुतत्वादिगुणश्रवणात् ॥ तेषांचविष्णोरेवयोग्यत्वेनतस्मिन्नेवोपपत्तेरन्यत्रानुपपत्ते

सयोतोऽश्रुतइत्यादि ॥ सहिनतेविष्णोजायमानोनजातोदेवइत्यादिना

## ॥ ॐ विवक्षितगुणोपपत्तेश्च ॐ ॥ २ ॥

ऽश्रुतत्वादिगुणकःससवितासवायुःसइंद्रःसोऽश्रुतःसोदृष्टोयोहरिर्यःपरमो
योविष्णुर्योऽनंतइत्यादिचतुर्वेदशिखायाम्॥ २ ॥

श्चविष्णुरेवायंसर्वगतइतिभावः ॥ विवक्षिताइति वक्तुंयोग्याः ॥ नन्वेतद्गुणानांकुतोविष्णुनिष्ठत्वमित्यत आह ॥ सहीति ॥ तेमहिम्नःपरमंतंकोपिश्रोत्रादिनानापेत्यर्थः ॥ अत्रमुखतोऽश्रुतत्वादिकंविष्णोर्नश्रूयत इत्यतःस्पष्टश्रुतिंचाह ॥ सइति ॥ अत्रातत्त्वस्यादिमत्त्वेपितस्यसर्वगतत्वानतिरिक्तत्वेनसाध्यत्वादश्रुतत्वादीनामेवग्रहणम् ॥ २ ॥

ननुयथाब्रह्मशब्दादश्रुतत्वादिलिंगैश्च विष्णुःसर्वगतइत्युच्यतेतथाऽऽदित्यशब्दात्सर्वजीवलिंगाच्चाऽऽदित्यः सर्वेजीवावाकिंनस्युरित्यतआह ॥ नचेति ॥ जीवःसर्वगतइतिशेषः ॥ तत्रहेत्वाकांक्षायांसूत्रमुपन्यस्यप्रतिज्ञांशस्यसंबंधभाष्येणैवव्याख्यातत्वाद्धेत्वंशमेवव्याचष्टे ॥ अनुपपत्तेरिति ॥ भवेदन्यस्यसर्वगतत्वंयद्यन्यस्मिन्नुपपद्येत ॥ नचोपपद्यते॥तथाहि॥ किंमिलितसर्वजीवानांसर्वगतत्वमुतप्रत्येकमुच्यते ॥ नाद्यः॥ तत्कथनवैयर्थ्यात् ॥ स्वस्वदेहस्थितिमात्रस्यसिद्धत्वात् ॥ नद्वितीयः ॥ सर्वशरीरगतसुखदुःखादिप्राप्तेः

नचाऽऽदित्यशब्दाच्चक्षुर्मयत्वादेश्च जीवइतिवाच्यम्॥ एकस्यसर्वशरीरस्थ

## ॥ ॐ अनुपपत्तेस्तुनशारीरः ॐ ॥ ३ ॥

त्वानुपपत्तेरेव ॥ ३ ॥

कस्यसर्वशरीरस्थत्वानुपपत्तेः ॥ अतोऽन्यज्ञापकसद्भावेपितस्यसर्वगतत्वानुपपत्तेरेवनजीवोयंसर्वगतइत्याशयः ॥ तुशब्दएवार्थः ॥ नचवाच्यंस्वकर्मनिर्मितमेवास्यभोगायतनमितिनभोगाव्यवस्थाब्रह्मादिगतजीवांतरवदिति ॥ अनादितःसर्वेषांसर्वशरीरस्थत्वेकर्मभेदस्यापिसाधयितुमशक्यत्वात् ॥ नचाऽऽदित्यस्यास्तुसर्वशरीरस्थत्वंभवदभ्युपगमादितिवाच्यम् ॥ तस्यापिब्रह्मादिसर्वशरीरस्थत्वानुपपत्तेः ॥ ३ ॥

युक्त्यंतरेणजीवस्यात्रोक्तसर्वगतत्वंपराकुर्वत्सूत्रंपठित्वातदुपात्तश्रुतिमेवोदाहरति॥कर्मेति ॥ अत्रोक्तसर्वगतस्यात्मानमितिकर्मत्वेनव्यपदेशाज्जीवस्यचशंसतीतिकर्तृत्वेनव्यपदेशादेकस्यांक्रियायांकर्मकर्त्रोरुत्सर्गतोभिन्नत्वनियमादत्रचाऽपवादकारणाभावाच्चनायंसर्वगतःशारीरइतिभावः॥ नचैकःसर्वगतोजीवःसर्वगतंजीवांतरंशंसतीतियोज्यम् ॥ सर्वगततयासर्वजीवग्रहणापातात् ॥ तथाप्रतीत्यभावेनक्लिष्टकल्पनत्वा

आत्मानंपरस्मैशंसतीत्यादि ॥ ४ ॥

## ॥ ॐ कर्मकर्तृव्यपदेशाच्च ॐ ॥ ४ ॥

च्च ॥ आदिपदेनाऽऽत्मानंवेदेत्यस्यग्रहणम् ॥४॥ यदुक्तंब्रह्मशब्दाद्विष्णुरेवसर्वगतइति तदयुक्तम् ॥ ब्रह्मशब्दस्यजीवेष्वपिसंभवात् ॥ नचासौजीवेऽमुख्यइतितद्ग्रहः ॥ अमुख्यार्थस्यापिचक्षुर्मयत्वादिबाधेनग्रहणोपपत्तेः॥ नचाश्रुतत्वादिगुणानुपपत्तिः ॥ श्रुत्वाप्येनंवेदनचैवकश्चिदितिजीवस्याप्यश्रुतत्वादिश्रवणात् ॥ नचानुपपत्तेरित्युक्तदोषः॥ विष्णावपितस्यसाम्यात् ॥नचकर्मकर्तृव्यपदेशाच्चेत्यभिहितदोषप्राप्तिः॥ चक्षुर्मयत्वादिबाधकेनैकस्यैवकर्मकर्तृत्वोपपत्तेरित्याशंकांपरिहरत्सूत्रमुपन्यस्यतदुपात्तश्रुतिमेवोदाहरति

॥ शब्देति ॥ नानेनब्रह्मशब्देनजीवउच्यते ॥ ब्रह्मशब्दस्यैतमेवेत्यवधारणाख्यविशेषवत्त्वादित्यर्थः ॥ ब्रह्मशब्दस्यसावधारणत्वेपिकुतोनजीवेवृत्तिरित्यतआह ॥ नहीति ॥ सावधारणब्रह्मशब्दवाच्यत्वेमुख्यब्रह्मत्वंस्यात् ॥ नचतज्जीवस्योपपद्यतइतिभावः ॥ विष्णावपिसावधारणब्रह्मशब्दश्रुतिःकुतइत्यतआह ॥ एषइ

एतमेवब्रह्मेत्याचक्षतइतिनहिजीवमेवब्रह्मेत्याचक्षते ॥ एषउएवब्रह्मैष
उएवात्मैषउएवसवितैषउएवेंद्रएषउएवहरिर्हरतिपरःपरानंदइतिचेंद्रद्यु

॥ ॐ शब्दविशेषात् ॐ ॥ ५ ॥

॥ ॐ स्मृतेश्च ॐ ॥ ६ ॥

म्नशाखायाम् ॥ ५ ॥ अहमात्मागुडाकेशसर्वभूताशयस्थितः ॥ गामा
विश्यचभूतानिधारयाम्यहमोजसेत्यादि ॥ नचाप्रामाणिकंकल्प्यम् ॥ ६ ॥

ति ॥ ५ ॥ स्मृतिसमाख्ययापिविष्णोरत्रोक्तसर्वगतत्वंसाधयत्सूत्रंपठित्वातांस्मृतिमुदाहरति ॥ स्मृतेश्चेति ॥ नचवाच्यंस्मृतेरपिस्ववचनत्वेनकथंविप्रतिपन्नंप्रतिसूत्रकारस्तामुपादत्तइतितस्याःपरोक्तानुवादरूपत्वात् ॥ एवंसूत्राणिव्याख्यायपरकृतापव्याख्यांप्रत्याख्याति ॥ नचेति ॥ ईश्वरएवमनोमयत्वादिगुणोन

जीवइतिप्रतिपादितेजीवेश्वरयोरैक्यात्कथमेतदित्याशंक्यकेनचिदुक्तम् ॥ नायंपारमार्थिकोभेदःकिंत्वत्र मिथ्याभूतएवसूत्रकृताविवक्षितइतितद्भेदस्यमिथ्यात्वंनकल्प्यम् ॥ भेदमिथ्यात्वेमानाभावादित्यर्थः॥ जीवेशभेदोमिथ्याभेदत्वाच्चंद्रभेदवदित्यनुमानंमानमितिचेन्न ॥मिथ्येत्यस्यासत्त्वाभिप्रायेऽपसिद्धांतात् ॥ अनिर्वाच्यत्वाभिप्रायेऽप्रसिद्धविशेषणत्वात् ॥ सत्त्वाभावसाधनेततएवासत्त्वापत्तेः॥ बाध्यत्वसाधनेप्यन्यथाज्ञातस्यसम्यग्ज्ञातत्वंचेद्बाध्यत्वम्॥ तत्सिद्धसाधनम्॥ त्रिकालेस्वरूपनिषेधविषयत्वंचेदसत्त्वापत्तिः॥ प्रतीतस्येतिचेदसदपरोक्षतयाप्रतीयते॥वाच्यत्वादित्यसतोपिप्रतीतिसिद्धेः॥ भेदाभावेभेदत्वसामान्यस्याप्यसिद्धेश्च॥व्यक्त्यभावेनसामान्यायोगात् ॥ भेदत्वहेतोरविद्यानिवृत्तिरूपमोक्षात्मभेदेव्यभिचाराच्च॥ नचासावपिभेदोमिथ्येतियुक्तम्॥मोक्षनिवृत्त्यापातात् ॥ मिथ्याभूतस्याप्यनिवर्त्यत्वेप्रकृतभेदस्यापितथात्वंनानिष्टम् ॥ नचात्ममोक्षयोर्भेदाभावः ॥ आत्मनोऽनादिनित्यतयातदभिन्नमोक्षस्यज्ञानसाध्याविद्यानिवृत्तिरूपत्वानुपपत्तेः॥ द्वासुपर्णेत्यादिश्रुतिविरोधाच्च ॥ अन्यतरचंद्रस्यैवाऽऽरोपितत्वेनाऽऽरोपितानाऽऽरोपितभेदस्यसत्यत्वाच्च ॥ अतोनभेदमिथ्यात्वेमानमित्यलम् ॥ ६ ॥

उक्तार्थमाक्षिप्यसमादधत्सूत्रंपठित्वाऽऽक्षेपांशंतावद्व्याचष्टे ॥ अर्भकेति ॥ यदुक्तंसर्वत्रोच्यमानोनारायण एवेति ॥ तदयुक्तम् ॥ यथाखलुजीवप्रापकसद्भावेप्यनुपपत्त्यातस्यसर्वगतत्वाभावस्तथेश्वरप्रापकसद्भावे पिबाधकसद्भावात् सर्वेषुभूतेष्वित्यस्याल्पस्थानस्थितिकथनात् चक्षुर्मयत्वादिरूपेणजीवलिंगकथनाच्च आदित्यश्रुतेश्च ॥नह्यपरिच्छिन्नस्यसर्वजीवधर्मरहितस्यभगवतोऽर्भकौकस्त्वादिकथनंयुज्यते॥ अतःपक्षद्व

सर्वेषुभूतेष्वित्यल्पौकस्त्वाच्चक्षुर्मयत्वादिनाजीवव्यपदेशाच्चनेतिचेन्न ॥

॥ ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्चनेतिचेन्ननिचाय्यत्वादेवंव्योमवच्च ॐ ॥ ७ ॥

अर्भकौकस्त्वेनचक्षुर्मयत्वादिरूपेणचतस्यैवविष्णोर्निचाय्यत्वात् ॥

येपिसमसाधकबाधकेनविष्णुरेवायंसर्वगतइतिपक्षपातोऽयुक्तइतिभावः ॥ परिहारांशंव्याचष्टे ॥ नेति ॥ नपक्षद्वयस्यापिसाम्येनविष्णोःसर्वगतत्वाभावइतियुक्तम् ॥ बाधकाभावात् ॥ तथाहि ॥ किमपरिच्छि न्नादिरूपस्यार्भकौकस्त्वादिकथनमप्रयोजनमयुक्तंवा ॥ आद्यंदूषयति ॥ अर्भकेति ॥ अपरिच्छिन्नस्य जीवविलक्षणस्यापिहरेरर्भकौकस्त्वेनचक्षुर्मयत्वादिरूपेणचोपास्यत्वान्नतदुक्तिर्व्यर्थेतिभावः ॥ द्वितीयेऽ

पिसर्वगतस्याल्पौकस्त्वंतावन्नायुक्तमित्याह॥सर्वगतत्वेऽपीति॥नापिजीववद्विलक्षणस्यचक्षुर्मयत्वाद्ययुक्तम्॥
सर्वेंद्रियमयइतिस्मृत्यासर्वप्राणिगतेंद्रियस्वामित्वेनचक्षुर्मयत्वादेरुक्तत्वादित्याशयेनाह ॥सर्वेंति॥ सर्वनामा
भिधेयश्चेत्यनेनैवाऽऽदित्यशब्दस्येश्वरवाचित्वंचोक्तंभवति॥नचाऽऽदित्येऽनुक्तिविरोधः॥ सर्वप्राणिषुस्थितः
सर्वनामाभिधेयइतिस्मृत्याऽऽदित्यादिगतस्यैवाऽऽदित्यादिनामवत्त्वोक्तेः ॥७॥ पुनरुक्तमाक्षिप्यसमादधत्सू

सर्वगतत्वेप्यल्पौकस्त्वंचयुज्यतेव्योमवत् ॥ सर्वेंद्रियमयोविष्णुःसर्वप्राणि
षुचस्थितः ॥ सर्वनामाभिधेयश्चसर्ववेदोदितश्चसइतिस्कांदे ॥ ७ ॥ जी

## ॥ ॐ संभोगप्राप्तिरितिचेन्नवैशेष्यात् ॥ ८ ॥

वपरयोरेकशरीरस्थत्वेसमानभोगप्राप्तिरितिचेन्न ॥सामर्थ्यवैशेष्यात् ॥

त्रमुपन्यस्याऽऽक्षेपांशंतावद्व्याचष्टे॥ संभोगेति॥यदुक्तमेकस्यसर्वशरीरस्थत्वंसर्वसमानभोगप्राप्तेरयुक्तमिति
तदीश्वरपक्षेऽपिसममेव॥ जीवपरयोरेकशरीरस्थत्वेपरस्यापिजीवसमानभोगप्राप्तेः॥नहिदह्यमानगेहगतयो
रन्यतरस्यैवदाहइतियुक्तम्॥तथाचेश्वरपक्षस्यापिदोषित्वान्नायंसर्वगतइतिभावः ॥ परिहारांशंव्याचष्टे ॥
नेति ॥ नजीवेश्वरयोरेकशरीरस्थत्वेपिसमानभोगप्राप्तिः ॥ ईश्वरस्यतदप्राप्तौजीवादपिसामर्थ्यवैशेष्यात्॥

अग्निस्तंभनवतोदाहाभाववदितिभावः ॥ किंतत्सामर्थ्यवैशेष्यंयेनसमानभोगाप्राप्तिरित्यतआह ॥ उक्त
मिति ॥ प्राप्तपरिहारायसत्यपिसामर्थ्येप्राप्तिस्तुभवत्येव ॥ सापिभगवतिनसंभवति ॥ तस्यसार्वज्ञ्येनैष्यस्य
रिहारसंभवादितिभावेनसार्वज्ञ्योक्तिः॥ एवमीश्वरपक्षेविरोधाभावात्॥यद्ब्रह्मशब्दस्यामुख्यार्थग्रहणमश्रुत

उक्तंचगारुडे ॥ सर्वज्ञाल्पज्ञताभेदात्सर्वशक्त्यल्पशक्तितः ॥ स्वा
तंत्र्यपारतंत्र्याभ्यांसंभोगोनेशजीवयोरितिच ॥ ८ ॥ अ० १ ॥

त्वादीनांभाक्तत्वकल्पनंसमानभोगप्राप्तेःप्रतिबंधापरिहरणंकर्मकर्तृभेदन्यायस्यापवादनंतत्सर्वमपिपरास्तं
भवति ॥ तस्माज्जीवप्रापकाणांसावकाशत्वेनासाधकत्वाद्बाधकसद्भावाच्चनजीवःसर्वगतः ॥ किंनामबाध
काभावात्साधकसद्भावाच्चविष्णुरेवेतिप्रागुक्तप्राणआनंदमयश्चसएवेतिसिद्धम्॥ ८ ॥ अ० १ ॥

अत्रलोकतोऽन्यत्रप्रसिद्धादितिशब्देनसहोक्तात्तृत्वलिंगस्यहरौसमन्वयप्रतिपादनादस्तिशास्त्रादिसंगतिः॥ श्रुत्यादिसंगतिविषयवाक्यमुदाहृत्यविषयसंशयौसयुक्तिकंपूर्वपक्षंचसूचयति ॥ जन्मेति ॥ जन्माद्यस्यय तइतिसूत्रेजन्मादिकारणत्वंविष्णोरुक्तम् ॥ तन्मध्यपतितंसंहर्तृत्वापरपर्यायवाच्यमत्तृत्वंबृहदारण्यकेक स्यचिच्छ्रूयते ॥ सोऽदितिर्यद्यदसृजततत्तदत्तुंमनोध्रियतादत्त्व ॥ कुतः॥सर्वांत्रीसासर्वमत्तीतियत्तदेवह्यदिते रदितित्वमदितिशब्दप्रवृत्तिनिमित्तम् ॥ अन्यथातन्नस्यादिति ॥ तच्चयदाहरेरितरस्यस्यात्तदाप्रागुक्तलक्ष णस्यातिव्याप्तिप्रसंगादवश्यंनिर्णेयमेव ॥ तदत्तृत्वंविषयः ॥ किंविष्णोरन्यस्यवेतिसंदेहः ॥ लक्षणसूत्रमदि

जन्माद्यस्ययतइत्युक्तम् ॥ तत्रात्तृत्वंसयद्यदेवासृजततत्तदत्तुमध्रियतसर्वंवाअत्तीतितददि

तेरदितित्वमित्यदितेःप्रतीयते ॥ सयद्यदेवासृजतेतिपुंल्लिंगंचकूटस्थोक्षरउच्यतेइत्यादिवत् ॥

तिश्रुतिश्चसंदेहबीजम् ॥ अदितेरेवतदत्तृत्वमितिपूर्वःपक्षः ॥ तददितेरित्यदितिश्रुतेः ॥ नचश्रुतिर्विष्णुविष यांकिनस्यादुक्तन्यायादितिवाच्यम् ॥ अदितित्वलिंगात् ॥ नह्यदितिभिन्नस्यादितित्वंसंभवति ॥ अतोन प्रागुक्तंब्रह्मलक्षणंयुक्तमितिभावः ॥ नन्वेतदत्तृत्वमदितेश्चेत्कथंसइतिपुंल्लिंगंयुक्तंस्यादतस्तेनश्रुत्यादिबाध इत्यतआह ॥ सइति ॥ यथारमायांपुंशक्तिमत्वात्पुंल्लिंगप्रयोगःकूटस्थोऽक्षरउच्यतेसोहंवायुंदिशांवत्संवे देत्यादौतथात्रापिसंभवतीतिभावः ॥ यदाहुः ॥ पुंल्लिंगेनोच्यतेस्त्रीचपुंवच्छक्तिमतीक्वचिदिति ॥ ननुसइति प्रकृतसंवत्सरपरामर्शान्नैतच्चोद्यावकाशः ॥ मैवम् ॥ सतयावाचातेनात्मनेदंसर्वमसृजतेत्युक्तस्यैवसयद्यदे

वेत्यनुवादात् ॥ तत्रचविरिंचस्यतृतीययाप्रकृतत्वाददित्याख्यमृत्योरेवप्रथमयाप्रकृतत्वात् ॥ तथाचसो
ऽदितिःसंवत्सरेणयद्यदसृजतेतियोजनायामस्तिचोद्यावकाशः ॥ सिद्धांतयत्सूत्रमवतारयति ॥ अत्रेति ॥
विष्णुरेवात्तात्रोच्यते ॥ सर्वंवाअत्तीतिचराचरस्याद्यतयाग्रहणादितिसूत्रार्थः ॥ चराचरग्रहणेपिकुतोना
दितेरत्तृत्वमित्यतआह ॥ नहीति ॥ चराचरस्येतिसूत्राक्षराण्यनूद्यश्रुत्यनुसारेणसर्वस्येतिव्याख्यानम् ॥
सूत्रस्यश्रुतिविसंवादप्रतीतिनिरासोऽस्यप्रयोजनम् ॥ चराचरात्तृत्वंविष्णोरपिकुतइत्यतआह ॥ स्रष्टेति ॥

अत्रोच्यते ॥ नहिचराचरस्यसर्वस्यात्तृत्वमदितेः ॥ स्रष्टापातातथैवात्तानिखिलस्यैक

## ॥ ॐ अत्ताचराचरग्रहणात् ॐ ॥ ९ ॥

एवतु ॥ वासुदेवःपरःपुंसामितरेऽल्पस्यवानवेतिस्कांदे॥ एकःपुरस्ताद्यइदंबभूवयतोबभूव
भुवनस्यगोपाः ॥ यमप्येतिभुवनंसांपरायेसनोहरिर्घृतमिहायुषेऽत्तुदेवइतिश्रुतिः ॥ ९ ॥

अस्वातंत्र्येणाल्पस्यभवंतिस्वातंत्र्यापेक्षयानवा ॥ यएकोऽस्यपुरस्ताद्बभूवस्रष्टाविदंजगद्यतोबभूव ॥
अथयश्चभुवनस्यगोप्तायंचमुक्तिप्रलययोर्भुवनंप्रविशतिसहरिर्नायुरर्थेघृतमाहुतिरूपमत्त्वित्यर्थः ॥ न
चवाच्यंश्रुतिलिंगाभ्यांपूर्वपक्षेकथंलिंगमात्रेणनिर्णयइति ॥ लिंगस्योक्तरीत्यानिरवकाशत्वात् ॥ अदि
तिश्रुतेर्विष्णावपिसावकाशत्वात् ॥ लिंगस्यचादितिशब्दवाच्यत्वमदितित्वमितिसावकाशत्वात् ॥ साव
काशश्रुतिलिंगाभ्यांनिरवकाशलिंगमात्रस्यप्राबल्यात् ॥ ९ ॥

एवंनिरवकाशलिंगबलात्सावकाशश्रुतिलिंगयोर्बाधोपपत्तेर्विष्णुरेवात्तेति सिध्यतिकिंपुनर्निरवकाशप्रकरणेनचेत्यर्थंप्रतिपादयत्सूत्रंपठित्वाव्याचष्टे ॥ प्रकरणाच्चेति ॥ नैवेहकिंचनाग्रआसीन्मृत्युनैवेदमावृतमासीदशनायया॒ऽशनायाहिमृत्युस्तन्मनोकुरुतात्मन्वीस्यामिति ॥ सोर्चन्नचरत्तस्यार्चतआपोजायंततद्यदपांशरआसीत्तत्समहन्यतसापृथिव्यभवत्तस्यामश्राम्यत्सोकामयतद्वितीयोमआत्माजायेतेति ॥ समन

अप्संवत्सरसृष्ट्यादिनातत्प्रकरणाच्च ॥ नेहासीत्किंचनाप्यादौमृत्युरासीद्धरिस्तदा ॥ सोत्मनोमनसास्राक्षीदपएवजनार्दनः॥ शयानस्तासुभगवान्निर्ममेऽडंमहत्तरम् ॥ तत्रसंवत्सरं

## ॥ ॐ प्रकरणाच्च ॐ ॥ १० ॥

नामब्रह्माणमसृजत्प्रभुः ॥ तमत्तुंव्याददादास्यंतदासौविरुरावह ॥ अथतंकृपयाविष्णुःसृष्टिकर्मण्ययोजयत् ॥ सोऽसृजद्भुवनंविश्वमद्यार्थंहरयेविभुरितिब्रह्मवैवर्ते ॥१०॥अ०॥२॥

सावाचामिथुनंसमभवदशनायांमृत्युस्तद्यद्रेतआसीत्ससंवत्सरोभवत्तंजातमभिव्याददात्सभाणमकरोत्सैववागभवत्सऐक्षतयदिहवाइममभिमंस्येकनीयोन्नंकरिष्यइतिसतयावाचातेनात्मनेदंसर्वमसृजतेत्यस्मिन्प्रकरणेमृत्युमात्रावशेषाप्संवत्सरसृष्टिसंवत्सरादनोद्यमादिश्रवणादेतत्प्रकरणस्यवैष्णवत्वंज्ञायते ॥ अतोनिरवकाशप्रकरणबलाच्चविष्णुरेवात्तेत्याशयः ॥ नन्वप्संवत्सरसृष्ट्यादिनात्रोच्यमानेनापिकथमस्यविष्णुप्रकरणत्वनिश्चयइत्यतोप्संवत्सरसृष्ट्यादेर्विष्णुलिंगत्वादितिभावेनतत्रस्मृतिमाह ॥ नेहासीदिति ॥ तस्माद्विष्णो

रेवेदमत्तृत्वमितियुक्तमेवलक्षणमितिस्थितम् ॥ १० ॥ अ० २ ॥ अत्रलोकतोऽन्यप्रसिद्धस्यकर्मफलभो
क्तृत्वलिंगस्यविष्णौसमन्वयसमर्थनादस्तिशास्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिविषयवाक्योदाहरणपूर्वकंवि
षयंचसूचयति॥ सर्वेति ॥ संदेहप्रकारंदर्शयति ॥ ताविति ॥ अत्ताचराचरग्रहणादितिसर्वात्तृत्वमेकस्यहरे
रुक्तम् ॥ तन्मध्यपतितंकर्मफलात्तृत्वंपातृत्वशब्दवाच्यंकाठकेकयोश्चित्प्रतीयते ॥ यौसुकृतनिर्मितशरीरे
हृदयगुहांप्रविष्टौ ॥ तत्रापिसर्वजीवोत्तमेऽतिपूर्णौवायौप्रविष्टौसुकृतफलंभुंजानौ ॥ तौब्रह्मविदःपंचम

सर्वात्तैकःपरउक्तः ॥ ऋतंपिबंतौसुकृतस्यलोकेगुहांप्रविष्टौपरमेपरार्धे॥छायात
पौब्रह्मविदोवदंतिपंचाग्नयोयेचत्रिनाचिकेताइतिपिबंतौप्रतीयेतेतौकाविति ॥

हायज्ञवंतोद्युपर्जन्यादिपंचाग्निविद्यानिष्ठावा ॥ त्रिवारकृतनाचिकेताः ॥ छायातपौवदंतीति ॥ तद्यदा
विष्णोरन्यस्यैवस्यात्तदानतस्यसर्वात्तृत्वंयदिचान्यस्यापिभवेत्तदालक्षणस्यातिव्याप्तिरित्यवश्यंनिर्णेयमे
व ॥ तत्कर्मफलभोक्तृत्वंविषयः ॥ किंविष्णोरन्यस्यवेतिसंदेहः ॥ सर्वात्तृत्वोक्तिरन्यत्रप्रसिद्धिश्चसंदेहबी
जम् ॥ नपरमात्मनएवेदंकर्मफलभोक्तृत्वमुच्यतेऽपितुजीवसहितस्येतिपूर्वःपक्षः ॥ पिबंताविति द्विवचनश्रु
तेः ॥ नचसर्वात्तृत्वेनतद्बाधः ॥ श्रुतेर्निरवकाशत्वात् ॥ कर्मबंधविधुरस्येश्वरस्यकर्मफलभोगायोगाच्च ॥

अनश्नन्नन्यइत्यादिश्रुतेः ॥ नचैवंजीवेशग्रहणेप्यनुपपत्तिः ॥ जीवस्यभोक्तृत्वेनतत्सहितेश्वरेछत्रिन्यायेन भोगोपचारोपपत्तेः ॥ नचसर्वात्तृत्वोक्तिविरोधः ॥ कर्मफलभोगंविनापिसंहर्तृत्वमात्रेणतदुपपत्तेः ॥ तथापिजीवेशत्वेकोहेतुः ॥ एकस्यजीवत्वंपातृत्वान्यथानुपपत्त्याग्राह्यम् ॥ नचद्वितीयोऽप्यचेतनः॥ सजातीयग्रहणस्यैवन्याय्यत्वात् ॥ नचद्वावपिजीवौयुक्तौ॥ एकस्मिन्नेवशरीरेभोक्तृजीवद्वयायोगात् ॥ अतःपातृत्वं जीवस्यैवद्वयोरप्युपचारइतिनेश्वरस्यैवसर्वात्तृत्वम् ॥ तथाचलक्षणमयुक्तमितिभावः॥ अथसिद्धांतयत्सू

उच्यते ॥ गुहांप्रविष्टौपिबंतौविष्णुरूपेएव ॥ घर्मासमंतान्निवृत्तंव्यापतुस्तयो

## ॥ ॐ गुहांप्रविष्टावात्मानौहितद्दर्शनात् ॐ ॥ ११ ॥

र्जुष्टिमातरिश्वाजगामेत्यादिनातद्दर्शनात् ॥

त्रमवतार्यव्याचष्टे ॥ उच्यतइति ॥ यौपिबंतौप्रतीतौतौविष्णुरूपेएव॥गुहाप्रविष्टत्वंलिंगादित्यर्थः॥विष्णूइतिवक्तव्येविष्णुरूपेएवेत्युक्त्याद्विवचनंद्विरूपाभिप्रायेणसावकाशमित्युक्तंभवति ॥ननुविष्णोःसर्वशरीरेष्वेकैकरूपेणप्रवेशात्कथंरूपद्वयाभिप्रायेणापिद्विवचनोपपत्तिरित्यतःसूत्रसूचितश्रुतिमुदाहरति ॥ घर्मेति ॥ दीप्तौव्याप्तौभगवंतौतेजोबन्नात्मकंशरीरंविशेषेणगुहास्थानेप्राप्तौतयोःसेवांकर्तुंमातरिश्वापिनिवृत्तंजगामेतिद्विरूपतयाहरेःशरीरेस्थित्युक्तेर्युक्तंरूपद्वयाभिप्रायेणद्विवचनमितिभावः ॥अस्तुद्विरूपतयाविष्णुर्देहनि

ष्ठस्तथापितस्यकर्मफलभोगाभावान्नैतद्वाक्यप्रतिपाद्यत्वमित्यतआह ॥ आत्मेति ॥ तथाचगीतासु ॥ श्रोत्रंचक्षुःस्पर्शनंचरसनंघ्राणमेवच ॥ अधिष्ठायमनश्चायंविषयानुपसेवतइति ॥ ननु किमीश्वरोदुःखंसुखंवा कर्मफलंभुङ्क्तेनोभयमपि पूर्णानंदत्वादित्यतआह ॥ शुभमिति ॥ पूर्वार्धेनाद्यपक्षमनभ्युपगमेनपरिहृत्यद्वितीयमभ्युपैति ॥ उत्तरार्धेनतुपूर्णानंदस्याप्यचिंत्यैश्वर्यबलेनसुखभोगोपपत्तिरितिद्वितीयपक्षदूषणंपरि

आत्मांतरात्मेतिहरिरेकएवद्विधास्थितः ॥ निविष्टोहृदयेनित्यंरसंपिबतिकर्मजमितिबृहत्संहितायाम् ॥ शुभंपिबत्यसौनित्यंनाशुभंसहरिःपिबेत् ॥ पूर्णानंदमयस्यास्यचेष्टानज्ञायतेक्वचिदितिपाद्मे ॥ योवेदनिहितंगुहायामित्यादिनाप्रसिद्धंहिशब्देनदर्शयति ॥ ११ ॥

हरति ॥ विष्णोर्भोक्तृत्वाभ्युपगमेऽनश्नन्नन्यइत्यादिश्रुतिविरोधइत्यतोवाऽऽह ॥ शुभमिति ॥ अशुभभोगाभावविषयंतद्वाक्यमितिभावः ॥ तथाहिवाक्यशेषः ॥ तस्येदाहुःपिप्पलंस्वाद्वग्रेतन्नोन्नशद्यःपितरंनवेदेति ॥ ननुकथंगुहानिविष्टत्वलिंगात्पिबतोर्विष्णुत्वनिश्चयोजीवेपितद्युक्तेरित्यतआह ॥ योवेदेति ॥ लिंगस्यजीवेसंभवेपिश्रुत्यादिप्रसिद्धमेवग्राह्यमितिभावः ॥ इत्यादिनाप्रसिद्धंहिशब्देनदर्शयतीति ॥ विष्णोरेवगुहानिविष्टत्वमित्यादिनावाक्येनप्रसिद्धमितीममर्थंसूत्रकारो हिशब्देनदर्शयतीत्यर्थः ॥ ११ ॥

एवंनिरवकाशलिंगस्यसावकाशश्रुतितोऽपिप्राबल्याद्विष्णोर्भोक्तृत्वसंभवाच्चसएवपातेतिसिध्यतिकिमुनिरवकाशश्रुत्यापीत्यर्थंप्रतिपादयत्सूत्रंपठित्वातदभिप्रेतश्रुतिमेवोदाहरति ॥ विशेषणाच्चेति ॥ यःसेतुरिति पिबतोरेकवचनेनविशेषणात् ॥ एकएवपाता ॥ सचब्रह्मत्वविशेषणाच्चविष्णुरेवेतिभावः ॥ ब्रह्मशब्दस्य भगवदेकवाचित्वंस्मारयति ॥ पृथगिति ॥ तस्यगुणाअमितत्वतोविविच्ययतोवक्तुंनशक्यंतेऽतस्तस्मिन्

यःसेतुरीजानानामक्षरंब्रह्मतत्परमिति ॥ पृथग्वक्तुंगुणास्तस्यनशक्यंतेऽमितत्वतः ॥

## ॥ ॐ विशेषणाच्च ॐ ॥ १२ ॥

यतोऽतोब्रह्मशब्देनसर्वेषांग्रहणंभवेत् ॥ एतस्माद्ब्रह्मशब्दोऽयंविष्णोरेवविशेषणम् ॥

अमिताहिगुणायस्मान्नान्येषांतमृतेप्रभुमितिब्राह्मे ॥ नचजीवेसमन्वयोऽभिधीयते ॥

ब्रह्मशब्दःप्रयुज्यते ॥ यतोब्रह्मशब्देनसर्वगुणानांग्रहणंभवेत् ॥ एवंसर्वगुणवाचीयतोब्रह्मशब्दएतस्माद्विष्णोरेववाचकोनान्येषांतस्यैवाऽमितगुणत्वात् ॥ तंविनाऽन्येषांतदभावादित्यर्थः ॥ एवंसूत्रद्वयंव्याख्यायपरकृतापव्याख्यांनिराकरोति ॥ नचेति ॥ अत्रप्रतीतौपिबंतौकिंबुद्धिजीवौजीवेश्वरौवेतिसंदेहेबुद्धिजीवावितिप्राप्तेसिद्धांतितम् ॥ जीवेश्वरावेतौभवतोऽन्यतरस्यपातृत्वेनजीवत्वेसिद्धेद्वितीयस्यचेतनतयैवभाव्यत्वात् ॥ अस्यगोद्वितीयोऽन्वेष्टव्यइत्यादौसजातीयग्रहणस्यैवलोकेदर्शनादितिव्याख्यानमयुक्तम् ॥

समन्वयासंगतत्वात् ॥ नह्यस्मिन्नध्यायेजीवेसमन्वयोऽभिधीयतेयेनजीवेश्वरावेताविति साधनंसंगतंस्या दतोनासौव्याख्यायुक्तेतिभावः ॥ नचछायातपत्वविशेषणाद्वैतत्कल्प्यम् ॥ विद्वदविदुषोःसुखदुःख कारणत्वेनतदुपपत्तेः ॥ नहिछायातपशब्दौविद्याविद्यावद्वाचकौ ॥ किंचपिबतोर्बुद्धिजीवत्वेकिंछिन्नंकिं वाजीवेश्वरत्वेलब्धम ॥परेणापिजीवेतदभ्युपगमात् ॥ईश्वरेसमन्वयसिद्धिरितिचेन्न ॥ ईश्वरेलिंगस्यौपचा

सत्यआत्मासत्योजीवःसत्यंभिदासत्यंभिदासत्यंभिदामैवारुवण्योमैवारुवण्योमैवारुव ण्यइतिपैंगिश्रुतिः ॥आत्माहिपरमःस्वतंत्रोऽधिगुणोजीवोऽल्पशक्तिरस्वतंत्रोऽवरइतिच भाल्लवेयश्रुतिः ॥ यथेश्वरस्यजीवस्यभेदःसत्योविनिश्चयात ॥ एवमेवहिमेवाचंसत्यां कर्तुमिहार्हसि ॥ यथेश्वरश्चजीवश्चसत्यभेदौपरस्परम् ॥ तेनसत्येनमांदेवास्त्रायंतुसह केशवाइत्यादेर्नासत्योभेदः ॥ १२ ॥ अ० ३ ॥

रिकत्वाभ्युपगमात्॥एवंचजीवएवसमन्वयःसाधितःस्यात् ततश्चाकिंपूर्वपक्षिणाऽपराद्धम ॥ तेनापिपातृत्व स्यबुद्धौलाक्षणिकत्वाभ्युपगमात् ॥ नात्रजीवेसमन्वयकथनमसंगतंजीवेशभेदस्यासत्यत्वादित्यतआह ॥ सत्यइति ॥ सत्यंसत्याआरुवण्योदोषिभिर्भजनीयः ॥ यथासत्यभेदौतथैवज्ञातेनतेनसत्येनकारणेन ॥ अ तोहरिरेवसुकृतफलभोक्तेतिनतस्यसर्वात्तृत्वलक्षणायोगइतिस्थितम् ॥ १२ ॥ अ० ३ ॥

अत्राग्निश्रुतिसाहित्येनान्यत्रप्रसिद्धस्यचक्षुरंतस्थत्वलिंगस्यपरब्रह्मणिसमन्वयसमर्थनादंक्तिशास्त्रादिसंग
तिः ॥ श्रुत्यादिसंगतिंविषयवाक्यंविषयसंशयौरुयुक्तिकंपूर्वपक्षंचदर्शयन्ति ॥ आदित्यइति ॥ यश्चासावा
दित्यइत्यानंदमयस्यादित्यस्थत्वमुक्तम् ॥ ततश्चार्थादक्षिस्थत्वमप्युक्तम् ॥ तदक्षिस्थत्वंछंदोगश्रुतौकस्य
चित्प्रतीयते ॥ यएषोंऽतरक्षिणिपुरुषोदृश्यतेएषआत्मेतिहोवाचैतदमृतमभयमेतद्ब्रह्मेति ॥ तच्चयद्यन्यस्य

आदित्योविष्णुरित्युक्तम ॥ यएषआदित्येपुरुषःसोऽहमस्मिसएवाहम

## ॥ ॐ अंतरउपपत्तेः ॐ ॥ १३ ॥

स्मीत्यादावग्नीनामेवादित्यादिस्थत्वमुच्यतेऽतोऽक्ष्यादित्ययोरैक्याद्यए
षोंतरक्षिणिपुरुषोदृश्यतइत्यत्राप्यग्नेरेवोच्यते ॥

स्यात्तदाऽऽदित्यस्थत्वमानंदमयत्वंचान्यस्यैवप्रसज्येतेत्यवश्यंनिर्णेयमेव ॥ तदक्षिस्थत्वंविषयः ॥ विष्णो
रग्नेर्वेतिसंदेहः ॥ यश्चासावादित्येइत्युक्तिरग्निश्रुतिश्चसंदेहबीजम् ॥ यएषोंतरक्षिणीतिवाक्येऽग्नेरेवाक्षि
स्थत्वेनोच्यतइतिपूर्वःपक्षः ॥ यतोयएषआदित्येपुरुषःसोहमस्मिसएवाहमस्मीत्यग्नेरेवादित्यस्थत्वमुच्यतेऽ
तएव ॥ नचवाच्यमग्नेरादित्यस्थत्वेऽप्कुतोऽक्षिस्थत्वमिति ॥ आदित्यश्चक्षुर्भूत्वाक्षिणीप्राविशदितिश्रुते

रक्ष्यादित्ययोरेकविधत्वादादित्यस्थितत्वेनाग्नेरक्षिस्थत्वसिद्धेः॥एतत्प्रकरणेऽथहाग्नयःसमूदिरेगार्हपत्योनुशशासेत्यादिवह्व्ग्निश्रुतिसद्भावाच्च॥ नचवाच्यमग्नेरादित्यस्थत्वकथनमौपचारिकंकिनस्यात्॥ यश्चासावादित्येइतिश्रुतिविरोधादिति ॥ सोहमस्मिसएवाहमस्मीत्यभ्यासात् ॥ अभ्यासस्यचसमाख्यातोबलवत्त्वात्॥ नचविष्णुग्रहणेऽपूर्वतयाभ्यासस्यापिबाधः ॥ सयएतदेवंविद्वानुपास्तेऽपहतेपापकृत्यांलोकीभव

अतस्तद्यथापुष्करपलाशआपोनश्लिष्यंतएवमेवंविदिपापंकर्म
नश्लिष्यतेइत्यग्निज्ञानादेवसर्वपापाश्लेषान्मोक्षोपपत्तिरिति॥

तित्सवमायुरतीत्यर्थवादात्॥ अर्थवादस्यचापूर्वतायाःप्राबल्यात् ॥ अतोऽक्ष्यादित्यस्थोऽग्निरेवेतिसएवानंदमयोपीतिभावः ॥ नकेवलमग्नेरक्षिस्थत्वसिद्धावानंदमयत्वप्राप्तिःकिंतुयद्विष्णुज्ञानादेवमोक्षइतिमतंतदपिबाधितंस्यादित्याह॥ अत्रइति॥ यतोऽग्निरक्षिस्थोऽतस्तज्ज्ञानान्मोक्षोऽपिभवेत् ॥ तद्यथेतितज्ज्ञानात्सर्वपापाश्लेषोक्तेः ॥ तज्ज्ञानात्सर्वपापाश्लेषेचमोक्षस्यापितदन्यथाऽनुपपत्त्यैवोपपत्तेरित्यर्थः ॥ अत्राऽऽदित्यस्थत्वलिंगस्यापिविष्णौसमन्वयसिद्ध्यर्थंवक्रसंगत्याऽधिकरणारंभइतिज्ञातव्यम्॥ अग्नीनामितिबहु

वचनमादिपदद्वयंचवह्न्यग्निश्रुतिसूचनायप्रयुक्तम् ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ विष्णुरेवचक्षुरंतरः ॥ एतदमृतमभयमित्यमृतत्वाभयस्योक्तेः ॥ अमृतत्वादेश्वविष्णावेवोपपत्तेः ॥त्रिपादस्यामृतंदिवि अभयंतितीर्षतांपारमितिश्रुतेः ॥ नचाग्नेरमृतत्वाद्युपपद्यते ॥ परिह्वेनंम्रियंतेविद्युद्वृष्टिश्चंद्रमाआदित्योग्निःभीषास्मादग्निश्चेंद्रश्चेत्यादिश्रुतेरितिभावः ॥ यदेवंनिरवकाशत्वानेकत्वाभ्यांबलवल्लिंगबलाच्च

अतोब्रवीति ॥ चक्षुरंतःस्थोविष्णुरेव ॥ त्रिपादस्यामृतंदिवीत्यादिनात
स्यैवामृतत्वाद्युपपत्तेर्ब्रह्मशब्दाद्युपपत्तेश्च ॥ सोहमस्मीत्यादित्वंतर्याम्य
पेक्षया ॥ अंतर्यामिणमीशेशमपेक्ष्याहंत्वमित्यपि ॥ सर्वेशब्दाःप्रयुज्यं
तेसतिभेदेपिवस्तुष्विितिमहाकौर्मे ॥ १३ ॥

क्षुरंतस्थस्यविष्णुत्वनिश्चयःकिमुतदोभयथापिबलवच्छ्रुतितोऽपीतिभावेनसूत्रांशंप्रकारांतरेणव्याचष्टे ॥ ब्रह्मेति ॥ नन्वेवंबलवच्छ्रुतिलिंगबलाद्विष्णुरेवचेदक्षिस्थस्तदादित्यस्थोपिसएवस्यात् तर्हिसोहमस्मिसएवाहमस्मीतिश्रुतेःकागतिरित्यतआह ॥ सोहमिति॥ अंतर्यामिण्यहमादिशब्दवृत्तिंस्मारयति ॥ अंतर्यामिणमिति ॥एवंश्रुतेःसावकाशत्वेनतदनुयायिनोरभ्यासार्थवादयोरपिसुतरांसावकाशत्वम् ॥ १३ ॥

युक्त्यंतरेणविष्णोश्चक्षुरंतस्थत्वंसाधयन्सूत्रमुपन्यस्यव्याचष्टे ॥ स्थानादीति ॥ अत्राक्षिस्थपुरुषसंबंधा दक्ष्णोरसंगत्वाख्यशक्तिर्व्यपदिश्यते ॥ तद्यद्यस्मिन्सर्पिर्वोदकंवेति ॥ एतंसंयद्वामइत्याचक्षतएतंहिसर्वाणि वामान्यभिसंयंति ॥ एषउएववामनिरेषहिसर्वाणिवामानिनयतिएषउएवभामनिरेषहिसर्वेषुलोकेषुभाती तिचक्षुरंतस्थस्यसंयद्वामत्वादिस्वरूपशक्तिश्चोच्यते ॥ एतदुभयबलाच्चक्षुरंतस्थोविष्णुरेवेत्यर्थः ॥ यस्मा

तद्यदस्मिन्सर्पिर्वोदकंवासिंचतिवर्त्मनीएवगच्छतीत्यादिस्थानशक्तिः ॥ वामनिर्भामनिरित्याद्यात्म शक्तिश्चोच्यते॥तस्यह्येतल्लिंगम् ॥ सईशःसोसपत्नःसहरिःसपरःसपरोवरीयान्यदिदंचक्षुषिसर्पिर्वो

## ॥ ॐ स्थानादिव्यपदेशाच्च ॐ ॥ १४ ॥

दकंवासिंचतिवर्त्मनीएवगच्छतिसवामनःसभामनःसआनंदःसोऽच्युतइतिचतुर्वेदशिखायाम् ॥ य त्स्थानत्वादिदंचक्षुरसंगंसर्ववस्तुभिः ॥ सवामनःपरोऽस्माकंगतिरित्येवचिंतयेदितिवामने ॥ १४॥

दयंपुरुषोऽक्षिणिविद्यतेतत्तस्मादस्मिंश्चक्षुषियदिसर्पिर्वोदकंवाकश्चित्सिंचतितर्हिवर्त्मनीप्रत्येवगच्छतिनच क्षुःस्पृशतीत्यर्थः ॥ एतल्लिंगद्वयसद्भावेपिकुतोऽक्षिस्थस्यविष्णुत्वनिश्चयइत्यतआह ॥ तस्येति ॥एतदिति स्वसंबंधेनाक्ष्णोरसंगत्वापादकत्वम् ॥ कुतएतत्तस्यालिंगमितितत्राह ॥ सइति ॥ यद्यस्माद्यस्यप्रभावा त् ॥ इदंचक्षुषीतिसमस्तम् ॥ १४ ॥

प्रकरणबलाच्चचक्षुरंतस्थत्वंविष्णोःप्रतिपादयत्सूत्रमुपन्यस्यतदुपात्तश्रुतिमेवोदाहरति ॥ सुखेति ॥ अत्रोपक्रमेप्राणोब्रह्मेतिमुख्यप्राणस्याखिलजीवेभ्यःपूर्णत्वमुक्त्वाकंब्रह्मखंब्रह्मेतिसुखसंविदोरपिपूर्णत्वमुच्यते ॥ तथाचास्यप्रकरणस्योपक्रमेपूर्णसुखाभिधानादेववैष्णवत्वंसिध्यतिकिमुतपूर्णज्ञानाभिधानादपि ॥ ततःप्रकरणबलाच्चचक्षुरंतस्थोविष्णुरेवेतिभावः ॥ उपक्रमेपूर्णसुखसंविदभिधानेपिकुतोऽस्यप्रकरणस्यवैष्णवत्वमित्यतआह ॥ विज्ञानमिति ॥ पूर्णानंदसंवित्त्वस्यब्रह्मलक्षणत्वादुपक्रमेतदभिधानेब्रह्मैवोपक्रांतं

प्राणोब्रह्मकंब्रह्मखंब्रह्मेति ॥ विज्ञानमानंदंब्रह्म आनंदोब्रह्मेतिव्यजानादित्यादेस्तस्यैव

## ॥ ॐ सुखविशिष्टाभिधानादेवच ॐ ॥ १५ ॥

हितल्लक्षणम् ॥ लक्षणंपरमानंदोविष्णोरेवनसंशयः ॥ अव्यक्तादितृणांतास्तुविप्रुडानंदभागिनइतिब्रह्मवैवर्ते ॥ नचमुख्येसत्यमुख्यंयुज्यते ॥ १५ ॥

स्यादितिभावः ॥ श्रौतमपिविज्ञानादिपदंपूर्णज्ञानादिवाचि ॥ ननुसकलचेतनानामपिपूर्णानंदत्वात्कथमेतद्विष्णुलक्षणमित्यतआह ॥ लक्षणमिति ॥ अन्येषामापेक्षिकमेवपूर्णसुखत्वंनब्रह्मवन्निरवधिकमितिभावः ॥ नन्वग्न्यादिसुखस्यापेक्षिकतयापिपूर्णत्वसद्भावात्तेषांकिनस्यादित्यतआह ॥ नचेति ॥ मुख्येनिरवधिकपूर्णत्वेसतिसंभवति ॥ नामुख्यमापेक्षिकंपूर्णत्वंयुज्यतइत्यर्थः ॥ नचोपक्रमेप्राणस्यापिश्रुतत्वेनप्रकरणित्वम् ॥ श्रुतिलिंगादिबाधकत्वासद्भावात् ॥ १५ ॥

नैवमुपक्रमेप्यक्षिस्थप्रकरणस्यवैष्णवत्वंयुक्तम् ॥प्राणोब्रह्मकमितिविद्यायएषआदित्येपुरुषइत्यादिविद्यां चोक्त्वाअग्निभिरुपकोसलैषासौम्यतेऽस्मद्विद्यात्मविद्याचेत्युक्तत्वेनाद्यविद्यायाविष्णुविषयत्वस्यद्वितीयवि द्यायाअग्निविषयत्वस्यैवयुक्तत्वादक्षिस्थविद्यायाश्चादित्यस्थविद्ययैकार्थत्वान्नचोपक्रमविरोधः ॥ द्वया म्यग्निमित्यादाविवोपपत्तेः ॥ नचास्मद्विद्येत्यंतर्यामिविषयतयायोज्यम् ॥ तथासत्यात्मविद्येतिपृथगुक्त्य योगात् ॥ तस्मादग्निविषयत्वमेवचक्षुरंतस्थविद्यायाइत्याशंकांपरिहरत्सूत्रंपठित्वातदुपात्तश्रुतिमेवोदाहर

सएनान्ब्रह्मगमयतीति ॥

## ॥ ॐश्रुतोपनिषत्कगत्यभिधानाच्च ॐ ॥ १६ ॥

ति॥श्रुतेति॥ नैतद्विद्यायाअग्निविषयत्वंयुक्तमपितुविष्णुविषयत्वमेव ॥ अथयदुचैवास्मिञ्छव्यंकर्मकुर्वंति यद्दुचनाऽर्चिषमेवाभिसंविशत्यर्चिषोहरन्हआपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेतिमासांस्तान्मा सेभ्यःसंवत्सरंसंवत्सरादादित्यमादित्याच्चंद्रमसंचंद्रमसोविद्युतंतत्पुरुषोमानवःसएनान्ब्रह्मगमयतीतिश्रुतैत द्विद्यानांब्रह्मगत्यभिधानादितिभावः ॥ श्रुतपदंमननिदिध्यासनोपलक्षकम् ॥ कगतिरितिब्रह्मगतिः ॥ कं ब्रह्मेतिप्रकृतत्वात् ॥ केनवायुनागतिरितिवा॥कोवायुरितिशब्दितइत्यभिधानात् ॥ अथवाश्रुतोपनिषदमुप कोसलंप्रत्येतद्विद्याफलत्वेनकगत्यभिधानादिति ॥ नचवाच्यमत्रकगतिकथनमेवश्रूयतेनैतद्विद्याफलत्वेन

नेति ॥ सर्वेषुलोकेषुभातियएवंवेदेतिफलश्रुतिसामीप्यात् ॥ अन्यथाअसंगतेश्च ॥ अस्त्वेतद्विद्यायाब्रह्म प्राप्तिःफलंतथापिकुतोनाग्निविषयत्वमित्यतआह ॥ नहीति ॥ यदीयमग्निविद्यातर्ह्येतद्विद्ययाऽग्निप्राप्ति रेवफलत्वेनोच्येतनब्रह्मप्राप्तिः ॥ देवान्देवयजोयांतिमद्भक्तायांतिमामपीत्यादेरन्यविद्ययाऽन्यगतेरयुक्त त्वात् ॥ अतोब्रह्मप्राप्तिफलैतद्विद्यायाब्रह्मपरत्वमेवेतिभावः ॥ नचास्मद्विद्येत्युक्तिविरोधः ॥ तस्यांत र्यामिविषयत्वोपपत्तेः ॥ श्रुतेरपिनिवकाशोपपत्तेःप्राबल्यात् ॥ नचात्मविद्येतिपृथगुक्तिविरोधः ॥ तस्याः

नह्यन्यविद्ययाऽन्यगतिर्युक्ता ॥ १६ ॥ जीवस्यजीवांतर

## ॥ ॐ अनवस्थितेरसंभवाच्चनेतरः ॐ ॥ १७ ॥

नियामकत्वेनानवस्थितेः ॥ साम्यादसंभवाच्चनजीवः ॥

सर्वगतात्मविद्यात्वाभिधायकत्वात् ॥ तस्यैवब्रह्मत्वात् ॥ १६ ॥ एवमुपपत्त्यादियुक्तिभिर्विष्णोरक्षिस्थत्वं प्रतिपाद्यविपक्षेबाधकेनापिसमर्थयत्सूत्रमुपन्यस्यव्याचष्टे ॥ अनवस्थितेरिति ॥ नायंचक्षुरंतस्थोऽग्निर्भ वेत् ॥ अस्यतत्तत्प्रेरकत्वेनतत्तच्चक्षुस्थितेरभिप्रेतत्वात् ॥ नचाग्नेरन्यप्रेरकत्वंयुक्तम् ॥ जीवत्वात् ॥ जीवस्यत स्यजीवांतरनियामकत्वेतस्यापिजीवांतरंनियामकमित्यनवस्थानात् ॥ पूर्वपूर्वचेष्टासिद्धावुत्तरोत्तरचेष्टा सिद्धिरितिमूलक्षतेः ॥ अभ्युपेत्यचेदमुदितम् ॥ अग्नेरपिप्रेर्येणसहजीवत्वसाम्यात्प्रेरणासंभवाच्चेत्यर्थः ॥

जीवप्रेरकाग्नेःस्वातंत्र्याभ्युपगमान्नानवस्थेत्यतआह ॥ नियमेति ॥ अग्नेःस्वतंत्रत्वेजीवांतरस्यापितत्स्यात् ॥ अन्यथाऽग्नेरपितन्नस्यात् ॥ जीवत्वसाम्येप्यग्नेरेवस्वातंत्र्यंनान्येषामितिनियमेप्रमाणाभावात् ॥ अतोऽग्नेःस्वातंत्र्यायोगात्सुस्थैवानवस्थेतिभावः॥ अस्त्वग्नेरस्वातंत्र्यंतथापितत्प्रेरकस्येश्वरस्यस्वातंत्र्यसंभवान्नानवस्थेत्यतआह ॥ अनीश्वरेति ॥ त्वयेश्वरानभ्युपगमान्नैवमनवस्थापरिहारइत्यर्थः ॥ ईश्वराभ्युपगमे सएवाक्षिस्थतयायुक्त्यादिशाप्तःकिमपोद्यते॥ ननुजीवत्वसाम्येपिनीचोच्चभाववन्नियम्यनियामकभावसं

नियमप्रमाणाभावात् ॥ अनीश्वरापेक्षत्वाच्च ॥ १७ ॥ अ० ४ ॥

भवःकिंनस्यादित्यतोवाऽऽह॥ नियमेति ॥ नियामकविशेषप्रमाणाभावान्नदृष्टांतमात्रेणनियम्यनियामकभावसंभवइतिभावः ॥ ननुभवताप्यग्न्यादिजीवानांजीवांतरनियामकत्वाभ्युपगमात्कथंतदसंभवइत्यतोवाऽऽह ॥ अनीश्वरेति ॥ यथासतिराज्ञिमंडलेशेप्रजानांतच्छक्त्यानियम्यनियामकभावःसंभवतिनत्वराजकेलोके तथाऽस्मत्पक्षेजीवानामीश्वरशक्त्याजीवांतरनियामकत्वमुपपद्यतेनपरपक्षे॥ परमेश्वरानंगीकारादितिभावः ॥ तस्माद्विष्णुरेवाक्ष्यादित्यस्थोदिव्यदृष्टिगोचरोऽतःसएवानंदमयस्तज्ज्ञानादेवमोक्षइतिसिद्धम् ॥ १७ ॥ अ० ४ ॥

अत्रपृथिव्यादिशरीरत्वलिंगसाहित्येनान्यत्रप्रसिद्धांतर्यामित्वलिंगस्यविष्णौसमन्वयप्रतिपादनादस्तिशा
स्त्रादिसंगतिः ॥ विषयवाक्योदाहरणपूर्वकंविषयंदर्शयति ॥ यइति ॥ श्रुत्यादिसंगतिंदर्शयति ॥ तत्रेति ॥
एतदमृतमभयमित्यक्षिस्थपुरुषस्यामृतत्वमुक्तंतत्काण्वमाध्यंदिनश्रुत्योरंतर्यामिणःकस्यचिच्छ्रूयते ॥एषत
आत्मांतर्याम्यमृतइतिसचांतर्यामीयदिविष्णोरितरःस्यात्तदाऽमृतत्वंचान्यनिष्ठंनाक्षिस्थस्यविष्णुत्वसाधकं

यःपृथिव्यांतिष्ठन्पृथिव्याअंतरोयंपृथिवीनवेदयस्यपृथिवीशरीरंयःपृथिवीमंतरोयमय

## ॥ ॐ अंतर्याम्यधिदैवादिषुतद्धर्मव्यपदेशात् ॐ ॥ १८ ॥

त्येषतआत्मांतर्याम्यमृतइत्यादिनांतर्याम्युच्यते॥ तत्रचएतदमृतमित्युक्तममृतत्वमुच्यते॥

सचयस्यपृथिवीशरीरमित्यादिनासर्वात्मकत्वात्प्रकृतिस्तत्तज्जीवोवायुक्तः ॥

स्यादित्यवश्यंनिर्णेतव्यएव ॥ तदंतर्यामित्वमत्रविषयः ॥ किंविष्णोरन्यस्यवेतिसंदेहः ॥ अमृतत्वंपृथिव्या
दिशरीरत्वंचसंदेहबीजमितिभावः ॥ सयुक्तिकंपूर्वपक्षयति॥ सचेति॥सोंऽतर्यामीप्रकृतिर्भवेत् ॥ यस्यपृथि
वीशरीरंयस्यापःशरीरमित्यादिनांऽतर्यामिणःपृथिव्यादिशरीरत्वस्यश्रवणात् ॥ तस्यचप्रकृतावुपपत्तेः॥श
रीरशब्दस्यस्वरूपेऽपिप्रयोगात् ॥ प्रकृतेश्चपृथिव्यादिसर्वात्मकत्वात्॥ नचयःपृथिव्यांतिष्ठन्नित्यादेरनुपप
त्तिः॥व्याप्तंकार्येषुकारणमित्यादिनाकारणस्यकार्यस्थत्वोक्तेः॥पृथिवीयमयतीत्येतदप्युपचारेणनेतव्यम्॥

पृथिव्यादिजीवस्यैवैतदंतर्यामित्वम् ॥ पृथिव्यादिशरीरत्वादेस्तस्मिन्नतिसुघटत्वादितिभावः ॥ ननुयथा प्रकृत्यादिलिंगेनतेषामंतर्यामित्वंतथाऽमृतत्वलिंगेनविष्णोःकिंनस्यादित्यतआह ॥ नहीति ॥ विद्यमानेपि विष्णुलिंगेनतस्यांतर्यामित्वम् ॥ पृथिव्यादिशरीरत्वस्यकयापिविधयाऽवकाशाभावात् ॥ तस्यपृथिव्या दिभिन्नत्वाच्छरीरत्वोररीकारेणपृथिव्यादिशरीरत्वानंगीकारात् ॥ अमृतत्वस्यचकथंचित्प्रकृत्यादावपि सावकाशत्वात् ॥ सावकाशस्यचनिरवकाशेनबाधोपपत्तेः ॥ अतोंऽतर्यामीनविष्णुरपितुप्रकृत्यादयएवे

नहिविष्णोःपृथिव्यादिशरीरत्वमंगीक्रीयतइत्यतआह ॥ यंपृथिवीनवेदयःपृथिव्याअंतरइत्यादि नाअधिदैवादिषुतद्धर्मव्यपदेशाद्विष्णुरेवांतर्यामी ॥ सहिनतेविष्णोजायमानोनजातःसयोतोऽश्रुतो ऽगतोऽमतोऽनतोऽदृष्टोविज्ञातोनादिष्टःसर्वेषांभूतानामंतरपुरुषइत्यादिनाविदितोंतरश्च ॥ १८ ॥

तिनामृतत्वमक्षिस्थस्यविष्णुत्वसाधकमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥अतइति ॥ अंतर्या मीविष्णुरेव ॥ अंतर्यामिणःपृथिव्याद्यविदितत्वतदंतरत्वाख्यधर्मव्यपदेशात् ॥ अविदितत्वादेश्चविष्णुधर्म त्वात् ॥ नचवाच्यंपृथिव्यादीनांजडत्वेनतदज्ञेयत्वंसर्वस्यापिसंभवतीति ॥ पृथिव्यादीनामधिदैवत्वेनजड त्वाभावादितिभावः ॥ चक्षुरादीनांजडत्वेप्यत्रोक्तस्यैवतत्रकथनान्नविरोधः ॥ अविदितत्वादेःकुतोविष्णु धर्मत्वमित्यतआह ॥ सहीति॥नचपृथिव्यादिजीवाविदितत्वंप्रकृतेःपृथिव्यादिजीवस्यवोपपद्यते ॥१८॥

एवंनिरवकाशलिंगेनविष्णोरंतर्यामित्वंसमर्थ्ययदुक्तंप्रकृतेरंतर्यामित्वमितितदपाकुर्वत्सूत्रमुपन्यस्यव्याच
ष्टे ॥ नचेति ॥ स्मार्तंकापिलस्मृतौपृथिव्याद्यात्मकतयोक्तंप्रधानंनांतर्यामिअविदितत्वाद्यनन्यथासिद्धवि
ष्णुधर्मवत्त्रिगुणत्वोपादानत्वादिप्रधानधर्मोक्त्यभावादित्यर्थः ॥ चशब्दोविष्णुरेवांतर्यामीनतुप्रधानमि

त्रिगुणत्वादिप्रधानधर्मानुक्तेर्नस्मृत्युक्तंप्रधानमंतर्यामी ॥ १९ ॥ यआ

## ॥ ॐ नचस्मार्तमतद्धर्माभिलापात् ॐ ॥ १९ ॥

त्मनितिष्ठन्नात्मनोऽतरोयमात्मानवेदयस्यात्माशरीरंयआत्मानमंतरोय
मयत्येषतआत्मांतर्याम्यमृतः ॥

तितुशब्दार्थः ॥ १९ ॥ यज्जीवोंऽतर्यामीत्युक्तंतदपिसंसारित्वाद्यतद्धर्माभिलापादिनानिरस्तमपिविशेषयु
क्त्यापराकुर्वत्सूत्रमुपन्यस्यव्याचष्टे ॥ शारीरश्चेति ॥ चशब्दान्नञःसमाकर्षः॥ आत्मनोऽतरइतिमाध्यंदि
नाः विज्ञानादंतरइतिकाण्वाश्चजीवमंतर्यामिणःसकाशाद्भेदेनाधीयते ॥ हियस्मादतोनशारीरश्चांतर्यामी

त्यर्थः ॥ आत्मनःसकाशाद्दंतरोविविक्तः ॥ विज्ञानपदेनशारीरःकुतइतिचेत् ॥ उदाहृतश्रुतिसमाख्यानादे
व ॥ ननुविष्णावसंभाव्यमानपृथिव्यादिशरीरत्वस्यप्रधानादिधर्मस्यात्रोक्तेःकथंविष्णोरंतर्यामित्वंकथं
चप्रधानादिधर्मानभिलापइत्यतआह ॥ शीर्यतइति ॥यद्यपिविष्णौनोक्तप्रकारद्वयेनपृथिव्यादिशरीरत्वो

योविज्ञानेतिष्ठन्विज्ञानादंतरोयंविज्ञानंनवेदयस्यविज्ञानंशरीरमित्युभ
येपिहिशाखिनोभेदेनैनंजीवमधीयते ॥ शीर्यतेनित्यमेवास्माद्विष्णो

**॥ ॐ शारीरश्चोभयेपिहिभेदेनैनमधीयते ॐ ॥ २० ॥**

स्तुजगदीदृशम् ॥ रमतेचपरोह्यस्मिन्शरीरंतस्यतज्जगदितिवचनान्नश
रीरत्वविरोधः ॥ २० ॥ अ० ५ ॥

पपत्तिस्तथापियोगवृत्त्यातस्मिन्पृथिव्यादिशरीरत्वव्यपदेशोपपत्तेर्नतद्विरोधोविष्ण्वंतर्यामित्वस्यनाप्यत
द्धर्माभिलापोक्तेर्विरोधइतिभावः ॥ यद्यपियोगाद्रूढेःप्राबल्यंतथापिनिरवकाशाविदितत्वादिलिंगबलेन
योगांगीकारोयुज्यते ॥ अतोंतर्यामीविष्णुरेवेतिसएवामृतोऽक्षिस्थश्चेतिसिद्धम् ॥ २० ॥ अ० ५ ॥

अत्राऽक्षरशब्दसाहित्येनान्यत्रप्रसिद्धादृश्यत्वादिलिंगानांब्रह्मणिसमन्वयप्रतिपादनादस्तिशास्त्रादिसंगतिः॥ श्रुत्यादिसंगतिंविषयवाक्योदाहरणेनविषयसंशयौसयुक्तिकंपूर्वपक्षंचसूचयति ॥ अदृश्यत्वादीति ॥ अदृश्येऽनात्म्यइत्यानंदमयस्यादृश्यत्वादिगुणाउक्ताः तेचाथर्वणेकस्यचिदक्षरस्योच्यंते ॥ अथपरायययातदक्षरमधिगम्यतेयत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रंतदपाणिपादंनित्यंविभुंसर्वगतंसुसूक्ष्मंतदव्ययंयद्भू

अदृश्यत्वादिगुणाविष्णोरुक्ताः ॥ तत्रयत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रंतद

पाणिपादंनित्यंविभुंसर्वगतंसुसूक्ष्मम् ॥ तदव्ययंयद्भूतयोनिंपरिपश्यंतिधीराइत्युक्ता

## ॥ ॐ अदृश्यत्वादिगुणकोधर्मोक्तेः॥ ॐ ॥ २१ ॥

यथोर्णनाभिःसृजतेगृह्णतेचयथापृथिव्यामोषधयःसंभवंतियथासतःपुरुषात्केशलो

मानितथाक्षरात्संभवतीहविश्वमित्युक्तातस्माच्चाक्षरात्परतःपरइतिपरःप्रतीयते ॥

तयोनिंपरिपश्यंतिधीराः ॥ यथोर्णनाभिःसृजतेगृह्णतेच ॥ यथापृथिव्यामोषधयःसंभवंति ॥ यथासतःपुरुषात्केशलोमानितथाक्षरात्संभवतीहविश्वमिति॥तेषांचविष्णवन्यनिष्ठत्वेप्रागुक्तानंदमयत्वंचान्यस्यैवस्यादित्यवश्यंनिर्णेतव्यता ॥ तददृश्यत्वादिलिंगजातमत्रविषयः ॥ विष्णोरन्यस्यवेतिसंदेहः ॥ आनंदमयेश्रुतत्वमक्षरशब्दश्चसंदेहबीजम् ॥ नविष्णोरदृश्यत्वादीतितावत्पूर्वःपक्षः ॥ अदृश्यत्वादिगुणकेऽक्षरात्संभव

तीहविश्वमित्यक्षरशब्दश्रवणात् ॥ तस्यचविष्णौनिरवकाशत्वात् ॥ यतोऽस्मादप्यक्षरादुत्तरवाक्येपरःप्रतीयते ॥ दिव्योह्यमूर्तःपुरुषःसबाह्याभ्यंतरोह्यजः ॥ अप्राणोह्यमनाःशुभ्रोऽक्षरात्परतःपरइति ॥ नहिविष्णोरपिपरोऽस्तीत्यतोनविष्णुरदृश्यत्वादिगुणकइतिनानंदमयोपीतिभावः ॥ सिद्धांतयत्सूत्रंतावदवतारयअतोब्रवीति ॥ पृथिव्यादिदृष्टांतमुक्त्वाअक्षरात्संभवतीहविश्वमित्यतःपरंतत्परतःपराभिधानात्कूटस्थोऽक्षरउच्यतेइतिस्मृतेश्चप्रकृतेःप्राप्तिः ॥ ब्रह्मशब्दात्तत्परतःपराभिधानादेवचहिरण्यगर्भस्य ॥ तमेवंविद्वानमृतइहभवति ॥ तत्कर्महरितोषंयत्साविद्यातन्मतिर्यया ॥ अथद्वेवावविद्येवेदितव्येपराचैवापराच ॥ तत्रयेवेदायान्यंगानियान्युपांगानियानिप्रत्यंगानिसाऽपरा॥अथपराययासहरिर्वेदितव्योयोऽसावदृश्योनिर्गुणःपरःपरमात्मेत्यादिनातद्धर्मत्वेनावगतपरविद्याविषयत्वोक्तेर्विष्णुरेवादृश्यत्वादिगुणकः ॥ २१ ॥

ति ॥ अतइति ॥ अदृश्यत्वादिकंनविष्णोश्चेत्तर्हिवाक्यस्यनिर्विषयतयाऽप्रामाण्यंस्यादित्यतःपूर्वपक्षंविशदयति ॥ पृथिव्यादीति ॥ अदृश्यत्वादिकंजडप्रकृतेर्भवेत् ॥ अस्याःपृथिव्यादिदृष्टांतेनोपादानतयाजगत्कारणत्वोक्तेः ॥ नचायंकारणत्वमात्रेदृष्टांतइतिवाच्यमित्यतोवाक्यादनंतरमक्षरात्परतःपरइतितस्मात्परतःपराभिधानात् ॥ चेतनप्रकृतेर्वाऽदृश्यत्वादिकम् ॥ तस्यामक्षरशब्दस्यस्मृतिसिद्धत्वात् ॥ नचासौश

ब्दःपरमात्मन्यपिसंभवतीतिवाच्यम् ॥ तत्परतःपराभिधानात् ॥ तच्चतस्यामक्षरात्परतःपरइतिसामानाधि
करण्येनोपपन्नंविकारित्वेनजगत्कारणत्ववचनंतस्याविकाराभिमानित्वाद्युज्यते ॥ हिरण्यगर्भस्यवाऽदृ
श्यत्वादिकम् ॥ सब्रह्मविद्यामित्यादिब्रह्मशब्दात् ॥ नचब्रह्मशब्दोविष्णौमुख्यइतितद्ग्रहणम् ॥ तत्परतःप
राभिधानात् ॥ रुद्रस्यवैतददृश्यत्वादिलिंगजातम् ॥ कर्तारमीशमितीशशब्दश्रवणात् ॥ नचेशशब्दोवि
ष्णावपिसंभवतीतितद्ग्रहः ॥ तत्परतःपराभिधानादेवेतिभावः ॥ एवंप्राप्तंपूर्वपक्षंप्रतिक्षेप्तुंसूत्रंव्याचष्टे ॥ त
मेवमिति ॥ अदृश्यत्वादिगुणकोविष्णुरेव ॥ अथपराययातदक्षरमधिगम्यतइत्यदृश्यत्वादिगुणकस्यपरवि
द्याविषयत्वोक्तेः ॥ परविद्याविषयत्वस्यचश्रुतिस्मृतिभिर्विष्णुधर्मत्वेनावगतत्वादित्यर्थः ॥ तमेवमितिश्रु
तौमोक्षसाधनविद्याविषयत्वोक्त्याविष्णोःपरविद्याविषयत्वमुक्तंभवति ॥ मोक्षसाधनविद्यायाःपरविद्या
त्वात् ॥ तत्कर्मेतिस्मृतौचसैवपरविद्याययाहरेर्ज्ञानंभवतीतितस्यपरविद्याविषयत्वमुच्यते ॥ द्वेविद्येइत्यत्र
चयदावेदाद्यन्यविषयतयायोज्यतेतदातस्याऽपरविद्यात्वम् ॥ यदापुनरेतैःसहरिर्वेद्योभवतितदापरविद्यात्व
मिति ॥ हरेःपरविद्याविषयत्वमुच्यते ॥ तदुक्तंऋगाद्याअपराविद्यायदाविष्णोर्नवाचकाः ॥ ताएवपरमा
विद्यायदाविष्णोस्तुवाचकाइति ॥ २१ ॥

यदुक्तंप्रकृतिविरिंचयोरदृश्यत्वादिगुणकत्वमितितदर्थान्निराकृतमपिविशेषयुक्त्यापराकुर्वंत्सूत्रंपठित्वा व्याचष्टे ॥ विशेषणेति ॥ तपसाचीयतेब्रह्मेत्यत्राज्ञानप्रतीतौतन्निरासाययस्यज्ञानमयंतपइत्युक्तार्थेहेतु तयाऽदृश्यत्वादिगुणकस्यसार्वज्ञ्यविशेषणोक्तेर्नाचेतनप्रकृतेरदृश्यत्वादिगुणकत्वम् ॥ तस्मादक्षरादेतद्ब्रह्म

यःसर्वज्ञःसर्वविद्यस्यज्ञानमयंतपइतिविशेषणान्नप्रकृतिः ॥ तस्मादेत

॥ ॐ विशेषणभेदव्यपदेशाभ्यांचनेतरौ ॐ ॥ २२ ॥

द्ब्रह्मनामरूपमन्नंचजायतेइतिभेदव्यपदेशान्नविरिंचः ॥ अपरंत्वक्षरं

यासाप्रकृतिर्जडरूपिका ॥ श्रीःपराप्रकृतिःप्रोक्ताचेतनाविष्णुसंश्रया ॥

चतुर्मुखाख्यंजायतइतिविरिंचस्यतज्जन्यतयातस्माद्भेदव्यपदेशात् ॥ नासावप्यदृश्यत्वादिगुणकइत्यर्थः॥ ज्ञानवेदनयोःसामान्यविशेषतयार्थांतरत्वम् ॥ विद्लृलाभेविदोत्पत्तावित्यतोवा ॥ नविष्णोरदृश्यत्वादिगुणकत्वम् ॥परतःपराभिधानेनाक्षरशब्दस्यविष्णौनिरकाशत्वादित्यतःसूत्रखंडस्यार्थांतरमाह॥ अपरमिति॥ भवेदक्षरश्रुतेर्विष्णाववकाशाभावोयद्यक्षरात्परतःपरइत्यत्रप्रकृताक्षरमवधीकृत्यकस्यचित्परत्वमुच्येत ॥

नैतद् स्ति किंतुप्रकृताक्षरस्यैवाक्षरात्परतःपरत्वविशेषणमुच्यते ॥ नचाक्षरस्याक्षरात्परतःपरत्वंविरुद्धमिति वाच्यम् ॥ त्र्यक्षराभिधानादक्षरांतरादस्याक्षरस्यपरत्वोपपत्तेरितिभावः ॥ ईशशब्दाददृश्यत्वादिगुणको

तामक्षरंपरंप्राहुःपरतःपरमक्षरम् ॥ हरिमेवाखिलगुणमक्षरत्रयमीरिता
मितिस्कांदे त्र्यक्षराभिधानादक्षरात्परतःपरइत्यपिविशेषणमेव ॥ जुष्टं
यदापश्यत्यन्यमीशमस्यमहिमानमितिवीतशोकइतिभेदव्यपदेशादीश
पदप्राप्तोपिनरुद्रः ॥ २२ ॥

रुद्रइत्यस्योत्तरतयापिसूत्रशेषंव्याचष्टे ॥ जुष्टमिति ॥ अस्याक्षरस्यान्यमीशमितिप्रसिद्धेशाद्रुद्राद्भेदव्य पदेशान्नरुद्रोऽदृश्यत्वादिगुणकइत्यर्थः ॥ यदपिपृथिव्यादिदृष्टांतेनजगत्कारणत्ववचनंतत्कारणत्वमात्रता त्पर्यम् ॥ ब्रह्माक्षरेशशब्दास्तुविष्णावेवमुख्याः ॥ बाधकाभावस्योक्तत्वात् ॥ २२॥

युक्त्यंतरेणविष्णोरेवादृश्यत्वादिगुणकत्वंसाधयत्सूत्रमुपन्यस्यतदुपात्तश्रुतिमेवोदाहरति॥रूपेति॥द्रष्टाजी
वोयदारुग्मवर्णंहिरण्यगर्भंकारणंजगत्कर्तारंपश्यतितदाऽसौविद्वाननिष्टंपुण्यंपापंचविहायनिर्लेपःपूर्णानंद
त्वादिसाम्यंप्राप्नोतीत्यदृश्यत्वादिगुणकस्यरुग्मरूपोपन्यासाच्चासौविष्णुरेवेत्यर्थः॥ ननुब्रह्मादीनामपिरूप

यदापश्यःपश्यतेरुग्मवर्णंकर्तारमीशंपुरुषंब्रह्मयोनिमिति ॥ एकोनारायणआसीन्नब्रह्मान
चशंकरः ॥ समुनिर्भूत्वासमचिंतयत् ॥ ततएतेव्यजायंतविश्वोहिरण्यगर्भोऽग्निर्यमोवरु

॥ ॐ ॥ रूपोपन्यासाच्च ॥ ॐ ॥ २३ ॥

णरुद्रेंद्राइति॥ तस्यहैतस्यपरमस्यनारायणस्यचत्वारिरूपाणिशुक्लंरक्तंरौग्मंकृष्णमिति ॥
सएतान्येतेभ्योऽभ्यचीकॢपत् ॥ विमिश्राणिव्यमिश्रयत्॥ अतएतादृगेतद्रूपमितितस्यैव
हिरूपाण्यभिधीयंते ॥ २३ ॥ अ० ६ ॥

सद्भावात्कुतोरूपोपन्यासेनास्यविष्णुत्वनिश्चयइत्यतआह ॥ एकइति॥ विश्वोवायुर्विमिश्राण्येतेभ्योऽभ्य
चीकॢपत् ॥ व्यमिश्रयदितिमानुषादौविशेषेणमिश्रीचकारेत्यर्थः ॥ सएतानिव्यमिश्रयत् विमिश्राणिचैत
भ्योभ्यचीकॢपदितिवा ॥ तस्यहैतस्येत्यादेरेवात्रोपयुक्तत्वेनैतान्येतेभ्यइत्यस्यार्थप्रतीत्यर्थमन्यांशोदाहरण
म् ॥ तस्माद्विष्णोरेवादृश्यत्वादिगुणकत्वमितिसएवानंदमयइतिसिद्धम् ॥ २३ ॥ अ० ६ ॥

अत्रलोकतोऽन्यत्रप्रसिद्धवैश्वानरनाम्नःपाचकत्वाद्यनेकलिंगसमन्वयसिद्ध्येब्रह्मणिसमन्वयप्रतिपादना
दस्तिशास्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिविषयवाक्योदाहरणपूर्वकंविषयादिकंचसूचयति ॥ अदृश्यत्वादी
ति ॥ गताधिकरणेऽदृश्यत्वादिगुणाविष्णोरुक्तास्तेषुसर्वगतत्वंचोक्तंनित्यंविभुंसर्वगतमिति ॥ तददृश्यत्वादि
गुणेषूक्तंसर्वगतत्वंचछंदोगश्रुतावभिविमानपदेनवैश्वानरस्योक्तम्॥ अभितोविगतंमानंमर्यादायस्येति ॥मा

अदृश्यत्वादिगुणेषुसर्वगतत्वंयस्त्वेतमेवंप्रादेशमात्रमभिविमानमात्मानं

## ॥ ॐ वैश्वानरःसाधारणशब्दविशेषात् ॐ ॥ २४ ॥

वैश्वानरमुपास्तइतिवैश्वानरस्योक्तमिति ॥

नंज्ञानंलयश्चैवमर्यादाचैवकथ्यतइत्यभिधानात् ॥ तस्यचवैश्वानरस्यविष्णोरितरत्वेसर्वगतत्वमप्यन्यस्य
प्रसज्येतेत्यवश्यनिर्णेयत्वम् ॥ सवैश्वानरोविषयः ॥ किंविष्णुरन्योवेतिसंशयः ॥ सर्वगतत्वमन्यत्रप्रसिद्धि
श्चसंदेहबीजम् ॥ नायंवैश्वानरोविष्णुःकिंत्वग्निदेवता तेजोभूतंवास्यादितिपूर्वःपक्षः ॥ वैश्वानरश्रुतेः ॥ न
चवाच्यंसर्वगतत्वलिंगाद्वैश्वानरोविष्णुरिति ॥ लिंगस्यश्रुतितोदुर्बलत्वात् ॥ नचलिंगस्यानिरवकाशत्वेन
प्राबल्याच्छ्रुतिबाधकत्वमितिमंतव्यम् ॥ श्रुतेरविप्रसिद्धितोनिरवकाशत्वात् ॥ श्रुतेर्विष्णुविषयत्वेऽग्न्या

द्विविषयतयालोकप्रसिद्धिबाधात् वैदिकविद्याभेदव्यवहारविरोधाच्च ॥ नहिवैश्वानरश्रुतेरग्न्यादिविषयत्वाभावेव्यवहारस्यगत्यंतरमत्यतःप्रसिद्धिलिंगयोरुभयोरपिनिरवकाशत्वेनवैश्वानरश्रुतेरग्नाविष्ण्वोःसाधारण्यमेवस्यान्नतुलिंगेनविष्णुपरतानिश्चयः ॥ अतोनवैश्वानरोविष्णुरितिनसर्वगतत्वंतस्येतिभावः ॥

अतआह ॥ अग्नाविष्ण्वोःसाधारणस्यवैश्वानरशब्दस्यविष्णावेवप्रसिद्धात्मशब्देनविशेषणाद्वैश्वानरोविष्णुरेव ॥ २४ ॥

सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ अयंवैश्वानरोविष्णुरेव ॥ आत्मानंवैश्वानरमित्यात्मशब्दात् ॥ नचोक्तरीत्यासाधारणवैश्वानरश्रुतिसद्भावादनिर्णयइतिवाच्यम् ॥ साधारणस्यापिवैश्वानरशब्दस्याऽऽत्मशब्दःपरेविष्णौनान्यत्रक्वचिदिष्यतइत्यादौविष्णावेवप्रसिद्धत्वेनान्यत्रानवकाशात्मशब्दसामानाधिकरण्येनविष्णुपरत्वस्यसंभवात्॥प्रसिद्ध्यादेरन्यथापिसिद्ध्यासावकाशत्वस्यवक्ष्यमाणत्वादितिभावः ॥ २४

नन्वात्मशब्दस्यामुख्यवृत्तिमभ्युपेत्याग्न्यादीनामेववैश्वानरत्वंकिनस्यादित्याशंकांपरिहर्तुंहेत्वंतरेणवैश्वान
रस्यविष्णुत्वंनिश्चाययत्सूत्रमुपन्यस्यव्याचष्टे ॥ स्मर्यमाणमिति ॥ अहंवैश्वानरोभूत्वेतिस्मृत्युक्तंविष्णो
र्वैश्वानरत्वमत्रवैश्वानरविद्यायामपिसगीतोक्तोभगवानेववैश्वानरपदेनोच्यतइत्यस्यार्थस्यानुमापकंभव

अहंवैश्वानरोभूत्वाप्राणिनांदेहमाश्रितइतिस्मर्यमाणमत्रापिसएवोच्यतइत्यस्यानुमाप

॥ ॐ स्मर्यमाणमनुमानंस्यादिति ॐ ॥ २५ ॥

कम् ॥ समाख्यानात् ॥ इतिशब्दःसमाख्याप्रदर्शकः ॥ २५ ॥

ति ॥ स्मृतौविष्णोर्वैश्वानरत्वोक्तेर्वैश्वानरविद्यायामप्यसावुच्यतइतिभावः ॥ स्मृत्युक्तवैश्वानरस्यविष्णुत्वे
प्यत्रोक्तस्यकुतोविष्णुत्वमित्यतआह ॥ समाख्यानादिति ॥ समाख्यानयुक्तिर्नसूत्रितेत्यतआह ॥ इती
ति ॥ अनेनेतिस्मर्यमाणमित्यन्वयःसूचितोभवति ॥ २५ ॥

वैश्वानरस्यविष्णुत्वमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंतावद्व्याचष्टे ॥ शब्दादिभ्यइति ॥ यदुक्तमा
त्मशब्दविशेषणात्समाख्यानाच्चवैश्वानरस्यविष्णुत्वनिश्चयइति तदयुक्तम् ॥ यथाखलुवैश्वानरस्यविष्णु
त्वनिश्चायकात्मशब्दादिविद्यतेतथाग्नित्वनिश्चायकस्यापिविद्यमानत्वात् ॥ तथाहि ॥ वैश्वानरशब्दस्या

अयमग्निर्वैश्वानरः ॥ वैश्वानरमृतआजातमग्निमित्यादिशब्दः ॥ वैश्वानरेतद्धुतंभवतिहृदयंगार्हप
त्योमनोन्वाहार्यपचनआस्यमाहवनीयइत्याद्यग्निलिंगमादिशब्दोक्तम् ॥ येनेदमन्नंपच्यतेतद्यद्भ

॥ ॐ शब्दादिभ्योऽन्तःप्रतिष्ठानान्नेतिचेन्नतथादृष्ट्युपदेशादसंभवा
त्पुरुषविधमपिचैनमधीयते ॐ ॥ २६ ॥

क्तंप्रथममागच्छेत्तद्धोमीयमित्यादिनापाचकत्वेनांतःप्रतिष्ठानंचप्रतीयते॥तस्मान्नविष्णुरितिचेत्॥

त्मशब्दसमानाधिकृतत्ववदग्निशब्दसमानाधिकृतत्वंचश्रूयते ॥ अयमग्निरितिबृहदारण्यकेवैश्वानरमित्य
स्यामृचिच ॥ तथाग्निलिंगंचवैश्वानरेहोमाधिकरणत्वंगार्हपत्याद्यंगत्वंचश्रूयतेवैश्वानरेतद्धुतमित्यादौ ॥
तथावैश्वानरपाचकत्वाख्यमग्निकर्मचश्रूयते ॥ अयमग्निर्वैश्वानरोयोयमंतःपुरुषेयेनेदमन्नंपच्यतेयदिदम
द्यतइतिबृहदारण्यके ॥ तद्यद्भक्तमितिछांदोग्येच ॥ तस्माद्वैश्वानरस्यविष्णुत्वज्ञापकवदग्नित्वज्ञापकस्या

पिसत्वान्नविष्णुरेवायमितिनिश्चयोयुज्यतइत्यर्थः ॥ अत्रसर्ववैश्वानरविद्यानांविचार्यत्वात्तत्तद्वाक्योद्धा

रोयुक्तएवसमाख्यारूपेणवा ॥ मूर्धानंदिवइतिमंत्रार्थः ॥ दिवःकारणभूतंमूर्धानंपृथिव्याःकारणभूतपादं

जनानांसम्यग्ज्ञानायाभिव्यक्तंसर्वज्ञमखंडेशमत्त्यन्नंजनानांपातारंवैश्वानरमग्निंदेवाःस्वाऽस्यतयाकुर्व

न्निति ॥ गतिसाधनत्वादरतिःपादः ॥ ऋतायजातमितिसमाख्यानात्समीतादर्थ्ये ॥ अन्नंथमितिहि

श्रुतिः ॥ अग्निर्देवानांमुखमितिच ॥ वैश्वानरेतद्धुतंभवतीतिवाक्यार्थएवंविद्यद्यपिचंडालायोच्छिष्टंप्रय

न ॥ अथहेममात्मानमणोरणीयांसंपरतःपरंविश्वंहरिमुपासीतेतिसर्वनामासर्वकर्मासर्व

लिंगःसर्वगुणःसर्वकामःसर्वधर्मःसर्वरूपइति सयएतमेवमात्मानंविश्वंहरिमारादमुपास्ते

तस्यसर्वेषुलोकेषुसर्वेषुभूतेषुसर्वेषुदेवेषुसर्वेषुवेदेषुकामचारोभवतीतितत्तन्नामलिंगादिना

तस्यैवदृष्ट्युपदेशान्महोपनिषदि ॥

च्छेदात्मनिहैवास्यतद्वैश्वानरेहुतंस्यादितिवाक्यादवगंतव्यः ॥ भक्तमन्नम् ॥ परिहारसूत्रांशंव्याचष्टे ॥

नेति ॥ उभयत्रश्रुत्यादिसाम्याद्वैश्वानरस्यविष्णुत्वनिश्चयायोगइतिनयुक्तम् ॥ उभयत्रश्रुत्यादिसाम्ये

पिसावकाशत्वनिरवकाशत्वबलान्निश्चयोपपत्तेः ॥ तत्रयदग्निनामलिंगंकर्मचवैश्वानरेश्रूयतेतद्विष्णौसा

वकाशम् ॥ अथहेममात्मानमित्यग्न्यादिनामलिंगकर्मवत्त्वेनविष्णोरुपासनोपदेशात् ॥ नचात्मशब्दादे

रन्यत्रास्त्यवकाशः ॥ अतोनिरवकाशेनसावकाशबाधोपपत्तेर्युज्यतेवैश्वानरस्यविष्णुत्वनिश्चयइतिभावः ॥

नचत्राच्यमुपासनार्थमुक्तत्वादेवयोषितमग्निंध्यायीतेत्यादाविवाऽसत्त्वम् ॥ नाविद्यमानंब्रुवतेवेदाध्यातुंन वैदिकाइत्यादिवचनात् ॥ वाक्यांतरस्याविरोधेनयोर्थःस्थाप्यतेतदर्थत्वाच्च ॥ विश्वंपूर्णम्॥आरात्समीपेस्व हृदये ॥ प्रथमेतिशब्दोविधिसमाप्तौ ॥ द्वितीयस्येत्युपासीतेत्यन्वयः ॥ प्रकरणबलाच्चवैश्वानरस्यविष्णु त्वनिश्चयोभवतीत्याह ॥ अनात्तत्वादिति ॥ कोनआत्माकिंब्रह्मेतिविचारपूर्वकंवैश्वानरविद्यायाआर भ्याधीतत्वेनविष्णुप्रकरणत्वाच्चवैश्वानरोविष्णुरेवेतिनिश्चयोभवति ॥ अनात्तत्वादितिवचनेनविष्णोरन्ये

अनात्तत्वादनात्मानऊनत्वाद्गुणराशितः ॥ अब्रह्माणःपरेसर्वेब्रह्मात्माविष्णुरेवहीत्यादिना
कोनआत्माकिंब्रह्मेत्यारंभाच्चान्येषामसंभवाद्विष्णुरेववैश्वानरः ॥ चंद्रमामनसोजातः
चक्षोःसूर्योअजायतेत्यादिनायःपुरुषाख्योविष्णुरभिहितस्तद्विधमेवात्रमूर्धैवसुतेजाश्च
क्षुर्विश्वरूपःप्राणःपृथग्वर्त्मेत्यादिनाएनंवैश्वानरमधीयते ॥

षामात्मत्वाद्यसंभवादित्यर्थः ॥ श्रुतिसमाख्ययाचवैश्वानरस्यविष्णुत्वमुपपादयति ॥ चंद्रमाइति ॥ यः पुरुषाख्योविष्णुःपुरुषसूक्तेशीर्ष्णोद्यौःसमवर्तत चक्षोःसूर्योअजायत प्राणाद्वायुरजायत पद्भ्यांभूमिरजा यतेत्यादिनावाक्येनद्युभ्वादिजनकशीर्षादिमानभिहितस्तद्विधमेवात्रवैश्वानरंचाधीयतेछंदोगामूर्धैवसुते जाश्चक्षुर्विश्वरूपःप्राणःपृथग्वर्त्मापृथिव्येवपादावित्यादिनावाक्येन ॥ अतःपुरुषसूक्तसमाख्ययापिविष्णु रेववैश्वानरइत्यर्थः ॥ ननुपुरुषसूक्तस्यविष्णुपरत्वेभवेत्तत्समाख्ययैतद्विद्यायाविष्णुपरत्वंतदेवकुतइत्यत

आह ॥ चशब्देनेति ॥ विष्णुपरत्वंपुरुषसूक्तस्यप्रसिद्धमितिसूचयतीत्यर्थः ॥ अपिपदेनवाक्यसमुच्चयोऽस्य सिद्धेर्नान्यत्रोपक्षीणश्चशब्दः ॥ किंतद्वेदादीत्यतस्तदुदाहरति ॥ तथाचेति ॥ श्रुतेःप्रथमप्रतिज्ञानेपितस्याः पुरुषसूक्तमुपन्यस्यविष्णुपरतयाव्याख्याऽन्याःसाक्षात्प्रतिज्ञातार्थासाधकत्वान्नप्रथममुदाहरणम् ॥ प्रति

चशब्देनसकलवेदतंत्रपुराणादिषुविष्णुपरत्वंपुरुषसूक्तस्यदर्शयति ॥ तथाचब्राह्मे ॥ यथैवपौरुषंसूक्तंनित्यंविष्णुपरायणम् ॥ तथैवमेमनोनित्यंभूयाद्विष्णुपरायणमिति ॥ चतुर्वेदशिखायांच ॥ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपादिति ॥ एषह्येवाचिंत्यःपरःपरमोहरिरादिरनादिरनंतोऽनंतशीर्षोऽनंताक्षोऽनंतबाहुरनंतगुणोऽनंतरूपइति॥ बृहत्संहितायांच॥ यथाहिपौरुषंसूक्तंविष्णोरेवाभिधायकम् ॥ नतथासर्ववेदाश्ववेदांगानिचनारदेत्यादि ॥ यस्माद्यज्जायतेचांगाल्लोकवेदादिकंहरेः ॥ तन्नामवाच्यमंगंतद्यथाब्रह्मादिकंमुखमिति नारदीयवचनान्नाभेदोक्तिविरोधः ॥ २६ ॥

ज्ञात्वाधिक्यक्रमाभिप्राया ॥ परोविलक्षणः ॥ आदिपदेन सर्वतःपौरुषेसूक्तेगुणाविष्णोरुदीरिताइतिब्रह्मतर्कादिग्रहणम् ॥ ननुपुरुषसूक्तेद्युभ्वादिजनकशीर्षादिमत्त्वंपुरुषस्योच्यते वैश्वानरविद्यायांपुनर्वैश्वानरस्यतदभेदोऽतोविरुद्धार्थत्वान्नैयंसमाख्येत्यतआह ॥ यस्मादिति ॥ वैश्वानरांगानांसूर्याद्यभेदोक्तावपिनपुरुषसूक्तवैश्वानरविद्ययोर्विरोधोऽभेदोक्तेरपितज्जन्यजनकभावविवक्षावत्त्वादितिभावः ॥ २६ ॥

ननुवैश्वानरशब्दस्यदेवताभूतयोःप्रसिद्धत्वादत्राप्यसौतत्परःकिंनस्यादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्या
चष्टे ॥ अतएवेति ॥ यद्यपिवैश्वानरशब्दोऽन्यत्रप्रसिद्धस्तथापिनात्रतेनान्यदभिधीयते ॥ आत्मशब्दादि

अग्निवैश्वानरादिशब्दस्तेजसिभूतेऽग्निदेवतायांचप्रसिद्धोप्यतःपूर्वोक्तहे
तुतएवात्रनसातच्चाभिधीयते ॥ २७ ॥ नाग्न्यादयःशब्दाअग्न्यादिवाच

॥ ॐ अतएवनदेवताभूतंच ॐ ॥ २७॥

कास्ततथापिसाक्षादेवाऽनन्ययोगेनब्रह्मवाचकैःशब्दैर्व्यवहारार्थमनभि
ज्ञानाच्चान्यत्रव्यवहरंतीत्यभ्युपगमेऽविरोधंजैमिनिर्वक्ति ॥

हेतोरेव तस्यचान्यत्रनिरवकाशत्वादितिभावः ॥ अत्राग्न्यादिग्रहणंवेद्यांतरोपलक्षणार्थम् ॥ २७ ॥ नन्व
ग्न्यादिशब्दानामग्न्यादिवाचित्वाभावेब्रह्मैकवाचित्वेचप्रसिद्धिविरोधःस्यात् ॥ तस्याःकारणांतराभावात्॥
अतःप्रसिद्ध्यन्यथानुपपत्त्यान्येषांवाच्यत्वमित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ साक्षादिति ॥ य

यप्यग्न्यादिशब्दानामग्न्यादिवाचकाःकिंतुब्रह्मवाचकाएवतथापिनप्रसिद्धिविरोधः ॥ अनन्ययोगेनब्रह्मवाचकैरपितैर्ज्ञानिनोहानादिसिद्ध्यर्थमन्यत्राग्न्यादौव्यवहरंति ॥ तदन्येतुज्ञानाभावादेवेत्यभ्युपगमात् ॥ एवमभ्युपगमेचप्रसिद्धेरन्यथोपपत्तिसिद्धेर्नतद्विरोधइतिजैमिनिराचार्योवक्तीत्यर्थः॥ननुजैमिन्यादिमतानां

व्यासचित्तस्थिताकाशादवच्छिन्नानिकानिचित् ॥ अन्येव्यवहरंत्येता

॥ॐ साक्षादप्यविरोधंजैमिनिः ॐ॥ २८॥

न्यूरीकृत्यगृहादिवदितिस्कांदवचनान्नमतानांपरस्परंविरोधः ॥ २८॥

भगवन्मताविरोधित्वेजैमिन्यादिग्रहणवैयर्थ्याद्विरोधित्वेचकथंविरुद्धराद्धांतेनपरिहारइत्यतआह ॥ व्यासेति ॥ जैमिन्यादिमतानांनव्यासमतविरोधस्तथापितन्मतैकदेशोररीकाराभिप्रायेणजैमिन्यादिग्रहणोपपत्तिरितिभावः ॥ चित्तस्थिताकाशादितिचित्तस्थितज्ञानाख्याकाशात् ॥ बहुवचनंवक्ष्यमाणमतविवक्षया ॥ २८॥

ननुलौकिकप्रसिद्धेरज्ञानादिमूलत्वेनान्यथोपपत्तावपिवैदिकाग्न्यादिसूक्तविद्यादिप्रसिद्ध्यन्यथानुपपत्त्याग्न्यादीनांवाच्यत्वंस्यात् ॥ तत्राज्ञानादिमूलत्वकल्पनाऽयोगेनान्यथोपपत्त्यभावात् ॥ नापिव्यवहारार्थत्वेनान्यथोपपत्तिरनादित्वादित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ अभिव्यक्तेरिति ॥ नवैदिकाग्न्यादिसूक्तादिप्रसिद्ध्यन्यथानुपपत्त्यान्येषांसूक्तादिप्रतिपाद्यत्वम् ॥ तत्रतत्रसूक्तादौपरब्रह्मणएवप्रतिपाद्यत्वेऽग्न्या

तत्रतंत्रप्रसिद्धावप्यग्न्यादिषुब्रह्मणोऽभिव्यक्तेरग्न्यादिसूक्तनियमइत्याश्मरथ्यः ॥ २९ ॥

## ॥ ॐ अभिव्यक्तेरित्याश्मरथ्यः ॐ ॥ २९ ॥

## ॥ ॐ अनुस्मृतेर्बादरिः ॐ ॥ ३० ॥

तत्रतत्रोक्तस्यविष्णोरग्न्यादिष्वनुस्मर्यमाणत्वात्तन्नियमइतिबादरिः ॥ ३० ॥

दीनामप्रतिपाद्यत्वेप्यग्न्यादिसूक्तादिभिर्ब्रह्मोपास्तावग्न्यादिष्वेवस्वेच्छयाब्रह्मणोऽभिव्यक्तिनियमात्तदभिप्रायेणप्रसिद्धेरुपपत्तेरित्याश्मरथ्याचार्योवक्तीत्यर्थः ॥ २९ ॥ प्रकारांतरेणसूक्तादिनियमस्यान्यथोपपत्तिंतद्सूत्रमुपन्यस्यव्याचष्टे ॥ अनुस्मृतेरिति ॥ विष्णोरेवाग्न्यादिविद्याप्रतिपाद्यत्वेपितस्यतत्तत्सूक्ताद्युपासकैरग्न्यादिष्वेवप्रतिपत्तव्यत्वाभिप्रायेणाग्न्यादिसूक्तादिनियमोपपत्तेर्नतदन्यथानुपपत्त्याऽन्येषांवाच्यत्वंवाच्यमितिबादरिराचार्योवक्तीत्यर्थः ॥ ३० ॥

रीत्यंतरेणसूक्तादिनियमस्यान्यथोपपत्तिंकथयत्सूत्रमुपन्यस्यव्याचष्टे ॥ संपत्तेरिति ॥ अग्न्यादिसूक्तादिषुपरब्रह्मणएवप्रतिपाद्यत्वेप्यग्न्यादिसूक्तादिभिरग्न्यादौभगवदुपास्तावग्न्यादिप्राप्त्यभिप्रायेणसूक्तादिनियमोपपत्तेर्नतदन्यथानुपपत्त्यान्येषांवाच्यत्वंमंतव्यमितिजैमिनिराचार्योमन्यतइत्यर्थः ॥ जैमिनिमतंकिम

साक्षादप्यविरोधंवदन्जैमिनिःसूक्तादिनियममग्न्यादिसंप्राप्त्यामन्यते; तंयथायथोपासते

॥ ॐ संपत्तेरितिजैमिनिस्तथाहिदर्शयति ॐ ॥ ३१ ॥

तदेवभवतीतिदर्शयति ॥३१॥

र्थंपुनरुच्यतेइतिमंदाशंकानिवृत्त्यर्थंलौकिकव्यवहारेसाक्षाद्ब्रह्मवाचकत्वेपिशब्दानामविरोधंवदन्जैमिनिःसूक्तादिव्यवहारस्याग्न्यादिप्राप्त्याऽन्यथोपपत्तिंवर्णयतीत्युक्तम् ॥ नन्वग्न्यादिषुभगवदुपास्तावग्न्यादिप्राप्तिर्भवतीत्येतत्कुतइत्यतःसूत्रसूचितांश्रुतिमुदाहरति ॥ तमिति ॥ तदेवभवतिप्राप्नुवंति ॥ अत्रव्यवहारस्योपचरितत्वांगीकारेप्रागुक्तैवानुपपत्तिः ॥ ३१ ॥

यदुक्तमग्न्यादिसूक्तादिभिर्ब्रह्मोपासकस्याग्न्यादिप्राप्तिरितितच्छ्रुत्युक्तमपिनयुक्तम् ॥ मद्भक्तायांतिमामपी त्यादेरन्योपासकस्यान्यप्राप्तेरयोगात् ॥ श्रुतोपनिषत्कगत्यभिधानाच्चेत्यादौतदनभ्युपगमाच्चेतिभावेनाशं क्यतत्परिहारतयासूत्रमवतार्यव्याचष्टे ॥ नहीति ॥ नविष्णूपासकस्याग्न्यादिप्राप्त्युक्तिरयुक्ता ॥ अग्न्यादि

नह्यन्योपासकोऽन्यंप्राप्नुतइतियुज्यतइत्यतआह ॥ एनंविष्णुमस्मिन्नग्न्यादावामनंति योऽग्नौतिष्ठन्यएषएतस्मिन्नग्नौतेजोमयोऽमृतमयःपुरुषइत्यादिना ॥ ३२ ॥ अ० ७ ॥

॥ ॐ आमनंतिचैनमस्मिन् ॐ ॥३२॥

॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेप्रथमाध्यायस्यद्वितीयःपादः ॥ श्रीकृष्णार्पणमस्तु ॥

प्राप्तिपदेनतदंतर्गतभगवत्प्राप्तेर्विवक्षितत्वात् ॥ यतोग्न्यादावपिविष्णुमामनंतिश्रुतयइतिभावः ॥ चशब्दः शंकाव्यावर्तकः ॥ अतोयंवैश्वानरोविष्णोरेवेतितस्यैवसर्वगतत्वमितिसिद्धम् ॥ ३२ ॥ अ० ७ ॥ इति श्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यब्रह्मसूत्रभाष्यस्यटीकायांतत्त्वप्रकाशिकायांजयतीर्थमुनिविरचितायांप्रथमाध्यायस्यद्वितीयःपादः ॥ श्रीकृष्णार्पणमस्तु ॥ श्रीहरयेनमः ॥ श्रीगुरुभ्योनमः ॥

श्रीवेदव्यासायनमः ॥ एतत्पादप्रतिपाद्यंदर्शयति ॥ तत्रचेति ॥ हरौतदितरत्रचश्रुत्यादिप्रसिद्धनामलिं गात्मकशब्दानांविष्ण्वेकवाचित्वंप्रबलहेतुभिःप्रतिपादयत्यस्मिन्पादेसूत्रकारइत्यर्थः ॥ चशब्दौमिथःसमुच्चयार्थौ ॥ देवताद्यधिकरणव्यावृत्त्यर्थंप्रायेणेति ॥ अत्ररुद्रोवावलोकाधारः वायुनावैगौतमसूत्रेणायंच लोकःपरश्चलोकःसर्वाणिभूतानिसंदृब्धानिभवंति आकाशएवतदोतंचप्रोतंचसर्वेवाएतेप्राणाश्चप्राणिन

श्रीगुरुभ्योनमः ॥ ॐ तत्रचान्यत्रप्रसिद्धानांशब्दानांविष्णौसमन्वयंप्रायेणास्मिन्पादे दर्शयति ॥ विष्णोःपरविद्याविषयत्वमुक्तम् ॥

श्चदेवाश्चदिव्यानिचलोकाश्चलोकिनश्चअलोकाश्चालोकिनश्चविष्णावेवोताश्चप्रोताश्चेत्यादिनोभयत्रप्रसिद्धद्युभ्वाद्यायतनत्वलिंगस्यभगवतिसमन्वयप्रतिपादनादस्तिशास्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिंविषयवाक्यमुदाहृत्यविषयसंशयसयुक्तिकपूर्वपक्षान्दर्शयति ॥ विष्णोरिति ॥ अदृश्यत्वादिगुणकाक्षरस्यविष्णोः परविद्याविषयत्वमुक्तम् ॥ तत्परविद्याविषयत्वमाथर्वणेयस्मिन्द्यौरित्युक्तस्यद्युभ्वाद्यायतनस्योच्यते ॥ तमेवैकंजानथात्मानमन्यावाचोविमुंचथामृतस्यैषसेतुरिति ॥ सचयदिविष्णोरितरःस्यात्तदापरविद्यावि

षयत्वमन्यस्यप्रसज्ज्येतेत्यवश्यंनिर्णयः ॥ तद्द्युभ्वाद्यायतनत्वंविषयः ॥ तत्किंविष्णोरन्येषांवेतिसंदेहः ॥ उक्तसाधारण्यमेवसंदेहबीजम् ॥ द्युभ्वाद्यायतनत्वंरुद्रप्रधानजीववायूनामितिपूर्वःपक्षः ॥ अत्रोक्तप्राणाधारत्वस्यप्राणानांग्रंथिरसिप्राणेश्वरइत्यादिनारुद्रेप्रतीतेः ॥ तथाद्युभ्वंतरिक्षायतनत्वस्यचरुद्रोवावलोकाधारइतितस्मिन्नुक्तत्वात् ॥ मनआयतनत्वंचतस्मिन्रुद्रेवैमनओतंचप्रोतंचेतिप्रतीयते ॥ नैतच्छ्रु

तत्रयस्मिन्द्यौःपृथिवीचांतरिक्षमोतंमनःसहप्राणैश्वसर्वैः तमेवैकंजानथाऽऽत्मानमित्यत्र
प्राणानांग्रंथिरसिरुद्रोमाविशांतकः प्राणेश्वरःकृत्तिवासाःपिनाकीत्यादिनारुद्रस्यप्राणा
धारत्वप्रतीतेः सएषोंतश्चरतेबहुधाजायमानइतिजीवलिंगाच्चतयोःप्राप्तिरिति ॥

तीनांविष्णुविषयत्वम् ॥ अंतकःकृत्तिवासाःपिनाकीत्यादिरुद्रलिंगात् ॥ दृष्टफलविधायकरुद्रवाक्यदृष्टांतेनतत्सर्वाश्रयत्वप्रतिपादकवाक्यप्रामाण्यानुमानेनचतस्यसर्वाश्रयत्वसिद्धेः ॥ द्युभ्वादीनांप्रकृतिकार्यत्वात्तदाश्रयत्वंप्रकृतेर्युक्तम् ॥ यद्भूतंचभवच्चभविष्यच्चेत्याचक्षतेआकाशएवतदोतंचप्रोतंचेतिश्रुतेश्च पूर्ववत्प्रकृतेःसर्वाश्रयत्वाभिधायककापिलागमप्रामाण्यानुमानाच्च ॥ अराइवरथनाभौसंहतायत्रनाड्यः

सएषोंतश्चरतेबहुधाजायमानइतिद्युभ्वाद्यायतनेजीवलिंगश्रवणाज्जीवस्यतद्युक्तम् ॥ तस्यजीवत्वादेवप्रा
णित्वप्रसिद्धेश्च ॥ विषयभूतलोकाधारत्वस्यवायुनावैगौतमसूत्रेणेतिवायौश्रुतिसिद्धत्वात्तस्यद्युभ्वाद्या
यतनत्वंयुक्तम् ॥ तस्यप्राणाधारत्वप्रसिद्धेश्च ॥ विष्णोर्द्युभ्वाद्यायतनत्वप्रसिद्धावपिनासावत्रोच्यते ॥
बहुधाजन्मबाधात् ॥ परविद्याविषयत्वलिंगाद्विष्णुरितिचेन्न ॥ आवेशाभेदेनब्रह्मगतलिंगस्यापिजीवेसं

अतउच्यते ॥ तमेवैकंजानथाऽऽत्मानमित्यात्मशब्दाद्द्युभ्वाद्याश्रयोविष्णुरेव ॥ आत्मब्र

## ॥ ॐ द्युभ्वाद्यायतनंस्वशब्दात् ॐ ॥ १ ॥

ह्मादयःशब्दास्तमृतेविष्णुमव्ययम् ॥ नसंभवंतियस्मात्तैर्नैवामागुणपूर्णतेतिब्रह्मवैवर्ते॥ १॥

भवात् ॥ नचतथाबहुधाजन्मसंभवति ॥ कारणगतस्यैवकार्येसंभवात् ॥ अतःपरविद्याविषयोद्युभ्वाद्या
श्रयोविष्णोरितरएवेतितस्यैवादृश्यत्वादिगुणकत्वमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइ
ति ॥ द्युभ्वाद्यायतनेस्वशब्दपर्यायात्मशब्दश्रवणाद्द्युभ्वाद्यायतनंविष्णुरेवेत्यर्थः ॥ आत्मशब्दादपिकुतो
विष्णुरित्यतआह ॥ आत्मेति ॥ १ ॥

ननुविष्णौमुख्योप्यात्मशब्दोजीवलिंगबलादमुख्यार्थःकिंनस्यात् ॥ तथाचनविष्णोर्द्युभ्वाद्यायतनत्वमि
त्याशंकांपरिहरन्सूत्रमुपन्यस्यतदुपात्तश्रुतिमेवोदाहरति ॥ मुक्तेति ॥ नात्मशब्दस्यामुख्यार्थत्वंपरिकल्प्यद्यु



अमृतस्यैषसेतुरिति ॥ ब्रह्मविदाप्नोतिपरम् ॥ नारायणंमहाज्ञेयंविश्वात्मानंपराय
णम् ॥ मुक्तानांपरमागतिः एतमानंदमयमात्मानमुपसंक्रामतीत्यादिनातस्यैवमुक्त

॥ ॐ मुक्तोपसृप्यव्यपदेशात् ॐ ॥ २ ॥

प्राप्यत्वव्यपदेशात् ॥ बहुनात्रकिंमुक्तेनयावन्नैतंनगच्छति ॥ योगीतावन्नमुक्तः
स्यादेषशास्त्रस्यनिर्णयइत्यादित्यपुराणे ॥ २ ॥

भ्वाद्यायतनत्वमन्यत्रनेतुंशक्यम् ॥ द्युभ्वाद्यायतनस्यमुक्तप्राप्यत्वोक्तिर्विष्णुत्वनिश्चयादित्यर्थः ॥ अमृत
स्येतिजातावेकवचनम् ॥ मुक्तप्राप्यत्वंकुतोविष्णुत्वनिश्चायकमित्यतआह ॥ ब्रह्मविदिति ॥ पराणांमुक्ता
नामयनमाश्रयः ॥ एतद्वाक्यैरस्तुविष्णोर्मुक्तप्राप्यत्वंतदन्यस्यापिकिंनस्यादित्यतआह ॥ बहुनेति ॥ २ ॥

ननुप्रागुक्तरीत्यारुद्रप्रकृत्योःकिंनस्याद्युभ्वाद्यायतनत्वमित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ नानुमा
नमिति ॥ प्रागुक्तानुमानसिद्धप्रामाण्येपाशुपताद्यागमेसर्वाश्रयत्वेनकल्पितेरुद्रप्रधानेअत्रप्रकरणेसर्वाधा
रतयाप्रतिपाद्येनभवतः ॥ तच्छ्रुतिलिंगाद्यभावादितिभावः ॥ आगमप्रामाण्यसाधकानुमानंतुफलविसंवा
दिरुद्रादिवाक्यदृष्टांतेनविप्रतिपन्नवाक्याप्रामाण्यसाधनसंभवात् प्रतिपक्षग्रस्तमतिप्रसंगदुष्टंचेत्युपेक्ष्यम्॥
अभाषितंप्रधानंकिंसंयोज्यतइतिचेन्न ॥ नप्रकृतिजीवावभिधीयेतेइत्यन्यत्रोक्तत्वात् ॥ नचप्रकृतिपदे
नानुमानात्मकागमपरिकल्पितरुद्रोऽत्रवाच्यः ॥ भस्मधरोयत्वादितच्छब्दाभावात् ॥ सोऽतकः

ॐ ॥नानुमानमतच्छब्दात्॥ॐ ॥३ ॥

सरुद्रःसप्राणभृत्सप्राणनायकः सईशोयोहरिर्योऽनंतोयोविष्णुर्यःपरःपरोवरीयानित्यादिनाप्राण
ग्रंथिरुद्रत्वादेर्विष्णोरेवोक्तत्वात् ॥ ब्रह्मांडेच ॥ रुजंद्रावयतेयस्माद्रुद्रस्तस्माज्जनार्दनः ॥
नापिरुद्रः ॥ पृथगुभयग्रहणेबाधकाभावात् ॥ नन्वत्ररुद्रादिज्ञापकाभावेऽपिश्रुत्यंतरेप्राणानांग्रंथिरसिरुद्र
इत्याद्युक्तेर्द्युभ्वाद्यायतनत्वंरुद्रादेःकिंनस्यादित्यतआह॥ सइति॥ श्रुत्यंतरोक्तमपिद्युभ्वाद्यायतनत्वंविष्णो
रेव ॥ नचरुद्रादिश्रुतिलिंगविरोधः ॥ श्रुतिबलेनरुद्रादिश्रुतेरंतकत्वादिलिंगस्यचविष्णुनिष्ठत्वादितिभावः ॥
ननुरुद्रादिशब्दानांविष्णुपरत्वंकिंयोगेनरूढ्यावा ॥ नाद्यः ॥ योगस्यदौर्बल्यात् ॥ नद्वितीयः ॥ तदभावा
त् ॥ उभयत्ररूढिसद्भावेपुनर्निश्चयायोगात् ॥ नहिश्रुत्यंतरेविष्णुलिंगाद्यस्तीत्यतआह ॥ ब्रह्मांडेचेति ॥ रु

द्रादिशब्दानांविष्णौयोगमुक्त्वावेदेषुसपुराणेषुगीयतइतिविद्वद्रूढिकथनाद्रूढिमात्रान्महायोगविद्वद्रूढयोःप्राबल्याद्युक्तःश्रुत्यंतरेपिविष्णोःप्रतिपाद्यत्वनिश्चयइतिभावः ॥ ननुयदिरुद्रादिशब्दानांविष्णुपरत्वमुक्त्वाश्रुतीनामनिर्णायकत्वमुच्यतेतर्हिनारायणादिनाम्नांरुद्रादिपरत्वेननारायणंमहाज्ञेयमित्यादिश्रुतीनामनिर्णा

ईशनादेवचेशानोमहादेवोमहत्त्वतः ॥ पिबंतियेनरानाकंमुक्ताःसंसारसागरात् ॥ तदाधारोयतोविष्णुः पिनाकीतिततःस्मृतः ॥ शिवःसुखात्मकत्वेनशर्वःशंरोधनाद्धरिः ॥ कृत्यात्मकमिमंदेहंयतोवस्तेप्रवर्तयन् ॥ कृत्तिवासास्ततोदेवोविरिंचश्चविरेचनात् ॥ बृंहणाद्ब्रह्मनामासावैश्वर्यादिंद्रउच्यते ॥ एवंनानाविधैः शब्दैरेकएवत्रिविक्रमः ॥ वेदेषुसपुराणेषुगीयतेपुरुषोत्तमइति ॥ वामनेच ॥ नतुनारायणादिनांनाम्नामन्यत्रसंभवः ॥ अन्यनाम्नांगतिर्विष्णुरेकएवप्रकीर्तितइति ॥ स्कांदेच ॥ ऋतेनारायणादीनिनामानिपुरुषोत्तमः ॥ प्रादादन्यत्रभगवान्राजेवर्तेस्वकंपुरमिति ॥ चतुर्मुखःशतानंदोब्रह्मणःपद्मभूरिति ॥ उग्रोभस्मधरोनग्नःकपालीतिशिवस्यच ॥ विशेषनामानिददौस्वकीयान्यपिकेशवइतिचब्राह्मे ॥ ३ ॥

यकत्वंस्यादित्यतआह ॥ वामनेचेति ॥ भगवन्नामत्वाविशेषाद्रुद्रादिनामवन्नारायणादिनाम्नामपिरुद्रादौवृत्तिःकिंनस्यादित्यतआह ॥ स्कांदेचेति ॥ यद्येवंरुद्रादिशब्दाविष्ण्वेकपरास्तर्हिकिमुच्यतेभस्मधरोग्रत्वादीनांतच्छब्दत्वम् ॥ विष्णुदत्तत्वाभिप्रायेणेतिचेत्तर्हिरुद्रादिशब्दाअपितादृशाइतिनकथंतैर्निर्णयइत्यतआह ॥ चतुर्मुखइति ॥ ३ ॥

उक्तप्रायाजीववायूकिमत्रवाच्यौनस्याताभित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ प्राणभृच्चेति ॥ चश ब्दात्प्रागुक्तहेतूनांनञश्चसमाकर्षः ॥ आत्मशब्दोमुक्तोपसृप्यत्वमतच्छब्दस्तत्रापकश्रुतीनांविष्णुपरत्वमि त्युक्तहेतवः ॥ ननुवायुर्नावैगौतमेत्यादिश्रुतेर्विष्णुपरत्वेनवायुसाधकत्वाभावेपिबहुधाजन्मलिंगेनजीवोऽ

एतैरेवहेतुभिर्नजीवोवायुश्च ॥ अजायमानोबहुधाविजायतइतितस्यैवबहुधाजन्मोक्तेः ॥ ४ ॥

॥ ॐ प्राणभृच्च ॐ ॥ ४ ॥

॥ ॐ भेदव्यपदेशात् ॐ ॥ ५ ॥

नचैक्यंवाच्यम् ॥ जुष्टंयदापश्यत्यन्यमीशमस्यमहिमानमितिभेदव्यपदेशात् ॥ ५ ॥

त्रवाच्यः किंनस्यादित्यतआह ॥ अजायमानइति ॥ ४ ॥ ननुकिंजीवलिंगस्यविष्णुपरत्वप्रतिपादनायासे न जीवस्यैवद्युभ्वाद्यायतनत्वंकिंनस्यात् ॥ नचोक्तहेतुविरोधः ॥ जीवेशाभेदाभिप्रायेणजीवेप्यात्मशब्दा द्युक्तिसंभवादित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ भेदेति ॥ नैक्याभिप्रायेणजीवएवात्मशब्दादिप्रयो गोऽत्रेतिवाच्यम् ॥ अंत्रैवान्यमीशमितिजीवेशभेदव्यपदेशादित्यर्थः ॥ ५ ॥

नन्वत्रजीवस्यकस्माच्चिदीशादन्यत्वमुच्यतेनपरमात्मनोतोनतयोर्भेदइत्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ प्रकरणादिति ॥ नात्रजीवपरमात्मभेदोक्त्यभावः ॥ ईशशब्देनैवपरमात्मोक्तेः ॥ तदेवकुतः ॥ द्वेविद्येवेदितव्येइतिपरविद्याविषयवस्तुनोत्रारभ्याधीतत्वेनास्यविष्णुप्रकरणत्वादितिभावः ॥ ६ ॥ नजीवेशाभेदोत्रप्रकरणेविवक्षितइत्येतमर्थंहेत्वंतरेणसाधयत्सूत्रमुपन्यस्यव्याचष्टे ॥ स्थितीति ॥ संयुक्तौ

द्वेविद्येवेदितव्येइतितस्यह्येतत्प्रकरणम् ॥ ६ ॥ द्वासुपर्णासयुजासखाया

## ॥ ॐ प्रकरणात् ॐ ॥ ६ ॥

## ॥ ॐ स्थित्यदनाभ्यांच ॥ ७ ॥

समानंवृक्षंपरिषस्वजाते ॥ तयोरन्यःपिप्पलंस्वाद्वत्त्यनश्नन्नन्योअभि

चाकशीतीतीशजीवयोःस्थित्यदनोक्तेः ॥ ७ ॥ अ० १ ॥

सखायौद्वौसुपर्णरूपौजीवेशौदेहाख्यंपिप्पलमालिलिंगतुः ॥ तयोःसुपर्णयोर्मध्येऽन्योजीवोऽश्वत्थफलरूपंदेहजनितकर्मफलमस्वाद्वस्वादुत्वेनात्ति ॥ अन्यईश्वरस्तदनश्नन्भितःप्रकाशतेनतुस्वस्थित्यैतदपेक्षतइतिजीवेशयोःकर्मफलोपजीवनतद्रहितावस्थानाभ्यामुक्ताभ्यांचनैक्यंवाच्यमित्यर्थः ॥ अत्रश्रुतिक्रमोल्लंघनमीश्वरस्यप्राधान्यज्ञापनार्थम् ॥ स्थितिपदस्याल्पाक्षरत्वाच्च ॥ व्यावहारिकभेदःश्रुत्योच्यतइ

तिचेत् ॥ व्यावहारिकइतिसत्योमिथ्यावा ॥ आद्येकिमनिष्टम् ॥ नद्वितीयः ॥ मिथ्याऽभिधायकत्वेऽत
त्त्वावेदकत्वेनश्रुतेरप्रामाण्यापातात् ॥ तत्त्वावेदकत्वलक्षणप्रामाण्याभावेपिव्यावहारिकंतदस्तीतिचेन्न ॥
तत्त्वाविषयत्वेप्रामाण्यवाचोयुक्तेरयुक्तत्वात् ॥ मिथ्याभेदानुवादित्वान्नदोषइतिचेन्न ॥ वैयर्थ्यात् ॥ निषे
धायेतिचेन्न ॥ तदभावात् ॥ तत्त्वमसीत्यादिनषेधोस्तीतिचेत् ॥ तदनुवादेनायमेवनिषेधः किंनस्यात् ॥
अद्वैतस्यप्रमाणांतरेणासिद्धेर्नतदनुवादइतिचेत् ॥ तत्किंनिषेधायप्रमाणप्राप्त्याभाव्यं प्राप्तिमात्रेणवा ॥
आद्येनिषेधायोगः ॥ द्वितीयेस्त्यद्वैतेपितादृशीप्राप्तिः ॥ जीवेशयोःप्रमाणंविनाऽसिद्धेःकथंतदभेदस्यकथं
चित्प्राप्तिरितिचेत् ॥ समंभेदेपि ॥ कुतश्चैतच्छ्रुतेर्मिथ्याभेदवादित्वंसिद्धम् ॥ जीवेशभेदस्यमिथ्यात्वादेवे
तिचेत् ॥ तदेवकुतः ॥ नहिभेदमिथ्यात्वेप्रत्यक्षमस्ति ॥ नचानुमानंश्रुतिसिद्धार्थबाधकम् ॥ स्वस्यैवतद्विरो
धेनाऽप्रामाण्यात् ॥ श्रुतेर्भेदमात्रपरत्वादनुमानस्यचतद्भेदस्यैवमिथ्यात्वेप्रवृत्तत्वेनभिन्नविषयत्वान्नविरो
धइतिचेत्तर्हिप्रत्यक्षस्यौष्ण्यमात्रविषयत्वादनुमानस्यचतदौष्ण्यस्यैवमिथ्यात्वसाधकत्वेनभिन्नविषयत्व
मितिबाधोच्छेदःस्यात् ॥ नचागमेनभेदमिथ्यात्वसिद्धिः ॥ तदभावादेव ॥ नचतत्सत्यत्वेमानाभावः ॥स्वरू
पाभिधायकस्यैवसत्यत्वेप्रामाण्यात् ॥ अन्यथातस्यवैयर्थ्यात् ॥ अतोनमिथ्याभेदपरत्वंश्रुतेरित्यलम् ॥
तस्माद्विष्णुरेवद्युभ्वाद्यायतनंपरविद्याविषयश्चेतिसिद्धम् ॥ ७ ॥ अ० १ ॥

अत्रप्राणोवाआशायाभूयानित्युपक्रमेणविष्णुर्वेदेभ्योभूयांस्तस्माद्भूयान्नामेतिश्रुत्याचवायुविष्णुसा
धारणभूमनाम्नोविष्णौसमन्वयप्रतिपादनादस्तिशास्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिविषयादिकंचसूचयन्स
युक्तिकंपूर्वपक्षंदर्शयति ॥ प्राणइति ॥ आनंदमयाधिकरणेपूर्णानंदत्वंविष्णोरुक्तंतच्छंदोगश्रुतौभूम्नःप्रती
यते ॥ योवैभूमातत्सुखंनाल्पेसुखमस्तिभूमैवसुखमिति ॥ तस्यचभूम्नोविष्णोरितरत्वेप्रागुक्तानंदमयत्वंचे

प्राणोवाआशायाभूयानित्युक्त्वायोवैभूमातत्सुखमित्युक्तेस्तस्यैवभूमत्वप्राप्तिः ॥ उत्क्रांतप्राणानि
त्यादितल्लिंगात्प्राणशब्दश्चवायुवाचीति ॥ अतोवक्तिसंप्रसादात्पूर्णसुखरूपत्वात् ॥ अध्युपदेशा

## ॥ ॐ भूमासंप्रसादादध्युपदेशात् ॐ ॥ ८ ॥

त्सर्वेषामुपर्युपदेशाच्चविष्णुरेवभूमा ॥ सहस्रशीर्षंदेवंविश्वाक्षंविश्वशंभुवम् ॥ विश्वंनारायणंदेवम
क्षरंपरमंपदम् ॥ विश्वतःपरमांनित्यमितिहिश्रुतिः ॥ तमुत्क्रामंतंप्राणोनूत्क्रामतीत्यादिनानोत्क्रमणा
दिलिंगविरोधोपि ॥ ८ ॥

तरस्यैवप्रसज्जेतेत्यवश्यंनिर्णेयत्वम् ॥ सभूमात्रविषयः ॥ किंविष्णुरुतवायुरितिसंदेहः ॥ पूर्वोक्तसाधार
ण्यंसंदेहबीजम् ॥ मुख्यप्राणोयंभूमेतिपूर्वःपक्षः ॥ अत्रनामवागादितारतम्यमाशावसानमुक्त्वाप्राणोवा
आशायाभूयानितिप्राणस्याशोत्तमत्वंचाभिधायतदुतममनुक्त्वाभूम्नआम्नातत्वात् ॥ नचविष्णोरपिभूम
त्वस्यश्रुत्यंतरेप्रसिद्धत्वादत्रवाच्यत्वमितिवाच्यम् ॥ उपक्रमात्समाख्यायादुर्बलत्वात् ॥ अतोवायोरेवभू

मत्वात्तस्यैवानंदमयत्वमितिभावः ॥ ननुप्राणोवाआशायाभूयानित्युक्तप्राणशब्दस्यातएवप्राणइत्युक्तरीत्याविष्णुपरत्वाद्विष्णोरेवभूमत्वमित्यतआह॥ उत्क्रांतेति ॥ नायंप्राणशब्दोविष्णुवाचीकिंतुवायुवाच्येव॥ तत्रोत्क्रांतप्राणान्शूलेनसमासंव्यतिषंदहेदित्यादौप्राणस्योत्क्रमणादिश्रवणात्॥ तस्यवायावेवसंभवात् ॥ सर्वगतेहरावसंभवादित्यर्थः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ विष्णुरेवायंभूमा ॥ योवैभूमातत्सुखमितिभूम्नःपूर्णसुखरूपत्वाभिधानात्॥ नामादीनांसर्वेषामुपरितदुत्तमत्वेनव्यपदेशाच्चेत्यर्थः ॥ नचवाच्यमत्रभूम्नःसुखरूपत्वमेवोच्यतेनतुपूर्णसुखत्वमिति ॥ निरुपपदसुखशब्दमात्रस्यापिपूर्णसुखार्थत्वात् ॥ पूर्णसुखत्वादिकंचकुतोविष्णुत्वनिश्चायकमित्यतआह ॥ सहस्रेति ॥ विश्वशंभुवंपूर्णसुखाश्रयम् ॥ विश्वतःपरमांसर्वतःपरममकारवाच्यमित्यर्थः ॥ नचसर्वोत्तमत्वंवायोरपि ॥ विरोधादेव ॥ नापिपूर्णानंदत्वम्॥ अव्यक्तादितृणांतास्तुविप्रुडानंदभागिनइत्युक्तत्वात्॥ उपक्रमेप्राणशब्दश्रवणात्कथंभूमाविष्णुरितिचेन्न॥ प्राणशब्देनापिविष्णोरेवोक्तत्वात् ॥ अनंतरमन्यमनुक्त्वोक्तभूम्नोपिविष्णुत्वसंभवात्॥ अत्रप्राणशब्देनविष्ण्वंगीकारेप्रागुक्तोत्क्रमणादिविरोधइतितत्राह ॥ तामिति ॥ सर्वगतस्यापिविष्णोरूपांतरविवक्षयोत्क्रमणस्यश्रुतिसिद्धत्वात्प्राणपदेनविष्ण्वंगीकारेपिनलिंगविरोधइतिभावः ॥अस्तुवायंप्राणोवायुरेव तथापिनतस्यभूमत्वप्राप्तिः॥एषतुवाअतिवदतीत्यादिनाप्रश्नाद्यध्याहारेणप्राणाद्विष्णोर्भूयस्त्वमुक्त्वाभूम्नआम्नानात्॥ नचैतदर्थद्वयंविरुद्धम् ॥ अंतर्यामिविवक्षयाप्राणपदेनविष्णोरुक्तेः॥आत्मनआकाशःसंभूतइत्यादिवत्॥८॥

वा॥ यदूर्ध्वंगार्गिदिवोयदर्वाक्पृथिव्यायदंतराद्यावापृथिवीइमेयद्भूतंचभवच्चभविष्यच्चेत्याचक्षते ॥ आका
शएवतदोतंचप्रोतंचेत्याकाशाख्यप्रकृतेःसर्वाधारत्वमुक्त्वैतस्मिन्खल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेत्यक्ष
रस्यतदाधारत्वश्रवणादित्यर्थः ॥ सर्वाधारत्वंकुतोविष्णुत्वनिश्चायकमित्यतआह ॥ यइति ॥ एकोदेवो

अतोब्रूते ॥ एतस्मिन्खल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चेत्यंबरांतस्यसर्वस्यधृतेर्ब्रह्मैवाक्षर
म् ॥ यउत्रिधातुपृथिवीमुतद्यामेकोदाधारभुवनानिविश्वा ॥ भर्तासन्भ्रियमाणोबिभर्ति

## ॥ ॐ अक्षरमंबरांतधृतेः ॐ ॥ १० ॥

एकोदेवोबहुधानिविष्टः॥ यदाभारंतंद्रयतेसभर्तुंपरास्यभारंपुनरस्तमेति ॥ यस्मिन्निदंसंच
विचैधिसर्वंयस्मिन्देवाअधिविश्वेनिषेदुरित्यादिश्रुतेः ॥ पृथिव्यादिप्रकृत्यंतंभूतंभव्यंभव
च्चयत् ॥ विष्णुरेकोबिभर्तीदंनान्यस्तस्मात्क्षमोधृताविति चस्कांदे ॥ १० ॥

भर्तृत्वेनबहुधानिविष्टोजगताभ्रियमाणस्तद्बिभर्ति ॥ सचयदातंभारंभर्तुंनेच्छतितदासौनश्यतीत्यर्थः ॥
एतच्चतद्द्वैत्वंप्राणइत्युक्तप्राणस्योच्यते ॥ यस्मिन्निदंसम्यग्विविधंचैधितदेवब्रह्मेत्यर्थः ॥ विष्णुवदन्यस्या
पिसर्वाधारत्वंकिंनस्यादित्यतआह ॥ पृथिव्यादीति ॥ १० ॥

युक्त्यंतरेणविष्णोरेवाक्षरत्वंप्रतिपादयत्सूत्रमुपन्यस्यव्याचष्टे ॥ साचेति ॥ यदासर्वाधारत्वमेवाक्षरस्यवि ष्णुत्वंनिश्चाययतितदासुतरामाज्ञामात्रेणसर्वाधारत्वंविष्णुत्वनिश्चायकमित्याशयः ॥ कुतोऽनेनविष्णुत्वनि श्चयइत्यतआह॥तच्चेति॥ सर्वधृतिकारणंप्रशासनंविष्णोरेवेत्येतत्कुतइतितत्राह ॥ समेति ॥ महदहंकारपं

साचधृतिःप्रशासनादुच्यते ॥ एतस्यवाऽक्षरस्यप्रशासनेगार्गिसूर्याचंद्रमसौविधृतौतिष्ठतइ त्यादिना ॥ तच्चप्रशासनंविष्णोरेव॥ समार्धगर्भाभुवनस्यरेतोविष्णोस्तिष्ठंतिप्रदिशाविधर्म

## ॥ ॐ साचप्रशासनात् ॐ ॥ ११ ॥

णि चतुर्भिःसाकंनवतिंचनामभिश्चक्रंनवृत्तंव्यतीँरवीविपदित्यादिश्रुतेः ॥ एकःशास्ता नद्वितीयोस्तिशास्तायोऽन्तच्छयस्तमहमिहब्रवीमि ॥ नकेवलंमेभवतश्चराजन्सवैबलंबलि नांचापरेषामित्यादेश्च ॥ ११ ॥

चमहाभूताख्यसप्तदेवताब्रह्मांडाख्यातिसमृद्धगर्भास्तदावरणभूताभुवनस्यरेतिप्रदाःसारभूतावाभुवनरतिप्र दस्यविष्णोराज्ञयाविविधविश्वधारणेतिष्ठंतीत्यर्थः ॥ सर्वधृतिहेतुप्रशासनंविष्णोरिवान्यस्यापिकिंनस्या दित्यतआह ॥ एकइति ॥ बलंबलप्रदोधृतिहेतुः ॥ ११ ॥

हेत्वंतरेण विष्णोरेवाक्षरत्वं प्रतिपादयत्सूत्रं पठित्वा व्याचष्टे ॥ अन्येति ॥ एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिव

दंत्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसंगमरसमगंधमचक्षुष्कमश्रो

त्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनंतरमबाह्यं न तदश्नाति किंचन नेति सकलवस्तुस्वभावानां स्थूल

त्वादीनामक्षरे व्यावृत्तिकथनाद्ब्रह्मैवाक्षरमित्यर्थः ॥ लौकिकस्थौल्यादिराहित्यं कथं विष्णुत्वनिश्चायक

मित्यत आह ॥ अस्थूलइति ॥ लौकिकस्थौल्यादिराहित्येप्यलौकिकपरिमाणादिसद्भावान्न विष्णोरस्वभा

अस्थूलमनण्वित्यादिनास्थूलाण्वादीनामन्यवस्तुस्वभावानां व्यावृत्तेश्च ॥ अस्थूलोऽनणुरमध्यमोम

## ॥ ॐ अन्यभावव्यावृत्तेश्च ॐ ॥ १२ ॥

ध्यमोऽव्यापकोव्यापकोयोसौ हरिरादिरनादिरविश्वो विश्वः सगुणो निर्गुण इत्याद्यैर्विष्णोरेवैते धर्माः ॥ अ

स्थूलोऽनणुरूपोसावविश्वो विश्व एव च ॥ विरुद्धधर्मरूपोऽसावैश्वर्यात्पुरुषोत्तम इति च ब्राह्मे ॥ १२ ॥ अ० ३

वत्वमिति भावेनोपलक्षणतया मध्यम इत्याद्युक्तम् ॥ तमोवाय्वादीनां सर्वात्मना निवृत्तिरदुःखमसुखमित्या

दिवत् ॥ लौकिकपरिमाणादिराहित्यं कथं विष्णोर्युक्तम् ॥ सर्वपदार्थानां प्राकृतपरिमाणस्यैव दर्शनादित्य

त आह ॥ अस्थूलेति ॥ मध्यमाक्षरस्याऽप्राकृतविग्रहत्वेपि भगवदपेक्षयैव ॥ अनेनैव न तदश्नाति किंचनेत्ये

तदपि जीवस्वभावभूतोपजीवनार्थाशनव्यावृत्त्यर्थमिति सूचितं भवति ॥ अस्थूलत्वादिसमभिव्याहारात् ॥

अक्षरश्रुत्यादीनां तु विष्णावेव मुख्यता तस्मादक्षरं विष्णुरेवेति तस्यैवादृश्यत्वादीति स्थितम् ॥ १२ ॥ अ० ३ ॥

अत्रसदेवसोम्येत्यादिसृष्टिप्रतिपादकस्थानगतसन्नाम्नोब्रह्मप्रधानयोःकारणत्वसाम्येनसाधारणस्यभगव
तिसमन्वयप्रतिपादनादस्तिशास्त्रादिसंगतिः॥ श्रुत्यादिसंगतिंविषयवाक्यमुदाहृत्यविषयादिकंचसूचयति ॥
सदिति ॥ जन्माद्यस्ययतइतिजगत्स्रष्टृत्वंविष्णोरुक्तंतच्छंदोगश्रुतौसतःप्रतीयतेतत्तेजोऽसृजतेत्यादिना ॥ त
स्यचविष्णोरन्यत्वेऽन्यस्यैवस्रष्टृत्वप्रसंगादवश्यनिर्णेयत्वम् ॥ तत्सदत्रविषयः ॥ किंब्रह्मउतप्रधानमितिसंदे

सदेवसोम्येदमग्रआसीदित्यादिनासतःस्रष्टृत्वमुच्यते ॥ तच्चसत्बहुस्यांप्रजायेयेतिपरिणामप्र
तीतेर्नविष्णुः॥ सद्यविकारःसदाशुद्धोनित्यआत्मासदाहरिरित्यादिनाऽविकारःप्रसिद्धइति ॥

हः ॥ कारणत्वसाम्यंसंदेहबीजमितिभावः ॥ सयुक्तिकंपूर्वपक्षयति ॥ एतत्सप्रधानमेवभवेन्नतुविष्णुः ॥
बहुस्यांप्रजायेयेतिसतोबहुभावाख्यविकारित्वश्रवणादित्यर्थः॥ विकारित्वप्रतीतावपिकुतोऽयंनविष्णुरित्य
तआह ॥ सहीति ॥ विष्णोःप्रमाणैरविकारित्वप्रसिद्धेस्तस्मिंस्तदसंभवात्प्रधानेचतत्संभवात्तदेवसदितितस्यै
वजगत्कारणत्वमितिभावः॥ नन्वेतत्स्थानेप्रधानस्यप्रतिपाद्यत्वेपितस्योपादानकारणभूताभ्युपगमेनानिष्टा
भावाद्व्यर्थमेवेदमधिकरणंप्रतीयतइति ॥ नैवम् ॥ भवेदेतद्यद्येतत्प्रकरणेविकारिकारणमेवोच्येत ॥ नैतद
स्ति ॥ एकमेवाद्वितीयंतत्तेजोऽसृजतसन्मूलाःसोम्येमाःसर्वाःप्रजाःसदायतनाःसत्प्रतिष्ठाःसंतासोम्यतदासं
पन्नोभवतीत्यादिब्रह्मलक्षणानांश्रवणात् ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ सदेवेत्यादि

स्थानेसच्छब्देनविष्णुरेवोच्यते ॥ सतस्तदैक्षतेतीक्षत्याख्यव्यापारश्रवणात् ॥ जडप्रधानस्येक्षणासंभवादि त्यर्थः ॥ अपिचविष्णवन्यस्यकस्यापीक्षतिर्मुख्यतोनविद्यते किमुजडस्येत्याशयेनाह ॥ नेति ॥ एतेनसोमो वैराजागंधर्वेष्वासीदित्यादिवदभिमानविवक्षयेक्षत्युक्तिरितिपरास्तम् ॥ ननुनिरवकाशविकारित्वलिंगेनेक्ष

अतोब्रवीति ॥ तदैक्षतेतिईक्षतिकर्मव्यपदेशात्सएवविष्णुरत्रोच्यते ॥ नान्योतोस्तिद्रष्टानान्यदतो

॥ ॐ ईक्षतिकर्मव्यपदेशात्सः ॐ ॥ १३ ॥

स्तिद्रष्टइत्यादिनातस्यैवहितल्लक्षणम ॥ बहुत्वंचाविकारेणैवोक्तम् ॥ अजायमानोबहुधाविजा यतइति ॥ १३ ॥ अ० ४ ॥

तिव्यपदेशोगौणःकिंनस्यात् ॥ सत्त्वात्संजायतेज्ञानमित्यादेःप्रधानस्यज्ञानोपादानत्वादित्यतआह ॥ बहु त्वंचेति ॥ बहुभावस्यविकारित्वंविनैवस्वरूपबहुत्वेनसावकाशत्वान्नतद्बलेनेक्षतेर्गौणत्वंकल्प्यमितिभा वः ॥ अजायमानोऽविकुर्वाणः ॥ अतःपरंब्रह्मैवैतत्स्थानप्रतिपाद्यंसदितितस्यैवैतत्स्रष्टृत्वमितिसिद्धम् ॥ १३ ॥ अ० ४ ॥

अत्रयोवेदनिहितंगुहायाम् तस्यांतेसुषिरंसूक्ष्मंतद्दिह्नेषआत्मेत्यादिश्रुतिभिर्ब्रह्मकाशजीवेषुसाधारणस्यहृ
त्पद्मस्थत्वलिंगस्यभगवतिसमन्वयप्रतिपादनादस्तिशास्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिविषयवाक्यमुदाहृ
त्यविषयादिकंचसूचयन्सयुक्तिकंपूर्वपक्षंसूचयति॥ चंद्रेति॥एतस्यवाक्षरस्येत्यादिनाविष्णोश्चंद्रादित्याद्या
धारत्वमुक्तंतच्छंदोगश्रुतौहृत्पद्मस्थस्योच्यते ॥ एतस्मिन्ब्रह्मपुरेदहरंपुंडरीकंवेश्मदहरोस्मिन्नंतरआकाश
स्तस्मिन्यदंतस्तदन्वेष्टव्यंतद्वावविजिज्ञासितव्यमितितंचेद्ब्रूयुः ॥ किंतदत्रविद्यतेयदन्वेष्टव्यंयद्वावविजि

चंद्रादित्याद्याधारत्वंविष्णोरुक्तम् ॥ तच्चअथयदिदमस्मिन्ब्रह्मपुरेदहरंपुंडरीकंवेश्मदहरो
स्मिन्नंतरआकाशःकिंतदत्रविद्यतेउभेअस्मिन्द्यावापृथिवीअंतरेवसमाहितेउभावग्निश्च
वायुश्चसूर्याचंद्रमसाउभौविद्युन्नक्षत्राणीत्यादिनाऽऽकाशस्यप्रतीयते ॥

ज्ञासितव्यमितिसब्रूयाद्यावान्वाअयमाकाशस्तावानेषोंतर्हृदयआकाशउभेअस्मिन्द्यावापृथिवीइत्यादि
ना ॥ तस्यचविष्णोरन्यत्वेऽक्षरस्यविष्णुत्वसाधकसर्वाधारत्वंचान्यस्यप्रसज्जतइत्यवश्यंनिर्णेयता ॥ तद्धृद
यपद्मस्थत्वंविषयः ॥ किंविष्णोरथाकाशस्योतजीवस्येतिसंशयः ॥ उक्तसाधारण्यंसंदेहबीजम् ॥ स
र्वाधारतयाहृत्पद्मस्थत्वमाकाशस्येतितावत्पूर्वःपक्षः ॥ दहरोस्मिन्नंतरआकाशइतिहृत्पद्मेदहराकाशस्थि
तिश्रवणात् ॥ तस्यैवोभेअस्मिन्निति सर्वाधारत्वोक्तेरित्यर्थः ॥ नन्वस्त्वाकाशस्यसर्वाधारतयाहृदयपद्मस्थ

सचेति ॥ ना
त्वम् ॥ तस्यचाकाशस्तल्लिङ्गादितिन्यायेनविष्णुत्वेतस्यैवहृत्पद्मस्थत्वसिद्धिरित्यतआह ॥ सचेति ॥ ना
त्रोक्ताऽऽकाशोविष्णुः॥ तस्यांतेसुषिरमितिप्रसिद्धाकाशस्यैवसर्वाधारतयाहृत्पद्मस्थत्वोक्तेस्तत्समाख्याना
दित्यर्थः ॥ नचवाच्यमस्त्वाकाशशब्देनसुषिरमेव ॥ तस्मिन्यदंतरितिहृत्पद्मस्थाकाशगतोविष्णुःसर्वाधार
तयोच्यतेइति ॥ तथासतिवाक्यान्वयानुपपत्तेः ॥तथाहि॥तस्मिन्नित्यत्रविष्णुत्वाभिप्रायेकितदत्रविद्यतइ
तिप्रश्नस्यब्रह्मविद्यतइतिपरिहारंविनायावान्वाइत्यादेरभिप्रायासंगतिः ॥ आकाशपक्षेत्वस्यन्वयः ॥ ह
दयाकाशस्थमुपास्यमित्युक्तेकिंतत्रस्थितमितिप्रश्नेयावान्वाऽयमाकाशइतिप्रागुक्ताकाशमेवविशिष्योभे
सचाकाशोनविष्णुः ॥ तस्यांतेसुषिरंसूक्ष्मंतस्मिन्सर्वंप्रतिष्ठितमितिश्रुतेरिति ॥ अतआह ॥

## ॥ ॐ दहरउत्तरेभ्यः ॐ ॥ १४॥

अस्मिन्नित्यादिपरिहारसंश्लेषात् ॥ नचयावानित्यादिनाऽऽकाशाख्योविष्णुःसर्वाधारतयापरिहारेकथ्यत
इत्यन्वयोपपत्तिः ॥ तस्मिन्सर्वंप्रतिष्ठितमितिसाक्षात्सुषिरस्यैवसर्वाधारत्वोक्तिविरोधात् ॥ तस्मादाका
शस्यैवसर्वाधारतयाहृत्पद्मस्थत्वम् ॥ जीवस्यैववातद्भवेत् ॥ उत्तरत्रपरंज्योतिरुपसंपद्यस्वेनरूपेणाभिनि
ष्पद्यतएषआत्मेतिहोवाचेतिजीवस्ययआत्मापहतपाप्मेत्युक्तहृत्पद्मस्थात्मतयापरामर्शात् दहरस्थत्वलि ॥ ७८ ॥
गाच्च ॥ तद्ब्रह्मणोर्जीवस्यैवयुक्तंनसर्वगतस्यहरेः ॥ नचान्वयाभावदोषः॥विष्णुपक्षेपिसाम्यात् ॥ अतोभगव
दितरदेवचंद्रादित्याद्याधाराक्षरमिति ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ दहरपद्मस्थोविष्णु

रेव भवेत् ॥ यआत्मापहतपाप्मेत्यादिनोत्तरवाक्येदहरस्थस्यापहतपाप्मत्वादिगुणश्रवणादितिभावः ॥ अपहतपाप्मत्वादिकंकथंविष्णुत्वनिश्चायकमित्यतआह ॥ यइति ॥ अत्येतिअतिक्रम्यवर्तते ॥ नचाऽऽकाशस्यापिपापाद्यभावेनैतेगुणायुक्ताइतिवाच्यम् ॥ तस्याचेतनस्यतत्प्राप्त्यभावेननिषेधायोगात् ॥ विष्णो

यआत्मापहतपाप्माविजरोऽविमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोन्वेष्टव्यः सविजिज्ञासितव्यइत्यादिभ्यउत्तरेभ्योगुणेभ्योदहरेविष्णुरेवयोऽशनायापिपासेशोकंमोहंजरांमृत्युमत्येति सएषसर्वेभ्यः पाप्मभ्यउदितइत्यादिनाविष्णोरेवहितेगुणाः ॥ नित्यतीर्णाशनायादिरेकएवहरिःस्वतः ॥ अशनायादिकानन्येतत्प्रसादात्तरंतिहीतिचपाद्मे ॥ सापेक्षनिरपेक्षयोश्चनिरपेक्षंस्वीकर्तव्यम् ॥ सत्यकामः परोनास्तितमृतेविष्णुमव्ययम् ॥ सत्यकामत्वमन्येषांभवेत्तत्काम्यकामितेतिस्कांदे ॥ १४ ॥

श्चेतनत्वादस्तिप्राप्तिः ॥ सत्यकामत्वाद्ययोगाच्च ॥ तथापिनैतेगुणाविष्णोरेवरमादिष्वपिसंभवादित्यतआह ॥ नित्येति ॥ ननुयथाकथंचिदपितेऽन्यत्रगुणाः संत्येवातःकथंतैर्विष्णुत्वनिश्चयइत्यतआह ॥ सापेक्षेति ॥ अपहतपाप्मत्वादीनांकथंचिदन्यत्रवृत्तावपिनकथंचिदन्यत्रसत्यकामत्वादीत्याशयेनाह ॥ सत्यकामइति ॥ अनेनाकाशाभिमानिविषयतयाऽपहतपाप्मत्वाद्युपपत्तिरितिपरास्तम् ॥ १४ ॥

युक्त्यंतरेणहृत्पद्मस्थत्वंविष्णोःप्रतिपादयत्सूत्रमुपन्यस्यव्याचष्टे॥ गतीति ॥ अत्रहृत्पद्मस्थस्याहरहर्गच्छं
त्यएतमितिसुप्तप्रजाप्राप्यत्वव्यपदेशात् ॥ हृत्पद्मस्यब्रह्मलोकत्वोक्त्यातदंतर्गतेब्रह्मशब्दश्रवणाच्चविष्णुरे
वायमित्यर्थः ॥ ब्रह्मैवसर्वाश्रयत्वादिनालोकपदोक्तेर्वा ॥ सुप्तप्राप्यत्वंकुतोविष्णुत्वनिश्चायकमित्यतआ
ह ॥ सतेति ॥ संपन्नःसंगतः ॥ ब्रह्मशब्दस्तुविष्णवेकपरइतिप्रागेवोक्तम् ॥ किंचहृत्पद्मस्थस्यारण्याख्य

अहरहर्गच्छंत्यएतंब्रह्मलोकंनविंदंतीतिसुप्तस्यतद्गतिर्ब्रह्मशब्दश्चोच्यते ॥

## ॥ ॐ गतिशब्दाभ्यांतथाहिदृष्टंलिंगंच ॐ ॥ १५ ॥

सतासोम्यतदासंपन्नोभवतीतिश्रुतेस्तंहिसुप्तोगच्छति ॥ अरश्चहवैण्य
श्चार्णवौब्रह्मलोकेइतिलिंगंचतथादृष्टम् ॥

सुधासमुद्राश्रयलोकवत्त्वलिंगश्रवणाच्चतदंतर्गतोविष्णुरितिसूत्रशेषंव्याचष्टे ॥ अरश्चेति ॥ हृत्पद्मस्थस्या
रण्याश्रयलोकवत्त्वलिंगश्रवणेपिकुतोयंविष्णुरितिचेत् ॥ तस्यचविष्णुलोकैकलिंगत्वादितिहिशब्दाभि
प्रायमाह ॥अरश्चेति॥ अनेनारण्याश्रयत्वंसत्यलोकलिंगमित्यप्यपास्तम्॥क्षीराब्धिमध्यइतितत्प्रसंगात् ॥
अरण्याश्रयलोकवत्त्वंहृत्पद्मस्थस्यनोच्यतइतिशंकापनोदायतथेत्युक्तम्॥यथाऽहरहर्गच्छंत्यएतंब्रह्मलो

कंनविदंतीत्येतत्हृत्पद्मस्थविषयंतथैतदपिलिंगंतन्निष्ठम् ॥ ब्रह्मलोकशब्दश्रवणादेवेतिभावः ॥ अथत्राब्र ह्मलोकमितिहृत्पद्मस्यविष्णुलोकत्वोक्तेस्तदंतर्गतोविष्णुरित्युक्तम ॥ ब्रह्मलोकपदंकुतोविष्णुलोकवाची त्यतआह ॥ अरश्चेति ॥ ब्रह्मलोकपदस्यविष्णुलोकेअरश्चेतिवाक्येप्रयोगादत्रापितत्परत्वमेव ॥ तत्रापि तत्कुतः ॥ अरण्याश्रयत्वलिंगादित्यर्थः ॥ तस्यभगवल्लोकलिंगत्वंकुतइत्यतआह ॥ अरश्चेति ॥ १५ ॥ हेत्वंतरेणविष्णोर्हृत्पद्मस्थत्वंप्रतिपादयत्सूत्रमुपन्यस्यव्याचष्टे ॥ धृतेश्चेति ॥ अथयआत्माससेतुर्विधृति

अरश्चैण्यश्चसुधासमुद्रौतत्रैवसर्वाभिमतप्रदौह्लावित्यादिनातस्यैवहि

तल्लक्षणत्वेनोच्यते ॥ १५ ॥

रेषांलोकानामसंभेदायेतिहृत्पद्मस्थस्यसर्वाधारत्वश्रवणाच्चविष्णुरेवासावित्यर्थः ॥ अत्रससेतुरितिवक्त व्येएषसेतुरित्युक्तिःशाखांतराणामप्यत्रोपसंग्रहार्था ॥ एवमन्यत्रापीतिसंप्रदायविदः ॥ विधृतिःसेतुरि तिधारणसमर्थाश्रयः ॥ नचत्राच्यमयंनहृत्पद्मस्थइति ॥ यआत्मेतिप्रागुक्तात्मपरामर्शात् सर्वेपाप्मानो तोनिवर्तंतइतितल्लक्षणत्वोक्तेश्च ॥ समाख्ययाप्येतमर्थंसाधयति ॥ एषइति ॥ वाजसनेयकेयएषोंत र्हृदयआकाशस्तस्मिन्शेतेसर्वस्यवशीत्याद्युक्त्वैषसर्वेश्वरएषभूताधिपतिरेषभूतपालएषसेतुर्विधारणएषां

लोकानामसंभेदायेत्यादिनाहृदयेविष्णोरुक्तत्वेनतत्समाख्यानादत्राप्युक्तोविष्णुरेव ॥ नचवाच्यंसमाख्याश्रुत्युक्तोपिकुतोविष्णुरिति ॥ अस्मिन्सर्वेश्वरत्वादिविष्णुमहिम्नःश्रवणादेवेतिभावः ॥ यदुक्तंहृत्पद्मस्थस्यसर्वाधारत्वश्रवणाद्विष्णुरसाविति तत्रसर्वाधारत्वंकुतोविष्णुत्वनिश्चायकमित्यतआह ॥ एतस्मि

एषसेतुर्विधृतिरितिधृतेः ॥ एषभूताधिपतिरेषभूतपालइत्याद्यस्यमहि
म्नोऽस्मिन्नुपलब्धेः ॥ एतस्मिन्खल्वक्षरेगार्ग्याकाशओतश्चप्रोतश्चएत

## ॥ ॐ धृतेश्चमहिम्नोस्यास्मिन्नुपलब्धेः ॐ ॥ १६ ॥

स्यवाऽक्षरस्यप्रशासनेगार्गि ॥ सहिसर्वाधिपतिःसहिसर्वपालःसईशःस
विष्णुःपतिंविश्वस्यात्मेश्वरमित्यादिश्रुतिभ्यस्तस्यह्येषमहिमा ॥ सर्वेशो
विष्णुरेवैकोनान्योस्तिजगतःपतिरितिचस्कांदे ॥ १६ ॥

न्निति ॥ एतस्येतिप्रतीकग्रहणेनबहुवाक्यानिसूचयति ॥ ननुसमाख्याश्रुत्युक्तःसर्वेश्वरत्वादिमहिमाकुतो विष्णोरित्यतआह ॥ सहीति ॥ विश्वमचेतनम् ॥ विष्णोरिवान्यस्याप्ययंमहिमाकिंनस्यादित्यतआह ॥ सर्वेशइति ॥ १६ ॥

युक्त्यंतरेणविष्णोर्हृत्पद्मस्थत्वसाधकंसूत्रंपठित्वाव्याचष्टे ॥ प्रसिद्धेश्चेति ॥ दहरंविपापंपरंवेश्मभूतंयत्पुं
डरीकंपुरमध्यसंस्थम ॥ तत्रापिदहरमितिविष्णोर्हृत्पद्मस्थत्वप्रसिद्धेश्चसएवहृत्पद्मस्थइत्यर्थः ॥ दहरो
स्मिन्नंतराकाशइतिहृत्पद्मस्थाकाशोविष्णुरित्यभ्युपगमेसुषिरश्रुतिविरोधइत्येतदनेनैवनिरस्तंभवति ॥ पुं
डरीकेदहरंगगनंतस्मिन्विशोकंब्रह्मेत्यभ्युपगमात्॥दिव्येब्रह्मपुरेह्येषव्योम्न्यात्मासंप्रतिष्ठितः ॥ यएषोंतर्हृद

तत्रापिदहरंगगनंविशोकस्तस्मिन्यदंतस्तदुपासितव्यमितिप्रसिद्धेश्च ॥

## ॥ ॐ प्रसिद्धेश्च ॥ ॐ ॥ १७ ॥

यआकाशस्तस्मिन्नयंपुरुषइत्यादेश्च ॥ अन्वयाभावस्तर्हिंभवेदितिनवाच्यम् ॥ तथाहि॥तस्मिन्यदंतरित्य
त्रहृत्पद्मस्थाकाशगतंब्रह्मान्वेष्टव्यमित्युच्यते ॥ ब्रह्मपुरपदेनैवब्रह्मस्थितिसिद्धेः ॥ तथाचकीदृशंतदिति
भावेनकिंतदत्रविद्यतइतिप्रश्नेतत्स्वरूपनिरूपणपरतयायावान्वाऽयमाकाशइत्यादिवाक्यान्वयः ॥ यद्ब्र
ह्मान्वेष्टव्यतयोक्तंतस्यांतर्हृदयेयावानेषआकाशस्तावान्सर्वोपिविद्यते ॥ तदाधारतयापृथिव्यादिकंच
समाहितम् ॥ नष्टेपिदेहेननश्यति ॥ अपहतपाप्मत्वादिगुणंचेति ॥ अथवाहृत्पद्मगताकाशस्थमन्वेष्टव्य

मितिसामान्येनोक्तेःकिंतदत्रविद्यतइतिप्रश्नेयावान्बहिःपरमात्माकाशाख्यस्तिष्ठतितावानृहृदयपद्माकाशे विद्यते ॥ सचपृथिव्याद्याश्रयत्वाच्छरीरनाशेनाप्यनाश्यत्वादपहतपाप्मत्वादेश्वान्वेष्टव्यइत्यन्वयोपपत्तेः ॥ नचब्रह्मपुरपदप्रयोगादात्मानविष्णुः ॥ ब्रह्मैवपूर्णत्वात्पुरमित्युपपत्तेः ॥ तच्छब्देनशरीरस्यप्रकृतत्वान्नेतिचेन्न ॥ शरीरनाशेनास्याविनाशोक्तेः ॥ नचाकाशपक्षेऽन्वयोस्ति ॥ दहराकाशस्थमुपास्यमित्युक्ते किंतदत्रविद्यतइतिप्रश्नेयावान्वेत्यस्याऽन्वयादर्शनात् ॥ नहिदहराकाशस्थोव्याप्ताकाशोऽन्वेष्टव्यइत्यु



तदंतस्थत्वापेक्षत्वान्नसुषिरश्रुतिविरोधः ॥ १७ ॥

पपद्यते ॥ तदभावादयोगाच्च ॥ नापिदहराकाशमेवविशिष्योभेअस्मिन्नित्यादिपरिहारइतियुक्तम् ॥ दहरस्यव्याप्तत्वायोगान्मुख्यतःपृथिव्यादीनामनुपास्यत्वाच्च ॥ नन्वेवंहृत्पद्मगताकाशस्थोविष्णुरित्यभ्युपेत्यतस्यसर्वाधारत्वांगीकारेपिसुषिरश्रुतिविरोधःस्यात् ॥ तत्रसाक्षात्सुषिरस्यसर्वाधारत्वोक्तेरित्यतआह ॥ तदिति॥नचैवमंगीकारेपिसुषिरश्रुतिविरोधः ॥ मंदिरेमणिमालेत्यत्रमंदिरपदेनतदंतस्थमंजूषाविवक्षावत्सुषिरश्रुतेरपितदंतस्थभगवदपेक्षयाप्रवृत्तत्वादित्यर्थः ॥ १७ ॥

भगवतोदहरपद्मस्थत्वमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंतावद्व्याचष्टे ॥ इतरेति ॥ परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतइत्युक्तस्यजीवस्यैषआत्मेतिहोवाचेतितद्दहरपद्मस्थात्मतयापरामर्शाज्जीवएवदहरपद्मस्थइत्यर्थः ॥ परिहारांशंव्याचष्टे ॥ नेति ॥ नजीवोदहरपद्मस्थः ॥ दहरपद्मस्थेऽपहतपाप्मत्वादिगुणश्रवणात् ॥ तेषांजीवेऽसंभवात् ॥ नचवाच्यंमुक्तजीवेतत्संभवाज्जीवएवभाविभावेनोच्यतइति ॥

परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतएषआत्मेतिहोवाचेतिजीवपरामर्शात्सइतिचे

॥ ॐ इतरपरामर्शात्सइतिचेन्नासंभवात् ॐ ॥ १८ ॥

॥ ॐ उत्तराच्चेदाविर्भूतस्वरूपस्तु ॐ ॥ १९ ॥

त् ॥ न ॥ तस्यस्वतोऽपहतपाप्मत्वाद्यसंभवात् ॥ १८ ॥ सतत्रपर्यैतिजक्षन्क्रीडन्रममा

णइत्याद्युत्तरवचनाज्जीवएवेतिचेत् ॥

मुक्तस्याप्यस्वातंत्र्येणतदसंभवात् ॥ अतःस्वातंत्र्येणापहतपाप्मत्वादिगुणोहरिरेवदहरपद्मगतइतिभावः ॥ १८ ॥ जीवस्यापहतपाप्मत्वाद्यसंभवमाक्षिप्यसमादधत्सूत्रंपठित्वाऽऽक्षेपांशंतावद्व्याचष्टे ॥ उत्तरादिति ॥ एषसंप्रसादोस्माच्छरीरात्समुत्थायेत्युक्तजीवस्यसतत्रपर्यैतीत्यादिनासत्यकामत्वप्रतीतेस्ततएवविशोकत्वादिसिद्धेरुक्तगुणासंभवाभावात्सएवदहरपद्मस्थइत्यर्थः ॥ नञध्याहारेणपरिहारांशंव्याचष्टे ॥

नेति ॥ नैतद्वाक्यबलेनजीवस्यगुणानुसंभाव्यत्हृत्पद्मस्थत्वंवाच्यम् ॥ तद्वाक्येमुक्तजीवस्योच्यमानत्वा
त् ॥ स्वेनरूपेणाभिनिष्पद्यतइत्युक्तेः ॥ हृत्पद्मस्थस्यचदेहांतर्वर्तितयामुक्तत्वायोगात् ॥ नचवक्तव्यंमु
क्तविषयत्वेप्येतद्वाक्यस्यमुक्तस्यापिजीवत्वेनास्त्वेवजीवेऽपहतपाप्मत्वादिसंभवोऽनोजीवएवाऽपहतपा
प्मत्वादिगुणोहृत्पद्मगततयाभाविभावेनोच्यतइति ॥ मुक्तस्यापिपरमेश्वरप्रसादादेवतद्गुणाविर्भावेनस्वतो
ऽपहतपाप्मत्वाद्यसंभवादितिभावः ॥ नन्वत्रमुक्तस्यतद्गुणत्वमेवोच्यतेनतुपरमेश्वराधीनत्वमतस्तत्स्वतएवे

न ॥ तत्रहिपरमेश्वरप्रसादादाविर्भूतस्वरूपोमुक्तउच्यते ॥ यत्प्रसादात्समु
क्तोभवतिसभगवान्पूर्वोक्तः ॥ १९ ॥

त्यतआह ॥ यदिति ॥ नात्रमुक्तगुणप्राप्तेःपरमेश्वराधीनत्वोक्त्यभावः ॥ परमेश्वरस्यगुणप्रदातृतयांपरं
ज्योतिरुपसंपद्येतिपूर्ववाक्योक्तत्वादितिभावः ॥ ननुपरमेश्वरप्रसादादपिजीवस्यास्त्येवतद्गुणजातमतःस
एवापहतपाप्मत्वादिगुणोहृत्पद्मस्थोऽस्त्वित्यतोवाऽऽह ॥ यदिति ॥ नपरमेश्वरप्रसादलब्धगुणोजीवःपूर्ववा
क्येऽपहतपाप्मत्वादिनोक्तःकिंतुयत्प्रसादात्समुक्तोभूत्वाऽपहतपाप्मत्वादिगुणोभवतिसभगवानेव ॥ दातृ
प्रतिग्रहीत्रोर्दातुरेवमुख्यत्वान्मुख्यस्यैवग्राह्यत्वादितिभावः ॥ १९ ॥

अमुख्यापहतपाप्मत्वादिगुणोजीवःपरामर्शबलेनहृत्पद्मस्थात्माकिंनस्यादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ अन्येति ॥ भवेदेतद्यद्येषइतिजीवंपरामृश्यतस्यहृत्पद्मस्थत्वंविधीयेत ॥ नैतदस्ति ॥ यंपरं

यंप्राप्यस्वेनरूपेणजीवोऽभिनिष्पद्यतेसएषआत्मेतिपरमात्मार्थश्चपरामर्शः ॥ २० ॥

## ॥ ॐ अन्यार्थश्चपरामर्शः ॐ ॥ २० ॥

ज्योतिराख्यंभगवंतमभिसंपद्यजीवःस्वेनरूपेणाऽभिनिष्पद्यतेसएषआत्मेतिपरमात्मानमेवैषइतिपरामृश्यतस्यात्मत्वोक्तेः ॥ अतोजीवेऽपहतपाप्मत्वाद्यसंभवात्परामर्शस्यचेश्वरार्थत्वात्सएवापहतपाप्मत्वादिगुणोहृत्पद्मस्थइतिभावः ॥ नचमंतव्यमुभयथापिसंभवेकुतःपरमात्मार्थतापरामर्शस्येति ॥ निरवकाशोक्तानेकहेतुबलादेव ॥ २० ॥

उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंतावद्व्याचष्टे ॥ अल्पेति ॥ यदुक्तं जीवेऽसंभावितगुणश्रवणा द्विष्णुरेवहृदयपद्मस्थोनजीवइति ॥ तदयुक्तम् ॥ दहरोऽस्मिन्नंतरआकाशस्तस्मिन्यदंतरितिपरमात्मन्य संभाव्यमानजीवलिंगस्याल्पस्थानस्थितत्वस्यश्रुतत्वादित्यर्थः ॥ नञध्याहारेणपरिहारांशंव्याचष्टे ॥ नेति ॥नाल्पस्थानस्थितिश्रुतिर्विष्णावनुपपन्ना॥निचाय्यत्वादेवंव्योमवच्चेत्यत्रसर्वगतस्यापिविष्णोर्व्योमवद ल्पस्थानस्थितेरुक्तत्वादित्यर्थः ॥ नव्योमवदीश्वरस्याल्पस्थानस्थितिर्युक्ता ॥ सर्वगतस्यापिव्योम्नोंऽशतोऽ

दहरइत्यल्पश्रुतेर्नेतिचेत् ॥ न ॥ निचाय्यत्वादेवंव्योमवच्चेत्युक्तत्वात् ॥ एषमआत्मां

## ॥ ॐ अल्पश्रुतेरितिचेत्तदुक्तम् ॐ ॥ २१ ॥

ऽतर्हृदयेज्यायानितिश्रुत्युक्तत्वाच्च ॥ २१ ॥ अ० ५ ॥

ल्पस्थानस्थित्युपपत्तेः ॥ नचतथाविष्णोरुपपत्तिः ॥ तस्यांशतोपिसर्वगतत्वाद्यावान्वाइत्युक्तेश्चेत्यतः सूत्रशेषंप्रकारांतरेणव्याचष्टे ॥ एषइति ॥ सर्वगततयैवविष्णोरल्पस्थानस्थितिरुपपन्ना ॥ एषमआत्मेति श्रुतौसर्वज्यायस्त्वेनैवहृदयस्थत्वोक्तेरित्यर्थः ॥ नचैतद्युक्तिविरुद्धम् ॥ यस्मिन्विरुद्धगतयोप्यनिशंपतंती त्यादेः ॥ अतोविष्णुरेवहृत्पद्मस्थःसर्वाधारश्चेतिसिद्धम् ॥ २० ॥ अ० ५ ॥

अत्रानुकूल्येनगृह्यमाणत्वाल्लिंगस्यभगवतिज्ञानिसुखेचसुखशब्दवृत्त्यासाधारणस्यविष्णौसमन्वयप्रतिपादनाद्दृस्तिशास्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिविषयादिकंचसूचयन्सयुक्तिकंपूर्वपक्षंचदर्शयति ॥ अदृश्यत्वादयइति ॥ पूर्वमदृश्यत्वादिगुणाःपरमेश्वरस्योक्ताः तेषांमध्येऽदृश्यत्वाज्ञेयत्वेकस्यचिदानुकूल्येनगृह्यमाणस्यकाठकेकथ्येते ॥ तदेतदितिमन्यंतेऽनिर्देश्यंपरमंसुखम् ॥ कथंनुतद्विजानीयांकिमुभातिनभातिचेति ॥

अदृश्यत्वादयःपरमेश्वरगुणाउक्ताः ॥ तेषांसुखंशाश्वतंनेतरेषाम् ॥ तदेतदितिमन्यं

## ॥ ॐ अनुकृतेस्तस्यच ॐ ॥ २२ ॥

तेअनिर्देश्यंपरमंसुखमित्यादिनाज्ञानिसुखस्याप्यनिर्देश्यत्वमज्ञेयत्वंचोच्यतइति ॥

आनुकूल्येनगृह्यमाणत्वंनामकथंनुतद्विजानीयामितिज्ञानार्थंप्रार्थितत्वम् ॥ तस्यचान्यनिष्ठत्वेऽनिर्देश्यत्वंनभवतीत्युक्ताज्ञेयत्वंचान्यस्यैवप्रसज्जतेइत्यवश्यंनिर्णेतव्यत्वम् ॥ तदाऽनुकूल्येनगृह्यमाणत्वमत्रविषयः ॥ विष्णोरन्यस्यवेतिसंदेहः ॥ प्रागुक्तसाधारण्यंसंदेहबीजम् ॥ ज्ञानिसुखस्यैतल्लिंगमितिपूर्वःपक्षः॥परमंसुखमितिसुखोक्तेः ॥ नचसुखश्रुतिर्विष्णावपिसावकाशेतितद्ग्रहः ॥ एकोवशीसर्वभूतांतरात्माएकंरूपंबहुधायःकरोति ॥ तमात्मस्थंयेऽनुपश्यंतिधीरास्तेषांसुखंशाश्वतंनेतरेषामितिज्ञानिसुखस्यप्रकृतत्वात् ॥ तस्यैवत

देतदितिमन्यंतेइतिपरामर्शात् ॥ नचवाच्यंभगवतोपिप्रकृतत्वात्तत्परामर्शोऽयमस्त्विति ॥ तस्यनपुंसकसुखशब्देनाप्रकृतस्यतदित्यादिपरामर्शायोगात्संभवत्समीपस्थपरामर्शंविहायदूरस्थपरामर्शग्रहणेकारणाभावाच्च ॥ अतोज्ञानिसुखस्यैवानुकूल्येनगृह्यमाणत्वात्तस्यैवानिर्देश्यत्वादीत्यर्थः॥सिद्धांतयत्सूत्रमवतार्य व्याचष्टे ॥ अतइति ॥ कथंनुतद्विजानीयामित्यानुकूल्येनगृह्यमाणोविष्णुरेव ॥ नचसुखश्रुतिविरोधः ॥ परमंसुखमितिसुखश्रुतेरपितत्परत्वात्॥तेषांसुखमितिज्ञानिसुखस्यप्रकृतत्वात्तस्यैवतदेतदितिपरामर्शान्नेति

अतोवक्ति ॥ तमेवभांतमनुभातिसर्वमित्यनुक्तेस्तस्यभासा
सर्वमिदंविभातीतिवचनाच्चपरमात्मैवानिर्देश्यसुखरूपः ॥

चेन्न॥चेतनश्चेतनानामित्यादौपरमात्मनोपिप्रकृतत्वात्॥नचपरमात्मनोनपुंसकसुखशब्देनाप्रकृतत्वात्तदेतदितिपरामर्शायोगइतिवाच्यम ॥ यदनिर्देश्यंपरमंसुखंकथंनुतद्विजानीयामित्यानुकूल्येनगृह्णंतितदनिर्देश्यंसुखमेतत्प्रकृतपरमात्मनोरूपमितिमन्यंतइतिवाक्ययोजनोपपत्तेः ॥ नचवक्तव्यंसमीपस्थपरामर्शंविहायकथंचिदेवदूरस्थग्रहणेकारणाभावइति ॥ तमेवभांतमनुभातिसर्वमितिवाक्यशेषेसूर्यादीनामेतदधी

नप्रकाशश्रवणात् ॥ तस्यभासेतिसर्वंजगतस्तत्प्रभाप्रकाश्यत्वप्रतीतेश्च ॥ अतःसमीपोक्तपरित्यागेकार
णसद्भावेनदूरोक्तपरमात्मग्रहणोपपत्तेस्तस्यचसुखरूपत्वातिशयेननपुंसकसुखश्रुत्युपपत्तेर्विष्णुरेवानुकू
ल्येनगृह्यमाणइतितस्यैवानिर्देश्यत्वादीतिभावः ॥ नन्वेतदधीनतयासूर्यादीनांभानोक्तावेतस्यसर्वजगत्प्रका
शकत्वोक्तौचकुतःसमीपोक्तज्ञानिसुखपरामर्शपरित्यागइत्यतआह ॥ नहीति ॥ सर्वंसूर्यादिजगत् भाती

नहिज्ञानिसुखमनुभातिसर्वंनचतद्भासा ॥ अहंतत्तेजोरश्मीदिति
नारायणभासाहिसर्वंभाति ॥ २२ ॥

तिशेषः ॥ अस्त्वेतदुभयंज्ञानिसुखेऽनुपपन्नंतथापिकुतोऽनेनपरमात्मग्रहणमित्यतआह ॥ अहमिति ॥ एत
दुभयस्यज्ञानिसुखेऽसंभवात्परमात्मनिसंभवाद्दूरोक्तस्यापिसमीपोक्तपरित्यागेनग्रहणमितिभावः ॥ तदु
क्तम् ॥ व्यवधानेनान्वयोपियोग्यतापेक्षयाभवेदितिइतिश्रुतेरितिशेषः॥रश्मीदितिसूर्यादितेजसांनारायणा
धीनत्वमुच्यते ॥ तेजइतिसर्वजगत्प्रकाशकत्वंनारायणभासातदधीनभासातदीयभासाचसर्वंसूर्यादिजग
च्चभातिप्रकाशतेप्रकाश्यतेच ॥ २२ ॥

यदेतल्लिंगद्वयस्य विष्णुनिष्ठत्वं श्रुत्युपपादितं तत्स्मृत्याप्युपपादयत्सूत्रं पठित्वा तां स्मृतिमुदाहरति ॥ अपीति ॥ नकेवलमेतच्छ्रूयतेऽपितु स्मर्यतेपीत्यर्थः ॥ मामकं मदधीनं मदीयं च ॥ किंच न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भांति कुतोयमग्निरित्यानुकूल्येन गृह्यमाणस्य सूर्याद्यप्रकाश्यत्वमुच्यते ॥ तच्च विष्णोरेव स्मर्यते ॥ अतो विष्णुरेवात्र प्रतिपाद्यत इति सूत्रस्यार्थांतरमभिप्रेत्य तां स्मृतिमुदाहरति ॥ नतदिति ॥ धाम स्वरूपम् ॥ तेजः स्वरू

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥ यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति ॥

## ॥ ॐ अपिस्मर्यते ॐ ॥ २३ ॥

न तद्भासयते सूर्यो न शशांको न पावकः ॥ यद्गत्वा न निवर्तंते तद्धाम परमं ममेति च ॥२३॥ अ०६॥

पंचगृहं शार्ङ्गधर्मेति गीयत इत्यभिधानात् ॥ युक्तिसमुच्चयेऽपि पदम् ॥ न च मंतव्यं न तत्र सूर्यो भातीत्यादिपुल्लिंगेन प्रकृतपरमात्मैवोच्यते न त्वानुकूल्येन गृह्यमाणमतस्तज्ज्ञानि सुखमिति ग्रहणेऽपि बाधकाभाव इति किमु भाति नश...तवातप्रकृतस्यैव न तत्रेत्यनुसंधानप्रतीतेः ॥ यस्यैवं सुखरूपं तत्रेति वाक्ययोजनोपपत्तेश्च ॥ दूरोक्तग्रहणे बिभ्यतोऽतिदूरोक्तग्रहणे कथं न भीतिः ॥ अनिर्देश्यत्वाद्ययोगाच्च ॥ तस्मादानुकूल्येन गृह्यमाणो हरिरेवेति तस्यैवानिर्देश्यत्वादीति सिद्धम् ॥ २३ ॥ अ० ६ ॥

अत्रप्रेरकत्वसाम्येनभगवतिवायौचसाधारणस्येशाननाम्नोविष्णौसमन्वयप्रतिपादनादस्तिशास्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिविषयसंशयौचसूचयति ॥ विष्णुरेवेति ॥ अथातोब्रह्मजिज्ञासेतिजिज्ञास्यत्वंविष्णोरुक्तं तज्जिज्ञास्यत्वमीशानस्यकाठकेप्रतीयते ॥ अंगुष्ठमात्रःपुरुषोमध्यआत्मनितिष्ठतिईशानोभूतभव्यस्येत्युक्त्वा ऊर्ध्वंप्राणमित्यादौविश्वेदेवाउपासतइतिजिज्ञासोपासनयोरैक्यात् ॥ श्रवणादिरूपविचारोहिजिज्ञासोच्यते ॥ उपासनाचसैव ॥ यदाहुः॥सोपासनाचद्विविधाशास्त्राभ्यासस्वरूपिणी ॥ ध्यानरूपापराचैवतदंगंधारणादिकमिति ॥ सचयदिविष्णोरन्यःस्यात्तदाजिज्ञास्यत्वंचान्यस्यैवप्रसज्जतइत्यवश्यंनिर्णयः॥ सईशानोऽत्रविषयः ॥ किंविष्णुर्वायुर्वेतिसंदेहः ॥ प्रागुक्तसाधारण्यमेवसंदेहबीजमितिभावः ॥ ईशानशब्दस्यरुद्रेप्रसिद्धावपितद्विषयसंशयःसर्वदेवोपास्यत्वलिंगभियागर्भस्रावेणैवनिवृत्तः ॥ यउन्नयतितमित्य

विष्णुरेवजिज्ञास्यइत्युक्तम् ॥ तत्रोर्ध्वंप्राणमुन्नयत्यपानंप्रत्यगस्यति ॥
मध्येवामनमासीनंविश्वेदेवाउपासतइति सर्वदेवोपास्यःकश्चित्प्रतीयते॥

न्वयः ॥ सयुक्तिकंपूर्वपक्षयति ॥ सचेति ॥ सचेशानोवायुरेवभवेदीशानस्योर्ध्वंप्राणमुन्नयतीतिवाक्ये प्राणव्यवस्थापकत्वमध्यमत्वसर्वदेवोपास्यत्वश्रवणात् ॥ नचैतल्लिंगश्रवणेपिकुतोयंवायुर्विष्णुःकिनस्यादिति ॥ यथासम्राडेवाधिकृतान्विनियुङ्क्तएतान्ग्रामानधितिष्ठस्वैतान्ग्रामानधितिष्ठस्वेत्येवमेवैषप्राणइतरान्प्राणान्पृथक्पृथगेवसन्निधतइतिप्राणव्यवस्थापकत्वस्यवायुलिंगत्वश्रवणात् ॥ अथेममेवनाम्नोद्योऽयंमध्यमःप्राणइतिमध्यमत्वस्यतद्धर्मत्वोक्तेः ॥ कुविदंगेतितस्यसर्वदेवोपास्यत्वप्रतीतेश्च ॥ अतोवा

सचएवमेवैषप्राणइतरान्प्राणान्पृथक्पृथगेवसन्निधत्तेयोयंमध्यमःप्राणःकुविदं
गेत्यादिनाप्राणव्यवस्थापकत्वान्मध्यमत्वात्सर्वदेवोपास्यत्वाच्चवायुरेवेतिप्रतीयते

य्वेकनिष्ठलिंगश्रवणादीशानोवायुरेवेतितस्यैवजिज्ञास्यत्वम् ॥ नचवाच्यंनेदमनिष्टंवायोरपिजिज्ञास्यताभ्युपगमाद्विष्णुजिज्ञास्यत्वस्याबाधादिति ॥ वायोःसर्वदेवोपास्यत्वेतस्यमोक्षदातृत्वापातात् ॥ नहिप्राप्तसमस्तैश्वर्याणांदेवानांप्रयोजनांतरमस्ति ॥ तथाचकिंविष्णुजिज्ञासानियमेनेति ॥ विष्णुरेवमोक्षार्थंजिज्ञास्यइत्यस्यानुपपत्तिरितिभावः ॥ अयंमंत्रार्थः ॥ अंगेतिसंबोधनम् ॥ येदेवावायोर्नमस्कारादिनाज्ञानादिगुणपूर्णाअज्ञानाद्यवद्यविधुराश्चपुराआसंस्तेकचिद्रहस्यस्थानेसूर्येणसाकंज्ञानिनेसंसारबाधवद्भिःशर

णंप्राप्तायवायवेबुद्धिमावासयंस्तद्विषयामकुर्वन्निति॥सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ वि
ष्णुरेवईशानोभवेत् ॥ मध्येवामनमितिवामनश्रुतेः ॥ तस्याश्चविष्णौमहायोगरूढिसिद्धायास्तत्प्रमापक
त्वात् ॥ अतोविष्णोरीशानत्वेनतस्यैवजिज्ञास्यत्वमितिभावः ॥ अत्रप्रमितपदंश्रुतेर्निरवकाशत्वसूचना
र्थम् ॥ ननुवायुलिंगसद्भावादीशानोवायुरेवंकिनस्यादित्यतआह ॥ नहीति ॥ भवेत्सत्यामपिश्रुतौलिं
गेनवायुत्वनिश्चयोयदिश्रुतेर्लिंगंबलवद्भवेन्नचतदस्तीत्यर्थः ॥ अनेनशब्दादेवेत्येवकाराभिप्रायोवर्णितो

अतोब्रवीत् ॥ वामनशब्दादेवविष्णुरितिप्रमितः ॥ नहिश्रुतेर्लिंगंबलवत् ॥ श्रुति

## ॥ॐ शब्दादेवप्रमितः ॐ॥ २४॥

लिंगंसमाख्याचवाक्यंप्रकरणंतथा ॥ पूर्वंपूर्वंबलीयःस्यादेवमागमनिर्णयइतिस्कांदे॥

भवति ॥ कुतोनश्रुतेर्लिंगंबलवदित्यतआह ॥ श्रुतिरिति ॥ नाममात्रेणनिर्देशःश्रुतिः ॥ असाधारणधर्मो
लिंगम् ॥ निराकांक्षपदानिवाक्यम् ॥ एकप्रमेयप्रतिपादकानेकवाक्यानिप्रकरणम् ॥ अनेकप्रमेयप्र
तिपादकमेकार्थेतात्पर्ययुक्तंस्थानम् ॥ समानोक्तिःसमाख्या ॥ तत्रश्रुतेःसाक्षादर्थधीजनकत्वात्सर्वतःप्राब
ल्यम् ॥ लिंगस्यानुमापकतयाऽर्थबोधकत्वात्तदानंतर्यम्॥वाक्यस्यानेकार्थकथनद्वाराऽर्थानुमापकत्वात्त
तोपिदौर्बल्यम् ॥ प्रकरणस्यबह्वर्थपरत्वेनार्थानुमितिहेतुत्वादवमता ॥ स्थानस्यातिबह्वर्थकथनेनाभिप्रा

यतोऽर्थानुमितिजनकस्यततोपिदौर्बल्यम् ॥ समाख्यायाःस्थानांतरगतायाःसादृश्यमात्रेणार्थानुमापकत्वात्ततोपिदुर्बलत्वम् ॥ अत्रापिपूर्ववन्निरवकाशात्स्वभावदुर्बलादपिस्वभावप्रबलसावकाशस्यदौर्बल्यमित्यादिद्रष्टव्यम्॥अत्रविरुद्धैतेषांसमवायेसत्येवंपूर्वपूर्वेणोत्तरोत्तरबाधयाऽऽगमार्थनिर्णयोभवतीत्यर्थः॥नचयथास्थितएवक्रमः॥ आत्माप्रकरणादित्यत्रसमाख्यायाःप्रकरणेनबाधितत्वात् ॥ तदाहजैमिनिः॥ श्रुतिलिंगवाक्यप्रकरणस्थानसमाख्यानांसमवायेपारदौर्बल्यमर्थविप्रकर्षादिति ॥ भाष्यकारोपि॥वाक्यंप्रकरणंस्थानंसमाख्याचतथाविधेति ॥ श्रुतिलिंगवाक्यानांसाक्षाद्विप्रतिपन्नार्थनिष्ठत्वेश्रुत्यादित्वेनैवज्ञापकत्वम् ॥ उपक्रमोपसंहारयोःश्रुतत्वेतन्निश्चायकतयालिंगत्वमन्यत्रचेत्प्रकरणनिश्चायकत्वेन ॥ उपक्रमो

तच्चलिंगंविष्णोरेव ॥ तस्यैवप्राणोक्तेस्तद्वत्वंप्राणोअभवदिति ॥ २४ ॥

पसंहारावपिश्रुत्यादिनासत्यामर्थसिद्धौतात्पर्यलिंगे अन्यथाप्रकरणनिश्चायकौ॥समाख्यापिसाक्षाद्विप्रतिपन्ननिष्ठा॥समाख्यात्वेनैवलिंगमन्यथाप्रकरणनिश्चायकत्वेनभवति॥ लिंगवाक्ययोःसाक्षादसाक्षात्त्वेनभेदः ॥ गोत्रभिदंप्रवक्षणाअभिनत्पर्वतानामित्यादिवदिति॥ नन्वस्तुश्रुतेःस्वभावप्राबल्यंतथापिबाहुल्येनलिंगानामपिप्राबल्यादनिर्णयएवेत्यतआह ॥ तच्चेति ॥ नबाहुल्येपिलिंगानांश्रुतिसाम्येनानिर्णयः ॥ श्रुतेर्निरवकाशत्वात् ॥ लिंगानांविष्णावकाशात् ॥ सावकाशशतादपिनिरवकाशैकस्यप्राबल्यादितिभावः ॥ श्रुत्यंतरेणप्राणनिष्ठतयालिंगोक्तेःकथंतद्विष्णोरित्यत आह ॥ तस्यैवेति ॥ वायुत्वमत्रोपलक्ष्यते ॥ २४ ॥

तथापिकथमीशानोविष्णुर्भवेत् ॥ अंगुष्ठमात्रत्वोक्तेः ॥ नचविष्णोरंगुष्ठमात्रत्वंयुक्तम् ॥ सर्वगतत्वात् ॥ नचवक्तव्यंव्योमवत्सर्वगतस्याप्यणुत्वंप्रत्यपादीति. अंगुष्ठमात्रइतितन्मात्रत्वोक्तेरित्याशंकांपरिहरत्सूत्रमुपन्यस्यतदक्षराणिव्याचष्टे॥ हृदीति॥ सर्वगतस्यापिविष्णोरंगुष्ठमात्रत्वोक्तिर्युक्ता ॥ हृदिविद्यमानावकाशस्यांगुष्ठमात्रत्वेनतदपेक्षयाभगवन्मूर्तिविशेषस्याभिव्यक्त्यातन्मात्रपरिमाणत्वादित्यर्थः ॥ भिन्नेष्वपि

स्थानैक्येनैक्योक्तिवद्धृदयाकाशस्यांगुष्ठमात्रत्वेनतत्संबंधात्सर्वगतेपिहरावुपचारेणांगुष्ठमात्रत्वोक्तिरिति

सर्वगतस्यापितस्यांगुष्ठमात्रत्वंहृद्यवकाशापेक्षयायुज्यते ॥ इतरप्राणिनामंगुष्ठाभावेपि

## ॥ ॐ हृद्यपेक्षयातुमनुष्याधिकारत्वात् ॐ ॥ २५॥

मनुष्याधिकारत्वान्नविरोधः ॥ २५ ॥ अ० ७॥

वार्थः॥तुशब्दःपरिच्छिन्नतयाऽङ्गुष्ठमात्रत्वनिवृत्त्यर्थमेवार्थः॥तथापिनांगुष्ठमात्रत्वंविष्णोर्युक्तम् ॥ तथाहि॥ किंतत्तदंगुष्ठमात्रत्वंवार्यांकिंचिदंगुष्ठमात्रत्वंवा॥नाद्यः ॥ पश्वादीनामंगुष्ठाभावेनतदंतर्गतविष्णोरंगुष्ठमात्रत्वायोगात् ॥ नद्वितीयः॥तत्कथनवैयर्थ्यादसंभवाच्चेत्याशंकांपरिहरत्सूत्रशेषंव्याचष्टे॥ इतरेति ॥ युक्तंविष्णोरंगुष्ठमात्रत्वम् ॥ तत्तदंगुष्ठमात्रत्वाभ्युपगमेनविकल्पानवकाशात् ॥ नचतत्पक्षोक्तविरोधः ॥ मनुष्याणामेववेदविद्योपासनाधिकारित्वेनतान्प्रत्येतद्विद्याप्रवृत्त्यापश्वादीनामंगुष्ठाभावेपिविष्णोरंगुष्ठमात्रत्वोक्तिसंभवादितिभावः॥तुशब्दोऽपिशब्दार्थः॥तस्मादीशानोविष्णुरेवेतिसएवजिज्ञास्यइतिसिद्धम्॥२५॥अ०७॥

अत्रदेवानांब्रह्मविद्याऽधिकारसमर्थनादस्तिशास्त्रसंगतिः ॥ प्रासंगिकत्वान्नाध्यायादिसंगतिर्गवेषणीया ॥
श्रुत्यादिसंगतिं विषयसंशयतद्बीजानिसूचयति ॥ मनुष्याणामिति ॥ मनुष्याधिकारत्वादितिमनुष्याणामेव
वेदविद्याधिकारइत्युक्तम्॥सचयदिनदेवानांस्यात्तदाविश्वेदेवाउपासतइत्यादिश्रुत्यप्रामाण्यंप्रसज्जतइत्यव
श्यंविचार्यः ॥ सवेदविद्याऽधिकारोविषयः ॥देवानामस्तिनवेतिसंदेहः ॥ मनुष्याणामेवेत्युक्तिर्विश्वेदेवाउ
पासतइतिश्रुतिश्चसंदेहबीजमितिभावः ॥ नचश्रुत्युक्त्योरसाम्यादसंदेहबीजत्वम् ॥ उत्कर्षंगुह्यमानश्रुतिम्

मनुष्याणामेववेदविद्याधिकारइत्युक्तम् ॥ तिर्यगाद्यपेक्षयैवमनुष्यत्वविशेषणमुक्तंनतुदेवाद्यपेक्ष

## ॥ ॐतदुपर्यपिबादरायणःसंभवात्ॐ ॥ २६ ॥

येत्याह ॥ तदुपरिमनुष्याणांसतांदेवादित्वप्राप्त्युपरि ॥ संभवतिहितेषांविशिष्टबुद्ध्यादिभावात् ॥

त्वात् ॥ नदेवानांवेदविद्याधिकारइतिपूर्वःपक्षः ॥ तथाहि ॥ किंदेवाअनादिनित्याउतविद्यादिनापदप्राप्ति
मुक्तिमंतः॥आद्येनवेदविद्याऽधिकारः॥अर्थीसमर्थोविद्वानधिक्रियतेइतिन्यायात्॥तेषांचार्थित्वाभावात्॥
नह्यनादितःप्राप्तपदानांमोक्षशून्यानांचविद्याभिःप्रयोजनमस्तियेनार्थितास्यात् ॥ नद्वितीयः॥ अमराणांमु
क्त्याद्यंगीकारेकर्मादिविरोधापातात्॥ अतोदेवानांवेदविद्याधिकाराभावान्नतदुपास्यत्वलिंगंविष्णोःसंभव
ति ॥ अथसंदेहबीजंविघटयन्सिद्धांतयितुंसूत्रमवतारयति ॥ तिर्यगादीति ॥ मनुष्यपदंविशिष्टबुद्ध्यादिर
हिततिर्यगादिव्यावृत्त्यर्थंप्रयुक्तंनतुदेवतादिव्यावृत्त्यर्थमित्यभिप्रेत्यदेवानामधिकारमाहाचनयोबादरायण

इत्यर्थः ॥ सूत्रंव्याचष्टे ॥ तदिति ॥ देवानामपिवेदविद्याधिकारोविद्यतएव ॥ विशिष्टबुद्ध्यादेरधिकारोप योगिनोदेवेषुविद्यमानत्वेनतेषामधिकारसंभवात् ॥ नचोक्तप्रकारेणदेवानामर्थित्वाभावात्सामर्थ्यविद्वत्त्वा सत्त्वेप्यधिकाराभावइतिवाच्यम्॥ विद्याकर्मभ्यांयोग्यमनुष्याणांदेवादित्वप्राप्त्यभ्युपगमेनविद्याभिस्तेषां मोक्षसिद्धेरितिभगवान्बादरायणोमन्यतइत्यर्थः॥विप्रतिपत्तिसूचनायबादरायणपदम्॥नदेवावेदविद्याधि कारिणोऽमनुष्यत्वात्तिर्यगादिवदित्यतआह ॥ तिर्यगादीनामिति ॥ नतिर्यगादीनाममनुष्यत्वप्रयुक्तोऽधि काराभावोऽपितुविशिष्टबुद्ध्यादिराहित्यनिबंधनएव ॥ तथाचविशिष्टबुद्ध्यादिराहित्यंव्यावर्तमानंपक्षात्स्व

तिर्यगादीनांतदभावादभावः ॥ तेषामपियत्रविशिष्टबुद्ध्यादिभावस्तत्राविरोधः॥ निषेधाभावात्॥

दृश्यंतेहिजारितार्यादयः ॥ २६ ॥

व्याप्यमधिकाराभावंचव्यावर्तयतीतिभावः॥ विशिष्टबुद्ध्यादिमतामपितिरश्चांनवेदविद्याऽधिकारइतिव्या प्तिविधुरोऽयमुपाधिरित्यतआह ॥ तेषामिति॥ अविरोधोऽधिकारांगीकारेऽपीतिशेषः ॥ कथंतिरश्चांवेदवि द्याधिकाराविरोधइतिचेत्॥ किंनिषेधात्तिरश्चामधिकारायोगोऽदर्शनाद्वा ॥ आद्यंदूषयति ॥ निषेधेति ॥ अनेननिषेधराहित्येसतिविशिष्टबुद्ध्यादिमत्त्वमधिकारेप्रयोजकमितिसूचितंभवति॥ तेनशूद्रादौव्यभिचार परिहारः ॥ द्वितीयंनिराह ॥ दृश्यंतेहीति ॥ वेदाधिकारितयेतिशेषः ॥ अनेनैवस्वप्रयुक्तानुमानस्यमनुष्य त्वोपाधिरप्यपोढोभवति ॥ २६ ॥

देवानांवेदविद्याऽधिकारमाक्षिप्यसमादधत्सूत्रंपठित्वाऽऽक्षेपांशंतावद्व्याचष्टे॥विरोधइति ॥ यदुक्तंदेवानांवे
दविद्याऽधिकारसिद्ध्यर्थंसादिविनाशित्वम् ॥ तदयुक्तम् ॥ तथात्वेतेभ्यःपूर्वंदेवताभावेनपूर्वकल्पेप्रयुक्तकर्म
ण्युद्देश्याभावाद्वैयर्थ्याख्यविरोधापत्तेः ॥ अतःकर्मविरोधपरिहारायदेवानामनादिनित्यत्वमेवाभ्युपेयम् ॥
तथाचार्थित्वाभावेनानधिकारएवेत्यर्थः ॥ परिहारांशंव्याचष्टे ॥ नेति ॥ भवेदयंविरोधोयदिपूर्वंदेवता

मनुष्याएवदेवादयोभवंतीतितदुपरीत्युक्तम् ॥ तत्रयदिमनुष्याःसंतोदेवादयोभवंतितत्पूर्वं

## ॥ ॐ विरोधःकर्मणीतिचेन्नानेकप्रतिपत्तेर्दर्शनात् ॐ ॥ २७ ॥

देवताभावाद्देवतोद्दिष्टकर्मणिविरोधइतिचेन्न ॥ अनेकेषांदेवतापदप्राप्तेर्दर्शनात् ॥ तेह
नाकंमहिमानःसचंतयत्रपूर्वेसाध्याःसंतिदेवाइति ॥ २७ ॥

भावः ॥ नचासावस्ति ॥ एतद्देवानांपूर्वमभावेपिदेवांतरसद्भावात् ॥ नचतत्रप्रमाणाभावः ॥ अनेकेषांयो
ग्यमनुष्याणांपूर्वपूर्वदेवतापदप्राप्तेःश्रुत्युक्तत्वादित्यर्थः ॥ देवादेवत्वयोग्यामनुष्याः यज्ञेनज्ञानकर्मात्मकेन
यज्ञंभगवंतमयजंत॥ततस्तेज्ञानपूर्वकर्मणास्वपदंप्राप्यमुख्यलोकधारकाआसन्॥तेपुनर्महात्मानोदेवाःस्वा
धिकारावसानेपूर्णसुखात्मकंमोक्षंप्रापुवन् ॥ यत्रमोक्षेपूर्वकल्पेमुक्ताःसाध्यादेवाःसंतीतिमंत्रार्थः॥ २७ ॥

पुनरुक्तमाक्षिप्यसमादधत्सूत्रंपठित्वाऽऽक्षेपांशंविवृणोति ॥शब्दइति॥ अत्रापिविरोधपदाकर्षणम् ॥ यद्दे वानामधिकारसिद्ध्यर्थमाद्यंतवत्त्वमुक्तम्॥ नतद्युक्तम् ॥ देवानामाद्यंतवत्त्वेवेदाप्रामाण्याख्यविरोधापाता त् ॥ वेदस्यनित्यत्वादनित्यदेवानांतद्वाच्यत्वात् ॥ वाच्यहीनायावाचःप्रामाण्यासंभवात् ॥ यावतातदे ववाक्यस्याप्रामाण्यम् ॥ वेदस्यनित्यत्वमेवकुतइतिचेत् ॥ वाचाविरूपनित्ययेत्यादिश्रुतेः ॥ नचवाच्यम

वाचाविरूपमित्ययेत्यादिश्रुतेराप्तनिश्चयान्नित्यत्वापेक्षत्वाच्चमूलप्रमाणस्यस्वतःप्रामाण्यप्रसिद्धे

## ॥ ॐ शब्दइतिचेन्नातःप्रभवात्प्रत्यक्षानुमानाभ्याम् ॐ ॥ २८ ॥

श्वनित्यत्वाद्वेदस्यतदुदितानांदेवानामनित्यत्वात्पुनरन्यभावनियमाभावाच्चशब्देविरोधइतिचेत् ॥

नित्यएववेदोनित्यइतिउपचारमात्रमिति ॥ वेदानित्यत्वेप्रामाण्याभावापत्तेः ॥ आप्तमूलत्वेनप्रामाण्य मितिचेन्न ॥ कर्तृसार्वज्ञ्यादौमानाभावेनाप्तनिश्चयात् ॥ विवादपदंकस्यचित्प्रत्यक्षंप्रमेयत्वादितिसार्वज्ञ्ये मानमितिचेन्न ॥ प्रमेयत्वेनविप्रतिपन्नधर्मांतरसाधनापातात् ॥ किंचेदंप्रमेयत्वंनतावत्सामान्यंकेवलान्व यिधर्मत्वात् ॥ उपाधित्वेपिकचिदंतर्भावस्यापेक्षितत्वात् ॥ नतावद्द्रव्यम् ॥ निर्गुणत्वादस्वतंत्रत्वाच्च ॥ नापिगुणकर्मणी ॥ गुणादावपिवृत्तेः ॥ नचसमवायः ॥ असंबंधत्वात् ॥ नविशेषोऽनित्येपिवृत्तेः ॥ न

चाभावोऽप्रतियोगिसापेक्षत्वात्॥प्रमेयस्यभावएवप्रमेयत्वंनतुततोऽतिरिक्तमितिचेत्॥सत्यम्॥भावभावित्रो
भेदेपुनरुक्तानतिवृत्तेः ॥ भावस्यभवितुःपृथगभावेतच्छब्दयोःपर्यायतापातात् ॥ एवंपरत्वापरत्वादिगुणा
नांचदत्तजलांजलितास्यात् ॥ प्रमातद्विषयतत्संबंधेष्वंतर्भावोऽस्तीतिचेन्न॥ प्रमाप्रमेययोःसंबंधस्यैवदुर्नि
रूपत्वात् ॥ नह्यात्मगुणस्यान्येनसमवायःसंयोगोवासंभवति ॥ विषयविषयिभावइतिचेन्न ॥ तस्याप्यं
तर्भाव्यत्वात् ॥ अंतर्भावस्यचोक्तदोषलंघनाजंघालत्वात्॥ एषैवदिगन्यसमयेधर्मांतरेऽपीति ॥ प्रमेयत्वा
निर्वचनान्नतेनसार्वज्ञ्यसिद्धिः॥ विप्रतिपन्नंसकर्तृकंकार्यत्वात्घटवदित्यनुमानेनजगत्कर्तरिसिद्धेतस्यसार्व
ज्ञ्यादिसिद्धिरितिचेन्न ॥ शरीरिजन्यत्वोपाधेःशरीर्यजन्यत्वेनसत्प्रतिपक्षत्वाच्च ॥ शरीरिविशेषणंव्यर्थ
मितिचेन्न ॥ उपाधौपक्षव्यावृत्त्यर्थत्वात् ॥ प्रतिपक्षेऽसिद्धिपरिहारार्थत्वात्पक्षव्यावृत्त्यर्थविशेषणवतो
प्युपाधित्वेपक्षेतरत्वस्याप्यापाद्यतेतदितिचेत्कानोहानिः ॥ पर्वतेतरत्वादीनामपिव्याप्तिरस्तिचेत्॥ अनुमा
नोपजीव्येनबाधादव्याप्तौस्वयंदुष्टत्वात् ॥ नचासिद्धिपरिहारार्थंविशेषणासंभवइतिराज्ञामाज्ञास्ति ॥
तथात्वेव्यभिचारनिवृत्त्यर्थमपिनप्रयोक्तव्यम् ॥ व्याप्तिवत्पक्षधर्मतायाआवश्यकत्वात् ॥ सकर्तृकत्वे
कार्यत्वमेवप्रयोजकम् ॥ शरीरमपितत्रसन्निहितमित्युत्तरत्रनिरसिष्यते ॥ अस्तुवासकर्तृकत्वम् ॥ कथं
सार्वज्ञ्यसिद्धिः ॥ बहुकर्तृत्वेनाप्युपपत्तेः ॥ लाघवादेकांगीकारइतिचेन्न॥ बह्वंगीकारस्यलोकानुकूल्येना

गौरवात् ॥ अतोनसार्वज्ञ्यसिद्धिः ॥ अविप्रलंभादिचातिदुरवगमम् ॥ अस्तुवाआप्तनिश्चयस्तन्मूलत्वं
कुतोवेदस्य ॥ वेदःसार्वज्ञ्यादिमताप्रणीतोवेदत्वादितिव्यतिरेक्यनुमानादितिचेन्न ॥ वेदत्वस्यपामरप्रणीत
त्वादौसाम्यात् ॥ असाधारण्यस्यापिसाम्यात् ॥ वेदआप्तप्रणीतःप्रमाणवाक्यत्वादितिचेन्न ॥ वेदानित्य
त्वेप्रामाण्यविवादात् ॥ तस्माद्यज्ञादितिसर्वज्ञेश्वरप्रणीतत्वंश्रूयतइतिचेन्न ॥ उक्तदोषात् ॥ ऋग्वेदएवाग्ने
रजायतेत्यसर्वज्ञप्रणीतत्वोक्तेश्च ॥ संप्रदायप्रवर्तकतयातद्वाक्यमुपचरितमितिचेन्न ॥ कारणाभावात् ॥
ईश्वरविरचितत्ववाक्यादितिचेन्न ॥ तद्वाक्यादस्यसंप्रदायप्रवर्तकत्वाद्यर्थोपपत्तेः ॥ तेषामसार्वज्ञ्यादेस्तदि
तिचेन्न ॥ चक्रकापातात् ॥ तस्मादाप्ततन्मूलत्वानिश्चयाद्वेदानित्यत्वेतत्प्रामाण्याभावापत्तेर्ननित्यत्वश्रुते
रुपचरितार्थत्वंवाच्यम् ॥ किंचवेदस्याप्तप्रणीतत्वेमूलप्रमाणेनभाव्यम् ॥ पौरुषेयस्यमूलप्रमाणसापेक्षिता
नियमात् ॥ नचतत्प्रत्यक्षम् ॥ अदृष्टादौतदप्रवेशात् ॥ नचकस्यचित्प्रत्यक्षंतादृशमत्रप्रमाणाभावात् ॥ना
प्यनुमानम् ॥ तस्यप्रतिपक्षादिदुष्टत्वात् ॥कथंचित्तेनादृष्टसंभावनेपितद्विशेषासिद्धेः ॥ नहिलशुनगृंजना
द्यदनस्यपापहेतुत्वंयज्ञादेःपुण्यसाधनत्वंवाऽनुमानेनशक्यसाधनम् ॥ अतोवाक्यमेवेतिवक्तव्यम् ॥ तदपि
नतावत्पौरुषेयंमूलांतरान्वेषणेनानवस्थानात् ॥ अतस्तन्नित्यमेवापेक्षितम् ॥ तथाचकिमनयाकल्पनया
श्रुतिसिद्धंवेदनित्यत्वमेवांगीक्रियताम् ॥ ननुवेदस्यनित्यत्वेपिनप्रामाण्यम् ॥ आप्तोक्तत्वाभावादिति ॥

मैवम् ॥ प्रामाण्यस्यस्वतस्त्वेनगुणानपेक्षणात् ॥ प्रामाण्यंनामयथार्थज्ञानकरणत्वम् ॥नचयाथार्थ्यंज्ञान
कारणातिरिक्तकारणमपेक्षते ॥ याथार्थ्यंज्ञानकारणातिरिक्तकारणनिरपेक्षम ॥ अयथार्थतानिरिक्तत्वेस
तिज्ञानधर्मत्वात् ॥ ज्ञानत्ववत् ॥ याथार्थ्यंनगुणोत्पन्नंज्ञानधर्मत्वादप्रामाण्यवदित्याद्यनुमानात् ॥नचज्ञा
नधर्मत्वेनायथार्थत्वस्यापिस्वतस्त्वंवाच्यम् ॥ दोषाभावेतदभावनियमात् ॥ प्रमाज्ञानसामग्रीव्यतिरिक्त
कारणजन्याकार्यत्वादितिचेन्न ॥ प्रमायाज्ञानकारणातिरिक्तकारणजन्यत्वंनामप्रमात्वस्यैवंविधत्वेन
वा ज्ञानस्यवा तत्संबंधस्यवा ॥ नाद्यः ॥ अजन्यत्वात् ॥ नद्वितीयः ॥ व्याहतेः ॥ नतृतीयः ॥तस्य
समवायत्वेनाजन्यत्वादेव ॥ प्रमात्वयुक्तज्ञानस्यैवंविधत्वंसाध्यतइतिचेन्न ॥ तादृशज्ञानस्यापिज्ञानका
रणातिरिक्तकारणजन्यत्वसाधनेव्याघातानिस्तारात् ॥ ज्ञानकारणतदतिरिक्तजन्यत्वंसाध्यतइतिचेन्न ॥
ईशप्रमायांबाधात् ॥ तदतिरिक्तप्रमापक्षीकारान्नैवमितिचेन्न ॥ तथापिघटादौव्यभिचारात् ॥ ज्ञानकार
णमात्रजन्यत्वाभावःसाध्यतइतिचेन्न ॥ ज्ञानेव्यभिचारापरिहारात् ॥ ज्ञानातिरिक्तत्वेनहेतुर्विशेष्यतइ
तिचेन्न ॥ ज्ञानेपिकार्यत्वेनतत्साधनसौलभ्यात् ॥ विशिष्टाभावविकल्पेनव्याघातस्यसमीकरणात् ॥ प्र
मागुणजन्या॥ तदन्वयव्यतिरेकित्वादित्येतदपिप्रतिज्ञानिरासेननिरस्तम् ॥ किंचेदंगुणान्वयव्यतिरेकित्वम
न्यत्रानुपक्षीणंसामान्यंवा ॥ नद्वितीयः ॥ व्यभिचारात् ॥ नाद्यः ॥ दोषनिरासोपक्षीणत्वात् ॥ नचोभ

यकारणत्वेकल्पकमस्ति ॥ नचैवमप्रमायाअपिस्वतस्त्वम् ॥ अत्रदोषान्वयव्यतिरेकनियमेनदोषाणामुभ
यकारणत्वकल्पनोपपत्तेः ॥ नचैतत्समंप्रकृतेपि ॥ यादृच्छिकायथार्थवाक्यजनितप्रमायांव्यभिचारात्॥
गुणानांदोषनिरसनव्यापारत्वेदोषाभावोपिकारणतयापन्नइतिचेन्न॥प्रदीपावरणनिवृत्त्यादीनामपिप्रकाश
नादिकारणत्वापत्तेः ॥ दोषाभावस्यकारणत्वेचनास्माकमनिष्टम् ॥ तावतावेदापौरुषेयताऽव्याघातात् ॥
प्रमागुणजन्याप्रमात्वादितिचेन्न ॥ ईशप्रमायांबाधात् ॥ तदतिरिक्तप्रमाःपक्षीक्रियंतइतिचेन्न ॥ तत्रै
वव्यभिचारात् ॥ जन्यप्रमात्वंहेतुरितिचेन्न ॥ प्रमागुणजन्यानभवति॥प्रमात्वादीश्वरप्रमावदितिप्रतिसाध
नात् ॥ नचाजन्यत्वमुपाधिः ॥ घटादौव्यभिचारात् ॥ अजन्यप्रमात्वमुपाधिरितिचेन्न ॥ व्याप्त्यभा
वात् ॥ अतःप्रमायाज्ञानकारणातिरिक्तकारणनिरपेक्षत्वेनवेदस्यकर्तृगुणनिरपेक्षस्यापिप्रामाण्यसिद्धेर्यु
क्तमेवतन्नित्यत्वम् ॥ तस्यैवंनित्यत्वात्तद्वाच्यदेवानांचानित्यत्वेऽप्रामाण्यमेवस्यात् ॥ नचतद्युक्तम् ॥ अत
स्तत्सिद्ध्यर्थंदेवानांनित्यत्वमेवाभ्युपेयम ॥ तथाचनतेषांवेदविद्याधिकारः ॥ नचवाच्यंकर्मविरोधाभावव
द्द्यमपिविरोधःपरिहर्तव्यइति ॥ अतीतदेवताप्रवाहेप्रमाणसद्भावेनातीतकालीनविरोधस्यैवपरिहर्तुंशक्य
त्वात् ॥ उत्तरकालेऽन्यदेवताभावनियमेप्रमाणाभावेनविरोधस्यकर्मण्यपिसाम्यात् ॥ नचभारतादिवदती
तविषयतयावेदस्यप्रामाण्योपपत्तिः ॥ तस्यदेवताज्ञानादिरूपस्यवर्तमानविषयतयाऽवश्यंभावात् ॥अतोदे

वानांनानित्यत्वंयुक्तमितिनतेषांवेदाधिकारइतिभावः ॥ परिहारांशंव्याख्याति ॥ नेति ॥ यदुदितंवेदो नित्यइति तत्सत्यमेव तथापिनतस्याप्रमाण्यंतद्वाच्यानांदेवतानांस्वरूपनित्यत्वाभावेपिप्रवाहरूपेणनि त्यत्वात् ॥ नचतत्रप्रमाणाभावः ॥ सूर्याचंद्रमसावितिश्रुतेरेव ॥ नचेयंश्रुतिरतीतविपर्ययैवदेवप्रभवनियमंन प्रमापयतीतिवाच्यम् ॥ प्रतिकल्पमपिश्रुत्यायथाविष्णुःपूर्वकल्पेसूर्याचंद्रमसावकल्पयत्तथाऽस्मिन्कल्पे पीतिकथनेदेवानांसर्वकल्पेषुसद्भावसिद्धेः ॥ यथैवेतिस्पष्टस्मृत्याचदेवानांसर्वकल्पेषुप्रभवसिद्धेः ॥ नच

न ॥ सूर्याचंद्रमसौधातायथापूर्वमकल्पयत् ॥ यथैवनियमःकालेसुरादिनियमस्तथा ॥

तस्मान्नानीदृशंकापिविश्वमेतद्भविष्यतीत्यादेरतएवशब्दात्तेषांप्रभवनियमात् ॥ महतां

प्रत्यक्षात् ॥ यथेदानींतथोपर्यपिदेवाभविष्यंतीतीतरेषामनुमानाच्च ॥ २८ ॥

वाच्यंश्रुतावुपचारेणाप्युक्तिःसंभवतीतिनदेवप्रभवनियमइति ॥ अतीतानागतविदांमहतांश्रुतिसंवादिनोदे वप्रभवनियमग्राहकप्रत्यक्षस्यसत्त्वात् ॥ नचपरप्रत्यक्षस्याप्रत्यक्षत्वात्तदनिश्चयः ॥ यथर्तुष्वृतुलिंगानि नानारूपाणिपर्यये ॥ दृश्यंतेतानितान्येवतथाभावायुगादिष्वितितद्वचनान्निश्चयोपपत्तेः ॥ नचायोगिनां श्रुतिप्रत्यक्षयोरविश्वासेनोक्तानिश्चयः ॥ उपरितनकालोदेवबान्कालत्वात्संप्रतिपन्नकालवदितिश्रुतिसं वाद्यनुमानेनतेषांदेवप्रभवनियमसिद्धेरितिभावः ॥ नचवाच्यंप्रलयकालेकालत्वहेतोर्व्यभिचारोऽप्रलय कालत्वहेतोःपरंप्रतिव्यर्थविशेषणत्वमिति ॥ प्रलयस्यप्रमाणसिद्धत्वात् ॥ २८ ॥

युक्त्यंतरेणदेवप्रवाहनित्यतांसाधयत्सूत्रंपठित्वाव्याचष्टे ॥ अतएवेति ॥ नदेवप्रवाहनित्यत्वसिद्ध्यर्थंयुक्त्यंतरंगवेषणीयंकिंनुयत्परेणप्रतिपादितंवेदस्यनित्यत्वंतदन्यथानुपपत्त्यैवतत्सिध्यति ॥ नहिवाच्यानित्यत्वेवाचोनित्यत्वमुपपद्यतइतिभावः ॥ नचाप्रामाण्येनोपपत्तिः ॥ तदभावादेव ॥ नापिभारतादिवदतीतविषयत्वेन ॥ अनुपपत्तेरुक्तत्वात् ॥ नचतद्वाच्यदेवतास्वरूपस्यैवनित्यत्वेनान्यथोपपत्तिः ॥ सूर्याचंद्रमसावित्याद्युत्पत्तिश्रुतेःप्रलयश्रुतिबाहुल्याच्च ॥ नचप्रलयश्रुतीनामयथार्थत्वम् ॥ बाधकाभावात् ॥ जातिसं

अतएवशब्दस्यानित्यत्वादेवचदेवप्रवाहनित्यत्वंयुक्तम् ॥ २९ ॥

॥ ॐ अतएवचनित्यत्वम् ॐ ॥ २९ ॥

॥ ॐ समाननामरूपत्वाच्चावृत्तावप्यविरोधोदर्शनात्स्मृतेश्च ॐ ॥ ३० ॥

अतीतानागतानांदेवानांसमाननामरूपत्वात्प्राप्तपदानांमुक्त्याऽऽवृत्तावप्यविरोधः ॥

केताद्यनुपपत्तेरितिचेन्न ॥ ईश्वरविरचितत्वेनोपपत्तेः ॥ ब्राह्मणादेवब्राह्मणइतिनियमस्यक्वचिदन्यथात्वोपपत्तेर्वृश्चिकतांडुलीयकादिवदिति ॥ २९ ॥ नदेवानांप्रवाहनित्यत्वेनापिवेदप्रामाण्योपपत्तिः ॥ तथाहि ॥ किंपूर्वकल्पेमुक्ताएवदेवाउत्तरकल्पेपुनरावर्ततेतदन्येएववा ॥ नाद्यः ॥ मुक्तेरपुनरावृत्तित्वात् ॥ अतस्तदन्यएवेतिवाच्यम् ॥ तथाचतेषांनानाविधनामरूपवतांवाचकवेदस्यकथंनाप्रामाण्यम् ॥ तस्यप्रतिकल्पंपाठभेदाभावात्तद्भावेनित्यत्वव्याघातादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ समानेति ॥ संभवत्येव

देवप्रवाहनित्यत्वेनवेदप्रामाण्यम् ॥ प्राचीनानांप्राप्तमुक्तित्वेनपुनःस्वपदेष्ववृत्तावपितदन्येषांप्राचीनसमाननामरूपत्वात्तत्प्रतिपादकैकविधस्यापिवेदस्याप्रामाण्याप्राप्तेः॥ नचसर्वदेवानांसमाननामरूपत्वेप्रमाणाभावः ॥ यथापूर्वमितिश्रुतेः ॥ एतच्छ्रुतेस्तत्स्वरूपकल्पनानियमपरत्वमपिसंभवतीतिनानयातन्निश्चयइतिचेत् ॥ स्मृतिसंवादेननिश्चयोपपत्तेरितिभावः ॥ ननुकथंदेवप्रवाहनित्यत्वेसमाननामरूपत्वेवानित्यवेदप्रामाण्योपपत्तिः ॥ तद्वाचित्वेनेतिचेन्न ॥ तस्यैवासंभवात् ॥ नह्येतावत्कालमयंदेवोमयोक्तोऽतःपरमेनंव

यथापूर्वमितिदर्शनात् ॥ अनादिनिधनानित्यावागुत्सृष्टास्वयंभुवा ॥ ऋषीणांनामधेयानियाश्च वेदेषुदृष्टयः ॥ वेदशब्देभ्यएवादौनिर्ममेसमहेश्वरइतिस्मृतेश्च ॥ ३० ॥

क्ष्यामीत्यपौरुषेयस्यविमृश्यवृत्तिःसंभवतीत्याशंकापिस्मृत्यैवपरिहृता ॥ स्वयंभुवास्वतंत्रेणविष्णुनायावेदवागुच्चारितातद्वेदगतशब्देभ्योब्रह्मादिविबुधानांनामानिनिर्ममेतान्शब्दांस्तेषुसंकेतितवान्याश्चतेषांवेदेषूक्ताःदृश्यंतइतिदृष्टयोरूपाणितानिचतथैवनिर्ममइतिसर्वदेवानांसमाननामरूपत्वस्यापौरुषेयवेदस्यापिस्वतंत्रेणभगवताप्रतिकल्पंवेदेषुसंकेतितत्वस्यचोक्तेः ॥ नचप्रलयेवेदाप्रामाण्यंशंक्यम् ॥ तदातीतविषयत्वस्यभगवन्मात्रविषयत्वस्यचोपपत्तेः ॥ ३० ॥

अतोदेवानामाद्यंतवत्त्वेपिविरोधाभावाद्युक्तस्तेषांवेदविद्याधिकारइतिस्थितेपुनस्तमाक्षिपत्सूत्रमुपन्यस्य
व्याचष्टे ॥ मध्वादिष्विति ॥ वेदविद्याद्विविधाः ॥ मुक्तिफलार्थास्तदितरफलार्थाइति ॥ मोक्षेतरफलार्था
श्चद्विविधाः ॥ ब्रह्मकर्मविद्याभेदात् ॥ यथामधुविद्या ॥ यथाचाग्निष्टोमविद्या ॥ तत्रनतावन्मोक्षेतर
फलार्थद्विविधविद्यास्वधिकारोदेवानांयुज्यते ॥ तत्रार्थित्वाभावात् ॥ सयएनदेवममृतंवेदवसूनामेवैको
भूत्वाऽग्निनैवमुखेनैतदेवामृतंदृष्ट्वातृप्यतिदेवोभूत्वादेवानप्येतिसऊर्जमुपगच्छतीत्यादिनामध्वादिविद्यासु
वसूनामेवैकोभूत्वेत्यादिनाप्राप्यफलत्वात्प्रामपदानांदेवानांमध्वादिवि

## ॥ ॐ मध्वादिष्वसंभवादनधिकारंजैमिनिः ॐ ॥ ३१ ॥

द्यास्वनधिकारंजैमिनिर्मन्यते ॥ ३१ ॥

वस्वादिपदानामुपासनाप्राप्यफलत्वश्रवणात् ॥ देवानांचप्रामतत्पदत्वात् ॥ नहिप्रामेऽर्थितासंभवति ॥ एवंकर्मविद्यास्वपिवस्वादिपदानांफलत्वोक्तेर्नार्थितासंभवति ॥ नचद्वितीयाद्यमृतविद्यादिषुवस्वादीनामप्यधिकारःसंभवतीतिवाच्यम् ॥ तास्वपिरुद्रादिपदस्यफलत्वेनश्रवणात् ॥ तत्रचायोग्यतयाऽर्थिताऽयोगात् ॥ एवंकर्मविद्यास्वपिरुद्रादिपदफलाभिधात्रीषुवस्वादीनामधिकारायोगः ॥ नचास्त्वेवंस्वस्वेतरपदफलाभिधात्रीषुब्रह्मकर्मविद्यास्वनधिकारस्तथापिमोक्षेतरसामान्यफलाभिधायकविद्यासुस्यादितिवाच्यम् ॥ सामान्यफलानांचप्रकाशवानस्मिन्लोकेभवतीत्यादीनांतत्फलेऽतर्भावात् ॥ नहवाएवंविदिकिंच

नानन्दंभवतीत्यादीनांसर्वायोग्यत्वात्योग्यैश्वरुद्रादिभिःप्राप्तत्वाच्च ॥ अतोमोक्षेतरफलार्थविद्याविचारे
देवानामर्थित्वाभावान्नतास्वधिकारः ॥ किंचैवमप्रमतसोजैमिनिराचार्योऽपिमन्यतइत्यर्थः ॥ ३१ ॥
मास्तुमोक्षेतरफलार्थविद्यास्वधिकारोदेवानाम् ॥ सत्यंज्ञानमनंतंब्रह्मेत्यादिमोक्षार्थविद्यासुभविष्यति ॥
अर्थित्वसंभवादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ ज्योतिषीति ॥ भावाद्वस्तूनामितिशेषः॥कथंव

ज्योतिषिसर्वज्ञत्वेभावाच्च ॥ आदित्यप्रकाशेऽतर्भाववत्तज्ज्ञानेसर्ववस्तूनामंतर्भावात् ॥

## ॥ॐ ज्योतिषिभावाच्च ॐ॥ ३२ ॥

नित्यसिद्धत्वाच्चविद्यानाम् ॥ ३२ ॥

स्तूनांज्ञानेऽतर्भावइत्यतःस्वपदेवर्णयति ॥ आदित्येति ॥ अभिप्रायंवक्ति॥नित्येति ॥ नमोक्षार्थविद्यास्वपि
देवानामधिकारःसंभवति ॥ तदुक्तोपासनेऽर्थिताभावात् ॥ द्विविधाह्यर्थिताविद्याविचारेभवतिज्ञानायफ
लायचेति ॥ तत्रदेवानांमोक्षार्थित्वेऽपिनतत्साधनेविद्यासाध्येज्ञानेऽर्थिताऽस्ति॥ तेषांसार्वज्ञ्येनसर्वविद्योक्त
ज्ञानित्वात्॥नहिस्वर्गार्थिनोपिकृतयज्ञस्यपुनर्यज्ञविद्याविचारेऽर्थितास्तीतिभावः ॥अनेनप्राचीनपक्षेदोषां
तरंचोक्तंभवति ॥ ३२ ॥ एवंदेवैर्मोक्षेतरयोग्यफलानांप्राप्तत्वादयोग्यानांप्राप्तुमशक्यत्वान्मोक्षस्याप्यर्थ
तोलब्धत्वादर्थित्वाभावेनतेषांकास्वपिविद्यास्वधिकाराभावेजैमिनिमतावलंबिनासमर्थितेपुनस्तंसमर्थय

त्सूत्रंपठित्वाव्याचष्टे ॥ भावमिति ॥ बादरायणस्तुभगवान्देवानामशेषविद्यास्वधिकारभावंमन्यते॥मोक्ष तदितरफलानांयोग्यानांप्राप्तत्वेऽयोग्यानांप्राप्तुमशक्यत्वेऽपिविद्योक्तोपासनकर्मकरणाभ्यांयोग्यस्यज्ञा नमात्रेणासाध्यस्यमोक्षफलेऽतिशयस्यसिद्ध्याऽर्थित्वसंभवात् ॥ नचविद्यानांनित्यसिद्धत्वात्तद्विचारेऽर्थि त्वाभावः ॥ भगवदितरेषांनिरुपचरितसार्वज्ञ्याभावाद्विद्याविचारेणज्ञानविशेषसंभवादित्यर्थः॥ ननुतत्तद्वि

फलेविशेषभावात्प्राप्तपदानामपिदेवानांमध्वादिष्वप्यधिकारंबादरायणोमन्यते ॥ अस्तिहिप्रका शविशेषः ॥ यावत्सेवापरेतस्त्वेतावत्सुखविशेषता ॥ संभवाच्चाप्रकाशस्यपरमेकम्तेहरिम् ॥ तेषां

॥ ॐ भावंतुबादरायणोऽस्तिहि ॐ ॥ ३३ ॥

सामर्थ्ययोगाच्चदेवानामप्युपासनम् ॥ सर्वंविधीयतेनित्यंसर्वयज्ञादिकर्मचेतिस्कांदे ॥ उक्तफला नधिकारमात्रंजैमिनिमतमतोनमतविरोधः ॥ सर्वज्ञस्यैवकृष्णस्यत्वेकदेशविचिंतितम् ॥ स्वीकृत्य मुनयोब्रूयुस्तन्मतंनविरुध्यतइतिब्राह्मे ॥ ३३ ॥ अ० ८ ॥

द्योक्तानुष्ठानेनतत्रोक्तादन्यदपिफलंप्रकाशविशेषश्चभवतीत्येतत्कुतइत्याशंकांपरिहर्तुमुक्तार्थेस्मृतिंदर्शय ति॥यावदिति ॥ नन्वस्येवमुक्तयुक्तिपराभवः ॥ तथापिदेवानामधिकाराभ्युपगतावाप्तमजैमिनिमतविरो धइत्यतआह ॥ उक्तेति ॥ नदेवाधिकाराभ्युपगमेजैमिनिमतविरोधः ॥ तत्तद्विद्यासूक्तफलार्थप्रागाप्तज्ञा नार्थंचजैमिनिनादेवाधिकारस्यनिरस्तत्वात्सूत्रकारेणचतदुक्तमंगीकृत्यप्रयोजनांतरायतस्यसमर्थितत्वादि

त्यर्थः ॥ किमनयोर्मतयोर्विषयवैलक्षण्यकल्पनेन विरोधएवाकिंनस्यादित्यतआह ॥ सर्वज्ञस्येति ॥ अतोदे वानांसर्वविद्याधिकारित्वात्तदुपास्यत्वंहरेर्युक्तमितिसिद्धम् ॥ ३३ ॥ अ० ८ ॥

अत्रत्रिवर्णैनरस्यवेदोक्तब्रह्मविद्याऽधिकारनिरासादस्तिशास्त्रसंगतिः॥ प्रासंगिकत्वान्नाध्यायादिसंगतिरन्वे ष्टव्या ॥ श्रुत्यादिसंगतिंविषयादिकंचसूचयति॥मनुष्येति॥ वेदविद्यासुमनुष्याणामधिकृतत्वात्तेषांचांगुष्ठ सद्भावाद्युक्तंतान्प्रतिविष्णोरंगुष्ठमात्रत्वाभिधानमित्युक्तम् ॥ सचवेदविद्याधिकारोयदिशूद्रादीनांस्यात्तदा श्रुत्यादिविरोधादसौनिषेध्यएव ॥ नचोक्तेविरोधाभावादसंगतिः॥स्वन्यायेनश्रुत्यादिविरोधप्राप्तेः ॥ सएव

मनुष्याधिकारत्वादित्युक्तेऽविशेषाच्छूद्रस्याप्यहहारेत्वाशूद्रेतिपौत्रायणोक्तेरधिकारइति ॥

ह्युक्तेविरोधोनामयदुक्तंप्रमाणबाधितंस्यात् ॥ सवेदविद्याऽधिकारोविषयः॥शूद्रस्यास्तिनवेतिसंदेहः॥ मनु ष्यत्वमदर्शनंचसंदेहबीजम॥ अस्तिशूद्रस्यापिवेदविद्याऽधिकारइतिपूर्वःपक्षः॥मनुष्याधिकारत्वादितिमनु ष्याणामधिकारस्योक्तत्वात् ॥ मनुष्यत्वेचशूद्रस्यापिद्विजातिभ्योविशेषाभावात्॥नमनुष्यत्वंवेदविद्याधि कारोपयोगिकिंनुविशिष्टबुद्ध्यादिमत्त्वमेवेतिचेन्नतथापिशूद्राधिकारसिद्धिः ॥ विशिष्टबुद्ध्यादिमत्त्वेपिशूद्र स्यान्येभ्योऽविशेषात्॥नचवाच्यंशूद्रस्यवेदविचारादर्शनादनधिकारइति ॥ छंदोगोपनिषदिपौत्रायणस्यै

दिकसंवर्गविद्याध्ययनदर्शनात्॥तस्यशूद्रत्वमेवकुतइतिचेतन्न ॥ तमुहपरःप्रत्युवाचाहहारेत्वाशूद्रतवैवसह गोभिरस्त्वितिपौत्रायणंप्रतिरैक्कोक्तेरेव॥ नचाधिकाराभावेपिपौत्रायणोविद्यांविचारयामासेतिकिंनस्यादि तिवाच्यम्॥अनधिकारिणंप्रतिमुनेरुपदेशासंभवात् ॥नहितस्यापरोक्षज्ञानिनोगवाद्याशयाप्यन्यायप्रवृत्तिः संभाविता॥ अतोयुक्त्यालिंगदर्शनेनचशूद्रस्यवेदाधिकारसिद्धिरितिभावः॥उक्तइतिसप्तमीपंचम्यर्थे ॥अ

॥ ॐशुगस्यतदनादरश्रवणात्तदाद्रवणात्सूच्यतेहि ॐ॥ ३४ ॥

अतआह ॥ नासौपौत्रायणःशूद्रःशुचाद्रवणमेवशूद्रत्वम् ॥

धिकारोपयोगितयोक्तेमनुष्यत्वेऽविशेषादितिवा ॥ अहेतिसंबोधनम्॥ हारोरथश्चगोभिःसहतवैवास्त्वित्य र्थः॥हारेत्वेतिसेदुराजेत्यादिवद्विसर्गलोपेनभवति ॥ हारेत्वानावितिवा ॥ तथात्वेपृथगन्वयंसिद्धांतयत्सूत्र मवतार्यतत्फलितार्थंतावदाह ॥ अतइति ॥ यदुक्तंशूद्रस्यापिपौत्रायणस्यवेदविचारदर्शनादस्तिशूद्रस्यवे दविद्याधिकारइतितद्भवेद्यदिपौत्रायणःशूद्रोभवेन्नतुतदस्तीत्यर्थः ॥ शूद्रेतिसंबोधितत्वात्कथमसौनशूद्र इत्यतस्तदाद्रवणादितिसूत्रांशंव्याचष्टे ॥ शुचेति ॥ शोकेनाद्रवणंशूद्रशब्दप्रवृत्तिनिमित्तम् ॥ अतःशुचा

द्रवणादेवशूद्रेतिसंबोधितोनतुवर्णावरत्वाभिप्रायेणेतिनानेनपौत्रायणस्यशूद्रत्वसिद्धिरित्यर्थः ॥ पौत्राय
णस्यशुगेवांकिंनिमित्तेत्यतःशुगस्यतदनादरश्रवणादितिसूत्रांशंव्याचष्टे ॥ कम्वरेति ॥ अरेहंसैतद्वचनंकमे
नमुद्दिश्यात्थसंतंसयुग्वानंरैक्कमिवेतिहंसकृतानादरश्रवणादस्यपौत्रायणस्यशुगित्यर्थः ॥ तदितिश्रुत्युक्तप
रामर्शः ॥ श्रुतानादरस्यापितस्यकुतःशोकोत्पत्तिर्ज्ञायते ॥ परबुद्धेरप्रत्यक्षत्वात् ॥ कारणस्यचकार्यावि
नाभावाभावादित्यतःसूत्रशेषंव्याचष्टे॥ सहेति ॥ सश्रुतानादरःपौत्रायणःशयनादुत्तिष्ठन्नेवक्षत्तारंरैक्कगवेष

कम्वरएनमेतत्संतमित्यनादरश्रवणात्॥ सहसंजिहानएवक्षत्तारमुवाचेतिसूच्यतेहि॥३४॥

णायोवाचेत्युक्तत्वद्यतयाशोकोज्ञायतेऽतोनादरश्रवणात्पौत्रायणस्यशुगासीत्तयाशुचाऽऽद्रवणाच्छूद्रेति
संबोधितोनतुवर्णावरत्वाभिप्रायेणेतिनेदंशूद्राधिकारेलिंगमितिभावः ॥ शोकेनद्रवणपरिज्ञानंचमुनेःसार्व
ज्ञ्यादुपपद्यते ॥ तदुक्तम् ॥ राजापौत्रायणःशोकाच्छूद्रेतिमुनिनोदितः ॥ प्राणविद्यामवाप्यास्मात्परंधर्म
मवाप्तवानिति ॥ दीर्घस्वरार्थत्वेनाद्रवणादित्युक्तम् ॥ शुग्द्रवएवशूद्रोरुग्द्रवएवरुद्रइतिवत् ॥ ३४ ॥

ननुशूद्रशब्दोऽयंकुतोयौगिकोंऽगीक्रियतेरूढार्थएवकिंनस्यात् ॥ योगरूढ्योरूढेरेवप्राबल्यात् ॥ तथाचपौ त्रायणनिदर्शनेनशूद्रस्यवेदविद्याधिकारसिद्धिरित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ क्षत्रियत्वेति ॥ अयमश्वतरीरथइतिपौत्रायणस्याऽऽद्रवणाच्छूद्रशब्देनसंबोधनाद्वोत्तरत्रचित्ररथसंबंधित्वलिंगंश्रूयते ॥ ते नचलिंगेनतस्यक्षत्रियत्वमवगम्यते ॥ अतोरूढेरेवप्राबल्येऽपिबाधकाद्योगांगीकारोयुक्तइतिभावः ॥ श्रुता वश्वतरीरथश्रवणात्कथंचित्ररथत्वमसूत्रयदित्यतआह ॥ रथइति ॥ नचवाच्यंपौत्रायणेनदीयमानरथोत्रो

अयमश्वतरीरथइतिचित्ररथसंबंधित्वेनलिंगेनपौत्रायणस्यक्षत्रियत्वावगतेश्च ॥ रथस्त्वश्वतरीयु

॥ ॐ क्षत्रियत्वावगतेश्चोत्तरत्रचैत्ररथेनलिंगात् ॐ ॥ ३५ ॥

क्तश्चित्रइत्यभिधीयतइतिब्राह्मे ॥ यत्रवेदोरथस्तत्रनवेदोयत्रनोरथइतिचब्रह्मवैवर्ते ॥ ३५ ॥

च्यतेननुतस्यतदीयत्वमिति ॥ बाधकाभावेनतदीयत्वस्यैवप्राप्तत्वात् ॥ ननुचित्ररथत्वेपिपौत्रायणस्यवर्णा वरत्वंकिंनस्यादित्यतआह ॥ यत्रेति ॥ नचवर्णावरत्वेपौत्रायणस्यरथित्वंसंभवति ॥ रथस्यवेदाविना भावाच्छूद्रेचवेदाभावादितिभावः ॥ नन्वेवंवैदिकमात्रेविद्यमानंरथित्वंकथंक्षत्रियत्वेलिंगम् ॥ क्षत्रियस्य स्वाभाविकत्वात् ॥ अन्येषांकादाचित्कत्वात् ॥ स्वाभाविकस्यनैमित्तिकादाधिक्यात् ॥ अपलायनंचशू द्रस्यविप्ररक्षार्थमित्येतदपिपदातितयेतिगमयितव्यम् ॥ ३५ ॥

यदुक्तं रथित्वलिंगेन पौत्रायणस्य क्षत्रियत्वावगमान्न तल्लिंगेन शूद्रस्य वेदाधिकारसिद्धिरिति ॥ तदयुक्तम् ॥
शूद्रस्यापि रथित्वसंभवात् ॥ तस्य वेदाविनाभावान्नेति चेन्न ॥ शूद्रेऽपि वेदाधिकारांगीकारादित्याशंकां प
रिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ संस्कारेति ॥ न परेणांगीकृतोऽपि शूद्रस्य वेदाधिकारः संभवति ॥ वेदाध्यय
नादेरुपनयनादिसंस्कारसापेक्षत्वात् ॥ अष्टवर्षं ब्राह्मणमुपनयीतेति संस्कारमुक्त्वा तमुपनीतमध्यापयीतेत्य
ध्ययनार्थमुपनयनपरामर्शात् ॥ वेदः कृत्स्नोऽधिगंतव्यः सरहस्यो द्विजन्मनेति स्मृतेश्च ॥ अस्तु तर्हि शूद्र

अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीतेत्यध्ययनार्थं संस्कारपरामर्शात् ॥ नाग्निर्न यज्ञो न क्रिया

## ॥ ॐ संस्कारपरामर्शात्तदभावाभिलापाच्च ॐ ॥ ३६ ॥

नसंस्कारो न व्रतानि शूद्रस्येति पैंगिश्रुतौ संस्काराभावाभिलापाच्च ॥ उत्तमस्त्रीणां तु न शूद्रवत् ॥ सप
त्नीमेपराधमेत्यादिष्वधिकारदर्शनात् ॥ संस्काराभावेनाभावस्तु सामान्येन ॥

स्यापि संस्कारः ॥ नैवम् ॥ नाग्निर्न यज्ञ इति शूद्रस्य संस्काराभावाभिधानात् ॥ अतः शूद्रस्य संस्काराभावे
न वेदानधिकारान्न तस्य वेदाविनाभूतरथित्वमिति भावः ॥ नन्वेवं संस्काराभावेन वेदानधिकारश्चेदुत्तमस्त्री
णामनधिकारप्रसंगः ॥ संस्काराभावेऽपि तासामधिकारे शूद्रस्यापि तत्प्राप्तिरित्यत आह ॥ उत्तमेति ॥ नोत्त
मस्त्रीणां शूद्रवत्संस्काराभावेन वेदविद्याधिकाराभावो वक्तव्यः ॥ सपत्नीमेपराधमेत्यादिविद्यासु शच्यादी
नां तद्दृष्टत्वेनाधिकारदर्शनादित्यर्थः ॥ तर्ह्यक्तन्यायभंग इत्यत आह ॥ संस्कारेति ॥ संस्काराभावेन वेदाधि

काराभावःसामान्यन्यायेनोक्तोनतुनियमेन ॥ अतस्तस्यविशेषेणापवादेनदोषइतिभावः ॥ अनेनैव शूद्रप्रतिबंदीविमोचिताभवति ॥ सामान्यस्यबाधैकापोद्यत्वात् ॥ एवंस्त्रीणामुपनयनाभावेपिपूर्वन्याय स्यसामान्यतयाऽपवादसंभवादस्तिवेदाधिकारइत्युक्तम् ॥ अथोपनयनप्रतिनिधिसद्भावाच्चास्त्यधिकार इत्याह ॥ अस्तिचेति ॥ यथापुंसामुपनयनादिसंस्कारस्तथास्त्रीणांप्रदानकर्मैवसंस्कारइत्यर्थः ॥ अत्राप वादोक्तिःप्रदानादिशून्यतिर्यगादीनामपिसंग्रहार्था ॥ तेषामप्ययमग्नेजरितेत्यादावधिकारदर्शनात् ॥ ३६ ॥

अस्तिचतासांसंस्कारः ॥ स्त्रीणांप्रदानकर्मैवयथोपनयनंतथेतिस्मृतेः ॥ ३६ ॥ नाहमेतद्वेदभोयद्गो

## ॥ ॐ तदभावनिर्धारणेचप्रवृत्तेः ॐ ॥ ३७ ॥

त्रोहमस्मीतिसत्यवचनेनसत्यकामस्यशूद्रत्वाभावनिर्धारणेहारिद्रुमतस्यनैतदब्राह्मणोविवक्तुमर्ह तीतितत्संस्कारेप्रवृत्तेश्च ॥ ३७ ॥

यदुक्तमध्ययनस्यसंस्कारसापेक्षत्वान्नशूद्रस्यवेदविद्याधिकारइतिनतद्युक्तम् ॥ शूद्रस्यापिसंस्कारसंभवा त् ॥ नचवाच्यंतदसंभवोप्युक्तइति ॥ संस्काराभावस्यैवोक्तेर्निषेधाभावात् ॥ निषेधाभावेप्यभावोक्तिसं भवादित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ तदभावेति॥नशूद्रस्योपनयननिषेधाभावः ॥ नाहमेतद्वेदभो यद्गोत्रोहमस्मीतिवचनेनसत्यकामस्यार्जवंज्ञात्वानैतदब्राह्मणोविवक्तुमर्हतीतिशूद्रत्वाभावनिर्णयएवतदुप नयनेगौतमस्यप्रवृत्तत्वात् ॥ शूद्रोपनयननिषेधाभावेकथंतदभावनिर्धारणएवप्रवर्तेतेतिभावः ॥ ३७ ॥

ननुश्रुतावब्राह्मणमात्रस्यानुपनयनाभिप्रायप्रतीतेःकथंशूद्रत्वाभावेत्यसूत्रयदभापतञ्च॥ ब्राह्मणपदेनब्रह्मा
णनयोग्यानांत्रैवर्णिकानामुक्तेः ॥ शूद्रोवेदविद्याधिकारीविशिष्टबुद्ध्यादिमत्त्वाद्द्विजवत् ॥ अन्यथाविशि
ष्टबुद्ध्यादिमत्त्वेनदेवताऽधिकारसिद्धिर्नस्यादित्याशंकांपरिहरन्सूत्रमुपन्यस्यव्याचष्टे ॥ श्रवणेति ॥ नवि
शिष्टबुद्ध्यादिमत्त्वेनशूद्रस्यवेदाधिकारोवाच्यः ॥ अनिषिद्धत्वेसतिविशिष्टबुद्ध्यादिमत्त्वस्याधिकारप्रयो
जकत्वेनकेवलविशिष्टबुद्ध्यादिमत्त्वस्याधिकारासाधकत्वात् ॥ शूद्रस्यवेदश्रवणाध्ययनार्थावधारणानां
श्रवणेत्रपुजतुभ्यांश्रोत्रपरिपूरणम्॥अध्ययनेजिह्वाच्छेदः॥अर्थावधारणेहृदयविदारणमितिप्रतिषे

## ॥ ॐ श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॐ ॥ ३८ ॥

धात्॥नाग्निर्नयज्ञःशूद्रस्यतथैवाध्ययनंकुतः॥ केवलैवतुशुश्रूषात्रिवर्णानांविधीयतइतिस्मृतेश्च ॥
श्रुतौप्रतिषिद्धत्वात् ॥ श्रुतौशूद्रशब्दाश्रवणाद्वर्णबाह्यविषयोऽसावितिनवाच्यम् ॥ नाग्निर्नयज्ञःशूद्रस्येति
स्मृतौशूद्रस्यैवस्पष्टनिषेधाच्छ्रुतेरपितदर्थत्वोपपत्तेः ॥ अतोऽनिषिद्धत्वेसतिविशिष्टबुद्ध्यादिमत्त्वंव्यावर्तमा
नंशूद्रात्स्वव्याप्यंवेदाधिकारंचव्यावर्तयतीतिभावः॥ ननुशूद्रस्यवेदार्थावधारणादेर्निषिद्धत्वेकथंविदुरधर्म
व्याधादीनांवैदिकार्थावधारणमस्तिसंस्काराभावेनानधिकारेचकथंकर्णोक्षत्रसंस्कारयुतोऽखिलाःश्रुतीर
धिजगौ ॥ नचवाच्यमसावपवादविषयइति ॥ अविहितोपनयनानामेववेदाधिकारिणामपवादविषयत्वसं

भवादित्यतआह ॥ विदुरादीनामिति ॥ तेषांपूर्वजन्मन्युत्पन्नापरोक्षज्ञानित्वेनेतरशूद्रादिभ्योविशिष्टत्वाद्वे
दार्थावधारणादनिषिद्धमितिभावः ॥ अतोहरिःशूद्राद्यैर्वेदविद्याविज्ञेयोनभवतीतिसिद्धम् ॥ ३८ ॥
अ० १ ॥ अत्रलोकप्रसिद्ध्याभगवल्लिंगेनचसाधारणवज्रनाम्नोहरौसमन्वयप्रतिपादनादस्तिशास्त्रादि
संगतिः ॥ श्रुत्यादिसंगतिविषयादिकंचसूचयति ॥ यदिदमिति ॥ तमेवंविद्वानित्यादौभगवज्ज्ञानादेवमो
क्षइत्युक्तम् ॥ काठकेतुयदिदंकिंचेतिवज्रज्ञानान्मोक्षःश्रूयते ॥ तस्यचविष्णोरन्यत्वेऽन्यज्ञानान्मोक्षोपप

विदुरादीनांतूत्पन्नज्ञानत्वात्कश्चिद्विशेषः ॥ ३८ ॥ अ० १॥ यदिदंकिंचजगत्सर्वंप्राणएजति
निःसृतम् ॥ महद्भयंवज्रमुद्यतंयएतद्विदुरमृतास्तेभवंतीत्युद्यतवज्रज्ञानान्मोक्षःश्रूयतइति ॥

त्तेरवश्यंनिर्णेयत्वम् ॥ सवज्रोऽत्रविषयः ॥ किंविष्णुरिंद्रायुधंवेतिसंदेहः ॥ उक्तसाधारण्यंसंदेहबीजम् ॥
इंद्रायुधमेवेदंवज्रमितिपूर्वःपक्षः ॥ वज्रश्रुतेस्तत्ररूढत्वादुद्यतत्वलिंगाच्च ॥ तद्धायुधएवोपपद्यते ॥ नचव
ज्रज्ञानेनमोक्षोक्तेर्विष्णुरितिवाच्यम् ॥ लिंगमात्राच्छ्रुतिलिंगयोःप्राबल्यात् ॥ नचाऽगत्यानिरवकाशत
याप्राबल्यम् ॥ श्रुतिलिंगयोरपितथात्वात् ॥ अतोवज्रमिंद्रायुधमेवेतिनविष्णुज्ञानादेवमोक्षइतिभावः ॥

यत्किंचसर्वंजगत्प्राणेस्थितंप्राणान्निःसृतंतदिदंजगद्यस्मादेजतियत्प्रेरणयाचेष्टतेतन्महद्भयंकरंवज्रंयेविदु
स्तेऽमृताभवंतीत्यर्थः ॥ प्राणःसर्वमिदंकिंचजगच्चयस्मान्निःसृतंचेष्टतेचोदिता ॥ सर्वंजगद्यस्मान्निःसृतंसप्रा

णोयस्माच्चेष्टतइतिवा ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ अयंवज्रोभगवानेव ॥ वज्रस्यसर्व जगच्चेष्टकत्वश्रवणात् ॥ नचोद्यतत्वलिंगविरोधः ॥ उद्यमित्वार्थतयोपपत्तेरितिभावः ॥ लिंगमात्रेणकथ मयंनिश्चयः ॥ लिंगस्यनिरवकाशत्वादेवेत्याह ॥ कोह्यीति ॥ यदासामान्यतोजगच्चेष्टकत्वमेवविष्ण्वेकनि ष्ठंतदासुतरांवज्रस्योक्तंसर्वप्रवर्तकप्राणचेष्टकत्वंतदेकनिष्ठमितिभावेनाह ॥ प्राणस्येति ॥ ननूद्यतत्वलिंग

अतोब्रवीत् ॥ एजतीतिकंपनवचनादुद्यतवज्रोभगवानेव ॥ कोह्येवान्यात्कःप्राण्याद्यदेषआका शआनंदोनस्यादितिहिश्रुतिः ॥ प्राणस्यप्राणमुतचक्षुषश्चक्षुरितिच ॥ नभस्वतोपिसर्वाःस्युश्चे

॥ ॐ कंपनात् ॐ ॥ ३९ ॥

ष्टाभगवतोहरेः ॥ किमुतान्यस्यजगतोयस्यचेष्टानभस्वतइतिचस्कांदे ॥ चक्रंचंक्रमणादेषवर्ज नाद्वज्रमुच्यते ॥ खंडनात्खड्गएवैषहेतिनामास्वयंहरिरितिब्रह्मवैवर्ते ॥ ३९ ॥ अ० १० ॥

स्यसावकाशत्वेपिवज्रश्रुतेर्निरवकाशत्वान्निरवकाशेनापिलिंगेनकथंनिर्णयइत्यतःश्रुतेरपिविष्णावद्का शंस्मृत्यादर्शयति ॥ चक्रमिति ॥ नचयोगस्यरूढेर्दौर्बल्यादनिर्णयइतिवाच्यम् ॥ स्मृत्युक्तत्वेनविद्वद्रूढेरपि सत्त्वात् ॥ आयुधानामहंवज्रं वज्रंप्रहरणोत्तममितिच ॥ नन्वेवंसावकाशत्वेश्रुतिलिंगयोर्यएतद्विदुरित्यु क्तलिंगंविहायकिंलिंगांतरग्रहणेन ॥ मैवम् ॥ तदविहायैवलिंगांतरस्याप्युक्तत्वात् ॥ एतदन्यत्राप्यनुसंधे यम् ॥ अतोविष्णुरेववज्रइतितज्ज्ञानादेवमोक्षइतिसिद्धम् ॥ ३९ ॥ अ० १० ॥

अत्रजीवेशयोर्ज्ञानरूपत्वेनहृदयाहितत्वेनचसाधारणस्यज्योतिर्नाम्नोविष्णौसमन्वयप्रतिपादनादस्तिशा स्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिविषयादिकंचदर्शयति ॥ हृदयइति ॥ ज्योतिश्चरणाभिधानादितिहृदयाहि तंज्योतिःपरमात्मेत्युक्तम् ॥ वाजसनेयकेचतच्छ्रूयते ॥ योयमिति ॥ तच्चयदिविष्णोरन्यत्स्यात्तदापूर्वोक्त मप्यन्यत्प्रसज्जतइत्यवश्यंनिर्णेयम् ॥ तज्ज्योतिर्विषयः ॥ किंविष्णुर्जीवोवेतिसंदेहः ॥ उक्तसाधारण्यं संदेहबीजम् ॥ जीवएवेदंज्योतिरितिपूर्वःपक्षः ॥ ससमानःसन्नुभौलोकावनुसंचरतीतिजीवलिंगात् ॥ त

हृदयआहितंज्योतिःपरमात्मेत्युक्तम् ॥ तत्रयोऽयंविज्ञानमयःप्राणेषुहृद्यंतर्ज्यो
तिःपुरुषइत्यत्रउभौलोकावनु ॥ संचरतीतिवचनाज्जीवइतिप्रतीयतइति ॥

स्यहिकर्मवशादुभयलोकसंचरणंयुक्तम् ॥ इमंलोकमतिक्रामतिमृत्योरूपाणिसवाअयंपुरुषोजायमानः शरीरमभिसंपद्यमानःपाप्मभिःसंसृज्यते सउत्क्रामन्म्रियमाणःपाप्मनोविजहाति ॥ उभयानिपापाप्म नआनंदांश्चपश्यतिसयत्रप्रस्वपिति ॥ स्वप्नांतउच्चावचमीयमानोभयानिपश्यन्नित्यादिजीवलिंगाच्च ॥ किंचकिंज्योतिरयंपुरुषइत्यादित्यज्योतिःसम्राडितिहोवाचेत्यादिनायस्यपुरुषस्यादित्यादिज्योतिष्ट्वमुक्त म् ॥ तस्यैवात्मैवास्यज्योतिर्भवतीतिसुप्त्यादावात्मज्योतिष्ट्वोक्तौकतमआत्मेतितदात्मप्रश्नेज्योतिरुच्यते ॥

नह्यादित्यादिज्योतिष्ट्वंविष्णोःसंभवति ॥ नतत्रसूर्योभातीत्यादेः ॥ नचवाच्यंयस्यादित्यादिज्योतिष्ट्वमु
क्तंसजीवएवास्तुतस्यचात्मैवास्येत्यत्रपरमात्मज्योतिष्ट्वमुच्यते ॥ तदात्मप्रश्नेचज्योतिराम्नानात्परमात्मै
वज्योतिरिति ॥ जीवस्यपरमात्मज्योतिष्ट्वस्यैवायोगात् ॥ तथात्वेपरमात्मनोस्तमयादिशून्यस्यजायत्यपि
ज्योतिष्ट्वप्राप्त्यातदादित्येनैवायंज्योतिषास्तेचंद्रमसैवायंज्योतिषास्तेइत्यवधारणानुपपत्तेः ॥ तदाविशि

अतउच्यते ॥ विष्णुरेवज्योतिर्विष्णुरेवात्माविष्णुरेवब्रह्मविष्णुरेवबलंविष्णुरेवयशोविष्णुरे

## ॥ॐ ज्योतिर्दर्शनात् ॐ॥ ४० ॥

वानंदइतिदर्शनाच्चतुर्वेदशिखायाम् ॥ ज्योतिर्विष्णुरेवप्राज्ञेनात्मनान्वारूढउत्सर्जद्याती
तिवचनात् ॥ तस्यापिलोकसंचरणमस्त्येव ॥ ४० ॥ अ० ११ ॥

ष्यात्मज्योतिष्ट्वोक्त्यनुपपत्तेश्च॥ अत्रायंपुरुषःस्वयंज्योतिर्भवतीत्यस्यैवार्थस्यप्रत्यभिज्ञानाच्च ॥ अतोजी
वएवेदंज्योतिरितिप्रागुक्तमपिसएवेतिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ विष्णुरेवेदं
ज्योतिर्नतुजीवः ॥ ज्योतिःश्रुतेर्विष्ण्वेकवाचित्वश्रवणादित्यर्थः ॥ ज्योतिर्विष्णुश्चेदुभयलोकसंचरणलिंग
विरोधइत्यतआह ॥ प्राज्ञेनेति ॥ जीवमादायेश्वरस्यैवोभयलोकसंचरणोक्तेर्नतद्विरोधइत्यर्थः॥ नचेमंलो

कमतिक्रामतिमृत्योरूपाणीत्याद्युक्तलिंगविरोधः ॥ द्रष्टुश्चक्षुषइत्यादिवदंतर्नीतणिच्त्वेनोपपत्तेः ॥ नचा दित्यादिज्योतिष्ट्वविरोधः ॥ आदित्यादिज्योतिष्मतोऽयंपुरुषइत्युक्तस्यजीवत्वेनाभ्युपगमात् ॥ नचतस्यै वस्वयंज्योतिष्ट्वेनोक्तस्यज्योतिष्ट्वमुच्यतइतिवाच्यम् ॥ आत्मैवास्यज्योतिर्भवतीतिकतमआत्मेत्यात्मश ब्दोदितस्यविष्णुत्वात् ॥ नचैवंसत्यवधारणविरोधः ॥ अवधारणस्यबाह्यज्योतिषांमध्येसूर्यादीनांप्राधा न्यज्ञापनार्थत्वेनोपपत्तेः ॥ अन्यव्यावर्तकत्वस्यवागादिसत्त्वेनायोगात् ॥ नचविशिष्योक्तिविरोधः॥ज्यो तिरंतराभावाभिप्रायेणोपपत्तेः ॥ तदुक्तम् ॥ भावेऽभावेपिसूर्यादेर्जीवानांविष्णुरेवहि ॥ ज्योतिस्तथाप्य भावेतुतज्ज्ञेयंहिविशेषतइति ॥ नचप्रत्यभिज्ञाविरोधः ॥ अत्रायंभगवान्विष्णुर्जीवस्यस्वयमेवतु ॥ ज्यो तिर्विशेषतोभूयान्नैवान्यज्ज्योतिरत्रयदित्युक्तरीत्योपपत्तेः ॥ नन्वेवंबाधकाभावात्कथंलिंगानामन्यार्थता श्रुतिमात्रस्यबह्वलिंगानुसारेणामुख्यार्थत्वोपपत्तेरिति॥नैवम्॥ जीवपक्षेबहुबाधकसद्भावात् प्रसिद्धत्वेनक तमआत्मेतिप्रश्नायोगात् सुखदुःखविशेषवत्त्वेनोभयलोकसंचरणेसमानत्वायोगात् स्वाप्नपदार्थकर्तृत्वा भावात्स्वप्नेनशारीरमित्यादिमंत्रासंगतेश्च ॥तस्मादिदंप्रागुक्तंचज्योतिर्विष्णुरेवेतिसिद्धम् ॥४०॥अ०११॥

अत्रनित्यमहिमत्त्वलिंगेनाजश्रुत्याचविष्णुविरिंचयोःसाधारणस्यब्राह्मणनाम्नोविष्णौसमन्वयप्रतिपादना
दस्तिशास्त्रादिसंगतिः॥श्रुत्यादिसंगतिंविषयादिकंचसूचयति॥एषइति॥प्राचीनाऽधिकरणेषुविष्णोर्नित्यमहि
मत्त्वमभिसंहितम् ॥ अनन्यापेक्षयाजगत्स्रष्टृत्वादेरुपपादितत्वात्॥तद्वाजसनेयकेकस्यचिद्ब्राह्मणस्यप्रतीय
ते॥एषनित्योमहिमाब्राह्मणस्यनकर्मणावर्धतेनोकनीयानिति॥तस्यचविष्णोरितरत्वेऽन्यस्यापिनित्यमहिम
त्त्वप्रसंगादवश्यनिर्णेयत्वम्॥सब्राह्मणोविषयः॥किंविष्णुर्विरिंचोवेतिसंदेहः॥उक्तसाधारण्यंसंदेहबीजमिति

एषनित्योमहिमाब्राह्मणस्येतिब्राह्मणस्यापिनित्यमहिमाप्रतीयते ॥ सच
ब्राह्मणःसवाएषमहानजआत्मेत्यजशब्दाद्विरिंचइतिप्राप्तम् ॥

भावः ॥सयुक्तिकंपूर्वपक्षयति ॥ सइति ॥ सब्राह्मणोविरिंचोभवेत् ॥ अस्मिन्बहुशोऽजशब्दश्रवणात् ॥अ
जशब्दस्यचतस्मिन्प्रसिद्धत्वात्॥नचवाच्यंनजायतइत्यजशब्दोविष्णावपिसावकाशः ॥ तत्रयौगिकोऽसा
वितिचेत् ॥ विरिंचेपिविष्णुजातत्वयोगेनप्रवृत्तत्वादिति ॥ ब्राह्मणशब्देनसहपठितस्यविष्णावनवकाशत्वा
त् ॥ वर्णादिशून्यादीश्वराद्यावर्तमानस्यब्राह्मणशब्दस्यसहश्रुताजशब्दव्यावर्तकत्वात् ॥ महत्तत्त्वाभिमा
नितयामहच्छब्दोपिविरिंचिवाची ॥ ब्राह्मणशब्देनसहश्रवणादजशब्दोयथाविरिंचिवाचीत्युच्यतेतथा

ऽऽत्मशब्देनसहश्रवणाद्विष्णुवाची।किंनस्यादितिचेन्न ॥ आत्माविरिंचःसुमनाःसुधौतश्चेतिकथ्यतइत्यादेरा
त्मशब्दस्यविरिंचेऽपिवृत्तेः ॥ अतोऽजशब्दाद्विरिंचएवायंब्राह्मणइतिभावः ॥ ननुकथंब्राह्मणोविरिंचोभवे
त्॥तदुपर्यपिबादरायणःसंभवादित्यत्रदेवानांविद्याकर्मभ्यांपदप्राप्तेःसमर्थितत्वेनब्राह्मणेश्रुतनित्यमहिमत्त्व
स्यविरिंचेऽसंभवात् ॥ सादिपदस्यचानित्यत्वनियमादित्यतआह ॥ देवानांचेति ॥ देवताऽधिकरणेदेवाना
मेवविद्याकर्मणोःसकाशात्पदप्राप्तिःसमर्थितानत्वीश्वरस्य ॥ विरिंचश्चेश्वरस्वरूपमेवातस्तस्यनित्यमहि

देवानांचविद्याकर्मणोःपदप्राप्तिःसूचितातदुपर्यपीति ॥

मत्त्वंयुक्तमेव ॥ नचविरिंचस्येश्वरस्वरूपत्वमेवकुतइतिवाच्यम् ॥ अन्यथैतत्प्रकरणानुपपत्तेरेवतत्सिद्धेः॥
तथाहि ॥ अत्रतावद्ब्राह्मणाजशब्दौश्रूयेते ॥ नित्यमहिमत्त्वलिंगंसनसाधुनाकर्मणाभूयान्नोएवासाधुना
कनीयानितिपापाद्यलेपलिंगंच ॥ नचैतद्विष्णुविरिंचान्यतरमात्रग्रहणेयुक्तम् ॥ विष्णौशब्दानवकाशाद्वि
रिंचेलिंगानवकाशात् ॥ नचभिन्नतयोभयग्रहणेनोपपत्तिः॥एकनिष्ठत्वात् ॥ अतएतदन्यथानुपपत्त्यावि
ष्णुविरिंचयोरभेदसिद्धेर्युक्तंविरिंचस्यापिनित्यमहिमत्त्वमितिसएवात्रोक्तब्राह्मणः॥ सत्त्वंरजस्तमइतिप्रकृ
तेर्गुणास्तैर्युक्तःपरःपुरुषएकइहास्यधत्ते ॥ स्थित्यादयेहरिविरिंचहरेतिसंज्ञाइत्यादेश्च ॥ तर्हिविरिंचएवेति

निर्बंधकोहेतुः ॥ मैवम् ॥ कारणशब्दानांकार्येप्रवृत्त्युपपत्तिवत्कार्यशब्दानांकारणेतदनुपपत्तेरितिभावः॥
सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ अयंब्राह्मणोविष्णुरेव सर्वस्यवशीसर्वस्येशानःसर्वस्याधि
पतिः एषसर्वेश्वरएषभूताधिपतिरेषभूतपालएषसेतुर्विधारणएषांलोकानामसंभेदायसएषनेतिनेत्यात्मा
ऽगृह्योनहिगृह्यतेऽशीर्योनहिशीर्यतेऽसंगोनहिसज्जतेऽसितोनव्यथतेनरिष्यतिसएषआत्माऽजरोऽमरोऽमृतो

अतोब्रवीति ॥ सर्वस्याधिपतिःसर्वस्येशानःसवाएषनेतिनेतीत्यादिशब्दे

## ॐ॥पत्यादिशब्देभ्यःॐ॥ ४३॥

भ्योनित्यमहिमाविष्णुरेव ॥ उतामृतत्वस्येशानोयदन्नेनातिरोहति ॥
ऽभयइतिसर्वाधिपत्यादिवाचिशब्दसद्भावात् ॥ तथाचतस्यैवनित्यमहिमत्त्वमितिभावः ॥ सर्वाधिपत्यादि
वाचिशब्दसद्भावेपिकुतोविष्णुत्वनिश्चयइत्यतआह ॥ उतेति ॥यद्भूतंभविष्यद्वर्तमानंसर्वंतत्परमपुरुषाधीन
म् ॥ नकेवलममुक्तसर्वाधिपतिःपुरुषःकिंतुमुक्तसमुदायस्यापियस्मात्संसारिसमूहमतिशेते ॥ मुक्तावनधी
नत्वेसर्वज्ञस्यबुद्धिमतःस्वाधीनसंसारिभ्योमोक्षप्रदानायोगादित्यर्थः ॥ ईशानपदोक्तसर्वप्रेरकत्वेद्वितीयाश्रु

तिः ॥ नेतिनेतीत्युक्तश्रुतदृष्टवैलक्षण्येतृतीया ॥ सर्ववशित्वादौश्रुत्यंतराण्यादिपदेनसूचयति ॥ चविष्णो ब्रह्मणत्वेऽजशब्दविरोधः ॥ नजायतइतियोगेनोपपत्तेः ॥ नचविष्णौब्राह्मणशब्दानुपपत्त्याऽजशब्दाप हारः ॥ ब्रह्मणावेदेनगम्यतइतियोगेनोपपत्तेः ॥ स्वरव्यत्ययस्याधिक्यार्थत्वात् ॥ अणगताविति धातोः ॥ अन्यथापत्यादिशब्दविरोधात् ॥ नचाभेदात्पतित्वादिर्विरिंचेपिसंभवतीतिवाच्यम् ॥ तदभेदेमानाभावा त् ॥ ब्राह्मणाजशब्दयोरुक्तरीत्याऽन्यथाप्युपपत्तेः ॥ स्मृतेस्तदंतर्गतेश्वररूपापेक्षयोपपत्तेः ॥ स्वधर्मनिष्ठः

सप्तार्धगर्भाभुवनस्यरेतोविष्णोस्तिष्ठंतिप्रदिशाविधर्मणि ॥ सयोतोऽश्रुतइत्यादिश्रुतिभ्यस्त स्यैवहितेशब्दाः ॥ ४३ ॥ अ० १४ ॥ भाष्येप्रथमाध्यायस्यतृतीयःपादः ॥ ३ ॥

शतजन्मभिःपुमान्विरिंचतामेतिततःपरंहिमामितिवचनाद्विरिंचस्यकर्मफलाभावायुक्तेर्नित्यमुक्तेनपरमा त्मनाभेदस्यैवोपपन्नत्वात् ॥ ततएतेव्यजायंतविश्वोहिरण्यगर्भइत्यादिभेदश्रुतिबाहुल्याच्च ॥ अतोविष्णुरे वायंब्राह्मणोनित्यमहिमाचेतिसिद्धम् ॥ ४३ ॥ अ० १४ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविर चितस्यश्रीमद्ब्रह्मसूत्रभाष्यस्यटीकायांश्रीमज्जयतीर्थमुनिविरचितायांतत्त्वप्रकाशिकायांप्रथमाध्यायस्य तृतीयःपादः ॥ ३ ॥

श्रीवेदव्यासायनमः ॐ ॥ एतत्पादप्रतिपाद्यमाह ॥ श्रुतीति ॥ अन्यत्रोभयत्रचप्रसिद्धानांनामलिंगा
त्मकानांशब्दानांभगवतिसमन्वयेसिद्धेऽवसरप्राप्तमन्यत्रैवप्रसिद्धानामुभयविधशब्दानांविष्णौसमन्वयंव
क्ष्यस्मिन्पादेसूत्रकारइत्यर्थः ॥ नन्विंद्रादिशब्दानामन्यत्रैवप्रसिद्धानांविष्णौसमन्वयस्यप्रथमपादएवसि
द्धत्वाद्व्यर्थइवायंपादःप्रतिभाति ॥ नचतेषामन्यत्रैवप्रसिद्धताभावः ॥ तथासतितृतीयवैयर्थ्यात् ॥ अन्य
त्रैवान्यत्रापीत्यतःप्रकारांतराभावादित्यतउक्तम् ॥ श्रुतिलिंगादिभिरिति ॥ लोकप्रसिद्ध्यान्यत्ररूढानामिं
द्रादिशब्दानांश्रुतिलिंगादिबलाद्विष्णौसमन्वयःप्राक्प्रतिपादितः ॥ इदानींतुश्रुतिलिंगादिभिरेवान्यत्रप्र

॥ ॐ श्रुतिलिंगादिभिरन्यत्रैवप्रसिद्धानामपिशब्दानांसामस्त्येनविशेषहेतुभिर्विष्णावेवप्र
वृत्तिंदर्शयत्यस्मिन्पादे ॥

सिद्धानामपिशब्दानांसमन्वयनिरूपणान्नैतत्पादवैयर्थ्यम् ॥ अनेनैवाभिप्रायेणान्यत्रैवेत्युक्तिरितिभावः॥
पूर्वंकचिच्छ्रुत्यादिनैवान्यत्रप्रसिद्धशब्दसमन्वयोक्तावप्येतत्पादीयश्रुत्यादीनांप्राबल्यादियमुक्तिः ॥ पूर्वं
स्रष्टृत्वादिगुणाभिधायकानांशब्दानांतत्संगतानांत्रसमन्वयोनिगदितोऽत्रपुनःस्वरवर्णपदात्मकानांसमस्तश
ब्दानामितिवाऽवैयर्थ्यमितिभावेनोक्तंसामस्त्येनेति ॥ यदुक्तंबलवच्छ्रुत्यादिभिरन्यत्रप्रसिद्धशब्दानांसमन्व
योऽत्रकथ्यतइति तदयुक्तम् ॥ असंभवादित्यतउक्तम् ॥ विशेषेति ॥ ततोपिप्रबलहेतुभिरित्यर्थः ॥ यदुदि
तमत्रसमस्तशब्दसमन्वयनिरूपणाद्वैयर्थ्यमिति ॥ तदसत् ॥ अंशेवैयर्थ्यादित्यतश्चाह ॥ विशेषेति ॥ प्राग

नुक्तहेतुभिरित्यर्थः ॥ स्यादेतत् ॥नसमस्तशब्दसमन्वयोक्तिरुपपन्ना॥ वैयर्थ्यात् ॥ जन्माद्यस्येत्युक्तजन्मादिकारणत्वेहिशास्त्रंप्रमाणीकृतम् ॥ जन्मादिकारणत्वाभिधायकवाक्यानामेवपरमात्मपरत्वंचतुर्थसूत्रेप्रतिज्ञातं तच्चातीतैःपादैःसमर्थितमिति ॥ मैवम् ॥ चतुर्थसूत्रेसर्वशब्दानांपरमात्मपरत्वस्यप्रतिज्ञातत्वात् ॥ जन्मादिसूत्रेहिनजन्मादिकारणत्वमात्रंविवक्षितम् ॥ किंतुकिंतद्ब्रह्मेत्याकांक्षायांनिखिलगुणपरिपूर्णत्वस्यै

तत्तुसमन्वयादितिसर्वशब्दानांपरमेश्वरेसमन्वयउक्तः ॥ तन्नयुज्यते ॥

## ॥ॐ आनुमानिकमप्येकेषामितिचेन्नशरीररूपकविन्यस्तगृहीतेर्दर्शयतिच ॐ १ ॥

ववक्तव्यत्वात् ॥ नहिब्रह्मशब्दःकतिपयगुणाभिधायकः॥ जन्मादिकारणत्वगुणग्रहणंतुतस्याखिलगुणसाधकत्वेनान्योपलक्षणाभिप्रायेणैव ॥ तृतीयसूत्रेचतत्रैवसर्वंशास्त्रंप्रमाणमुक्तम् ॥ कतिपयशब्दानांनिखिलगुणाभिधायकत्वायोगादिति ॥ सूत्रमेवादौपठति ॥ आनुमानिकमिति ॥ अत्रावरत्वादिलिंगैर्भगवतिविरुद्धतयाऽन्यत्रैवप्रसिद्धाव्यक्तादिशब्दानांभगवतिसमन्वयप्रतिपादनादस्तिशास्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिंविषयादिकंचसूचयन्सौत्रंपूर्वपक्षांशंतावद्व्याचष्टे ॥ नत्विति ॥ तत्तुसमन्वयादितिसूत्रेसर्वशब्दानांपरमा

त्मपरत्वमुक्तम्॥ सर्वांतर्गताव्यक्तादिशब्दैश्चकाठकादौकिंचिदुच्यते॥महतःपरमव्यक्तमव्यक्तात्पुरुषःपरः॥
योनिमन्येप्रपद्यंतेशरीरत्वायदेहिनः॥ स्थाणुमन्येतुसंयांतियथाकर्मयथाश्रुतम् ॥ जीवाएवतुदुःखिनइति॥
तस्याव्यक्तादेर्विष्णोरन्यत्वेनतस्यसर्वशब्दवाच्यतेत्यवश्यनिर्णेयता ॥ तदव्यक्तजीवादिपदवाच्यंविषयः ॥
किंविष्णुरन्यद्वेतिसंदेहः ॥ समन्वयसूत्रमन्यत्रैवप्रसिद्धिश्चसंदेहबीजम् ॥ प्रधानाद्येवाव्यक्तादिपदवाच्यं
ननुविष्णुरितिपूर्वःपक्षः ॥ अव्यक्तादिशब्दानांप्रधानादावेवप्रसिद्धेः ॥ नचतेषांविष्णावपिसावकाशतेति
वाच्यम् ॥ तत्राव्यक्तस्यपुरुषावरत्वश्रवणात् ॥ तच्चप्रधानस्ययुक्तंनतुविष्णोः ॥ नतत्समश्चाभ्यधि
यतोऽव्यक्तात्पुरुषःपरइतिसांख्यानुमानपरिकल्पितंप्रधानमप्येकेषांशाखिनामुच्यतइतिचेत् ॥ न ॥
कश्चदृश्यतइत्यादिप्रमाणविरोधात् ॥ तथाऽव्यक्तस्यमहत्परत्वश्रवणात् ॥ तदपिप्रधानस्यैवोपपन्नम् ॥
महांतंचसमावृत्यप्रधानंसमवस्थितमित्यादेः ॥ विष्णोरव्यक्तादपिपरत्वात् ॥ जीवानांचदुःखिबद्धत्वादि
प्रतीतेः ॥ तच्चविष्णोःप्रमाणविरुद्धम् ॥ तस्मादव्यक्तादिशब्दवाच्यंप्रधानाद्येव ॥ यतएवंकेषांचिच्छा
खास्वव्यक्तादिशब्दैःप्रधानाद्येवोच्यतेऽतोयत्तत्तुसमन्वयादितिसर्वशब्दानांपरमेश्वराभिधायकत्वमुक्तंत
न्नयुज्यतइतिभावः ॥ सिद्धांतांशंव्याचष्टे ॥ नेति॥ यतःपरमात्मैवाव्यक्तादिशब्दवाच्योनप्रधानादि॥ अ
तःपरमात्मनाएवाव्यक्तादिशब्दवाच्यत्वग्रहणात् ॥ यत्सर्वशब्दानांपरमात्मपरत्वंनयुज्यतइत्युक्तंतन्नेत्य

र्थः ॥ यस्मिन्समन्वयःप्रतिज्ञातस्तस्यैवेतिस्वपदंपरमात्मनएवेतिव्याख्यातम् ॥ परमात्मनएवाव्यक्तादिश ब्दवाच्यत्वेकथंप्रधानादौतद्व्यवहारः ॥ अवाचकत्वेप्यनभिज्ञानादिनाव्यवहारइत्युक्तमितिचेन्न ॥ तथास त्यवाचकत्वाविशेषेणघटादिशब्दानांपटादौव्यवहारप्रसंगादित्याशंकानिरासायोक्तंशरीररूपकविन्यस्ते ति॥ तद्व्याचष्टे ॥ पारतंत्र्यादिति ॥ यथाशरीरंपुरुषतंत्रंतथापरमात्मतंत्रत्वेनशरीरसमेप्रधानादौस्थितस्येत्य र्थः ॥ नन्वत्रपारतंत्र्याभिप्रायेणप्रधानादेःपरमात्मशरीररूपत्वमसूत्रयदितिकुतोज्ञायतेशरीरत्वाभिप्रायेण

तस्यैवपारतंत्र्याच्छरीररूपकेऽव्यक्तेविन्यस्तस्यपरमात्मनएवाव्यक्तशब्देनगृहीतेः ॥ कप्रत्ययः कुत्सने ॥ परमात्मनएवाव्यक्तशब्दस्तत्तंत्रत्वेनतच्छरीररूपत्वादितरस्याप्यव्यक्तशब्दः ॥

किंनस्यादित्यतआह ॥ कप्रत्ययइति ॥ नप्रधानादेःपरमात्मशरीरत्वाभिप्रायेणैतत्पदंप्रायुंक्तसूत्रकारः ॥ यावतातत्कप्रत्ययेनकुत्सयामास ॥ नहिकुत्सनार्हंपरमात्मशरीरमितिभावः ॥ अन्यथारूपपदवैयर्थ्याच्च ॥ शरीररूपकविन्यस्तपदंव्याख्यायतदभिप्रायमाह ॥ परमात्मनएवेति ॥ यद्यपिपरमात्मनएवाव्यक्तादिश ब्दावाचकास्तथापिनप्रधानादौतद्व्यवहारायोगः॥ प्रधानादौपरमात्मनोविन्यस्तत्वयातत्संबंधेनतत्रापिशब्द प्रवृत्तेः ॥ नचवाच्यमुभयोरपिमुख्यवाच्यत्वंविपरीतंवा किंनस्यादिति ॥ प्रधानादेर्भगवत्तंत्रत्वेनोभयोर्मु

स्यवाच्यत्वस्योक्तविपर्ययस्यचायोगादितिभावः ॥ तदुक्तंगारुडे ॥ एवमेवहिशब्दानांप्रसिद्धिरपिलौकि
की ॥ वाचकत्वंप्रधानस्यात्वितरस्यतदन्वयादिति ॥ नचमंचादावुक्तव्यभिचारःशंकनीयः ॥ समाकर्षादि
तिवक्ष्यमाणन्यायस्यात्राभिप्रेतत्वेनलक्षणानाश्रयणादिति ॥ अत्रसर्वत्राव्यक्तपदंजीवाद्युपलक्षणार्थम् ॥
ननुपरमात्मनएवाव्यक्तादिशब्दाभिधेयत्वंप्रधानादेस्तुतत्संबंधादेवेतियुज्यते ॥ यदिप्रधानादेरल्पत्वंपरमा
त्मनःस्वातंत्र्यंप्रधानादिविन्यस्तत्वंचभवेत्तदेवकुतइत्यतआह ॥ तुच्छ्येनेति ॥ अल्पेनाऽव्यक्तेनविभुर्ब्र

तुच्छ्येनाभ्वपिहितंयदासीदितिदर्शयतिच॥ अव्यक्तमचलंशांतंनिष्कलंनिष्क्रियं
परम् ॥ योवेदहं रमात्मानंसभयादनुमुच्यतइतिपिप्पलादशाखायाम् ॥ अक्षरं
ब्रह्मपरममित्युक्त्वाअव्यक्तोक्षरउच्यतइतिवचनाच्च ॥ १॥

ह्मापिहितमासीदित्यर्थः ॥ यआत्मनितिष्ठन्नित्यादिश्रुत्यंतरंचात्रोदाहर्तव्यम् ॥ परमात्मनोऽव्यक्तादिशब्द
वाच्यत्वेसिद्धेभवेत्प्राचीनचिंता ॥ तदेवकुतइत्यतोदर्शयति चेतिशब्दाभ्यांसूचितेश्रुतिस्मृतीपठति ॥ अ
व्यक्तमिति ॥ अचलमीश्वरभावात् ॥ शांतंनिर्विकारम् निष्क्रियम् ॥ अक्लिष्टकारित्वादेः ॥ आत्मान
मादानादेः ॥ यस्याक्षरस्यब्रह्मत्वमुक्तंतस्यैवाव्यक्तत्वमुच्यतइत्यर्थः ॥ अनेनजीवेनात्मनेत्यादिश्रुतिर्जीवो ॥१०७॥
विनयितासाक्षीत्यादिस्मृतिश्चोदाहर्तव्या ॥ १ ॥

नन्वस्त्वेवंश्रौतस्मार्तंप्रयोगबलेनाव्यक्तादिशब्दानांभगवद्वाचित्वम् ॥ तत्रतेषांमुख्यत्वंतुकुतःप्रयोगस्यामुख्य वाच्येपिसंभवादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ सूक्ष्ममिति ॥ अव्यक्तत्वस्यैवाव्यक्तशब्दप्रवृत्तिनिमित्तत्वात्कथंसूक्ष्ममेवाव्यक्तशब्देनोच्यतइतितत्राह ॥ तद्धीति ॥ अस्तुसूक्ष्मस्यैवाव्यक्तशब्दप्रवृत्तिनिमित्ताव्यक्तार्हत्वात्तदव्यक्तशब्दवाच्यम् ॥ तथापिप्रकृतेकिमायातमित्यतआह ॥ सूक्ष्मत्वंचेति॥

सूक्ष्ममेवाव्यक्तशब्देनोच्यते ॥ तद्ध्यव्यक्ततामर्हति ॥ सूक्ष्मत्वंचमुख्यंतस्यैव ॥

## ॥ ॐ सूक्ष्मंतुतदर्हत्वात् ॐ ॥ २ ॥

युक्तंपरमात्मन्यव्यक्तशब्दस्यमुख्यत्वम् ॥ तदर्थभूताव्यक्तत्वस्यपरमात्मनिसत्त्वात्॥ अव्यक्तत्वोपयोगिनःसूक्ष्मत्वस्यतत्रसद्भावात् ॥ नचवाच्यंप्रधानस्यापिसूक्ष्मत्वेनाव्यक्तत्वसंभवात्कथमव्यक्तशब्दस्यपरमात्मनिमुख्यतेति ॥ विष्णोरतिसूक्ष्मत्वेनात्यंतमव्यक्तत्वादतिशयेनप्रवृत्तिनिमित्तवत्त्वेवशब्दस्यमुख्यत्वादितिभावः ॥ कुतोविष्णोर्मुख्यसूक्ष्मत्वंयेनतस्यमुख्याव्यक्तत्वमितितत्राह ॥ यदिति ॥ यत्तल्लोकोत्तमंनित्यंविष्णोःस्वरूपंपरमसूक्ष्मंवेदितव्यमेषोऽणुरात्माचेतसावेदितव्यइत्याद्यामनंति ॥ यच्चपृथक्जनानविदुस्तदेतदु

पायसिद्धाज्ञानिनःपश्यंतीत्यर्थः ॥ एवंजीवादिशब्दप्रवृत्तिनिमित्तानांप्राणधारणादीनांभगवतिमुख्यत्वेन तच्छब्दानांतत्रमुख्यत्वंद्रष्टव्यम् ॥ तदुक्तम् ॥ सजीवनामाभगवान्प्राणधारणहेतुतः ॥ उपचारेणजीवाख्यासंसारिणिनिगद्यतइत्यादि ॥ नन्वस्तुविष्णौमुख्यंशब्दप्रवृत्तिनिमित्तंप्रधानादावपिकिंचिदव्यक्तत्वादिसद्भावादव्यक्तात्पुरुषःपरइत्यादौतद्वाच्यंकिनस्यादितिचेत् ॥ तत्किंपरमात्मनोमुख्यवाच्यत्वमंगीकृत्याऽमुख्यतयान्यस्यापिवाच्यत्वंस्यादित्युच्यते ॥ उतान्यस्यैव ॥ आद्येनविरोधः ॥ नचोभयार्थत्वेवाक्यभे

यत्तत्सूक्ष्मंपरमंवेदितव्यंनित्यंपदंवैष्णवंह्यामनंति॥यत्तल्लोकानविदुर्लोकसारंविदंत्येतत्कव

योयोगनिष्ठाइतिचपिप्पलादशाखायाम् ॥ मुख्येचविद्यमानेनामुख्यंयुक्तम् ॥ २ ॥

दः ॥ प्रधानविशिष्टस्यैवपरमात्मनःशब्दवाच्यत्वाभ्युपगमात् ॥ द्वितीयंनिराह ॥ मुख्यंचेति ॥ मुख्यतोऽव्यक्तादिशब्दार्थवतिविष्णावव्यक्तादिशब्दवाच्यतयासंभवतितत्परित्यागेनामुख्यतःशब्दार्थवतांप्रधानादीनामत्रवाच्यतयाग्रहणंनयुक्तम् ॥ मुख्यासंभवएवगौणाश्रयणस्यन्याय्यत्वादितिभावः ॥ २ ॥ नन्वस्त्वेवंपरमात्मन्येवाव्यक्तादिशब्दानांमुख्यत्वम् ॥ तथाप्यव्यक्तात्पुरुषःपरइत्यादौप्रधानाद्येवोच्यतेनविष्णुः ॥ अव्यक्तादीनांमहत्परत्वस्यपुरुषावरत्वस्यदुःखिबद्धत्वादेश्चश्रवणात् ॥ तस्यचप्रधानादावेवसंभवात् ॥ सर्वप्रमाणविरोधेनपरमात्मन्यसंभवात् ॥ अतोविष्णोर्मुख्यार्थत्वेपितद्ग्रहणेपरावरत्वादिश्रुतेर्नैरर्थ्या

दमुख्यमपिप्रधानादियाह्यमित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ तदधीनत्वादिति ॥ नाव्यक्तादिशब्दैः परमात्मनोवाच्यत्वग्रहणेपरावरत्वादिश्रुतिनैरर्थ्यंयेनमुख्यार्थंपरित्यज्यामुख्यार्थाभ्युपगतिः ॥ किंनामत स्मिन्नेवावरत्वादिवाचिशब्दजातमर्थवत् ॥ प्रधानादिगतपरावरत्वादिधर्माणांभगवदधीनत्वात्॥ अन्यगत शब्दार्थनियंतृत्वंतदधिकरणत्वंचेतिद्विधाहिशब्दप्रवृत्तिनिमित्तम् ॥ तत्रपरमात्मनोनिरनिष्ठोनिरवद्यइत्या दिनाऽवरत्वादिदोषात्पस्पृष्टिनियमात्तदन्यथानुपपत्त्यातत्तन्नियामकत्वेनतत्तच्छब्दवाच्यतापातात् ॥ नच

तदधीनत्वाच्चाव्यक्तत्वादीनांतस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत् ॥

## ॥ ॐ तदधीनत्वादर्थवत् ॐ ॥ ३ ॥

तद्वाच्यतयान्यथोपपत्तिः॥नामानिसर्वाणियमाविशंतीत्यादिश्रुतिविरोधात्॥ नचसंकोचः॥सर्वाणीत्यस्य निरवकाशत्वात्बाधकाभावाच्चेतिभावः॥अत्राव्यक्तत्वग्रहणेनाव्यक्तशब्दस्यद्वेधापिपरमात्मनिवृत्तिरिति दर्शयति ॥ अतएवभाष्येचशब्दः॥ अनेनप्रधानादेरतिसूक्ष्मत्वाद्यभावेपिनामुख्यार्थत्वमल्पपंकजेपिपद्मेपं कजशब्दस्यामुख्यार्थताऽदर्शनादितिशंकाचनिरस्ताभवति ॥ ननुभवेदेतत्प्रधानादिगतशब्दप्रवृत्तिनिमित्त प्रेरकत्वेनेश्वरस्यावरत्वादिशब्दवाच्यत्वम् ॥ यद्यन्यगतशब्दप्रवृत्तिनिमित्तप्रेरकेऽसौशब्दोवर्ततइतिसिद्धो

त्तदेवकुतइतितत्राह ॥ यदधीनइति ॥ यथापरमात्माजीवगतप्राणधारणस्यतदधीनत्वेनाऽनेनजीवेनेत्या
दौजीवशब्देनोच्यते ॥ यथाचभृत्यगतजयस्यराजाधीनत्वादसौजयीत्युच्यतइत्यर्थः॥नचान्यगतशब्दप्रव
त्तिनिमित्तप्रेरकेशब्दप्रवृत्तिरमुख्या ॥ राजनिविजयिशब्दस्यबहुलप्रयोगात् यमादौमृत्युप्रमुखशब्दानां
चतथात्वात् बहुलप्रयोगसिद्धस्यैवमुख्यत्वात् अवरयतीत्यादिव्युत्पत्त्युपपत्तेश्च ॥ तथाचश्रुतिः ॥ सबद्धः
सदुःखीसबंधयतिसदुःखयतीतिसजीवःसाप्रकृतिःसजीवयतिसप्रकरोतिसोऽवरःसोऽनित्यःसोऽवरयतिसोऽ
नित्ययतीत्यादिका॥ एवंप्रयोगप्रवृत्तिनिमित्तातिशयाभ्यांपरमात्मन्येवाव्यक्तादिशब्दानांमुख्यत्वात् ॥ मु
यदधीनोगुणोयस्यतद्गुणीसोभिधीयते ॥ यथाजीवःपरात्मेतियथाराजाजयीत्यपिइ

## ॐ ज्ञेयत्वावचनाच्च ॐ ॥ ४ ॥

तिचस्कांदे ॥ ३ ॥ अन्यस्यनवाच्यत्वंयुज्यते ॥ ४ ॥
ख्यार्थस्यैवग्राह्यत्वात्सएवाव्यक्तात्पुरुषःपरइत्यादावुच्यतेनप्रधानादीत्युक्तम ॥ ३ ॥ तदेवयुक्त्यंतरेणोप
पादयत्सूत्रमुपन्यस्यतच्छेषंपूरयति॥ज्ञेयत्वेति॥विष्णोरेवाव्यक्तादिश्रुतिवाच्यत्वंनप्रधानादेः॥तमेवैकंजान
थआत्मानमन्यावाचोविमुंचथामृतस्यैषसेतुरितिविष्णोरेवमोक्षार्थंज्ञेयत्ववचनात् प्रधानादेस्तदभावात् य
ज्ज्ञानेनमोक्षस्तज्ज्ञापनएववेदस्यप्रवृत्तत्वादितिभावः ॥ तथाचश्रावयति॥ नतादृशीप्रीतिरीड्यस्यविष्णोर्गु
णोत्कर्षज्ञातरियादृशीस्यात् ॥ तत्प्रीणनान्मोक्षमाप्नोतिसर्वस्ततोवेदास्तत्पराःसर्वएवेति ॥ ४ ॥

उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंतावद्व्याचष्टे ॥ वदतीति ॥ नप्रधानस्यमोक्षार्थंज्ञेयत्वेवचनाभावः ॥ अनाद्यनंतंमहतःपरंध्रुवंनिचाय्यतंमृत्युमुखात्प्रमुच्यतइतिवचनस्यसद्भावात् ॥ नचवाक्यमत्रप्रधानंप्रतिपाद्यंकुतइति ॥ महत्परत्वलिंगादेव ॥ महांतंचसमावृत्यप्रधानंसमवस्थितमित्यादेः ॥ पूर्वोक्तरीत्यातदपिविष्णुपरतयानेतुंशक्यमितिचेत् ॥ सत्यम् ॥ अन्यस्यापिवाच्यत्वाभ्युपगमात्अतःप्रधानस्यापिमोक्षार्थंज्ञेयत्ववचनात्तस्यापिमुख्यतोवेदवेद्यतेतिभावः ॥ परिहारांशंव्याचष्टे ॥ नेति ॥ नैतद्वाक्य

महतःपरंध्रुवंनिचाय्यतंमृत्युमुखात्प्रमुच्यतइतिज्ञेयत्वंवदतीतिचेन्न ॥ प्राज्ञःपरमात्माहितत्रोच्यते॥

## ॥ ॐ वदतीतिचेन्नप्राज्ञोहि ॐ ॥ ५ ॥

अणोरणीयान्महतोमहीयानितितस्यैवहिमहतोमहत्वम्॥सर्वस्मात्परस्यमहतोपिपरत्वंयुज्यते॥५॥

बलेनप्रधानस्यमोक्षार्थंज्ञेयत्वंमंतव्यम् ॥ यतस्तत्रवाक्येपरमात्मैवोच्यतेनप्रधानमित्यर्थः ॥ महतःपरत्वलिंगात्प्रधानमत्रोच्यतइति ॥ तत्राह ॥ अणोरिति ॥ नन्वणोरणीयानितिश्रुतौसर्वस्मात्स्थूलात्स्थूलत्वमेवोच्यतेनमहत्त्वपरत्वम् ॥ स्थूलस्यैवाणुप्रतियोगित्वात् ॥ अतोनमहत्परत्वलिंगंविष्णौसावकाशमित्यतआह ॥ सर्वस्मादिति ॥ सत्यमत्रसर्वस्मात्स्थूलात्स्थूलत्वंविष्णोरुच्यतइतितथाप्यनेनमहत्परत्वंचसिध्यतियदाखलुसर्वस्मात्स्थूलात्परस्तदामहत्त्वपरत्वस्यसुतरांयुक्तत्वादितिभावः ॥ ५ ॥

ननुविशिष्यमहत्परत्वस्यप्रधानलिंगस्यामुख्यार्थतांस्वीकृत्यानाद्यनंतादिवाक्यस्यविष्णुपरत्वग्रहणेकार
णाभावात्प्रधानमेवात्रोच्यतइत्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ प्रकरणादिति ॥ नात्रविष्णुग्रहणे
कारणाभावोयेनान्यस्यवाच्यताशंकेत ॥ एतत्प्रकरणस्यवैष्णवत्वात् एतत्प्रकरणोक्तार्थोपासकस्यविष्णुप
दप्राप्त्युक्त्यातदवगमात् अन्यप्रकरणत्वेतदयोगादितिभावः ॥ नचलिंगात्प्रकरणस्यदौर्बल्येनासाधकत्वम् ॥
लिंगस्योक्तरीत्यासावकाशत्वात्प्रकरणस्यनिरवकाशत्वात् ॥ निरवकाशप्रकरणस्यापिसावकाशलिंगबा
धकत्वोपपत्तेः ॥ नचवाच्यंविशिष्यमहत्परत्वलिंगंचप्रधानपरेपरमात्मनिनिरवकाशमिति ॥ प्रधानपरस्या

सोऽध्वनःपारमाप्नोतितद्विष्णोःपरमंपदमिति ॥ तस्यह्येतत्प्रकरणम् ॥ ६ ॥

## ॥ ॐ प्रकरणात् ॐ ॥ ६ ॥

पियोबुद्धेःपरतस्तुसइत्यादाविवमहत्परत्वोक्तिसंभवात् ॥ पूर्वंमहत्परत्वेनपरमात्मनोऽप्रकृतत्वात्प्रधानस्यत
द्भावात्तमितिपरामर्शेनैतत्सिद्धमित्युक्तार्थविस्मरणविजृंभितंसाधकमस्माकंनपरस्य ॥ सत्यम् ॥ तद्वदत्रा
प्युभयोक्तिःस्यादितिचेन्न ॥ अविरोधएवोभयार्थताभ्युपगमात् ॥ नचप्रकरणस्यापिप्र[illegible]न्योक्तिसं
भवात्सा[illegible]काशत्वेनपुनर्लिंगमेवप्रबलमितियुक्तम् ॥ प्रासंगिकोक्तेरत्रप्रयोजनादर्शनात् ॥ अन[illegible]नंतंमहतः
परंध्रुवमितिपरोहिदेवःपुरुहूतोमहत्तमइतिश्रुतेश्चेति ॥ ६ ॥

हेत्वंतरेणानाद्यनंतादिवाक्येऽन्यस्यापिप्रतिपाद्यतांपराकुर्वत्सूत्रमुपन्यस्यव्याचष्टे॥ त्रयाणामेवेति॥नकेव
लमेतत्प्रकरणस्यवैष्णवत्वेनप्रधानस्याप्रतिपाद्यताकिंत्वेतदुपनिषद्यपिपितृसौमनस्यादित्रयस्यैवोपन्यासा
च्च ॥ तदेवकुतः॥एतत्त्रयविषयएवनाचिकेतसःप्रश्नात् अपृष्टस्यचोपन्यासायोगादितिभावः॥त्रयाणामेवोप
न्यासइत्युक्तेत्रयेपिप्रधानंकिंनस्यादितिशंकानिरासायैतत्प्रकारंदर्शयन्नेवमित्याह॥तच्चव्याचख्यौ॥ पितृ

त्रयाणामेवपितृसौमनस्यस्वर्ग्याग्निपरमात्मनांप्रश्नउपन्यासश्च ॥ अवि

**॥ ॐ त्रयाणामेवचैवमुपन्यासःप्रश्नश्च ॐ ॥ ७॥**

ज्ञातप्रार्थनंचप्रश्नइत्यभिधीयतइतिवचनान्नविरोधः ॥ ७ ॥

सौमनस्येत्यादिना ॥ येयंप्रेतेविचिकित्सेत्यादिनामृतजीवस्यास्तित्वादौतृतीयप्रश्नस्यप्रवृत्तत्वात्कथंपरमा
त्मप्रश्नइतिशंकातद्भाष्यएवपरिहृता ॥ ननुपितृसौमनस्यंवरत्वेनप्रार्थ्यतेऽतःकथंप्रार्थनंप्रश्नइत्यतआह ॥
अविज्ञातेति ॥ यत्प्राप्स्यतेनवेत्यविज्ञातंतत्प्रार्थनमपिप्रश्नइत्यभिधीयतइतिवचनान्नप्रार्थनस्यापिप्रश्न
त्वोक्तिर्विरुद्धेत्यर्थः ॥ ७ ॥

यदुक्तंविष्णोरेवमुख्यतोऽव्यक्तादिशब्दवाच्यत्वमिति तदयुक्तम्॥अव्यक्तादिशब्दानांप्रधानादावेवप्रसिद्धत्वात् ॥ नचवाच्यंशब्दप्रवृत्तिनिमित्तस्येश्वरेमुख्यत्वेनतत्रशब्दानांमुख्यत्वमुक्तमिति ॥ नहियत्रशब्दःप्रसिद्धस्तत्रामुख्योमुख्यतःप्रवृत्तिनिमित्तवतिमुख्यइतिदृष्टचरमित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे॥ महद्वच्चेति ॥ चशब्दोदार्ष्टांतिकसमुच्चयार्थः ॥ युक्तमेवाव्यक्तादिशब्दानांमुख्यतःपरमात्मवाचित्वम् ॥ तत्प्रवृत्तिनिमित्तस्यतत्रमुख्यत्वात् ॥ नचान्यत्रप्रसिद्धत्वविरोधः॥महांतंविभुमित्यादौश्रुतमहच्छब्दस्यमहत्तत्त्वे

यथामहच्छब्दोमहत्तत्त्वेप्रसिद्धोपिपरममहत्वात्परमात्मनएवमुख्यः ॥ एवमितरेऽपि ॥८॥

## ॥ ॐ महद्वच्च ॥ ॐ ॥ ८ ॥

प्रसिद्धत्वेपितत्प्रवृत्तिनिमित्तमहत्त्वस्यपरमात्मनिमुख्यत्वेनमुख्यतस्तद्वाचकत्ववदव्यक्तादिशब्दानामपिप्रधानादौप्रसिद्धत्वेपिप्रवृत्तिनिमित्तस्यहरौमुख्यत्वेनमुख्यत्वोपपत्तेरितिभावः॥नचमंतव्यंप्रवृत्तिनिमित्ताधिक्येनमुख्यतःशब्दवाच्यत्वाभावेपिदृष्टांतोस्ति ॥ अतिसहनवतिपुरुषेसिंहशब्दस्यामुख्यत्वादिति ॥ नह्यस्माभिःप्रवृत्तिनिमित्ताधिक्यमात्रेणशब्दस्यमुख्यतःपरमात्मवाचित्वमुच्यतेकिंतुसिद्धपरमात्मवाचित्वेमुख्यत्वमात्रस्यतेनसाधनादिति ॥ ८ ॥

ननुभवेदियमव्यक्तादिशब्दानांपरमात्मनिमुख्यत्वाचिता ॥ यदितेषांतद्वाचित्वमेवभवेत् ॥ नचतद्युक्तंतेषा मन्यत्रैवप्रसिद्धत्वात्॥नचवक्तव्यमव्यक्तमचलमित्यादिप्रयोगात्तद्वाचित्वावगमइति॥ वृत्त्यंतरेणापिप्रयो गोपपत्तेः॥ नचयोगयुक्तप्रयोगेणतन्निश्चयः॥सहनवतिपुंसिप्रयुक्तस्यापिसिंहशब्दस्यतद्वाचकत्वेनदर्शना त् ॥ अतःप्रसिद्धेरेववाचकताऽध्यवसायकत्वात्तस्याश्चप्रधानादावेवसत्वान्नाव्यक्तादिशब्दाविष्णुवाच

यथाचमसशब्दोऽन्यत्रप्रसिद्धोऽपिइदंतच्छिरएषह्यर्वाग्बिलश्चमसऊर्ध्वबुध्नइतिश्रुतेःशि रोवाचकः एवमव्यक्तादिशब्दाः सर्वेऽन्यत्रप्रसिद्धाअपिनामानिसर्वाणियमाविशंतितंवै

## ॥ ॐ चमसवदविशेषात् ॐ ॥१॥

विष्णुंपरममुदाहरंतीतिश्रुतेःपरमात्माभिधायकाएव ॥ अविशेषाच्छ्रुतेः ॥१॥ अ० १॥

काःकिमुमुख्याइत्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ चमसवदिति ॥ अव्यक्तादिशब्दाःपरमात्मवा चकाभवंत्येव ॥ नामानिसर्वाणीतितस्याशेषशब्दवाच्यत्वश्रुतेः ॥ नचान्यत्रप्रसिद्धिर्विरोधः ॥ यथाखलु चमसशब्दोयज्ञपात्रेप्रसिद्धोपिश्रुतिबलेनशिरोवाचकस्तथाऽव्यक्तादिशब्दानांप्रधानादौप्रसिद्धानामपि श्रुतिबलेनविष्णुवाचकत्वनिश्चयात् ॥ नचवक्तव्यंप्रयोगमात्रस्यवृत्त्यंतरेणापिसंभवान्नचमसशब्दःशिरो वाचकइति ॥ अभिधानादाविवानुशासनरूपत्वात् ॥ नहिगौण्यादिवृत्तीनामनुशासनमस्ति ॥ अन्यथा

कलशकरीरादिशब्दानामनुशासनसिद्धानांघटाद्यवाचकत्वप्रसंगात् ॥ अथापिस्यात् ॥ अनुशासनरूप
त्वाच्छ्रुतिबलेनचमसशब्दस्यशिरोवाचकत्वेपिनतथाव्यक्तादिशब्दानांपरमात्मवाचित्वम् ॥ नामानीतिप्र
योगस्यवृत्त्यंतरेणापिसंभवादिति ॥ मैवम् ॥ नामानिसर्वाणीतिश्रुतेरप्यनुशासनरूपत्वेतच्छ्रुतेरविशेषात् ॥
तद्वदस्याप्यनुशासनरूपत्वात् ॥ नचात्राव्यक्तादिशब्दाश्रवणदोषः ॥ सर्वशब्दसद्भावात् ॥ संकोचेकार
णाभावादितिभावः ॥ अर्वाग्बिलश्चमसऊर्ध्वबुध्नइतिव्याख्येयमंत्रेयदुक्तंतदिदंप्रतीयमानंशिरःकुतः ॥ ए
षह्यर्वाग्बिलश्चमसऊर्ध्वबुध्नइत्यर्थःएषइतिचमसविवक्षया ॥ दक्षिणान्नंवनुतेयोनआत्मेतिवत् बिलंमुखा

वसंतेवसंतेज्योतिषायजेतेत्यादिकर्माभिधायकस्यकर्मक्रमादिविरोधान्नयुज्यतइति ॥

दि ॥ तस्मादव्यक्तादिशब्दवाच्योहरिर्भवत्येवेतिसर्वशब्दवाच्यत्वंतस्यैवोपपन्नमितिसिद्धम् ॥१॥अ० १ ॥
अत्रकर्मक्रमादिलोपप्रसंगेनकर्मतदंगेष्वेवप्रसिद्धानांज्योतिष्टोमादिसर्वशब्दानांभगवतिसमन्वयप्रतिपाद
नादस्तिशास्त्रादिसंगतिः ॥ श्रुत्यादिसंगतिंविषयादिकंचसूचयति ॥ वसंतइति ॥ तत्तुसमन्वयादितिसर्वश
ब्दानांपरमात्मवाचकत्वमुक्तम् ॥ सर्वमध्यपतिताज्योतिरादिशब्दाःश्रुतिषुपठ्यंतेतेषांचान्यपरत्वेनविष्णोः
सर्वशब्दवाच्यतासिध्येदित्यवश्यंनिर्णेयता ॥ तज्ज्योतिरादिशब्दवाच्यंविषयः ॥ किंविष्णुरन्यद्वेतिसंदेहः ॥
समन्वयसूत्रमन्यत्रैवप्रसिद्धिश्चसंदेहबीजम् ॥ तत्रज्योतिरादिशब्दवाच्योनविष्णुरितिपूर्वःपक्षः ॥ तस्यज्यो

तिष्टोमादिकर्मतदंगाभिधायकत्वेनप्रसिद्धत्वात् ॥ तत्प्रसिद्धिंचापहायपरमात्मवाचित्वांगीकारेकालकर्मक्रमाधिकारिनियोज्ययजमानफलर्त्विगाद्यभिधायकाभावेनतदभावाख्यविरोधापातात् ॥ नहितस्य माणांतरेणासिध्यति ॥ तथाचविहितानुष्ठानलोपप्रसंगः ॥ किंचज्योतिरादिसर्वशब्दवाच्यत्वंपरमात्मनो योगेनैववाच्यम् ॥ रूढेरभावात् ॥ ततोगुणपूर्त्यसिद्धेश्च ॥ नचयोगमात्रेणरूढार्थापहारोयुज्यते ॥ अभ्युपेत्यैवचेदमुदितम् ॥नयोगोपिसंभवति॥ ज्योतिषांस्तोमइत्यादिरूपाहिज्योतिष्टोमादिशब्दव्युत्पत्तिः॥

## ॥ ॐ ज्योतिरुपक्रमात्तुतथाह्यधीयतएके ॐ ॥ १० ॥

अतआह ॥ ज्योतिरादिकर्मवाचकत्वेनप्रसिद्धाभिधेयोपिसएव ॥

कथमसौस्तोमादिशब्दानामन्यपरत्वानभ्युपगमेसंभवेत् ॥ अन्यथाभगवन्नामावृत्तिमात्रत्वप्राप्तेः ॥ स्तोमादिशब्दानामन्यपरत्वाभ्युपगमेकिंज्योतिष्टोमादिशब्दैरेवविशेषतोपराद्धम् ॥ नचवाच्यंपरमात्मसंबंधेनान्यत्रापिशब्दवृत्तिरभ्युपगतेतितथासतिलोकेलक्षणेतरवृत्त्यभावप्रसंगात् ॥अतोनज्योतिरादिशब्दजातस्यपरमात्मवाचित्वंयुक्तमितिनसमन्वयसूत्रंयुक्तमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ ज्योतिष्टोमादिकर्मतदंगवाचकत्वेनप्रसिद्धज्योतिरादिशब्दाभिधेयोहरिरेव ॥ यस्मादेकेशाखिनस्ता

वाएताइतितथासर्वशब्दाभिधेयत्वेनहरिमेवाभिधीयते ॥ नचशब्दानांभगवत्परत्वेदृष्ट्यभावः ॥ एषइमं
लोकमभ्यार्चदित्यादिनाशतर्च्यादिशब्दानांपरमात्मनियोगस्योक्तत्वात् ॥ नचशब्दानामन्यत्ररूढत्वेनयो
गांगीकारायोगः ॥ तस्माच्छतर्चिनइत्याचक्षतएतमेवसंतमितियोगेनरूढेरपहारोक्तेः ॥ एतमेवपरमात्मानं
मुख्यतोयौगिकार्थंसंतंशतर्च्यादिनामभिराचक्षतेनतुमुख्यतोरूढत्वेपिमुनीनितिप्रतीतेः ॥ यद्यपिपंकजा

एषइमंलोकमभ्यार्चदित्युपक्रम्यतावाएताःसर्वाऋचःसर्वेवेदाःसर्वेघोषाः एकैवव्याहृ
तिःप्राणएवप्राणऋचइत्येवविद्यादितिह्यधीयतएके ॥ १० ॥

दिशब्देयोगापहारित्वंरूढेर्दृश्यतेतथाप्यत्राचक्षतइतिविद्वद्रूढिसहितत्वेनोक्तयोगस्यरूढ्यपहारित्वंयुक्तमे
व ॥ अतोहरेःकर्माभिधायकशब्दवाच्यत्वाद्युक्तंसमन्वयसूत्रमितिभावः ॥ ज्योतिःशब्दस्याऽप्रथमपठि
तत्वेपिप्रधानकर्माभिधायकत्वात्तस्यैवान्योपलक्षकत्वसंभवाच्चसंग्रहः॥तुशब्दएवार्थे ॥ यास्ताएताःसर्वा
ऋचस्तासामेकमेवव्याहर्तव्यंतच्चविष्णुरेव॥किंचयेसर्वेवेदास्तेषामपीश्वरएवप्रतिपाद्यःकिमृचाम्॥ अपिच
येसमुद्रादिघोषास्तेषामपिकिमुवेदानांतत्रऋचस्तुविशेषतःपरमात्मप्रतिपादिकाइतिजानीयादित्यर्थः॥१०

ननुकथंज्योतिरादिशब्दवाच्यत्वंपरमात्मनःसंभवति ॥ कर्मक्रमादिविरोधात् ॥ व्युत्पत्त्यसंभवाच्चेत्याशं
कामपनुदत्सूत्रमुपन्यस्यव्याचष्टे ॥कल्पनेति॥ सर्वशब्दानांपरमात्मवाचित्वेपिनकर्मक्रमादिविरोधोव्युत्प
त्त्ययोगोवा॥यथाखलुमधुविद्यायामसौवाआदित्योदेवमध्वित्यादिनामध्वादिपदार्थतयापरमात्मोपासनो

मधुविद्यादिन्तसर्वशब्दार्थत्वेनपरस्यकल्पनोपदेशाच्च ॥नकर्मक्रमादि

**॥ ॐ कल्पनोपदेशाच्चमध्वादिवदविरोधः॥ ॐ ॥ ११ ॥**

विरोधः ॥ ११ ॥ अ० २ ॥

पदेशेऽपिनलौकिकमध्वादिवाचकाभावेनतदभावविरोधः॥ अन्यत्ररूढिमनिवार्यैवमहायोगवृत्त्यामध्वा
दिशब्दानामीश्वरादौवृत्त्यभ्युपगमात्॥ एवंसर्वशब्दवाच्यत्वेपरमात्मनोऽभ्युपगतेपिनकर्मादिविरोधः॥ज्यो
तिरादिशब्दानामन्यत्ररूढियोगोयोगरूढीरूढोपचारोरूढलक्षणोपचारोलक्षणेतिवृत्तीरभ्युपेत्यमहायोग

वत्येश्वरवाचित्वाभ्युपगमात् ॥ सर्वशब्दवाच्यत्वमीश्वरस्यचोपासनार्थमेवत्युपदिश्यतेप्राणश्चइत्येववि
द्यादित्यादेः॥उपासनाचमहायोगवत्त्यासर्वशब्दार्थगुणवत्त्वेनैवनतुसंकेतमात्रेणेतिभावः॥चशब्दएवार्थः॥
विरोधश्चनेतिवाप्रयोगमात्रबाहुल्यंरूढिः ॥ यथाघटादिशब्दानांकुंभादौप्रवृत्तिनिमित्तमात्रमपेक्ष्यवृत्ति
र्योगः॥ यथाधूमध्वजादिशब्दानामग्न्यादौप्रवृत्तिनिमित्तंप्रयोगबाहुल्यंचयोगरूढिः॥यथापंकजादिशब्दा
नांपद्मादौ॥ मुख्यार्थस्यशब्दप्रवृत्तिनिमित्तातिरिक्तगुणयोगेनवृत्तिरुपचारः ॥ तत्रचप्रयोगबाहुल्यंरूढोप
चारः॥ यथालिखितसिंहादौसिंहादिशब्दानांवाच्यार्थानुपपत्त्यायोग्येऽवाच्येवृत्तिर्लक्षणातत्रचप्रयोगबा
हुल्येरूढलक्षणा॥ यथाग्रामोगच्छतीत्यत्रग्रामसंबंधिपुरुषेग्रामशब्दस्य ॥ उपचारमात्रंयथापैंगल्यादियु
तेमाणवकेऽग्निशब्दस्य ॥ लक्षणामात्रंयथानदीशब्दस्यतीरे ॥ एताःवृत्तयोलोके ॥ हरौतुमहायोगोमहा
रूढियोगश्चतत्रतदितरत्रप्रसिद्धशब्दानांमहायोगः ॥ निरतिशयप्रवृत्तिनिमित्तसद्भावात् ॥ तदेकनिष्ठानां
महारूढियोगः ॥ नारायणादिशब्दानांतत्रबहुप्रयोगयुक्तत्वान्निरतिशयप्रवृत्तिनिमित्तसद्भावाच्च ॥ स्तंभा
दिशब्दानांहरौविद्वद्रूढिसद्भावेपिसार्वजनीनताऽभावेनाऽमहत्त्वात्तद्भेदः ॥ अतःकर्मतदंगवाचिशब्दवाच्यो
हरिरितिसिद्धम् ॥ ११ ॥ अ० २ ॥

अत्राधाराधेयत्वादिलिंगेनान्यत्रैवप्रसिद्धानांपंचजनादिशब्दानांहरौसमन्वयप्रतिपादनादस्तिशास्त्रादिसं
गतिः ॥ समन्वयसूत्रेसर्वशब्दानांपरमात्मपरत्वमुक्तम्॥सर्वांतर्गताश्चपंचजनादिशब्दावाजसेनयेकश्रूयंते॥
यस्मिन्पंचपंचजनाआकाशश्चप्रतिष्ठितः॥ तमेवमन्यआत्मानंविद्वान्ब्रह्मामृतोमृतमिति ॥ सर्वशरीरेष्वनुवृ
त्त्यर्थंपंचपंचजनेति॥तद्वाच्यंविष्णोरन्यच्चेत्तर्हिसमन्वयसूत्रानुपपत्तिरित्यवश्यंनिर्णेतव्यम्॥तत्पंचजनादि
शब्दवाच्यंविषयः॥विष्णुरन्यद्वेतिसंदेहः॥समन्वयसूत्रमन्यत्रैवप्रसिद्धिश्चसंदेहबीजम् ॥ नपंचजनादिशब्द
वाच्योविष्णुरितिपूर्वःपक्षः ॥ तच्छब्दस्यबहुत्वसंख्याविशिष्टवस्तुवाचित्वात् ॥ बहुत्वस्यचेश्वरेविरुद्ध
त्वात् ॥ एकमेवाद्वितीयमित्यादिश्रुतेः ॥ नचस्वस्यबहुत्वाभावेप्यन्यगतबहुत्वस्यतदधीनत्वेनबहुत्वसंख्या
वाचिशब्दवृत्तिः ॥ वशीकृतबहुजनेपिराजनितद्दर्शनात् ॥ अवरादिशब्दवदन्यत्रादृष्टत्वेपिवृत्तिःकिंन
स्यादितिचेन्न ॥ तत्रहेत्वंतरेणसिद्धायांवृत्तौनिमित्तमात्राश्रयणात् ॥ नचात्रास्तितादृशंनियामकम् ॥ न
चसर्वेवेदाइतिश्रुतिर्नियामिका॥ तस्याःसंकोचसंभवात्॥ ऋतंपिबंतावित्यादाविवस्वगतभेदशून्यस्यापिपर
मात्मनोबहुरूपत्वेनबहुत्वोक्तिःकिंनस्यादितिचेन्न ॥ प्रतिशरीरमात्मांतरात्मवद्बहुत्वेमानाभावात् ॥ य

स्मिन्निति सप्तम्या निर्दिष्टस्य वाक्यशेषबलेन परमात्मत्वाच्च न तदाधेयानां पंचजनाकाशानां परमात्मत्वम्॥ न

ह्येकस्यैवाधाराधेयभावो युज्यते॥ हरेराधेयत्वं च नास्ति किमु विरुद्धं स्वाधारत्वम्॥ अतस्तस्य पंचजनादि

शब्दवाच्यताऽसंभवान्न युक्तं समन्वयसूत्रमिति॥ एवं प्राप्ते सिद्धांतयत्सूत्रमुपन्यस्य व्याचष्टे॥ नेति॥ अ

पिपदेन पूर्वसूत्राद्विरोधपदाकर्षणम्॥ युक्तमेव पंचजनाकाशशब्दवाच्यत्वं भगवतः॥ स्वगतभेदशून्यस्या

यस्मिन्पंचपंचजना आकाशश्च प्रतिष्ठित इत्यादिषु बहुसंख्योपसंग्रहेऽपि

## ॥ ॐ न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॐ ॥ १२॥

न विरोधः॥ तस्यैवाकाशादिषु नानाभावात्तदतिरिक्तस्वरूपत्वाच्च ॥ १२ ॥

पि नानारूपत्वेन बहुत्वसंख्योपसंग्रहाविरोधात्॥ न च प्रतिशरीरं परमात्मनो बहुरूपत्वमप्रामाणिकम्॥ शरी

रांतर्गताकाशप्राणादिपंचजननियामकत्वेन तेषु नानाभावस्य न्यायप्राप्तत्वात्॥ न च यस्मिन्नित्याधारस्य

विष्णुत्वात्पंचजनादीनामाधेयानामविष्णुत्वम्॥ आकाशादिगतरूपेभ्योऽतिरिक्तस्य शरीरनियामकरूपस्य

तत्रोक्तेः॥ शरीरनियामकेश्वराधाराकाशादिषु भगवतोऽवस्थानमात्रेणाधाराधेयभावोऽपि युज्यते॥ अतः

परमात्मनः पंचजनादिशब्दवाच्यत्वाद्युक्तं समन्वयसूत्रमिति भावः॥ १२॥

ननुभवेदियंबहुत्वादिसंभवविषयाचिंता यदिपंचजनादीनांविष्णुत्वेभवेद्विशेषहेतुः नचासावस्ति ॥ श्रु
त्यंतराणांसाधारणत्वात् ॥ अतोबहुत्वादिसंभवेपिनपंचजनादिशब्दवाच्योहरिरित्याशंकांपरिहरत्सूत्रमव
तार्यव्याचष्टे ॥ पंचेति ॥ पंचजनलिंगोक्त्योक्तशंकांपरिहर्तुंपंचजनस्वरूपमाहसूत्रकारइतिसंबंधभाष्या
र्थः ॥ एतेपंचजनास्तावत्प्राणादीनांप्राणत्वादिप्रदाः ॥ प्राणस्यप्राणमितिवाक्यशेषात् ॥ प्राणादीनांप्राण

पंचजनानाह ॥ प्राणस्यप्राणमुतचक्षुषश्चक्षुःश्रोत्रस्यश्रोत्रमन्नस्यान्नंमनसोमनइतिवाक्यशे

॥ ॐ प्राणादयोवाक्यशेषात् ॐ ॥ १३ ॥

॥ ॐ ज्योतिषैकेषामसत्यन्ने ॐ ॥ १४ ॥

षात् ॥ १३ ॥ तद्देवाज्योतिषांज्योतिरित्यनेनकाण्वानांपंचकम् ॥ १४ ॥ अ० ३ ॥

त्वादिप्रदत्वंभगवतएवसंभवति ॥ यच्छ्रोत्रस्यश्रोत्रंमनसोमनोयद्वाचोहवाचंसउप्राणस्यप्राणश्चक्षुषश्चक्षु
रितिश्रुतेः ॥ अतोभगवल्लिंगसद्भावात्तस्यैवपंचजनत्वमितिभावः ॥ १३ ॥ ननुवाक्यशेषोक्तानांप्राणादी
नांविष्णुत्वेपिनपंचजनानांविष्णुत्वम् ॥ वाक्यशेषेचतुर्णामेवोक्तत्वेनतस्यपूर्ववाक्यतोभिन्नार्थत्वादित्याशं
कांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ ज्योतिषेति ॥ नवाक्यशेषेचतुर्णामेवोक्तिः ॥ माध्यंदिनशाखायांपंच

जनानामप्युक्तेः ॥ काण्वानांशाखायामन्नस्यान्नत्वप्रदातृरूपेतत्रैवाऽकथितेसत्यपियस्मादर्वाक्संवत्सरो होभिःपरिवर्ततेतद्देवाज्योतिषांज्योतिरायुर्होपासतेमृतमितिकिंचिद्दूरोक्तेनज्योतिषांज्योतिपापंचत्वसंभ वात् ॥ अतोवाक्यशेषस्यभिन्नार्थत्वाभावात्तद्बलेनयुक्तंपंचजनानांविष्णुत्वमितिभावः ॥ अत्रज्योतिर न्नशब्दयोरेकार्थत्वंपृथक्पंचकंवेत्युपपन्नम् ॥ अतोबहुत्वसंख्याविशिष्टवाचिशब्दवाच्योहरिरेवेतिसि द्धम् ॥ १४ ॥ अ० ३ ॥ अत्रोत्पत्तिमत्त्वलिंगेनान्यत्रैवप्रसिद्धानामाकाशादिशब्दानांपरमात्मनिसमन्व यप्रतिपादनादस्तिशास्त्रादिसंगतिः ॥ समन्वयसूत्रेसर्वशब्दानांपरमात्मवाचित्वमुक्तम् ॥ सर्वमध्यपतिता श्चाकाशादिशब्दास्तैत्तिरीयादिश्रुतौपठ्यंते आत्मनआकाशःसंभूतः आकाशाद्वायुः वायोरग्निः अग्नेरा पः अद्भ्यःपृथिवी पृथिव्याओषधयः ओषधीभ्योन्नम् ॥ अन्नात्पुरुषइति ॥ तद्वाच्यस्यविष्णोरन्यत्वेन तस्याशेषशास्त्रयोनित्वंसंभवतीत्यवश्यंनिर्धार्यता ॥ तदाकाशादिशब्दवाच्यंविषयः ॥ विष्णुरन्यद्वेतिसंदे हः ॥ समन्वयसूत्रमन्यत्रैवप्रसिद्धिश्चसंदेहबीजम् ॥ नविष्णुरितिपूर्वःपक्षः ॥ आकाशादीनामात्मादि कार्यत्वश्रवणात् ॥ परमात्मनश्चकार्यत्वायोगात् ॥ नजायतेम्रियतइत्यादेः ॥ यदातुभगवतिकार्यत्वमेवा युक्तंतदास्वस्यैवकार्यकारणभावोलोकेप्यसंभावितोनितरांविरुद्धःस्यात् ॥ नचाकाशादिसंभवस्यतदधी

नत्वेनसंभूतशब्दोपपत्तिः ॥ सुतोत्पत्तौजनकेजातशब्दप्रयोगादर्शनात् निमित्तविशेषादर्शनाच्च वाक्ययो जनानुपपत्तेश्च ॥ तस्मादात्मशब्दोदितस्यमुख्यकारणस्यैवविष्णुत्वंनत्ववांतरकारणानामाकाशादीनामि तिनसमन्वयसूत्रंयुक्तमिति ॥ एवंप्राप्तेसिद्धांतयत्सूत्रमवतारयति ॥ अवांतरेति ॥ एतत्पूर्वपक्षनिरासाया वांतरकारणत्वेनविष्णुरेवाकाशादिशब्दैरुच्यतइतिसूत्रकारोवक्तीत्यर्थः ॥ सूत्रंव्याचष्टे॥ आकाशादिष्वि

अवांतरकारणत्वेनापिसएवोच्यतइतिवक्ति ॥ आकाशादिष्ववांतरकारणत्वेनसएवस्थितः ॥

॥ ॐ कारणत्वेनचाकाशादिषुयथाव्यपदिष्टोक्तेः ॐ ॥ १५॥

यथाव्यपदिष्टस्यैवपरस्ययआकाशेतिष्ठन्नित्यादिनाआकाशादिषूक्तेः ॥ १५ ॥ अ० ४ ॥

ति ॥ नकेवलंमूलकारणवाचकात्मशब्दवाच्योहरिरपितुकार्यत्वेसतिकारणमवांतरकारणंतद्वाचकाकाशा दिशब्दवाच्यश्च ॥ नचकार्यकारणभावविरोधः ॥ आकाशादिषुतस्यस्थितत्वात् ॥ यआकाशेतिष्ठन्यो वायौतिष्ठन्यस्तेजसितिष्ठन्योप्सुतिष्ठन्यःपृथिव्यांतिष्ठन्नित्यादिनाकाशादिषुस्थितत्वोक्तेः ॥ नचतत्रापि विष्णुःकुतइतिवाच्यम् ॥ यथासयोतोश्रुतइत्यादौविष्णुरविदितत्वादिरूपेणव्यपदिष्टस्तादृशस्यैवाका

शादिपुयमाकाशोनवेदेत्यादिनोक्तत्वात् ॥ तथाचाकाशाद्युत्पत्तावाकाशाद्यंतर्गतत्वेनभगवतोऽभिव्य
क्त्यावाच्याद्याद्विगतस्वरूपाभिव्यक्तिहेतुत्वेन चावांतरकारणत्वमुपपन्नम् ॥ अतोऽवांतरकारणाभिधायकश
ब्दवाच्यत्वाद्विष्णोर्युक्तंसमन्वयसूत्रमितिभावः ॥ स्थितस्तच्छब्दैरुच्यतइतिशेषः ॥ नचवक्तव्यमस्त्वेव
मवांतरकारणत्वंविष्णोर्युक्तंतथापितच्छब्दवाच्यत्वेविशेषहेतुर्वाच्यइति ॥ नामानिसर्वाणीत्याद्युक्तरीत्या
परमात्मनिसिद्धेऽखिलशब्दसमन्वयेतत्रप्रतीतविरोधाभासनिरासेनैवसूत्रकृतश्चरितार्थत्वात् ॥ यंतुयुक्ति
विशेषंचवक्तिसत्वधिकोलाभः ॥ समाकर्षाधिकरणेभिन्नाधिकरणपक्षेपाठस्तुसत्वधिकोलाभः ॥ अतोऽ
वांतरकारणवाचिनामपिशब्दानांपरमात्मपरत्वाद्युक्तंसमन्वयसूत्रमितिसिद्धम् ॥ १५ ॥ अ० ४ ॥
अत्रव्यवहाराविलोपप्रसंगेनान्यत्रैवप्रसिद्धानांसर्वशब्दानांपरमात्मैकवाचित्वसमर्थनादस्तिशास्त्रादिसंग
तिः॥ समन्वयसूत्रेसर्वेषांशब्दानांभगवद्वाचित्वमुक्तंतच्चानुपपन्नंयस्तत्वेऽसत्स्यादित्यारंभणीयमेतत् ॥ लौ
किकावैदिकाश्चशब्दाविषयाः ॥ भगवदेकवाचिनोनवेतिसंदेहः ॥ पूर्वोक्तमेवसंदेहबीजम् ॥ पूर्वपक्षयति ॥

सर्वेति ॥ यदुक्तंसर्वशब्दानांपरमात्मैकवाचित्वंतदयुक्तम् ॥ तथात्वेऽन्यत्रव्यवहाराभावापातात् ॥ यदपि साक्षादप्यविरोधमित्युक्तमस्यसमाधानंतदयुक्तम् ॥ अवाचकैर्व्यवहारेऽव्यवस्थापातात् ॥ यदप्यत्रोक्तंश रीररूपकविन्यस्तेतीश्वरसंबंधादन्यत्रशब्दप्रवृत्तिरिति तदपिनसाधु ॥ तथासतिलोकेलक्षणेतरवृत्त्यभावाप त्तेः॥यत्तुकल्पनोपदेशादित्यत्ररूढ्याद्यभ्युपेत्यसमाधानंतदपिनशोभांबिभर्ति॥ तथासत्यन्यस्यापिमुख्यवा च्यत्वप्रसंगेनपरमात्मनएवमुख्यवाच्यत्वमितिप्रतिज्ञाव्याघातात्॥ योगरूढ्योरेवमुख्यवृत्तित्वात्॥ नत्वक्षा

सर्वशब्दानांपरमात्मवाचकत्वेकथमन्यत्रव्यवहारइति ॥ अतोब्रवीत् ॥ परमात्मवाचिनःशब्दाअ

## ॥ ॐ समाकर्षात् ॐ ॥ १८ ॥

न्यत्रसमाकृष्यव्यवह्रियंते ॥

दिशब्दानांरूढ्यादिनैवानेकवाचिनांक्वचिन्मुख्यताक्वचिन्नेत्यस्ति ॥ अतःसर्वशब्दानांमुख्यवृत्त्यापरमात्मै कवाचित्वेऽन्यत्रव्यवहारलोपापातात्॥ तस्यचानिष्टत्वान्नपरमात्मैवमुख्यतःसर्वशब्दवाच्यइतिशंकार्थः॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ नपरमात्मनोमुख्यतःसर्वशब्दवाच्यत्वेऽन्यत्रव्यवहारलोपः॥ तत्ररूढ्यादेरभ्युपगमात् ॥ तथासत्युभयोर्मुख्यवाच्यत्वंप्राप्तमितिचेन्नैवम् ॥ भवेदेतद्यद्यक्षादिशब्दवदुभ यत्रान्योन्यनिरपेक्षाशब्दप्रवृत्तिः ॥ नचैवम् ॥ किंतुस्वतोमुख्यवृत्त्यापरमात्मैकवाचिनांशब्दानांव्यवहार सिद्ध्यर्थंततःसमाकृष्यान्यत्ररूढत्वेनसंकेतितत्वात् ॥ अल्पप्रवृत्तिनिमित्तानांचतदधीनत्वादितिभावः॥ अ

न्योन्यनिरपेक्षतयैवकुतोनशब्दवृत्तिरित्यतःस्मृतेरेवेत्याह ॥ परस्येति ॥ लोकवेदानुसारतइतिलौकिकवै
दिकव्यवहारसिद्ध्यनुसारतः॥ नचप्राचीनसूत्रविरोधः ॥ प्रथमसूत्रेस्वातंत्र्येणवाच्यत्वाभावस्याभिप्रेतत्वा
त् ॥ द्वितीयेपरमात्मसंबंधोक्त्याऽन्योक्तस्यैवाभिसंहितत्वात् ॥ तृतीयेचाऽविवेचितरूढ्यादिमांत्राभ्युपगतेः॥
अत्रपुनस्तस्यैवविवेचनादिति ॥ १६ ॥ यदिशब्दाःपरमात्मन्येवमुख्याःअन्येत्रैवतुततःसमाकृष्यसंकेतित
त्वेनामुख्यास्तर्हितेषांमुख्यार्थेपरमात्मन्येवप्रसिद्धिःस्यान्नत्वमुख्यार्थेजगति ॥ अग्निशब्दस्यमाणवकेप्र

परस्यवाचकाःशब्दाःसमाकृष्येतरेष्वपि ॥ व्यवह्रियंतेसततंलोकवेदानुसारतइतिपाद्मे

॥ १६ ॥ तर्हिकथंतेषांशब्दानांजगतिप्रसिद्धिः ॥ जगतिव्यवहारोलोकस्यनतुपरमात्म

## ॥ ॐ जगद्वाचित्वात् ॐ ॥ १७ ॥

नितथा ॥ अनोजगतिप्रसिद्धिःशब्दानाम् ॥ १७ ॥

सिद्धदर्शनात् ॥ अस्तिचासौजगति ॥ अतस्तदन्यथानुपपत्त्याऽन्यस्यैवमुख्यवाच्यत्वमितिभावेनाशंक
ते ॥ तर्हीति ॥ तत्परिहारत्वेनसूत्रंपठित्वाव्याचष्टे ॥ जगदिति ॥ नप्रसिद्ध्यन्यथानुपपत्त्याऽन्यस्यैवमुख्य
वाच्यत्वंकल्प्यम् ॥ लोकस्यजगत्येवशब्दव्यवहारेणतत्रैवतच्छ्रोतॄणांव्युत्पत्तेः ॥ परमात्मनितथाबहुल
व्यवहाराभावेनव्युत्पत्त्यभावाच्चजगतिप्रसिद्धेरन्यथोपपत्तेः॥ अग्निर्माणवकइतिव्यवहारादनवगताग्निश
ब्दमुख्यार्थस्यमाणवकेऽग्निशब्दव्युत्पत्तिसंभवादितिभावः ॥ १७ ॥

त्रिष्णोरेवमुख्यतःशब्दार्थत्वमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंताबद्व्याचष्टे॥ जीवेति॥यदुक्तंविष्णोरेवसर्वशब्दमुख्यार्थत्वमितितदयुक्तम् ॥ सर्वपदार्थानांपरमात्माधीनत्वादेवहिसर्वशब्दमुख्यार्थत्वंतस्योक्तं तच्चसर्वस्यतदधीनत्वाख्यंलिंगंजीवमुख्यप्राणयोरप्यस्ति ॥ अस्ययदैकांशाखामितिश्रुतौवृक्षादीनांजीवाधीनत्वावगमात् ॥ वायुनेतिश्रुतौचसर्वस्यमुख्यप्राणाधीनत्वावगतेः॥ अतस्तयोरपिमुख्यवाच्यत्वम् ॥ नचवक्तव्यंप्रयोगेसत्येवनिमित्तानुसरणंनतुनिमित्तमात्रेणवाच्यत्वकल्पनमिति ॥ निमित्तसद्भावेनव्यवहारा

तदधीनत्वात्तच्छब्दवाच्यत्वमित्युक्तंतज्जीवमुख्यप्राणयोर्लिंगम् ॥ अस्ययदैकांशाखां

## ॥ ॐ जीवमुख्यप्राणलिंगादितिचेत्तद्व्याख्यातम् ॐ ॥ १८ ॥

जीवोजहात्यथसाशुष्यति ॥ वायुनाहिसर्वेलोकानेनीयंतेइत्यादिश्रुतिभ्यइतिचेन्न ॥

उपासात्रैविध्यादितिव्याख्यातत्वात् ॥ १८ ॥

पादनस्यैवान्याच्यत्वेनवाच्यत्वकल्पनेबाधकाभावादितिभावः परिहारांशंव्याचष्टे॥ नेति ॥ नसर्वस्यजीवमुख्यप्राणाधीनत्वलिंगेनतयोर्मुख्यवाच्यत्वंकल्प्यम्॥ तल्लिंगाभिधायकश्रुतीनांतदंतर्यामिभगवत्संबंधितयाव्याख्यातत्वात्॥ यद्यद्विभूतिमत्सत्त्वंश्रीमदूर्जितमेववा ॥ तत्तदेवावगच्छत्वंममतेजोंऽशसंभवमित्यादेश्च ॥ तथाचतल्लिंगवतोऽतर्यामिणएवमुख्यवाच्यत्वंभवेदितिभावः ॥ १८ ॥

यदुक्तंसर्वशब्दाअन्यत्रसमाकृष्यव्यवक्रियंतइतिनतद्युक्तम् ॥ वैदिकानांशब्दानांकर्मादौसमाकर्षेप्रयो
जनाभावात् ॥ नचकर्मसिद्धिरेवप्रयोजनम् ॥ भगवज्ज्ञानमात्रेणैवपुरुषार्थसिद्धौतद्वैयर्थ्यात् ॥ वेदानां
चकाम्यफलार्थमप्रवृत्तेः ॥ अतोवैदिकानांशब्दानामन्यत्रसमाकर्षेप्रयोजनाभावान्मुख्यतएवान्यवाच

परमात्मज्ञानार्थंकर्मादिकमपिवदतीतिजैमिनिः ॥ कस्मिन्नुभगवोविज्ञातेसर्वमिदंविज्ञातं

## ॥ ॐ अन्यार्थंतुजैमिनिःप्रश्नव्याख्यानाभ्यामपिचैवमेके ॐ ॥ ११॥

भवतीति तस्मैसहोवाचद्वेविद्येवेदितव्येकथंनुभगवःसआदेशोभवतीति यथासोम्यैकेन
मृत्पिंडेनेत्यादिनाप्रश्नव्याख्यानाभ्याम् ॥

कत्वमित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ अन्यार्थमिति ॥ समाकर्षेणवेदःकर्मदेवतादिकमपिव
दतीतियुक्तमेव ॥ कर्मादिज्ञानस्यापिपरमात्मज्ञानार्थत्वादितिजैमिनिराचार्योमन्यतइत्यर्थः ॥ अन्यज्ञा
नस्यपरमात्मज्ञानार्थत्वंकुतइत्यतआह ॥ कस्मिन्निति ॥ सर्वमिदंकर्मादिकंकस्मिन्विज्ञातेविज्ञातंभवति ॥

विज्ञातस्याप्यस्यफलंकस्मिन्ज्ञातेभवतिएतज्ज्ञानमात्रस्याफलत्वादितिशौनकप्रश्ने सर्वमपरविद्ययाविज्ञातंभवति विज्ञातंचपरविद्याविषयपरमात्मज्ञानेनसफलंभवेत्यतोद्वेविद्येवेदितव्येइत्यंगिरसोव्याख्यानात् ॥ तथायस्मिन्परमात्मनिज्ञातेसर्वंकर्मादिकंज्ञातमपिसफलंस्यात्तद्विषयउपदेशःकथंस्यात् तंप्रकारंकथमहंजानीयामितिश्वेतकेतुप्रश्नेयथैकेनमृत्पिंडेनज्ञातेनज्ञातमपिघटादिकंज्ञातफलंभवतिविशेषज्ञानात् ॥ एवंप

एवमपिचैकेपठंति ॥ यस्तन्नवेदकिमृचाकरिष्यतीति ॥ ११ ॥

रमात्मनिज्ञातेसर्वंज्ञातफलंभवतीत्युद्दालकव्याख्यानात् ॥ अन्यज्ञानस्यपरमात्मज्ञानार्थत्वंज्ञायतइतिभावः ॥ अपिचनकेवलमर्थादेवमन्यज्ञानस्यपरमात्मज्ञानार्थत्वसिद्धिःकिंतुस्पष्टंचैवमेकेशाखिनःपठंतीत्याह ॥ एवमिति ॥ तदक्षरंयोनवेदसकर्मादिविषयर्चाकिंकरिष्यतियतःसर्वाऋचःपरमेव्यामेअक्षरेतज्ज्ञानार्थमेवकर्मादिकंवदंति ॥ तस्यैवसर्वदेवाधारत्वात् ॥ येपुनस्तदक्षरंविदुस्तेसम्यगासतइत्यर्थः ॥ ११ ॥

नपरमात्मज्ञानार्थंकर्मादिकंवेदनवक्तव्यम॥ अन्यदनुक्त्वापरमात्ममात्रकथनेऽपितज्ज्ञानसंभवात् ॥ नचव्यु त्पत्त्यनुपपत्तिः॥खंडपदानामन्यवाचकत्वेनतदुपपत्तेः॥ततोऽन्यकथनेप्रयोजनाभावान्नतत्रसमाकर्षइत्या शंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ वाक्येति ॥ सत्यमन्यावचनेपिभगवज्ज्ञानंभवतीति तथाप्यन्यावच नेपदान्वयएवयुज्यतेनवाक्यान्वयः ॥ एवमन्यस्यापिवाच्यस्याभ्युपगमेतुवाक्यस्यापिपरमात्मनाऽन्वयो

वाक्यस्याप्येवमन्वयोयुज्यते पृथक्पृथक्स्थितस्यापिपरमात्मना ॥ २० ॥

## ॥ ॐ वाक्यान्वयात् ॐ ॥ २० ॥

युज्यते ॥ वाक्यान्वयोनामपृथक्पृथगर्थेषुवाचकतयास्थितवाक्यस्यांततोभगवत्परत्वम् ॥ अतोवाक्या न्वयसिद्ध्यर्थमन्यवचनंयुक्तमेव ॥ नचवाच्यंपरमात्मज्ञानस्यैवप्रयोजनत्वात्किंवाक्यान्वयेनापीति॥ वि नावाक्यान्वयमुत्तमाधिकारिव्यतिरिक्तानांज्ञानस्यैवासंभवेनजिज्ञासायांवैमुख्यप्रसंगात्॥ कश्छंदसांयो गमावेदधीरइतिश्रुतेरितिभावः ॥ २० ॥

यदन्यवचनस्यापिपरमात्मज्ञानार्थत्वमुक्तंतत्केनप्रकारेणेत्याकांक्षायांतत्प्रदर्शनायसूत्रमुपन्यस्यव्याचष्टे॥ प्रतिज्ञेति ॥ ज्ञानमेवमोक्षसाधनंनान्यदितिप्रतिज्ञातेकुतोज्ञानमेवमुक्तिहेतुरित्याकांक्षायांतत्प्रतिज्ञासिद्ध्यर्थं हेतुत्वेनसविस्तरंश्रुत्यासपरिकरंकर्माद्युच्यते ॥ अतोज्ञानमवश्यमापाद्यमित्येवमाकारेणकर्मादिवचनस्य ज्ञानोपयोगित्वमित्याश्मरथ्याचार्योमन्यतइतिभावः ॥ कर्मादिवचनंकथमुक्तप्रतिज्ञायांहेतुरित्यतआह ॥

नान्यःपंथाअयनायविद्यतइतिप्रतिज्ञासिद्धेर्लिंगत्वेनकर्मादिकमुच्यतइत्याश्मरथ्यः ॥

## ॥ ॐ प्रतिज्ञासिद्धेर्लिंगमाश्मरथ्यः ॐ ॥ २१ ॥

यस्मादेवमनित्यफलमन्यत्तस्मान्नान्यःपंथाइति ॥ २१ ॥

यस्मादिति ॥ विस्तरेणसपरिकरंकर्माद्युक्त्वाअमृतोवावसोमपोभवतियावदिंद्रइत्यादिनातस्यदुःखसंभिन्नं विनाशिफलमुच्यतेतत्पराभूश्ययस्मादेवंकर्माद्यनित्यफलंतस्मान्नतन्मोक्षसाधनम् ॥ तस्यदुःखासंभिन्ननि त्यसुखरूपत्वात् ॥ अतोज्ञानान्नान्यःपंथामोक्षायेतिप्रतिज्ञायुक्तैवेत्येवंरूपेणकर्मादिवचनस्यहेतुत्वमिति भावः ॥ तथाचश्रुतिः परीक्ष्यलोकान्कर्मचितान्ब्राह्मणइत्यादि ॥ २१ ॥

प्रकारांतरेणान्यवचनस्यज्ञानोपयोगित्वंदर्शयत्सूत्रमुपन्यस्यव्याचष्टे॥ उत्क्रमिष्यतइति ॥मोक्षार्थंज्ञानमे
वावश्यमपेक्षितमितिसिद्धेतत्केनसाधनेनसिद्ध्यतीत्यपेक्षायांकर्मादिकमुच्यते ॥ ज्ञानेनमोक्षमिच्छतोज्ञा
नसाधनतयाकर्मादेरपिभाव्यत्वात् ॥ नचफलोक्तिविरोधः ॥ तस्यारुचिमात्रार्थत्वात् ॥ रोचनार्थंफलश्रु
तिरित्यादेः ॥ अतएवंज्ञानोत्पत्तौकर्मादेरुपयोगित्वेनवेदस्तद्वक्तीत्यौडुलोमिराचार्योमन्यतइतिभावः॥२२

उत्क्रमिष्यतोमुमुक्षोःकर्मादिनाभाव्यंसाधनसाधत्वेनातस्तद्वक्तीत्यौडुलोमिर्मन्यते ॥ २२ ॥

॥ ॐ उत्क्रमिष्यतएवंभावादित्यौडुलोमिः ॐ ॥ २२ ॥

॥ ॐ अवस्थितेरितिकाशकृत्स्नः ॐ ॥ २३ ॥

सर्वंपरमात्मन्यवस्थितमितिवक्तुंतद्वचनमितिकाशकृत्स्नः ॥

रीत्यंतरेणकर्मादिवचनस्यभगवज्ज्ञानोपयोगंप्रदर्शयत्सूत्रमुपन्यस्यव्याचष्टे ॥ अवस्थितेरिति ॥ मोक्षार्थं
सर्वथाज्ञानमपेक्षितंतच्चकर्मादिनांतःकरणशुद्ध्याभवतीतिसिद्धेकथंज्ञातव्योहरिरित्याकांक्षायांसर्वंकर्मा
दिकंतस्मिन्परमात्मनिस्थितंससर्वाधारत्वादिरूपेणज्ञातव्यइत्येषसेतुर्विधारणइत्यादौवक्तुमाधेयादिरूपं
कर्मादिवेदेनोच्यतइतिवासाक्षात्परमात्मज्ञानोपयोगित्वमन्यवचनस्येतिकाशकृत्स्नाचार्योमन्यतइतिभा
वः ॥ एवंजैमिन्यादिमतान्युपन्यस्यस्वमतंकिनोच्यतेसूत्रकारेण ॥ एतेषामेवस्वमतत्वेजैमिन्यादिग्रहण

वैयर्थ्यम् ॥ विरुद्धानांचनैकमतत्वम् ॥ एकस्यैववेदस्यानेकाभिप्रायतायोगादित्यतआह ॥ कृष्णेति ॥ मुनिमतानांभगवन्मतत्वमेव तथापितत्तद्विदितात्ममतैकदेशाभिप्रायेणशिष्यप्रसिद्ध्यर्थंजैमिन्यादिग्रहणंयुज्यते ॥ अनेकाधिकारिविषयत्वान्नविरोधोपीतिभावः ॥ अतोभगवज्ज्ञानाद्यर्थंवैदिकादिशब्दानामन्यत्रसमाकर्षणव्यवहारोपपत्तेर्युक्तंहरेःसकलशब्दपरममुख्यार्थत्वमितिसिद्धम् ॥ २२ ॥ अ० ५ ॥ अत्रस्त्रीलिंगत्वलिंगेनान्यत्रैवप्रसिद्धानांस्त्रीशब्दानांपरमात्मनिसमन्वयप्रतिपादनादस्तिशास्त्रादिसंगतिः ॥

कृष्णद्वैपायनमतादेकदेशविदःपरे ॥ वदंतितेयथाप्रज्ञंनविरोधःकथंचनेतिपाद्मे ॥ २२ ॥ अ० ५॥

समन्वयसूत्रेसर्वशब्दानांभगवत्परत्वमुक्तं सर्वांतर्गताःप्रकृत्यादिशब्दाःश्रूयंतेएषाह्येवप्रकृतिरविकृतिर्याप्राणेनसंविशत्यदितिर्देवतामयीत्यादौ ॥ तेषांचान्यपरत्वेनसर्वशब्दाभिधेयत्वंपरमात्मनःसिद्ध्यतीत्यवश्यंनिर्णेयता ॥ तत्प्रकृत्यादिशब्दवाच्यंविषयः ॥ विष्णुरन्यद्वेतिसंदेहः ॥ समन्वयसूत्रमन्यत्रैवप्रसिद्धिश्चसंदेहबीजम् ॥ नप्रकृत्यादिशब्दवाच्योहरिरितिपूर्वःपक्षः॥ प्रकृत्यादिशब्दानांस्त्रीलिंगत्वात् ॥ परमपुरुषेचतदयोगात्॥ नचरूपविशेषापेक्षयोपपत्तिः॥ नैनंवाचास्त्रियंब्रुवन्नितितस्यस्त्रीत्वनिषेधात् ॥ नचनपुंसकशब्दवत्तिवत्परमात्मनिस्त्रीशब्दप्रवृत्तिः ॥ नियामकविशेषाभावेनकल्पनायोगात् ॥ नचाऽस्त्रीभूतस्यापिस्त्रीनिया

मकत्वेनतच्छब्दवाच्यत्वोपपत्तिः ॥ वशीकृतभार्योऽपिभर्तरितत्प्रयोगादर्शनात् ॥ नचनामानिसर्वाणीत्यादि
विरोधः ॥ उक्तन्यायविरोधेनतत्संकोचोपपत्तेः ॥ अतःप्रकृत्यादिशब्दानांपरमात्मवाचित्वाभावान्नसम
न्वयसूत्रमुपपन्नमिति ॥ सिद्धांतयत्सूत्रमवतारयति ॥ स्त्रीशब्दाइति ॥ एवंप्राप्तंपूर्वपक्षंप्रतिक्षेप्तुंस्त्रीशब्दा

स्त्रीशब्दाअपितस्मिन्नेवेत्याहहंतैतमेवपुरुषंसर्वाणिनामान्यभिवदंतियथानद्यःस्यंदमा
नाःसमुद्रायणाःसमुद्रमभिविशंत्येवमेवैतानिनामानिसर्वाणिपुरुषमभिविशंतीतिप्रतिज्ञा

## ॥ ॐ प्रकृतिश्चप्रतिज्ञादृष्टांतानुपरोधात् ॐ ॥ २४ ॥

दृष्टांतानुपरोधात्प्रकृतिशब्दवाच्योपिसएव ॥ २४ ॥

अपिपरमात्मनिवर्ततइतिसाधयत्यत्रसूत्रकारइत्यर्थः ॥ सूत्रंव्याचष्टे ॥ हंतेति ॥ प्रकृत्यादिस्त्रीशब्दवाच्य
श्चेश्वरोभवति ॥ हंतैतमेवपुरुषमितिश्रुतौपुरुषस्याशेषनामवाच्यतांप्रतिज्ञायतत्रैवनदीसमुद्रदृष्टांतस्योक्त ॥१२२॥
त्वात् ॥ प्रकृत्यादिस्त्रीशब्दवाच्यताभ्युपगमेप्रतिज्ञादृष्टांतानुपरोधादन्यथातदुपरोधादितिभावः ॥ हंतेत्या
स्यादने ॥ प्रकृतिपदमन्योपलक्षकम् ॥ प्रधानस्त्रीनामत्वात्तद्ग्रहणम् ॥ २४ ॥

युक्त्यंतरेणहरेःप्रकृतिशब्दवाच्यतांप्रतिपादयत्सूत्रमुपन्यस्यव्याचष्टे ॥ अभिध्येति ॥ मायांतुप्रकृतिंवि
द्यादितिश्रुतौ प्रकृतिर्वासनेत्येवंतवेच्छानंतकथ्यतइतिस्मृतौचपरमेश्वरेच्छायाःप्रकृतिशब्दवाच्यत्वोपदे
शाच्चासौप्रकृतिशब्दवाच्योभवति ॥ नचवाच्यंश्रुतौमायायाएवप्रकृतिशब्दवाच्यत्वंज्ञायतेनेच्छायाइ

मायांतुप्रकृतिंविद्यान्मायिनंतुमहेश्वरम् ॥ महामायेत्यविद्येतिनियतिर्मोहिनीतिच ॥
प्रकृतिर्वासनेत्येवंतवेच्छानंतकथ्यतइतिवचनात्तदभिद्यैवचप्रकृतिशब्देनोच्यते ॥ सोभि

## ॥ ॐ अभिध्योपदेशाच्च ॐ ॥ २५ ॥

ध्यासजूतिःसप्रज्ञासआनंदइतिश्रुतेरभिद्याचस्वरूपमेव ॥ ध्यायतिध्यानरूपोसौसुखी
सुखमतीवच ॥ परमैश्वर्ययोगेनविरुद्धार्थतयेष्यतइतिब्रह्मांडे ॥ २५ ॥

ति ॥ महामायेतिस्मृतौमायाशब्दस्यापीच्छावाचकत्वोक्तेः ॥ नचात्रोपचारःशंकनीयः॥श्रुतिस्मृत्योरनु
शासनरूपत्वादितिभावः ॥ इच्छायाःप्रकृतिशब्दवाच्यत्वेपिकुतःपरमात्मनस्तदित्यतआह ॥ सइति ॥ जू
तिःप्रेरणा ॥ नेच्छाभगवत्स्वरूपंमायिनंतवेच्छेतितत्संबंधोपदेशादित्यतआह ॥ ध्यायतीति ॥ २५ ॥

तथापिनेश्वरस्यप्रकृतिशब्दवाच्यत्वम् ॥ सर्वाणिनामानीत्येवंरूपेणविनासाक्षात्प्रकृतिशब्दवाच्यत्वेश्रुत्या यभावात् ॥ सर्वशब्दस्यतुसंकोचसंभवात् ॥ नचातीतसूत्रेतदप्युक्तमितिवाच्यम् ॥ इच्छाद्वारैवप्रकृति शब्दवाच्यतांविनासाक्षादीश्वरस्यैवतदभावादित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ साक्षाच्चेति ॥ ने

एषरूयेषपुरुषएषप्रकृतिरेषआत्मैषब्रह्मैषलोकएषआलोकोयोऽसौहरिरादिरनादिरनंतोऽ

॥ ॐ साक्षाच्चोभयाम्नानात् ॐ ॥ २६ ॥

॥ ॐ आत्मकृतेःपरिणामात् ॐ ॥ २७ ॥

तःपरमःपराद्धिश्वरूपइतिपैंगिश्रुतौसाक्षादेवप्रकृतिपुरुषत्वाम्नानात् ॥ २६ ॥ प्रकर्षेणक रोतीतिप्रकृतिरितियोगाच्च॥

श्वरस्योक्तरीत्याप्रकृतिशब्दवाच्यताऽभावःशंकनीयः ॥ एषरूयेषपुरुषइतिश्रुतौसाधारण्येनविनासाक्षादे वेच्छाद्वारमंतरापिप्रकृतिपुरुषशब्दवाच्यताम्नानादितिभावः ॥ लोकआधारः ॥ आलोकःप्रकाशरूपः ॥ ॥ २६ ॥ नन्वेवंप्रकृतिशब्दवाच्यत्वेहरेःश्रुत्युक्तेऽपिकथंतद्युज्यतेनिमित्ताभावात् नहिसंकेतमात्रमभ्यु पगम्यतइत्याशंकांपरिहरत्सूत्रंपठित्वाफलितंतावदाह ॥ आत्मेति ॥ नपरमात्मनिप्रकृतिशब्दवृत्तौनिमि

त्ताभावः ॥ प्रकृष्टाकृतिर्यस्येतियोगस्यैवभावादित्यर्थः ॥ कथंप्रकृष्टेश्वरस्यकृतिरित्यतःसूत्रंव्याचष्टे ॥ प्रकृताविति ॥ प्रकृतेःस्वतःपरिणामसामर्थ्याभावात्तदनुकूलतयातांप्रविश्यमहदादिरूपेणपरिणामयतीति प्रकृतिपरिणामादनंतरमात्मानंचमहदादिप्रेरणायबहुधाकरोतीतिप्रकर्षेणकृतिर्विष्णोरित्यर्थः ॥ सूत्रार्थेश्रुतिस्मृतीचाह ॥ अथेति ॥ प्रकृतिमनुप्रविश्यतांपरिणाम्यतत्परिणामप्रेरकत्वेनात्मानंबहुधाचकार तस्मात्प्रकृतिशब्दवाच्यः ॥ यस्मात्प्रकृतिशब्दवाच्यस्तस्मात्प्रकृतिरित्याचक्षतइत्यर्थः ॥ स्मृतिरप्येवंव्याख्येया ॥

प्रकृतावनुप्रविश्यतांपरिणाम्यतत्परिणामनियामकतयातत्रस्थित्वाआत्मनोबहुधाकरणात् ॥ अथहैषआत्माप्रकृतिमनुप्रविश्यात्मानंबहुधाचकारतस्मात्प्रकृतिस्तस्मात्प्रकृतिरित्याचक्षतइतिभाल्लवेयश्रुतिः॥अविकारोपिपरमःप्रकृतिंतुविकारिणीम्॥अनुप्रविश्यगोविंदःप्रकृतिश्चाभिधीयतइतिनारदीये ॥ नचान्यत्कल्प्यम् ॥ अप्रामाणिकत्वात् ॥ २७ ॥

अपव्याख्यांदूषयति ॥ नचेति ॥ ब्रह्मणएवजगदुपादानत्वंप्रकृतिश्चेत्यादिसूत्रैरुच्यतइतियद्ब्रह्मणःपरिणामित्वंसूत्रार्थतयाकल्प्यते ॥ नतद्युक्तम् ॥ ब्रह्मणोजगदुपादानत्वेप्रमाणाभावादित्यर्थः ॥ नचैकविज्ञानेनसर्वविज्ञानंप्रतिज्ञायमृत्पिंडादिदृष्टांतोक्त्यैवतत्सिद्धिः॥ तस्यान्यार्थमितिसूत्रव्याख्यानेसम्यग्व्याख्यातत्वात् ॥ किंचात्रब्रह्मणःपरिणामित्वोक्तिरसंगतैवभवति ॥ एतदध्यायस्याशेषशास्त्रस्यब्रह्मणिसमन्वयप्रतिपादनायप्रवृत्तत्वात् ॥ स्यादेतत् ॥ श्रुतीनांप्रधानपरत्वंवदन्तिसांख्येनिरस्तेकथंप्रधानाभावेजगदुत्प

त्तिरितिशंकाभवत्येवतन्निरासायब्रह्मणोजगदुपादानत्वोक्तिःसंगतेति ॥ मैवम् ॥ किंप्रधानस्यशास्त्रप्रतिपाद्यतामात्रंप्राङ्निषिद्धंतत्स्वरूपमेववा ॥ आद्येकाब्रह्मणोजगदुपादानत्वोक्तेःसंगतिः ॥ नह्याकाशादिशब्दानामौपनिषदानांब्रह्मणिसमन्वयेऽभिहितेकथंतर्हिजगदवकाशइतिशंकोत्पन्नानापिसूत्रकृतापराकृता॥ नद्वितीयः ॥ तदुक्तेरेवात्रासंगतत्वात् ॥ ब्रह्मणोजगत्कारणत्वसिद्ध्यर्थंतदुक्तिरितिचेन्न ॥ निमित्तत्वेनतदुप

अव्यवधानेनोत्पत्तिद्वारत्वंचप्रकृतित्वम् ॥ तच्चास्यैवहिगीयते ॥ यद्भूतयोनिंपरिपश्यंति धीराइति ॥ व्यवधानेनसूतिस्तुपुंस्त्वंविद्वद्भिरुच्यते ॥ सूतिरव्यवधानेनप्रकृतित्वमिति

## ॥ ॐ योनिश्चहिगीयते ॐ ॥ २८ ॥

स्थितिः ॥ उभयात्मकसूतित्वाद्वासुदेवःपरःपुमान् ॥ प्रकृतिःपुरुषश्चेतिशब्दैरेकोभिधीयतइतिब्रह्मांडे ॥ २८ ॥ अ० ६ ॥

पत्तेः ॥ अथापिस्यात्प्रधानप्रतिपादकवाक्यस्यब्रह्मणिसमन्वयेऽभिहितेतत्प्रमाणाभावेनाभावःप्राप्तइति ॥मैवम् ॥ तथाकाशाद्यभावप्राप्तेरपिप्रसंगात् ॥ प्रमाणांतरेणतत्सिद्धिरितिचेत्सममत्रापीत्यलम्॥ २७॥ तथापिनप्रकृतिशब्दवाच्यत्वंपरमात्मनोयुज्यते तस्यस्त्रीलिंगत्वादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ योनिश्चेति ॥ स्वदेहादेवापत्योत्पादकत्वंहिप्रकृत्यादिस्त्रीलिंगप्रयोगेनिमित्तम्॥ स्वदेहादेवोत्पादकश्चपरमा

त्मायद्भूतयोनिमितिश्रुतौगीयते ॥ योनिशब्दस्यतदर्थत्वात् ॥ अतःस्त्रीलिंगप्रयोगोपीश्वरेयुज्यतइतिभा
वः ॥ अव्यवधानेनोत्पत्तिकर्तृत्वंप्रकृत्यादिस्त्रीलिंगप्रयोगनिमित्तंकुतइत्याशंकांपरिहर्तुंसूत्रार्थेस्मृतिंचा
ह ॥ व्यवधानेनेति ॥ सूतिः सूतिकर्तृत्वंभगवतः ॥ स्त्रीरूपत्वाच्चतच्छब्दोपपत्तिः॥ निषेधस्त्वज्ञेयतामा
त्रार्थः॥ तस्माद्विष्णुरेवाशेषस्त्रीशब्दवाच्यइतियुक्तमेवतत्समन्वयसूत्रमितिसिद्धम् ॥ २८ ॥ अ० ६ ॥
अत्रनिषेधमुखवेद्यत्वादिनाऽन्यत्रैवप्रसिद्धानामसदादिशब्दानांभगवतिसमन्वयप्रतिपादनादस्तिशास्त्रादि
संगतिः॥ समन्वयसूत्रेसर्वशब्दानांपरमात्मवाचित्वमुक्तम् ॥ सर्वमध्यपतिताऽसदादिशब्दाःश्रुतिषुश्रूयंते ॥
असद्वाइदमग्रआसीदित्यादौ ॥ तेषांचान्यपरत्वेसमन्वयसूत्रमयुक्तंस्यादित्यवश्यनिर्णेयता॥ सदसदादिश
ब्दवाच्यंविषयः॥ किंविष्णुरन्यद्वेतिसंदेहः॥ समन्वयसूत्रमन्यत्रैवप्रसिद्धिश्चसंदेहबीजम् ॥ नविष्णुरसदादि
शब्दवाच्यइतिपूर्वःपक्षः ॥ तेषांनिषेधमुखवेद्यवस्तुवाचित्वात् ॥ परमात्मनश्चभावरूपत्वेनतद्योगात् ॥ न
चस्वयंनिषेधमुखवेद्यताभावेऽपितद्वतोऽसतःपरमात्माधीनत्वेनतस्यासदादिशब्दवाच्यतेतिवाच्यम्॥ स्वरूप
शून्यस्यनियम्यताभावेनपराधीनतायोगात् ॥ अतःशून्यादिशब्दानांपरमात्मवाचित्वाभावात्समन्वयसूत्रं

नयुक्तमिति॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे॥ एतेनेति ॥पूर्वोक्तहेतुनैवसर्वशून्यादिशब्दाभगवद्विषया एवेतिप्रतिपादिताइत्यर्थः॥ नन्वसदादिशब्दानांनिषेधमुखवेद्यवस्तुवाचित्वात्कथंपरमात्मनस्तद्वाच्यत्वमि त्यतआह॥ एषह्येवेति॥ दुर्जनानामव्यक्तत्वादिनाशमूनंकुरुतइत्यादियोगेनचेश्वरेनिषेधमुखवेद्यवस्तुवाचि

एतेनसर्वशून्यादिशब्दाअपिव्याख्याताः ॥ एषह्येवशून्यएषह्येवतुच्छएषह्येवाभावएषह्येवाव्य क्तोऽदृश्योऽचिंत्योनिर्गुणश्चेतिमहोपनिषदि ॥ शमूनंकुरुतेविष्णुरदृश्यःसन्परःस्वयम्॥ तस्माच्छू

॥ ॐ एतेनसर्वेव्याख्याताव्याख्याताः ॐ ॥ २९ ॥

न्यइतिप्रोक्तस्तोदनात्तुच्छउच्यते॥ नैषभावयितुंयोग्यःकेनचित्पुरुषोत्तमः॥ अतोऽभावंवदंत्ये नंनाश्यत्वान्नाशइत्यपि॥ सर्वस्यतदधीनत्वात्तत्तच्छब्दाभिधेयता॥ अन्येषांव्यवहारार्थमिष्यते व्यवहर्तृभिरितिमहाकौर्मे॥ एतेनतदधीनत्वाद्युक्तयुक्तिसमुदायेन॥

शब्दप्रवृत्त्युपपत्तिरितिभावः॥ शमूनंकुरुतेस्वसुखादन्यसुखमल्पंकरोतितोदनात्तुत॥ अदृश्यश्छन्नत्वात्॥ भावयितुमुत्पादयितुं नाश्यत्वादभक्ष्यत्वात्॥ सर्वस्यतदधीनत्वादित्युभयत्रसंबध्यते॥ एतेनेतिपरामृष्टमेवहे तुंदर्शयति॥ एतेनेति॥ आदिपदेनतथाह्यधीयतएकेप्रतिज्ञादृष्टांतानुपरोधादित्यादेःसंग्रहः॥ नचासतोऽ

न्याधीनत्वायोगः ॥ सर्वस्यतदधीनत्वादितिस्मृतेः ॥ निषेधमुखवेद्यत्वादीनामपिभगवत्प्रेरणामंतरेणानुपपत्तेः ॥ नहिकारणमंतरेणतन्नैवतदुपपद्यते ॥ ईश्वरस्यस्वातंत्र्याददोषः ॥ ननुकिमर्थंयंसूत्रपदस्यद्विरुक्तिः अध्यायसमाप्तेरर्थभेदेनैवज्ञातुंशक्यत्वात् अन्यथापादांतेपितत्प्रसंगादित्यतआह ॥ अवधारणार्थमिति ॥

अवधारणार्थंसर्वस्याप्युक्तस्याध्यायमूलतः ॥ द्विरुक्तिंकुर्वतेप्राज्ञाअध्यायांतेविनिर्णयइति वाराहसंहितायाम् ॥ २१ ॥अ० ७ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेप्रथमाध्यायस्यचतुर्थःपादः ॥ ४ ॥

विनिर्णयेनिर्णयग्रंथे ॥ अतोऽसदादिशब्दवाच्यत्वस्यहरेरुपपन्नत्वाद्युक्तमशेषस्वरवर्णपदवाक्यात्मकशास्त्रयोनित्वम् ॥ ततोजगज्जन्मादिकर्तृत्वमुख्यानंतगुणत्वंचसिद्धमिति ॥ २१ ॥ अ० ७ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमद्ब्रह्मसूत्रभाष्यस्यटीकायांतत्त्वप्रकाशिकायांजयतीर्थमुनिविरचितायांप्रथमाध्यायस्यचतुर्थःपादः ॥४॥ श्रीकृष्णार्पणमस्तु ॥ ७ ॥

इति श्रीमद्ब्रह्मसूत्रतद्भाष्यसहितायां तत्त्वप्रकाशि

कायां टीकायां प्रथमाध्यायः समाप्तः

अथ श्रीमद्ब्रह्मसूत्रतद्भाष्यसहितायांतत्त्वप्रकाशिकायां

टीकायां द्वितीयाध्यायः प्रारभ्यते.

॥ १ ॥

श्रीवेदव्यासायनमः ॥ ॐ ॥ पूर्वाध्यायार्थसंगतत्वेनैतदध्यायार्थंदर्शयति ॥ उक्तेर्थेइति ॥ अशेषशास्त्र
प्रामाण्येनहरिरेवजगज्जन्मादिकर्तेतियोर्थःप्रथमाध्यायेप्रतिपादितस्तस्ययुक्त्यादिविरुद्धत्वेनप्रेक्षावदुपा
दित्सागोचरत्वंस्यात् ॥ अतस्तस्मिन्नुक्तार्थेयुक्त्यादिविरोधाभावंदर्शयत्यनेनाध्यायेनसूत्रकारइत्यर्थः ॥
एतत्पादप्रतिपाद्यंदर्शयति ॥ प्रथमेति ॥ उक्तार्थेविरोधश्चतुर्विधःस्फुरति ॥ युक्तिसमयश्रुतिन्यायोपेतश्रु
तिविरोधभेदात् ॥ तत्रसर्वविरोधानांयुक्तिमूलत्वेनतदविरोधंप्रथमपादेदर्शयतीत्यर्थः ॥ आद्याधिकरणा

हरिः ॐ ॥ उक्तेर्थेऽविरोधंदर्शयत्यनेनाध्यायेन प्रथमपादेयुक्त्यविरोधम् ॥ प्रथमतः
स्मृत्यविरोधंदर्शयति ॥

र्थंदर्शयति ॥ प्रथमतइति ॥ यद्यप्ययंपादःप्रागुक्तार्थेयुक्तिविरोधंपरिहर्तुमेवप्रवृत्तस्तथापिप्रथमाधिकर
णेपाशुपतादिस्मृतिविरोधाभावंदर्शयति ॥ स्मृतीनांयुक्तिसमयादिरूपत्वेनतद्विरोधपरिहारस्यसमस्ताध्या
यार्थभूतस्यप्राथम्योपपत्तेः पादार्थस्याप्यत्रसंभवेननकोपिदोषइतिभावः ॥ अनेनास्याधिकरणस्यशा
स्त्रादिसंगतिरुक्ताभवति ॥ वेदप्रामाण्येनजगज्जन्मादिकर्तृत्वंविष्णोरुक्तंतस्यचपाशुपतादिस्मृतिविरोधेनो
क्तजिज्ञासासंभवतीत्यविरुद्धतांनेतव्यम् ॥ तद्विष्णोर्जगज्जन्मादिकर्तृत्वंविषयः ॥ युक्तंनवेतिसंदेहः ॥ सम

यविगानंसंदेहबीजम् ॥ पूर्वपक्षस्यसूत्रएवोक्तत्वात्तदुपन्यस्यपूर्वपक्षांशंतावद्याचष्टे ॥ स्मृतीति ॥ नवि
ष्णोर्जगत्कारणत्वंयुक्तम् ॥ तत्प्रमाणाभावात् ॥ नचयतोवाइमानिभूतानिजायंतइत्यादिश्रुतिःप्रमाणम् ॥
श्रुतेर्विष्णोर्जगत्कारणत्वप्रतिपादकत्वेपाशुपतसांख्ययोगादिस्मृतिविरोधेनाप्रामाण्याख्यदोषप्रसंगादन्या
र्थतोपपत्तेः ॥ पाशुपतादिस्मृतीनांरुद्रादेर्जगत्कारणत्वप्रतिपादकत्वात् ॥ नचविरोधेप्यप्रामाण्याभावः ॥
वस्तुविकल्पप्रसंगात् ॥ नचदेशकालादिभेदेनश्रुतिस्मृत्योरविरोधः ॥ स्मृतिषुरुद्रादेःसकलजगज्जन्मादिक

## ॥ॐ स्मृत्यनवकाशदोषप्रसंगइतिचेन्नान्यस्मृत्यनवकाशदोषप्रसंगात् ॐ ॥ १ ॥

र्तृत्वाभिधानात् ॥ नचवाच्यंश्रुतिविरोधेनस्मृतीनामेवान्यार्थत्वमप्रामाण्यंवाकिंनस्यात् ॥ विरोधेत्वनपे
क्षंस्यादसतिह्यनुमानमितिन्यायादिति प्रबलविरोधेनैवदुर्बलस्यान्यार्थतादेःकल्पनीयत्वात् ॥ नहिस्मृति
भ्यःश्रुतेःप्राबल्यमस्ति ॥ स्मृतीनांरुद्रकपिलकमलासनादिभिरार्षैर्विरचितानांदोषाभावगुणयुक्तत्वात् ॥
रुद्रादीनांसार्वज्ञ्यस्यजगद्धितोपदेष्टृत्वस्यचप्रसिद्धत्वात् श्रुतेश्चकर्तृगुणशून्यत्वेनपिपीलिकालिपिनिभत्वा
त् ॥ क्वचिच्छ्रुतिविरोधेनस्मृतेरर्थांतरकल्पनादितुस्मृतेःश्रुतिमूलत्वएवभवति ॥ मूलमूलिनोर्मूलस्यप्रब

लत्वात् ॥ नचपाशुपतादिस्मृतीनांश्रुतिमूलत्वम् ॥ रुद्रादिप्रत्यक्षस्यैवतन्मूलत्वात् ॥ अतःपाशुपतादिस्मृतीनामाप्तप्रणीतानांप्रबलत्वेननिरवकाशत्वाच्छ्रुतेश्चतद्विरुद्धाभिधायकत्वेऽप्रामाण्यस्यैवप्रसंगान्नतयाविष्णोर्जगत्कारणत्वंसिध्यतितस्मान्नतस्यजिज्ञास्यतेतिभावः ॥ सिद्धांतांशंव्याचष्टे ॥ नेति ॥ युक्तमेवविष्णोर्जगत्कारणत्वंश्रुत्युदितत्वात् ॥ नचश्रुतेर्विष्णोर्जगत्कारणत्वाभिप्रायेपाशुपतादिस्मृतिविरोधेनाप्रामाण्यप्रसंगादर्थांतरत्वमितिवाच्यम् ॥ श्रुतिविरोधेनस्मृतीनामेवाप्रामाण्याख्यदोषप्रसंगात् ॥ नचस्मृतिभ्यः

सर्वज्ञाहिरुद्रादयः ॥ अतस्तेषांवचनविरोधेऽप्रामाण्यमेवस्यादितिचेत्॥ न ॥ अन्यस्मृतीनांविष्ण्वादिभिर्नितरांसर्वज्ञैरेवकृतत्वाच्छ्रुतेराधिक्यंचसिध्यति ॥ १ ॥

श्रुतेराधिक्याभावेनाबाधकत्वम्॥पंचरात्रादिस्मृत्यनुकूलत्वेनपाशुपतादिस्मृतिभ्यःश्रुतेराधिक्यसिद्धेः ॥ नचवाच्यंपंचरात्रादिस्मृत्यानुकूल्येऽपिकथंश्रुतेराधिक्यमिति ॥ तासांविष्ण्वादिभिर्नितरांसर्वज्ञैर्जगद्धितोपदेष्टृभिःप्रणीतत्वात् ॥ कुतोविष्ण्वादीनांरुद्रादिभ्योप्याप्ततमत्वम् ॥ तदुक्तस्यश्रुतौसंवाददर्शनात् ॥ रुद्राद्युक्तस्यसंवादहीनत्वात् ॥ अतोवैष्णवस्मृतीनांपरमाप्तैःपुरुषोत्तमादिभिः प्रणीतत्वेननिरवकाशत्वात्पाशुपतादिस्मृतीनांतद्विरोधएवाप्रामाण्यप्रसंगात्सुतरांतत्साहाय्यवत्याश्रुत्याविरोधेऽप्रामाण्यप्रसंगइतियुक्तमेवविष्णोर्जगत्कारणत्वंजिज्ञास्यत्वंचेतिभावः ॥ १ ॥

यदुक्तंवैष्णवस्मृतीनांपरमाप्तप्रणीतत्वेनतत्साहाय्ययुक्तश्रुत्याप्रबलयाविष्णोर्जगत्कारणत्वसिद्धिरिति ॥ न तद्युक्तम् ॥ तथासतिपाशुपतादिस्मृतीनामप्रामाण्यप्रसंगात् ॥ नचाप्तोक्तानांतासामप्रामाण्यंयुज्यतइत्या शंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ इतरेषांचेति॥ यदुक्तंश्रुत्याविष्णोर्जगत्कारणत्वाभ्युपगमेऽन्यस्मृतीना मप्रामाण्यंप्रसज्जतइति ॥ तद्युक्तमेवतासामप्रामाण्यमितिवक्तव्यम् ॥ आप्तप्रणीतानांकथंतदितिचेन्मै

इतरेषांतासुस्मृतिषूक्तानांफलादीनांप्रत्यक्षतोऽनुपलब्धेरप्रामाण्यंतासांयुक्तम् ॥

## ॥ ॐ इतरेषांचानुपलब्धेः ॐ ॥ २ ॥

चशब्देनभागोपलब्धिरंगीकृता ॥ १ ॥

वम् ॥ तासुस्मृतिषूक्तानामदृष्टादितरेषांफलानर्थानामुक्तानुष्ठानपरित्यागयोःकृतयोरपिप्रत्यक्षतोऽनुपल ब्धेराप्तोक्तत्वानिश्चयादितिभावःप्रत्यक्षयोग्यत्वमितरेषामित्यनेनोच्यते ॥ ननुपाशुपतादिस्मृतिविहितनि षिद्धाचरणेफलानर्थयोरुपलंभात्कथंतदनुपलब्धिमसूत्रयदित्यतआह ॥ चशब्देनेति ॥ नसूत्रकृतासर्वा त्मनाऽनुपलब्धिरभ्युपगता यथाप्रत्यक्षविरोधः किंतुभागेनोपलब्धिरप्यंगीकृता ॥ चशब्देनतस्याःसूच नात् ॥ नचतथासत्युपलब्धिभागवत्सर्वस्याप्तोक्तत्वम् ॥ भागांतरवदनाप्तोक्तत्वसंभवादितिभावः॥ १ ॥

नतथापिसर्वासामवैष्णवस्मृतीनामप्रामाण्यं योगस्मृत्युक्तफलादीनामव्यभिचारेणोपलंभादाप्तप्रणीतत्व निश्चयोपपत्तेरित्याशंकांपरिहरन्सूत्रमुपन्यस्यव्याचष्टे ॥ एतेनेति ॥ योगस्मृत्युक्तफलादीनामव्यभिचारिणोपलंभादाप्तोक्तत्वनिश्चयोपपत्तेरप्रामाण्यायोगइतिनमंतव्यम् ॥ तदुक्तफलानांस्वेदनगात्रभंजनादीनां प्रत्यक्षोपलब्धावपिप्रथमंस्वेदनंद्वितीयंगात्रभंजनमित्याद्युक्ताभ्यासावस्थोत्कर्षसंपत्तिकालएवस्वेदनादीनामदृष्टेराप्तोक्तत्वानिश्चयादितिभावः ॥ अतोवैदिकस्मृतीनामप्रमाणत्वान्नश्रुत्युक्तस्यविष्णोर्जगत्कारणत्वस्यतद्विरोधइतिसिद्धम् ॥ २ ॥ अ० ॥ १ ॥ अत्रविष्णोर्जगत्कारणत्वेप्रमाणत्वेनोक्तवेदादिप्रामाण्य

## ॥ ॐ एतेनयोगःप्रत्युक्तः ॐ ॥ ३॥

योगफलंप्रत्यक्षतउपलभ्यतइतिनमंतव्यम् ॥ उक्ताभ्यासेतत्कालएवफलादृष्टेः ॥ ३ ॥अ० १ ॥

स्ययुक्तिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ श्रुत्यादिप्रामाण्याद्विष्णोर्जगत्कारणत्वंसिध्यतीत्युक्तम् ॥ श्रुत्यादिप्रामाण्यस्यचयुक्तिविरोधेनब्रह्मणोजगत्कारणत्वसिद्धिरतोऽसौपरिहर्तव्यएव ॥ श्रुत्याद्येवविषयः ॥ प्रमाणंनवेतिसंदेहः ॥ उभयविधवाक्योपलब्धिःसंदेहबीजम् ॥ श्रुत्यादिकंनप्रमाणमितिपूर्वःपक्षः ॥ कारीर्यायजेतवृष्टिकामइत्यादिश्रुतेःकारीर्याद्यनुष्ठानेपिवृष्ट्याद्यदृष्ट्याऽविद्यमानार्थाभिधायकत्वात् ॥ तथास्मृतीनामप्यनुपलभ्यमानफलाभिधायकत्वेनाविद्यमानार्थत्वात् ॥ अविद्यमानाभिधायकानांचपाशुपतादिस्मृतिवदप्रामाण्यनियमात् ॥ अविद्यमानाभिधात्रीणामपिश्रुतिस्मृतीनांप्रामाण्येऽन्य

स्मृतीनामपितत्प्रसंगात् ॥ नन्वविद्यमानाभिधायकत्वसाम्येपिश्रुत्यादेरेवप्रामाण्यंनान्यस्येतिविभागेहेतुरस्ति ॥ एवंचवेदाद्येकदेशस्याप्रामाण्येऽन्यदेशप्रमाणतायामनाश्वासान्नविष्णोर्जगत्कारणत्वसिद्धिरिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यप्रतिज्ञांशंतावद्व्याचष्टे ॥ नेति ॥ अस्यश्रुत्यादेस्तथात्वंपाशुपतादिस्मृतिवदुक्तानुपलब्धिहेतुनानाप्रामाण्यंकल्प्यमितिभावः ॥ तत्रहेत्वाकांक्षायांसौत्रंहेतुमुपन्यस्यव्याचष्टे ॥ विलक्षणत्वादिति ॥ श्रुतेःपाशुपतादिस्मृतितोनित्यत्वाख्यवैलक्षण्यात्स्मृतेस्तदनुसारित्वाख्यवैलक्षण्यान्नपाशुपतादि

नैवंश्रुतेस्तदनुसारिस्मृतेश्चतदुक्तानुपलब्धेरप्रामाण्यंवाच्यम् ॥ विलक्षणत्वात् नित्यत्वात्

## ॥ ॐ नविलक्षणत्वादस्यतथात्वंचशब्दात् ॐ ॥ ४ ॥

तदनुसारित्वाच्च ॥ नहिनित्येदोषाःकल्प्याः ॥ स्वतश्चप्रामाण्यम् ॥

स्मृतिवच्छ्रुत्यादेरप्रामाण्यमित्यर्थः ॥ ननुनित्यत्वादिसद्भावेपिकुतोऽप्रामाण्याभावइत्यतआह ॥ नहीति ॥ वाक्याप्रामाण्यंतावद्वक्तृदोषनिबंधनम् ॥ नहिनित्येवेदेतेदोषाःकल्पयितुंशक्यंते ॥ यतोनित्यत्वाददोषत्वं ततोऽप्रामाण्याभावःश्रुतेःसिध्यति प्रमाणानुकूलत्वात्स्मृतेरपितत्सिद्धिरितिभावः ॥ फलव्यभिचारेपिन पाशुपतादिस्मृतिवद्वेदादेरप्रामाण्यमित्यत्रोक्तवैलक्षण्याख्यंहेतुंप्रकारांतरेणव्याचष्टे ॥ स्वतश्चेति ॥ भवेदुक्तानुपलब्ध्यावेदाद्यप्रामाण्यकल्पनंयदिपाशुपतादिस्मृतिवत्फलोपलब्ध्यादिसंवादाधीनज्ञानंतत्प्रामाण्यं

स्यात् ॥ नैतदस्ति ॥ वेदादिप्रामाण्यस्यसंवादनिरपेक्षतज्ज्ञानादेवसिद्ध्यंगीकारात् ॥ नहिनिर्दोषतदनुसारि तत्स्वरूपग्रहेपुनःप्रामाण्योपलब्ध्यैसंवादसापेक्षताऽनुभूयते ॥ नचपाशुपतादिस्मृतीनामपितथात्वंवाच्यम् ॥ निर्दोषत्वाद्यनिश्चयादितिभावः ॥ प्रामाण्यंसंवादाधीनज्ञानमेवकिंनस्यादित्यतआह ॥ अन्यथेति ॥ यदिप्रामाण्यंसंवादादेवज्ञायतेतर्हिसंवादकप्रामाण्यमपिसंवादांतरेणज्ञायतेस्वतएववा ॥ आद्येतदप्येवमित्यनवस्थास्यात् ॥ द्वितीयेपरंपराकल्पनंव्यर्थंस्यात् ॥ आद्यप्रामाण्यस्यैवस्वतस्त्वाभ्युपगमोपपत्ते

अन्यथाऽनवस्थितेः ॥ नचक्षुर्नश्रोत्रंनतर्कोनस्मृतिर्वेदाह्येवैनंवेदयंतीतिभाल्लवेयश्रुतेश्च ॥

रितिभावः ॥ कदाचित्प्रामाण्यजिज्ञासायामेवसंवादापेक्षणान्नानवस्थेतिचेन्नैवम् ॥ प्रामाण्याध्यवसायंविनाप्रवृत्त्यनुपपत्त्यातज्जिज्ञासाऽध्रौव्यात् ॥ फलसंदेहेपिकृष्यादौप्रवृत्तिर्दृश्यतइतिचेत्सत्यम् ॥ सापिननिःशंका ॥ यावच्छंकमेवसंवादापेक्षणान्नानवस्थेतिचेत्तन्नवक्तव्यम् ॥ किंशंकासर्वत्रानुवर्ततेक्वचिन्नोत्पद्यतएववा ॥ आद्येकथमनवस्थाभावः ॥ द्वितीयोनिरस्तप्रायः ॥ अपिचसंवादकमप्रामाण्यशंकांनिवर्तयतिप्रामाण्यंज्ञापयतिवा ॥ आद्येप्रामाण्यस्यस्वतस्त्वप्राप्तिः ॥ द्वितीयेशंकाभावेपिसंवादापेक्षास्यात् ॥ संवादकमुभयत्रापिप्रवर्ततइतिचेन्न ॥ कल्पकाभावात् ॥ बाधकवदुभयत्रव्यापारःकिंनस्यादिति

चेन्न ॥ अप्रामाण्यशंकाशून्यस्यप्रामाण्यज्ञानेसंवादनिरपेक्षत्वात् ॥ बाधकेनविनानिवृत्ताप्रामाण्यशं कस्याप्यप्रामाण्यबुद्ध्यनुदयानुभवात् ॥ यदपिप्रामाण्यंपरतोज्ञायते ॥ अनभ्यासदशायांसांशयिकत्वात् अप्रामाण्यवदिति ॥ तदप्ययुक्तप्रतिकूलतर्कपराहतमनुकूलतर्कशून्यंच ॥ संशयस्यदोषादेवोपपत्तेः ॥ स्व तस्त्वेनाभ्युपगतोपमानानुमानप्रामाण्येपिसंशयदर्शनाच्च ॥ अनभ्यासदशायामपिसंदेहाभावस्यापिदर्श नाच्चेत्यलम् ॥ वेदस्यस्वतःप्रामाण्येसूत्रसूचितांश्रुतिंचाह ॥ नेति ॥ अत्रचक्षुरादीनांपरमात्माऽप्रमाप कत्वमुक्त्वावेदस्यैवतत्प्रमापकत्वोक्तेःसंवादानपेक्षतयाप्रामाण्यमित्युक्तंभवति ॥ वेदस्यनित्यत्वंकुतइत्यत

नित्यत्वंचशब्दादेवप्रतीयते ॥ वाचाविरूपनित्ययेत्यादेः ॥ अनादिनिधनानित्येतिचस्मृतिः ॥ ४॥

आह ॥ नित्यत्वंचेति ॥ अनेनतथात्वमित्युभयतःसंबध्यतइत्युक्तंभवति ॥ तस्मैसर्वतःप्रकाशायातिसम र्थायविष्णवेनित्ययावेदवाचासाध्वींस्तुतिंरेयप्रकुर्वित्यर्थः ॥ विरूपेतिस्वात्मानंप्रतिसंबोधनम् ॥ बहुका लीनत्वमात्रेणनित्यत्वोपचारःकिंनस्यादित्यतआह ॥ अनादीति ॥ अनादिनिधनतयानित्यानतुबहुकाली नतामात्रेणनित्यत्वोपचारइत्यर्थः ॥ नचवाच्यंवेदप्रामाण्येविवदंतंप्रतिकथंतत्प्रामाण्योपपादनायोपन्य स्तयोर्नित्यत्वस्वतःप्रामाण्ययोःसाक्षितयाश्रुत्युपादानंयुक्तमिति ॥ परेणापिफलव्यभिचारेणाप्रामाण्ये वेदस्यापितत्प्रसंगादित्यापादनमात्रस्यक्रियमाणत्वात् ॥ युक्तेश्चोपन्यस्तत्वात् ॥ ४ ॥

यदुदितंनित्यत्वेननिर्दोषस्यवेदस्यनाप्रामाण्यमितिनतद्युक्तम् ॥ तदुक्तफलस्यादर्शनात् ॥ यावतातदेवा प्रामाण्यम् ॥ नचप्रामाण्यस्यस्वतस्त्वेनसंवादानपेक्षितेत्युक्तमितिवाच्यम् ॥ स्वतःप्रामाण्यवादिनापिदो षदर्शनेऽप्रामाण्यस्यावश्यंग्राह्यत्वात् ॥ अयमेवहिदोषोयदुक्तस्यादर्शनमित्याशंकांपरिहरन्सूत्रमुपन्यस्य तच्छेषंपूरयति ॥ दृश्यतेत्विति ॥ नफलादर्शनेनश्रुत्यादेरप्रामाण्यंवक्तव्यम् ॥ फलादर्शनस्यकर्तुरयोग्यत

||५||

अधिकारिणांफलम् ॥

## ॥ ॐ दृश्यतेतु ॐ ॥५॥

योपपत्तेः ॥ तत्कुतःकल्प्यते ॥ योग्यानांफलदर्शनात् ॥ नचशंकनीयंपाशुपतादिस्मृत्युक्तफलव्यभिचा रस्यापिकर्तुरयोग्यतानिबंधनतोपपत्तेर्नाप्रामाण्यम् ॥ योग्यानांफलदर्शनादितिकल्पकाभावात् ॥ वे दस्यतुनिर्दोषतयास्वतःप्रामाण्येसिद्धेऽवश्यंव्यभिचारस्यगत्यंतरंकल्पनीयम् ॥ पाशुपतादीनांतुफलदर्श नमंतरेणप्रामाण्यसाधकाभावात् ॥ तस्यापिस्वतःप्रामाण्यमितिचेत् ॥ सत्यम् ॥ निर्दोषत्वानिर्णयेफल विसंवाददर्शनेनाप्रामाण्यप्राप्तेरेवोक्तत्वादितिभावः ॥ तुशब्दःकर्तृविशेषद्योतकः ॥ अधिकारित्वंनामतत्फ

||५||

लयोग्यत्वंकर्मवैगुण्यप्रतिबंधादिशून्यत्वंवा ॥ अधिकरणार्थेस्मृतिंचाह ॥ भविष्यत्पुराणेचेति ॥ स्वतः फलसंवादादिरहितनिर्दोषतयैव ॥ पूर्वकर्मान्योपलक्षणम् ॥ इतःफलदर्शनतः ॥ अदृश्योक्तावनुपलभ्य मानवचने ॥ अतोवेदादिप्रामाण्यस्ययुक्तिविरुद्धत्वाभावाद्युक्तंतेनहरेर्जगत्कारणत्वमितिसिद्धम् ॥ ५ ॥

भविष्यत्पुराणेच ॥ ऋग्यजुःसामाथर्वाश्चमूलरामायणंतथा ॥ भारतंपंचरात्रंचवेदाइत्येवशब्दिताः ॥ पुराणानिचयानीहवैष्णवानिविदोविदुः ॥ स्वतःप्रामाण्यमेतेषांनात्रकिंचिद्विचार्यते ॥ यद्येषूक्तंनदृश्येतपूर्वकर्मात्रकारणम् ॥ नाप्रामाण्यंभवेदेषांदृश्यतेह्यधिकारतः॥ इतःप्रामाण्यमन्येषांनस्वतस्तुकथंचन ॥ अदृश्योक्तौततस्तेषामप्रामाण्यंनसंशयइति ॥ ५ ॥ अ० २ ॥

अ० २॥ अत्रपुनर्विष्णोःसर्वकर्तृत्वादिप्रतिपादकवेदप्रामाण्येयुक्तिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ वेदप्रामाण्यात्सर्वकारणत्वंविष्णोरित्युक्तम् ॥ तत्प्रामाण्यस्यचयुक्तिविरोधेनविष्णोर्जगत्कारणत्वंसिध्यतीत्यतोऽसौपरिहार्यएव ॥ सवेदोविषयः ॥ प्रमाणंनवेतिसंदेहः ॥ पूर्वोक्तमेवात्रसंदेहबीजम् ॥ पूर्वपक्षयति॥

नन्वत्रांप्रामाणिकदेवताकल्पनात्तासांचविशिष्टसामर्थ्यकल्पनाद्वरंवेदाप्रामाण्यग्रहणमेवलाघवात् ॥ न
चवेदेनतत्सिद्धिस्तत्प्रामाण्येविवादादित्याशंकापरिहरत्सूत्रंपठित्वातच्छेषमेवपूरयति ॥ दृश्यतेचेति ॥ ना
प्रामाणिकत्वमभिमानिदेवतानां तत्सामर्थ्यस्य अमहद्भिर्दृश्यमानत्वादित्यर्थः ॥ परबुद्धेरप्रत्यक्षत्वात् ॥ कु
तएतदित्यतआह ॥ भविष्यत्पुराणेचेतितादेवताःशक्तयश्च ॥ अथवाविग्रहवतीनांसर्वगतानांतासांदर्शन
प्रसंगइत्युक्तेप्रष्टव्यम् ॥ किमज्ञैर्दृश्येरन्नुमहद्भिर्वा ॥ आद्यस्योत्तरंविशेषसामर्थ्यम ॥ द्वितीयेऽभ्युपगमोदृ
तासांसामर्थ्यंमहद्भिः॥ भविष्यत्पुराणेच ॥ पृथिव्याद्यभिमानिन्योदेवताःप्रथितौजसः॥अचिंत्याः

## ॥ ॐ दृश्यतेच ॐ ॥ ७ ॥

शक्तयस्तासांदृश्यंतेमुनिभिश्चताः ॥ ताश्चसर्वगतानित्यंवासुदेवैकसंश्रयादिति ॥ ७ अ० ॥ ३ ॥
श्यतेचेति ॥ अथवावस्त्वंतरमधिष्ठायतासांवचनादिकंकथमित्यस्योत्तरंतासामिति ॥ परिच्छिन्नानामभि
मानिनीनांकथमनेकाभिमन्यमानाधिष्ठातृत्वमपीत्यस्यानुगतिरिति ॥ अनुपलब्धिबाधपरिहारायसूत्रमि
ति ॥ नचवाच्यंदेवतासद्भावेपिकुतोऽत्रतद्व्यपदेशकल्पनेति ॥ अचेतनानांवचनाद्यदृष्टग्रानिर्दोषत्वाक्यस्या
प्रामाण्यादृष्ट्याचतत्कल्पनोपपत्तेः ॥ अतोवेदप्रामाण्येयुक्तिविरोधाभावाद्युक्तंतेनभगवतोजगत्कारणत्व
साधनमितिसिद्धम् ॥ ७ अ० ३ ॥

अत्रब्रह्मणोजगत्कारणत्वेयुक्तिविरोधस्यपरिह्रियमाणत्वादस्तिशास्त्रादिसंगतिः ॥ जगत्कारणत्वंहरेरुक्तम् ॥ तस्ययुक्तिविरुद्धत्वेलक्षणासंभवात्सनिराकर्तव्यएव ॥ जगत्कारणत्वमेवविषयः ॥ तद्विष्णोर्युक्तमयुक्तंवेतिसंदेहः ॥ श्रुतिविगानंसंदेहबीजम् ॥ तत्रपूर्वपक्षयति ॥ असदेवेति ॥ नविष्णोर्जगत्कारणत्वम् ॥ प्रमाणाभावात् ॥ नचयतोवाइमानीत्यादिश्रुतिःप्रमाणम्॥ असदेवेदमग्रआसीदित्यादिश्रुत्याऽसतोपिकारण

असदेवेदमग्रआसीत् असतःसदजायतइत्यादिनाऽसतःकारणत्वोक्तेर्विरोधइत्यतोवक्ति॥

॥ ॐ असदितिचेन्नप्रतिषेधमात्रत्वात् ॐ ॥ ८ ॥

त्वोक्तेः ॥ नहिश्रुतित्वाविशेषेऽन्ययाब्रह्मणःकारणत्वंसेत्स्यत्यन्ययातुनासतइतियुक्तम् ॥ अतोसदेवजगत्कारणमितिनजगत्कारणत्वंब्रह्मणः ॥ तथाचोक्तंलक्षणंदुष्टमितिभावः ॥ अत्रसर्वत्रासच्छब्देनप्रलयवर्तिविश्वप्रागभावोऽभिधीयते कारणशब्देनकर्तेत्यवधेयम् ॥ स्यादेतत् ॥ श्रुतिद्वयेनसंदेहएवनान्यतरपक्षावधारणमिति ॥ नपूर्वपक्षेसयुक्तिकत्वस्यवक्ष्यमाणत्वादिति ॥ सिद्धांतयत्सूत्रमवतार्याऽऽक्षेपांशस्यपूर्वमेवविवृतत्वात्परिहारांशंव्याचष्टे ॥ अतइति ॥ युक्तमेवविष्णोर्जगत्कारणत्वंनत्वसतः ॥ तस्याभावध

र्मात्मकनामंतरेणस्वरूपतएवप्रतिषेधबुद्धिविषयत्वात् ॥ नहिशशविषाणादीनांयत्किंचित्प्रतिकारणत्वंसं भवतीतिभावः ॥ नन्वेतस्मिन्नधिकरणेऽसतोजगत्कारणत्वंवदतांशून्यवादिनांसमयोनिराक्रियतेनतुश्रुति प्राप्तमसन्मतम् ॥ एतेनसर्वेव्याख्याताइत्यसदादिशब्दानांब्रह्मविषयत्वस्योक्तत्वेनासतःप्राप्त्यभावात् ॥

प्रतिषेधमात्रत्वान्नासतःकारणत्वंयुक्तम् ॥ असतःकारणत्वाद्युक्तिविरुद्धंवेदवाक्यमित्ये तदत्रनिषिध्यते ॥ सर्वशब्दानांब्रह्मणिसमन्वयेपितदधीनत्वादर्थवदित्यादिनाऽमुख्यत्वेना न्यस्यापिवाच्यत्वेनांगीकारादसतःप्राप्तिः ॥ तथाश्रुतिप्राप्तमेवासन्मतमत्रनिषिध्यते ॥ समयस्योपरिनिषेधात् ॥



अतोऽपव्याख्यानमेतदित्यतआह ॥ असतइति ॥ अत्राधिकरणेऽसतःकारणत्वप्रलयस्थितत्वाभिधाय कश्रुत्याविरुद्धंविष्णोर्जगत्कारणत्वाभिधायकंवेदवाक्यमितिश्रुतिप्राप्तमेवासन्मतंनिराक्रियतेनतुसमयइ त्यर्थः ॥ ननूक्तमेवासतोनश्रुतौप्राप्तिरितितत्राह ॥ सर्वेति ॥ नन्वस्त्वेवमसतःप्राप्तिस्तथापिसमयोऽत्रनिरा क्रियतइतिकिंनस्यादित्यतआह ॥ तथेति ॥ अमुख्यतयेत्यर्थः ॥ शून्यवादिसमयस्योपरितनपादेनिरा

करिष्यमाणत्वात् ॥ अत्रश्रुतिप्राप्तमेवासन्मतंनिराक्रियतइत्येवांगीकार्यम् ॥ अन्यथापौनरुक्त्यापाता दितिभावः ॥ यद्यत्रब्रह्मणोजगत्कारणत्ववाचिश्रुतेःश्रुतिप्राप्तासन्मतविरोधोनिराक्रियेततर्हितदधिकरणं तृतीयपादेनिबंधनीयं नतुयुक्तिविरोधपरिहारात्मकेऽस्मिन्पादइत्यतआह ॥ अर्थादिति ॥ नकेवलमत्र श्रुतिविरोधःपरिक्रियते येनासंगतिः ॥ किंनामकारणमभिमतंप्रलयेऽसद्भवितुमर्हतिवस्तुत्वात्कार्यवदित्या द्यसतः कारणत्वप्रतिपादकयुक्तिविरोधोऽपीतिभावः ॥ तथापियुक्तिविरोधमात्रपरिहारात्मकेपादेश्रुति

अर्थाद्युक्तिविरोधोनिराक्रियते ॥८॥

युक्तिविरोधपरिहारोऽसंगतइत्यतोऽर्थादित्युक्तम् ॥ नात्रश्रुतियुक्त्योःस्वतंत्रंविरोधद्वयंपरिक्रियतेकिंतुश्रुति विरोधपरिहारेणाप्यंततोयुक्तिविरोधएव ॥ तथाहि ॥ अत्रासतःकारणत्वप्रतिपादकयुक्तिःपूर्ववादिनोप न्यस्यतेतस्याश्चनिर्मूलायाअसाधकत्वात्तन्मूलभूताचश्रुतिरुच्यते ॥ तथाचानुपपन्नभाषित्वेनश्रुतेरर्थांतरे प्रामाण्याभावइतितद्विरोधेपरिहृतेनिर्मूलयुक्तेःस्वतएवाप्रामाण्यमिति ॥ अतोऽत्रश्रुतिविरोधपरिहारस्ययु क्तिविरोधपरिहारांगत्वान्नासंगतिरितियुक्तमेवोक्तव्याख्यानमितिभावः ॥ ८ ॥

यदुक्तंप्रतिषेधमात्रत्वाच्छशविषाणादिवदसतोनकारणत्वमिति ॥ ननयुक्तम् ॥ युक्तिविरुद्धस्यापिश्रुति
बलात्कस्यचिदसतःकारणत्वस्याभ्युपगमेबाधकाभावात् ॥ नचशशविषाणादीनामपितथात्वप्रसंगः ॥ स
त्सुवैलक्षण्यवदसत्स्वपिवैलक्षण्योपपत्तेरित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ अपीताविति ॥ अस
तःसकाशाज्जगदुत्पत्तावभ्युपेतायांप्रलयेअसन्मात्रावशेषःप्रसज्जेत ॥ कार्यनाशेकारणमात्रावशेषनिय
मात् ॥ अतोसमंजसमसन्मतमित्यर्थः ॥ ९ ॥ अस्माभिरपिप्रलयेऽसन्मात्रावशेषस्याभिलषितत्वान्नानि

असतउत्पत्तौप्रलयेसर्वासत्त्वमेवस्यात् ॥ ९ ॥ प्रलयेसर्वासत्त्वंभावेदृष्टांतभावादेवनयु

**॥ॐ अपीतौतद्वत्प्रसंगादसमंजसम् ॐ॥९॥ ॥ॐ नतुदृष्टांतभावात् ॐ॥ १० ॥**

ज्यते ॥ सतउत्पत्तिःसशेषविनाशश्चहिलोकेदृष्टः ॥ १० ॥

ष्टापादनमेतदित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ नत्विति ॥ नप्रलयेसर्वासत्त्वंयुज्यते ॥ तदापदा
र्थसत्त्वस्यैवदृष्टांतबलेनसाधयितुंशक्यत्वात् ॥ अतःपरस्येष्टमपिप्रलयेसर्वासत्त्वापादनंप्रामाणिकपरित्या
गरूपत्वाद्ध्रुवेदेवानिष्टापादनमितिभावः ॥ कोसौप्रलयेपदार्थसत्त्वसाधनेदृष्टांतइतितत्राह ॥ सतइति ॥ अ
त्रैतौप्रयोगौभवतः ॥ विप्रतिपन्नोत्पत्तिःसतोभवितुमर्हति ॥ उत्पत्तित्वाद्घटोत्पत्तिवत् ॥ विमतोविनाशःस
शेषोविनाशत्वात् घटविनाशवदिति ॥ एवंविप्रतिपन्नोत्पत्तिविनाशयोःसत्पूर्वकत्वेसशेषत्वेचसिद्धेप्रलयेप
दार्थसत्त्वमेवसिध्यति ॥ १० ॥

नकेवलंप्रामाणिकपरित्यागप्राप्त्याप्रलयेसर्वासत्त्वमनिष्टमपित्वप्रामाणिकत्वाच्चेत्यर्थप्रतिपादकसूत्रमुप न्यस्यव्याचष्टे ॥ स्वपक्षेति ॥ नतावत्प्रलयेसर्वासत्त्वंप्रत्यक्षसिद्धम ॥ नाप्यागमेन ॥ तस्याभावात् ॥ अ नुमानमपिकिंप्रलयःसर्वासत्त्ववानित्यादिरूपेणसाक्षाद्भवेत्परंपरयावा ॥ नाद्यः ॥ प्रलयेसर्वासत्त्वपक्षे दृष्टांताभावेनानुमानस्यदुष्टत्वात् ॥ व्यतिरेकेऽतिप्रसंगः॥ एतेनद्वितीयोपिपरास्तः ॥ अतःप्रलयेसर्वासत्त्व स्याप्रामाणिकत्वात्तदभ्युपगमोऽनिष्टइतिभावः ॥ ११ ॥ तर्केणसदसतोःकारणत्वसाधनबाधनेआक्षिप्य

दृष्टांताभावादेव ॥ ११ ॥ एतावानेवतर्कइतिप्रतिष्ठापकप्रमाणाभावात् ॥ उक्तादन्यथाप्यनुमे

॥ ॐ स्वपक्षदोषाच्च ॐ ॥ ११ ॥

॥ ॐ तर्काप्रतिष्ठानादप्यन्यथानुमेयमितिचेदेवमप्यनिर्मोक्षप्रसंगः ॐ ॥ १२॥

यमितिचेत् ॥ न ॥ एवंसतिप्रमाणसिद्धेऽपिमोक्षेऽन्यथानुमेयत्वादनिर्मोक्षप्रसंगः॥

समादधत्सूत्रमुपन्यस्याक्षेपांशंतावद्व्याचष्टे ॥ तर्केति ॥ यत्तर्कबलेनसतःकारणत्वसाधनमसतश्चतद्बाध नंतदयुक्तम ॥ यद्यत्तर्केणसाध्यतेतस्मादुक्तात्तर्केणसाधितादन्यथापिप्रतितर्केणसाधयितुंशक्यत्वेनतर्क स्याप्रामाण्यात् ॥ नहिप्रतितर्कएतावानेवैतादृशंतर्कंप्रतिविरोधितयावर्ततेनैतादृशमितिनियामकमस्ति ॥ अतःसर्वानुमानेषुप्रतितर्कस्यानिवारणीयत्वेनतेषामप्रामाण्यान्नतद्बलात्सत्कारणत्वसाधनादियुक्तमिति भावः ॥ परिहारांशंव्याचष्टे ॥ नेति ॥ तर्कसिद्धंसर्वंप्रतितर्केणदूषयितुंशक्यतइतिवदन्प्रष्टव्योजायते ॥

किंप्रामाणिकंतर्कसिद्धंप्रतितर्केणदूषयितुंशक्यमप्रामाणिकंवेति ॥ द्वितीयस्तुयुक्तएव ॥ प्रथमेऽपिप्रष्टव्यम् ॥ किमेवंवादिनोमतेमोक्षोऽस्तिनवेति॥नचेन्नासौवादीप्रयोजनांतरस्यशास्त्रमंतरेणापिसिद्धेः ॥ अस्तिचेत्किंविप्रतिपन्नम् ॥ प्रत्यागमेनैवसाध्यतेउततर्केण ॥ नाद्यः ॥ अनिर्मोक्षवादिनाऽऽगमप्रामाण्यानभ्युपगमात् ॥ अतोद्वितीयपक्षएवांगीकार्यः ॥ तथाचप्रामाणिकस्यापितर्कसिद्धस्यप्रतितर्केणबाधेसोऽपिचार्वाकतर्केणबाधितःस्यादितिमतंव्यर्थमेवभवेत् ॥ नचपरंप्रतिप्रतिपादनोपायाभावेऽपिस्वस्यागमेनमोक्षसिद्धि

अतोयावत्प्रमाणसिद्धंतावदेवांगीकर्तव्यंनातोन्यच्छंक्यम् ॥ यावदेवप्रमाणेनसिद्धंतावदहापयन् ॥ स्वीकुर्यान्नैवचान्यत्रशंक्यंमानमृतेक्वचिदितिवामने ॥१२॥

रितिवाच्यम्॥ विप्रतिपन्नप्रमेयेस्वस्यापिकेवलागमेनानध्यवसायादितिभावः॥ एवंसर्वतर्केऽपिप्रतितर्कःप्रसरतीत्यंगीकारेऽतिप्रसंगमुक्त्वाविपर्ययेपर्यवसानंदर्शयति ॥ अतइति ॥ यतएवंप्रामाणिकतर्कस्यापिप्रतितर्केणबाधाभ्युपगमेऽतिप्रसंगोऽतःप्रामाणिकमेवतर्केणांगीकार्यमप्रामाणिकंनशंक्यम् ॥ प्रमाणसाहाय्ययुक्तःप्रतितर्कोऽप्रामाणिकतर्कंबाधतेनत्वप्रामाणिकःप्रामाणिकम् ॥ अत्रैतौप्रयोगौभवतइत्यत्रउक्ततर्कद्वयस्यप्रलयःसर्वासत्त्ववानित्यादिविरुद्धतर्कौतूभावपिनप्रामाणिकौ ॥ प्रकृततर्कश्चप्रामाणिकोनाप्रामाणिकेननिषेद्धुंशक्यतइतिभावः ॥ अत्रस्मृतिसंमतिंचाह॥ यावदिति ॥ अन्यत्रान्यत् ॥ १२ ॥

मास्त्वसत्कारणंजगतस्तथापिनविष्णोर्जगत्कारणत्वंसंभवति ॥ विप्रतिपन्नंनिष्कारणमचेतनकारणंजीव
कारणंवाकार्यत्वात् कूलपतनदध्यादिवदितिनिष्कारणत्वादिसाधकयुक्तिविरोधात् ॥ नचनिर्मूलयुक्तेरसा
धकत्वम् ॥ अकस्मादित्यादिश्रुतिमूलत्वादित्याशंकांपरिहरन्सूत्रमुपन्यस्यव्याचष्टे ॥ एतेनेति ॥ सत्का
रणत्वादौदृष्टांतभावेननिष्कारणत्वादौदृष्टांताभावेनेत्यर्थः ॥ कूलपतनादीनामपिनिष्कारणत्वादिनसंमत

एतेनदृष्टांतभावेनाऽभावेनचात्रशिष्टाअप्यपरिग्रहाविरुद्धसिद्धांताअकर्तृकत्वाचेतनकर्तृकत्व
जीवकर्तृकत्वादयोऽप्यकस्माद्वीदमाविरासीदकस्मात्तिष्ठत्यकस्माल्लयमभ्युपैतिप्रधानादिदमुत्प

## ॥ ॐ एतेनशिष्टाअपरिग्रहाअपिव्याख्याताः ॐ ॥ १२ ॥

न्नंप्रधानमधितिष्ठति ॥ प्रधानेलयमभ्येतिनह्यन्यत्कारणंमतम् ॥ जीवाद्भवंतिभूतानिजीवेतिष्ठंत्य
चंचलाः ॥ जीवेनुलयमृच्छंतिनजीवात्कारणंपरमित्यादिश्रुतिप्रामानिराकृताः ॥ यथादुःखादिषु
जीवस्यास्वातंत्र्यमेवमन्येष्वपीतिदृष्टांतः ॥

मितिभावः ॥ अत्रनिष्कारणत्वादिनिरासेवक्ष्यमाणचार्वाकसांख्यनिषेधस्यपौनरुक्त्यंप्रसज्जतइत्यतउक्त
म् ॥ श्रुतिप्रामाइति ॥ तृतीयानुप्रवेशादितुपूर्ववत्परिहरणीयम् ॥ नन्वस्तुसत्कारणत्वादौघटादिदृष्टांतभा
वेनिष्कारणत्वादौदृष्टांताभावश्च तथापिकथमजीवकर्तृत्वेदृष्टांतः कथंचजीवकर्तृत्वेदृष्टांताभावोघटादी
नांजीवकर्तृत्वदर्शनादित्यतआह ॥ यथेति ॥ दुःखादिकार्येषुजीवस्यकर्तृत्वाभावेनाजीवकर्तृत्वेऽस्तिदृ

ष्टांतः ॥ एवमन्येष्वपिकार्येषुतत्साध्यम् ॥ ततश्चजीवकर्तृत्वेदृष्टांताभावइतिभावः ॥ घटादीनांजीव
कर्तृत्वाभावेनचेतनकर्तृकत्वेदृष्टांतोऽचेतनकर्तृकत्वनिषेधार्थमित्यतोऽकर्तृत्वमित्यनुक्त्वाऽस्वातंत्र्यमित्यु
क्तम् ॥ नन्वेवंचेदसत्कारणत्वादिश्रुतीनांकागतिरित्यतआह ॥ श्रुतीति ॥ श्रुतीनांब्रह्मवाचकत्वेप्यसदादि
वाचकत्वममुख्यतयाऽभ्युपगम्यतएवातस्तद्विरोधइत्यतआह ॥ यत्रेति ॥ अतोयुक्त्यादेराभासत्वेनाविरो

श्रुतिगतिस्तुब्रह्मवाचकत्वेनप्रदर्शिता॥यत्रान्यवाचकत्वेप्यविरोधस्तत्रान्यदप्यमुख्यतयो
च्यते ॥ यत्रविरोधस्तत्रब्रह्मैवोच्यतइतिनियमः ॥ १३ ॥ अ० ४ ॥ कर्माणिविज्ञानमय

॥ ॐ भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॐ॥ १४ ॥

श्चआत्मापरेऽव्ययेसर्वएकीभवंतीतिमुक्तजीवस्यपरापत्तिरुच्यते ॥ अतस्तयोरविभागः ॥
अतःपूर्वमपिसएव ॥ नह्यन्यस्यानन्यत्वंयुज्यतइतिचेत् ॥

धकत्वाद्युक्तंजन्मादिकारणत्वंब्रह्मणोलक्षणमितिस्थितम् ॥ १३ ॥ अ० ॥ ४ ॥ अत्रपुनर्विष्णोर्जगत्का
रणत्वादौयुक्तिविरोधस्यपरिह्रियमाणत्वादुक्तिशास्त्रादिसंगतिः ॥ विष्णोर्जगत्कर्तृत्वादिपूर्वमभिहितंतस्य
चयुक्तिविरुद्धत्वेलक्षणमसंभविस्यादतोऽसौनिराकरणीयएव ॥ जगज्जन्मादिकर्तृत्वंविषयः ॥ परमात्मनो
युक्तमयुक्तंवेतिसंदेहः ॥ वादिविवादःसंदेहबीजम् ॥ पूर्वपक्षस्यसूत्रएवोक्तत्वात्तदुपन्यस्यपूर्वपक्षांशंताव
द्व्याचष्टे ॥ भोक्त्रापत्तेरिति ॥ नविष्णोर्जगत्कर्तृत्वादियुक्तम् ॥ तस्यजीवाभिन्नत्वात् ॥ नहिजीवाभिन्न

स्यजगत्कर्तृत्वाद्युपपद्यतेजीवाभेदोऽप्युभयगतविरुद्धधर्मपरित्यागेनजीवस्येश्वरसालक्षण्यग्रहणेनेश्वरस्य जीवसालक्षण्यग्रहणेनवासंभवति ॥ सर्वथानजगत्कारणत्वादीश्वरैकनिष्ठंसंभवति ॥ तस्यजीवाभेदएवकु तइतिचेत् ॥ कर्माणिविज्ञानमयश्चआत्मेत्यादौमुक्तजीवस्यपरमात्मत्वप्राप्तिःश्रूयते ॥ किंचातः ॥ तेनैव हेतुनामुक्तेश्वरयोरभेदसिद्धिः ॥ योयथाश्रूयतेसतथेतिव्याप्तेः ॥ मुक्तजीवाभिन्नस्यापिकथंचिज्जगत्का रणत्वंनिर्वोढुंशक्यमितिचेन्न ॥ मुक्तादैक्येसंसारेप्यैक्यस्याऽऽवश्यकत्वात् ॥ नहिभिन्नमभिन्नतांयातीतियु क्तम् ॥ अतोजीवाभिन्नत्वादीश्वरस्यैवपरमार्थतोजगत्कारणत्वाद्यनुपपन्नमितिलक्षणसूत्रंनयुक्तमितिभा

नस्याल्लोकवत् ॥ यथालोकेउदकेउदकांतरस्यैकीभावव्यवहारेप्यंतर्भेदोऽस्त्येव ॥ एवं

स्यादत्रापि ॥ तथाचश्रुतिः ॥ यथोदकंशुद्धेशुद्धमासिक्तंतादृगेवभवतीति ॥

वः ॥ नञध्याहारेणसिद्धांतांशंव्याचष्टे ॥ नेति ॥ जीवेशयोरभेदाभावान्नेश्वरस्यजगत्कारणत्वादिविरु द्धम् ऐक्येनोक्तत्वान्मुक्तजीवस्यपरमात्माभिन्नत्वेनतत्सिद्धिरितिचेन्न ॥ एकीभूतत्वेनोक्तजलेंऽतर्भेदद र्शनेनव्यभिचारात् ॥ ऐक्योक्तिस्तुस्थानैक्याद्यालंबनत्वेनजलैकीभावोक्तिवदुपचरितास्यादितिभावः ॥ नश्रुतेःस्वातंत्र्येणोपचरितार्थकल्पनंकिंतुश्रुत्याप्युक्तमित्याह ॥ तथाचेति ॥ एवंमुनेर्विजानतआत्माभव ति ॥ गौतमेतिवाक्यशेषः ॥ एतेनबाधकंविनोपचारकल्पनमयुक्तमित्येतदपिपरास्तम् ॥ निरंजनःपरमंसा म्यमुपैति परात्परंपुरुषमुपैतिदिव्यमित्यादिसन्निहितवाक्यविरोधाच्च ॥ जलयोरप्यैक्यान्नव्यभिचारा

दित्यतउक्तार्थेस्मृतिंचाह ॥ स्कांदेचेति ॥ तादात्म्यंपरमात्मनाप्राप्तइत्युक्तोऽपीत्यर्थः ॥ मुक्तोऽपीतिवा ॥
हरौनियतचित्तत्वाद्गृहवत्तत्प्रवेशनान्मोक्षंतादात्म्यमित्याहुर्नतुतद्रूपतः॥क्वचिदितिवचनात्॥ अल्पमुक्ताना
मेतदस्त्वित्यतआह ॥ ब्रह्मेति ॥ वर्तमाननिषेधात्स्यादुत्तरत्रेत्यतआह ॥ नेति ॥ ननुमुक्तेश्वरयोर्भेदसमर्थ
नंफलाध्यायसंगतमतोनैतत्सूत्रार्थः॥किंतुचेतनाचेतनात्मकप्रपंचस्यब्रह्मात्मकत्वेविषयस्यविषयित्वंस्यात्॥

स्कांदेच ॥ उदकंतूदकेसिक्तंमिश्रमेवयथाभवेत् ॥ नचैतदेवभवतियतोवृद्धिःप्रदृश्यते ॥ एवमेवहि
जीवोऽपितादात्म्यंपरमात्मना॥प्राप्तोऽपिनासौभवतिस्वातंत्र्यादिविशेषणादिति॥ ब्रह्मेशानादिभि
र्देवैर्यत्प्राप्तुंनैवशक्यते ॥ तद्यत्स्वभावःकैवल्यंसभवान्केवलोहरइतिच ॥ नतेमहित्वमन्वश्नुवंति नते
विष्णोजायमानोनजातइतिच ॥ फलत्वेऽपियुक्तिविरोधेंऽतर्भावादत्रोक्तम् ॥१४॥ अ० ॥ ५ ॥

तथाचविषयविषयिविभागोनस्यादित्याशंकांसमुद्रात्मनामपिफेनतरंगादीनांविभागवदुपपद्यतइत्यत्रनिर
स्यतेइत्यतआह ॥ फलत्वेपीति ॥ एतदधिकरणस्यफलाध्यायसंगतत्वेप्यत्रनासंगतिर्येनान्यार्थकल्पनम॥
उक्तरीत्यायुक्तिविरोधपरिहारेप्यंतर्भावात् ॥ अन्यथोभयांतर्गतस्यैकत्राप्यनुक्तिप्रसंगइतिभावः॥ अर्था
तरंतुप्रपंचस्यब्रह्मात्मकत्वनिरासेननिरस्तम् ॥ भोक्तृत्वापत्तेरितिभावप्रधाननिर्देशाभावाच्च ॥ अतोविष्णो
र्जगत्कारणत्वादौयुक्तिविरोधाभावादुपपन्नंलक्षणसूत्रमितिसिद्धम् ॥१४॥ अ० ५॥

अत्रहरेःस्वातंत्र्येणजगत्कारणत्वेयुक्तिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ विष्णुर्जगत्सृष्ट्यादिकर्तेत्यु
क्तम् ॥ तस्यचस्वतंत्रसाधनानपेक्षत्वेयुक्तिविरोधप्राप्तौनसर्वगुणत्वंतेनसिध्यतीत्यसौनिराकर्तव्यएव ॥ त
ज्जगत्सृष्ट्यादिकंविषयः ॥ किंस्वतंत्रसाधनसापेक्षंनवेतिसंशयः ॥ लोकदृष्टिरलौकिकत्वंचसंदेहबीजम्॥
स्वतंत्रसाधनसापेक्षमितिपूर्वःपक्षः ॥ विप्रतिपन्नासृष्टिः ॥ कर्तृव्यतिरिक्तस्वतंत्रसाधनसापेक्षासृष्टित्वात्

स्वतंत्रबहुसाधनासृष्टिर्लोकेदृष्टा ॥ नैवंब्रह्मणः ॥ किंतुस्वरूपसामर्थ्यादेवतस्यसृष्टिः ॥

## ॥ ॐ तदनन्यत्वमारंभणशब्दादिभ्यः ॐ ॥ १५ ॥

किंस्विदासीदधिष्ठानमारंभणंकतमत्स्वित्कथासीदितिह्याक्षेपः॥

घटादिसृष्टिवदितियुक्तिसिद्धत्वात् ॥ अन्यथातद्विरोधात् ॥ घटसृष्टौमृदादीनिखलुस्वतंत्रसाधनानि ॥
तानिविनासृष्ट्यनुपपत्तेः ॥ अतोब्रह्मस्वतंत्रसाधनसापेक्षमेवसृष्ट्यादिकर्त्रितिनतस्यजगज्जन्मादिकारणत्वे
नसर्वगुणपूर्णत्वसिद्धिरितिप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ तदनन्यत्वमिति ॥ यद्यपिघटादिसृ
ष्टिःस्वतंत्रबहुसाधनसापेक्षादृष्टातथापिनैतद्दृष्टांतेनब्रह्मणोजगत्सृष्टिस्तथाकल्प्या।किंतुस्वतंत्रसाधनस्यतद

नन्वेवंकिमुक्तंभवतिस्वरूपसामर्थ्यादेवतस्यसृष्टिः ॥ कुतः ॥ यतःकिंस्विदितिश्रुतावधिष्ठानादिसाधना
द्याक्षेपःक्रियते ॥ आक्षेपस्यविपर्ययेपर्यवसानात् ॥ अनुमानंतुश्रुतिविरोधादप्रमाणमेवेतिभावः ॥ ईश्व
रसृष्टेःस्वतंत्रसाधनसापेक्षत्वमात्रसाधनेसिद्धसाधनतास्यादितिबद्धित्युक्तम् ॥ विश्वकर्माहरिः ॥ यतोये
नाधिष्ठानादिनाभूमिंद्यांचजनयन्जनयिताविशेषेणबभूव ॥ येनचमहिम्नाविश्वतश्चक्षुरादृणोत्तदधिष्ठानं

अधिष्ठानाद्यनुक्तेः ॥ आदिशब्दाद्युक्तिभिश्च ॥ परतंत्रोह्यपेक्षेतस्वतंत्रःकिमपेक्षते ॥ सा
धनानांसाधनत्वंयतःकिंतस्यसाधनैरित्यादिभिः ॥ १५ ॥

किमासीत् आरभ्यतेऽनेनेत्यारंभणंसाधनंवाकतमदासीत् कथंरूपंचासीत् ॥ नकिंचित्कथमपीत्यर्थः ॥
किंशब्दस्यप्रश्नापेक्षयोःसमत्वात्प्रश्नोऽयंकिंनस्यादित्यतआह ॥ अधिष्ठानादीति ॥ प्रश्नश्चेत्परिहारोवक्त
व्यः ॥ किंस्विद्धिमस्यभेषजमित्यादिवत् ॥ अत्रपरिहारायाधिष्ठानाद्यनुक्तेर्नायंप्रश्नःकिंत्वाक्षेपएवेतिभा
वः ॥ युक्तिविरुद्धंचानुमानमितिभावेनाह ॥ आदीति ॥ अत्रापरतंत्रत्वात्स्वतंत्रत्वात्साधनसत्ताप्रदत्वादि
तिव्यतिरेकिहेतुत्रयंसूचितंभवति ॥ १५ ॥

युक्त्यंतरेणस्वतंत्रसाधनंप्रतिक्षिपत्सूत्रमुपन्यस्यव्याचष्टे ॥ भावेचेति ॥ यदिभगवत्स्रष्टौतदतिरिक्तंस्वतंत्र साधनमस्ति तर्हिवेदादिप्रमाणैरुपलभ्येतनचोपलभ्यते ॥ अतोनास्तीत्यर्थः ॥ प्रमाणानुपलब्धमपिकिंन स्यादित्यतआह ॥ अनुक्तमिति ॥ भगवद्गुणादिकंचसामान्यतस्तदुक्तमेवेत्यदोषः ॥ १६ ॥ नन्वद्भ्यःसंभूत इतिश्रुतौप्रकृतिंस्वामवष्टभ्यविसृजामीतिस्मृतौचभगवदितरस्वतंत्रसाधनप्रतीतेर्नतदनुपलब्धिरित्याशंक्य

स्वतंत्रसाधनभावेप्रमाणैरुपलभ्येत ॥ अनुक्तंपंचभिर्वेदैर्नवस्त्वस्तिकुतश्चन ॥ अतोवेद

॥ॐ भावेचोपलब्धेः ॐ ॥१६॥ ॥ॐ सत्वाच्चावरस्य ॐ ॥१७॥

त्वमेतेषांयतस्तेसर्ववेदकाइतिस्कांदे ॥ १६ ॥ अद्भ्यःसंभूतःपृथिव्यैरसाच्चेत्यादिनासाधनां तरप्रतीतेःकथमनुपलब्धिरित्यतआह॥ अवरस्यतदधीनस्यसाधनस्यसत्त्वात् ॥

तत्परिहारत्वेनसूत्रमवतार्यव्याचष्टे ॥ अद्भ्यइति ॥ नात्रस्वतंत्रसाधनमुच्यतेकिंतुभगवदधीनमेवतदधीनसा धनस्यसत्त्वाभ्युपगमान्नोक्तविरोधइतिभावः ॥ तत्पुरुषाख्योहिरण्यगर्भोविश्वकर्मणोहरेःसकाशादबाद्यु पलक्षितभूतैरसोपलक्षिततन्मात्राभिश्चोत्पन्नःसर्वस्मादधिकेत्वनसमवर्तत ॥ तस्यतत्पुरुषस्याग्रतएवजा तंविश्वंब्रह्मांडाख्यंरूपंत्वष्टाभगवान्धारयन्वर्ततइत्यर्थः ॥ ननुसाधनमात्रमत्रप्रतीयते नतुतदधीनमिति

तच्चलोकानुसारात्स्वतंत्रमेवांकिनस्यादित्यतआह ॥ कालइति ॥ यस्मात्तदायदासीत्तद्भगवदधीनमासी
त्तस्मादेकएवपरमआसीदित्युच्यते ॥ कीदृशोऽसौ यस्यसकाशादेतदासीत्कुतः ॥ नह्येतत्पूर्वमासीदित्य
र्थः ॥ साधनाद्याक्षेपतत्सद्भावोक्त्यन्यथाऽनुपपत्तिश्चास्यसमाधानम् ॥ १७ ॥ उक्तमाक्षिप्यसमादधत्सू
त्रमुपन्यस्याऽऽक्षेपांशंतावद्व्याचष्टे ॥ असदिति ॥ साधनांतरसत्वमभ्युपेत्यतस्येश्वराधीनत्वंयदुदितंनतद्यु

कालआसीत्पुरुषआसीत्परमआसीत्तद्यदासीत्तदावृत्तमासीत्तदधीनमासीदथह्येकएवपरमआसी
द्यस्यैतदासीन्नह्येनदासीदितिहिकाषायणश्रुतिः ॥ १७ ॥ नासदासीदितिसर्वस्यासत्त्वव्यपदेशान्ने

## ॥ ॐ असद्व्यपदेशान्नेतिचेन्नधर्मांतरेणवाक्यशेषात् ॐ ॥१८॥

तिचेन्न ॥ अव्यक्तत्वपारतंत्र्यादिधर्मांतरेणहितदुच्यते ॥ तमआसीदितिवाक्यशेषात् ॥

क्तम् ॥ नासदासीदितिश्रुतौप्रलयेसर्वस्यासत्त्वव्यपदेशात् ॥ साधनांतरस्यैवाभावेपरमात्माधीनतावर्णनं
तुसुतरामयुक्तमितिभावः ॥ तदानींप्रलयेपंचभूतानिनासुः ॥ गुणत्रयंयच्चपरंव्योमप्रकृतिर्मृत्युरमृतंदिवा
रात्र्योश्चप्रभावोनासीत् ॥ एतदभावात्किकुत्रकस्यसुखार्थमावृणोत् ॥ नकिमपि ॥ यच्चेतनप्रकृतिरूपमं
भस्तदप्यासीत्किंनैवासीत् किंतुनिवातंब्रह्मैकमेवस्वसामर्थ्येनाचेष्टतनतुतस्मादन्यत्परमासेत्यर्थः॥ परिहारां
शंव्याचष्टे ॥ नेति ॥ भवेदेतद्यदितस्यांश्रुतौसाधनानांस्वरूपासत्त्वाभिप्रायेणाऽसत्त्वव्यपदेशोभवेत् ॥ नैतद

स्ति ॥ साधनानामव्यक्तत्वपरतंत्रत्वाधमत्वविकृतरूपविनाशादिधर्मांतरापेक्षयाऽसत्त्वस्यव्यपदिष्टत्वात् ॥
अव्यक्तादौतद्व्यपदेशस्यलोकेदृष्टत्वात् ॥ नचवाच्यंस्वरूपासत्त्वाभिप्रायेणासत्त्वोक्तिःकिंनस्यादिति ॥ वा
क्यशेषेप्रकृत्यादिसत्त्वश्रवणादितिभावः ॥ यत्तमोऽपरिमितंसलिलंभूत्वासीत्प्रकृत्याख्यंतेनेदंसर्वंगूहितमा
सीदित्यर्थः ॥ अन्यथातस्माद्धान्यन्नपरःकिंचनासेतिपरशब्दवैयर्थ्यम् ॥ अथपरकृतापव्याख्यांनिरा
चष्टे ॥ नचेति ॥ अतीताधिकरणेव्यवहारमभ्युपेत्यचेतनाचेतनविभागोनिरूपितइदानींतुपारमार्थिकीद

नचान्यत्रप्रमाणमस्ति ॥ अजोह्येकोजुषमाणोऽनुशेतेजहात्येनांभुक्तभोगामजोन्यः ॥

अनाद्यनंतंजगदेतदीदृक्प्रवर्ततेनात्रविचार्यमस्ति ॥ नचान्यथाक्वापिचकस्य

शामवलंब्यचेतनाचेतनस्यब्रह्मानन्यत्वमुच्यते ॥ वाचारंभणमित्यादिश्रुतेरितिव्याख्यानंनयुक्तम् ॥ प्रपं
चस्यब्रह्मानन्यत्वेप्रमाणाभावादितिभावः ॥ नकेवलंचेतनानामचेतनानामनन्यत्वेप्रमाणाभावःकिंतुप्रमा
णविरुद्धंचेतिभावेनाह ॥ अजोहीति ॥ रजःसत्त्वतमोगुणात्मिकांस्वसदृशमहदादिकार्याणिजनयंतींप्रकृ
तिंसेवमानःकश्चिज्जीवोऽनुवर्तते ॥ कश्चिदस्यांभोगान्भुक्त्वाजहातीतिमुक्तामुक्तयोःपरस्परंभेदःश्रूयते ॥
अत्रेश्वरोपिमुक्तउच्यते ॥ अचेतनप्रपंचस्यब्रह्मानन्यत्वंनामबाधितत्वंविवक्षितंपरस्यतच्चप्रमाणविरुद्धमि
तिभावेनाह ॥ अनादीति ॥ नित्यमबाध्यंजीवोनब्रह्मणोभिद्यतेचेतनत्वाद्ब्रह्मवत् प्रपंचोबाध्योदृश्यत्वाच्छु

क्तिरजतवदित्यादियुक्तिसद्भावात्कथंप्रमाणाभावइत्यतआह ॥ परस्परेति ॥ वाक्यानांविरोधेएवैकवा
क्यानुसारियुक्तिसिद्धार्थोग्राह्योनकेवलयुक्तिसिद्धार्थइत्यर्थः ॥ संनुतर्हिनाचारंभणमित्यादिश्रुतिस्मृतयः

चेदमभूत्पुरानापितथाभविष्यत् ॥ असत्यमप्रतिष्ठंतेजगदाहुरनीश्वरम् ॥ असत्यमाहुर्ज
गदेतदज्ञाःशक्तिंहरेर्येनविदुःपरांहि ॥ यःसत्यरूपंजगदेतदीदृक्स्रष्टात्वभूत्सत्यकर्मामहा
त्मा ॥ अथैनमाहुःसत्यकर्मेतिसत्यंह्येवेदंविश्वमसौसृजते अथैनमाहुर्नित्यकर्मेतिनित्यं
ह्येवासौकुरुते ॥ यच्चिकेतसत्यमितन्नमोघमित्यादिश्रुतिस्मृतिभ्यः ॥ परस्परविरोधेतुवा
क्यानांयत्रयुक्तता ॥ तथैवार्थःपरिज्ञेयोनावाक्यायुक्तिरिष्यतइतिबृहत्संहितायाम् ॥ वि
रुद्धवत्प्रतीयंतेआगमायत्रवैमिथः ॥ तत्रदृष्टानुसारेणतेषामर्थोन्ववेक्ष्यतइतिच॥

प्रमाणमत्रेत्यतआह ॥ विरुद्धवदिति ॥ नैताभिःश्रुतिभिरनन्यत्वंसिध्यतिउदाहृतश्रुतिविरोधात् ॥ नचत
र्हिपरस्परविरोधादप्रामाण्यम् ॥ विरोधेप्रत्यक्षानुसारेणतद्विरुद्धानन्यत्वश्रुत्यादेर्व्याख्येयत्वादितिभावः ॥
एतेनश्रुतियुक्तिभ्यामनन्यत्वसिद्धिरित्यपास्तम् ॥ प्रत्यक्षस्यततोपिबलवत्त्वाद्युक्तीनामाभासत्वाच्चदृष्टमि

तिप्रबलंबहुप्रमाणदर्शनंवा ॥ स्मर्यतेचप्रपंचमिथ्यात्ववादिश्रुत्यादेरप्यन्यार्थवर्णनमितिभावेनाह ॥ ईशइ
ति ॥ आभासत्वमेवविभज्याह ॥ वेदेति ॥ वेदादेस्तदर्थएवाभासत्वमन्यार्थकल्पनानुकर्तव्यैव ॥ तदित
रेषांविप्रलंभोऽथवाभ्रमःकारणंकल्पनीयम् ॥ ननुप्रमाणत्वाविशेषात्कुतोनयुक्तेरर्थसाधकत्वमित्यतआ

ईशोनीशोजगन्मिथ्यानपूज्योगुरुरित्यपि ॥ एवमादिविरुद्धानिप्रमाणान्यथयुक्तयः ॥ प्र
माणैर्बहुभिर्ज्ञेयाआभासाइतिवैदिकैः ॥ वेदवेदानुसारेषुविरोधेऽन्यार्थकल्पना॥ अन्येषां
तुविरुद्धानांविप्रलंभोऽथवाभ्रमः इतिचभागवततंत्रे॥ शास्त्रार्थयुक्तोऽनुभवःप्रमाणंतूत्तमं
मतम् ॥ मध्यमंत्वागमोज्ञेयःप्रत्यक्षमधमंस्मृतम् ॥ प्रत्यक्षयोरागमयोर्विरोधेनिश्चयाय
तु ॥ अनुमाद्यानस्वतंत्राःप्रमाणपदवींययुरितिपुरुषोत्तमतंत्रे ॥ १८ ॥

ह ॥ शास्त्रार्थेति ॥ तदनुकूलःसाक्षादर्थविषयत्वात् यथार्थज्ञानमुत्तमंप्रमाणम् ॥ आगमस्यतत्साधन
भूतस्यसर्वविषयत्वान्मध्यमत्वम् ॥ प्रत्यक्षस्यानुप्रमाणस्यासर्वविषयस्यावरत्वम् ॥ अनुप्रमाणमनुमानं
प्रमाणांतरसाहाय्ययुक्तमसर्वविषयमितिसर्वावरमिति ॥ अतोऽर्थांतरस्याप्रामाणिकत्वात्प्रमाणविरुद्धत्वा
च्चोक्तएवसूत्रार्थइतिस्थितम् ॥ १८ ॥

ननुसाधनांतरमभ्युपगम्यतस्यैश्वराधीनत्वकथनाद्वरंसाधनाभावकथनमेवसाधनशून्यस्यस्रष्ट्यादिकर्तृत्वाभ्युपगमेमहिमाधिक्यलाभादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ युक्तेरिति ॥ नमहिमाधिक्यलाभायसाधनाभावोभ्युपेयः साधनांतरेणस्रष्टेरपियुक्तत्वात्महिमाऽविरोधित्वात् स्वाधीनसाधनैःप्रवृत्तेरप्यैश्वर्यद्योतकत्वस्यसाधनानामितिवाक्यसिद्धत्वाल्लोकसिद्धत्वाच्च ॥ तर्ह्युभयथापिमहिमोत्कर्षसिद्धौ किंसाधनसत्त्वपक्षाग्रहेणेतिचेन्न ॥ निरपेक्षतयास्रष्टृत्वस्योभयपक्षेपिसाम्येनमहिमोत्कर्षलाभसाम्येसा

साधनानांसाधनत्वंयदात्माधीनमिष्यते ॥ तदासाधनसंपत्तिरैश्वर्यद्योतिकाभवेदित्यादे

## ॥ ॐ युक्तेःशब्दांतराच्च ॐ ॥ १९ ॥ ॥ ॐ पटवच्च ॐ ॥ २० ॥

स्साधनांतरेणस्रष्टिर्युक्ता ॥ अब्जःसंभूतोहिरण्यगर्भइत्यष्टावित्यादिशब्दांतराच्च ॥ १९ ॥

साधनांतरेणहिपटादिस्रष्टिर्दृष्टा ॥ २० ॥

धनसत्त्वाभ्युपगमेनैकाकिनःसकाशात्सोपस्करस्याधिकोत्कर्षलाभात् ॥ अब्जःसंभूतइत्यादौप्रतीतेश्चतत्राग्रहइतिभावः ॥ प्राचीनश्रुतिसंग्रहार्थंशब्दांतरादित्युक्तम् ॥ १९ ॥ साधनसद्भावस्ययुक्तिसिद्धत्वाच्चतत्राग्रहइत्यर्थप्रतिपादकंसूत्रमुपन्यस्यव्याचष्टे ॥ पटवच्चेति विप्रतिपन्नास्रष्टिः ॥ कर्तृव्यतिरिक्तसाधनसाध्यास्रष्टित्वात्पटस्रष्टिवदित्यर्थः ॥ २० ॥ तर्हिविमतास्रष्टिः कर्तृव्यतिरिक्तस्वतंत्रसाधनसापेक्षा

स्रष्टित्वात्पटस्रष्टिवदिति ॥ विप्रतिपन्नंवासाधनंस्वतंत्रंसाधनत्वात्तुर्यादिवदित्यपिस्यादित्याशंकांपरिहरत्सू
त्रमुपन्यस्यव्याचष्टे ॥ यथेति ॥ नतत्साधनंस्वतंत्रंप्रेरणार्थंभगवतानुप्रविष्टत्वात् यथाशरीरेंद्रियप्राणा
दिः॥यःप्राणेतिष्ठन्नित्यादेरीश्वरेणानुप्रविष्टत्वान्नस्वतंत्रम् ॥ अन्यथाऽनुप्रवेशवैयर्थ्यादितिभावः ॥ साध
नानांभगवदनुप्रविष्टत्वमेवकुतइत्यतआह ॥ प्रकृतिमिति ॥ क्षोभयामासउन्मुखीचकार ॥ अतोभग
वतःस्वातंत्र्येणसर्वकर्तृत्वेविरोधगंधाभावाद्युक्तंसर्वगुणपूर्णत्वमितिसिद्धम् ॥ २१ ॥ अ० ॥ ६ ॥ अन्य

तच्चसाधनजातंतेनानुप्रविष्टमेवयथाशरीरेंद्रियादिः ॥ प्रकृतिंपुरुषंचैवप्रविश्यपुरुषोत्त

## ॥ ॐ यथाप्राणादिः ॐ ॥ २१ ॥

मः ॥ क्षोभयामासभगवान्स्रष्टयर्थंजगतःप्रभुरितिकौर्मे ॥ २१ ॥ अ० ६ ॥ जीवकर्तृ
त्वपक्षःश्रुतिप्राप्तोविस्तरान्निराक्रियते ॥

थाऽनुमितौचज्ञशक्तिवियोगादितिजीवकर्तृत्वस्यनिराकरि[illegible]त्वादेतेनशिष्टापरिग्रहाअपिव्याख्या
ताइतिनिराकृतत्वाच्च नैतदधिकरणारंभोयुक्तइत्याशंकापरिहारायाधिकरणार्थमाह॥ जीवेति॥ अत्रजी
वाद्भवंतिभूतानीतिश्रुतिप्राप्तोजीवकर्तृत्वपक्षोनिराक्रियते॥ उत्तरत्रतुसमयप्राप्तइत्यर्थभेदः॥ श्रुतिप्राप्तस्य
संक्षेपतोनिरस्तस्यविस्तरान्निराकरणाच्चावैयर्थ्यमितिभावः ॥ नचवाच्यंतदनंतरमेवनिराक्रियतामिति ॥

अन्यथाप्राणादिरित्युक्तेपुनराशंकोदयात् ॥ अतएवात्रविष्णोर्जगत्कारणत्वेजीवकर्तृत्वसाधकयुक्तिवि रोधस्यपरिह्रियमाणत्वादस्तिशास्त्रादिसंगतिः ॥ विष्णोर्जगत्स्रष्टृत्वादिकमुक्तम् ॥ तस्यचजीवकर्तृत्वसाधकयुक्तिविरोधेलक्षणत्वायोगात्सनिराकार्यएव॥ तज्जगत्कर्तृत्वादिविषयः ॥ विष्णोर्युक्तमयुक्तंवेतिसंदेहः॥ श्रुतिविप्रतिपत्तिःश्रुत्यनुभवविप्रतिपत्तिर्वासंदेहबीजम् ॥ नविष्णोर्जगत्कर्तृत्वंयुक्तमितिपूर्वःपक्षः ॥ जीवस्यैवकर्तृत्वानुभवात् ॥ सहियत्कार्यमारभतेतत्समापयतीत्यनुभूयते॥ नचायमनुभवोभ्रांतः॥ बाधकाभावात्॥ नचवाच्यमस्तुजीवस्यकर्तृत्वम् ॥ तच्चेश्वरप्रेरितमिति॥ कल्पनागौरवापत्तेः॥ यथाहीश्वरस्तावदनुप

जीवकर्तृत्वपक्षेहिताकरणमहितकरणंचनस्यात् ॥ २२ ॥

## ॥ ॐ इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॐ ॥ २२ ॥

लभ्यमानोनास्त्येवसचकल्पनीयस्तस्यचजीवप्रेरकत्वंकल्पनीयमप्रामाणिकमितिजीवस्यैवस्वतंत्रकर्तृत्वांगीकारेलाघवम् ॥ एवंचपरिदृश्यमानकार्याणांस्वतंत्रजीवकर्तृत्वेसमस्तजगतोऽपितथात्वंसिध्यति॥ तथा श्रुतिः॥ जीवाद्भवंतिभूतानिइत्यादि॥ नचेश्वरविषयत्वंश्रुतेः ॥ तस्यैवाभावात्॥ अतःश्रुत्यादिबलाज्जीवस्यैवस्वतंत्रकर्तृत्वादसंभविजन्मादिकारणत्वलक्षणंब्रह्मणइतिप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ इतरेति॥ यदिजीवकर्तृत्वस्यश्रुतौव्यपदेशादिसिद्धत्वाज्जीवःस्वतंत्रकर्तेत्युच्यते तर्हितस्यहिताकरणमहितकरणंचनस्यात्॥ नहिस्वतंत्रस्यतेसंभवतः॥विद्येतेचतेजीवेअतोसौनस्वतंत्रकर्ताऽपितुपरमेश्वरएवेतिभावः ॥२२॥

यदियत्किंचिद्दोषमात्रेणजीवकर्तृतानिराक्रियतेतर्हिंब्रह्मणोपिकर्तृत्वमप्राप्नोति ॥ तस्यापिश्रमादिदोषनियमात् ॥ एवंचपक्षयोःसाम्येऽनुभवादिसिद्धंजीवकर्तृत्वमेवाश्रयणीयमित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ अधिकमिति ॥ तुशब्दःसाम्यव्यावर्तकः ॥ भवेद्ब्रह्मप्रतिबंध्याजीवस्यकर्तृत्वसमर्थनम् ॥ यदि

नचब्रह्मणःश्रमचिंतादिदोषप्राप्तिः ॥ अधिकशक्तित्वात् ॥ श्रोतामंताद्रष्टादेष्टाघोष्टावि

॥ ॐ अधिकंतुभेदनिर्देशात् ॐ ॥ २३ ॥

ज्ञाताप्रज्ञातासर्वेषांभूतानामंतरपुरुषः ॥ एषतआत्मासर्वांतरोयोशनायापिपासेशोकंमोहंजरांमृत्युमत्येतीत्यादिविशेषनिर्देशात् ॥ २३ ॥

ब्रह्मणिश्रमचिंतासाधनास्मरणदुःखादिदोषाभवेयुः ॥ नचैतेतत्रसंति ॥ श्रुतिपुतस्यसर्वेभ्योऽखिलश्रोतृत्वांतर्यामित्वाशनायाद्यतीतत्वाद्यतिशयस्यनिर्देशात् ॥ नह्येवंविधस्यतेदोषाःशंकितुमपिशक्यंतइतिभावः ॥ २३ ॥ अथापिजीवोऽन्यनिरपेक्षतयाकर्ताचेतनत्वादीश्वरवदितिकिंनस्यात् ॥ नचेश्वराभ्युपगमानभ्यु

पगमाभ्यांविरोधः ॥ परसिद्धेनैवन्यायेनपरस्यबोधनादित्याशंकांपरिहरन्सूत्रमुपन्यस्यव्याचष्टे ॥ अश्मा
दिवच्चेति ॥ नचेतनत्वहेतुनाजीवस्यान्यानपेक्षकर्तृत्वंसाध्यम् ॥ अस्वातंत्र्येणहेतुनाअश्मादिवत्तदभाव
स्यापिसाधयितुंशक्यत्वात् ॥ स्वतंत्रोह्यन्यनिरपेक्षःकार्यंकरोति चेतनत्वंत्वप्रयोजकमितिभावः ॥ चोऽपि
शब्दार्थः॥एतेनकर्मसापेक्षतयाहिताक्रियादिदोषपरिहारोऽपिपरास्तः ॥ तस्याप्यस्वतंत्रत्वात्॥अस्वातंत्र्य

चेतनत्वेप्यश्मादिवदस्वतंत्रत्वात् ॥ स्वतःकर्तृत्वानुपपत्तिर्जीवस्य ॥ यथादारुमयींयो

## ॥ ॐ अश्मादिवच्चतदनुपपत्तिः ॐ ॥ २४ ॥

षांनरःस्थिरसमाहितः ॥ इंगयंत्यंगमंगानितथाराजन्निमाःप्रजाइतिचभारते ॥ २४ ॥

मेवजीवस्यकुतइत्यतआह ॥ यथेति ॥ अस्वातंत्र्यस्यहिताक्रियादिनैवसिद्धौसूत्रार्थेसंमतिर्वा ॥ २४ ॥
जीवस्यस्वतःकर्तृत्वाभावमाक्षिप्यसमादधत्सूत्रंपठित्वाऽऽक्षेपांशंतावद्व्याचष्टे॥उपसंहारेति॥नजीवस्यस्वतः
कर्तृत्वाभावोवक्तव्यः ॥ अनुभवविरोधात्॥ सहियत्कर्तुमारभतेतदवसाययतीत्यनुभूयतइत्यर्थः ॥ परिहा

रांशंव्याचष्टे ॥ नेति ॥ कार्योपसंहारदर्शनेनजीवस्यान्यानपेक्षतयानकर्तृत्वसिद्धिः॥ तत्कार्योपसंहारस्ये श्वरनिमित्तत्वात्॥नचजीवेदृश्यमानत्वेनजीवस्यैवासावितिवाच्यम्॥ गोषुवर्तमानस्यापिक्षीरस्यान्नंरसादि रूपेणेतिवचनात्प्राणाधीनत्ववदत्राप्युपपत्तेः॥ नचबाधकवचनबलात्क्षीरस्यान्याधीनत्वेपिकार्योपसंहार

जीवेनकार्योपसंहारदर्शनात्तस्यकर्तृत्वमितिचेन्न ॥ यथागोपुक्षीरंदृश्यमानमपिप्राणादे वजायते ॥ अन्नंरसादिरूपेणप्राणःपरिणयत्यसावितिवचनात् ॥ एवंजीवेदृश्यमानोपि

## ॥ ॐ उपसंहारदर्शनान्नेतिचेत्क्षीरवद्धि ॐ ॥ २५॥

कार्योपसंहारोऽस्वातंत्र्यात्परकृतएव॥यआत्मानमंतरोयमयति॥नाहंकर्तानकर्तात्वंकर्ता यस्तुसदाप्रभुरित्यादेः॥ २५ ॥

स्यबाधकाभावाज्जीवकर्तृत्वमितिवक्तव्यम् ॥ जीवस्यास्वातंत्र्येणकार्योपसंहारकर्तृत्वानुपपत्तेरेवबाधक त्वादितिभावः ॥ ननुजीवस्यास्वातंत्र्यात्कार्योपसंहारकर्तृत्वाभावेऽपिकुतोऽसावीश्वरकृतइत्यतआह ॥ यइति ॥ २५॥

नजीवस्येश्वराधीनकर्तृत्वंवाच्यम्॥तस्यैवाभावात्॥ नचश्रुत्यातत्सिद्धिः ॥ तस्यानुपलब्धिबाधितत्वात् ॥
अथचकल्पनेगौरवंस्यात ॥ अतोजीवएवलाघवाज्जगत्कर्तेत्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ देवे
ति॥नेश्वरस्यकर्तृत्वांगीकारेगौरवम् ॥ सहिकर्तेत्यादिश्रुतिसिद्धत्वात्॥ नाप्यनुपलब्धिविरोधः॥ अदृष्टाना
मपिदेवादीनांविद्यमानत्वात् ॥ तच्चप्रतिपादितंदेवादीनामदृश्यत्वशक्तिमत्वाद्युक्तानुपलब्धिरितिचेत् ॥ स

नचकर्तुरीश्वरस्यादृष्टिविरोधः॥ देवादिवददृश्यत्वशक्तियोगात्॥लोकेपिशाचादीनांताद
शीशक्तिर्दृष्टाकिम्वीश्वरस्य ॥ नयुक्तियोगाद्वाक्यानिनिराकार्याण्यपिकश्चित् ॥ विरो

## ॥ ॐ देवादिवदपिलोके ॐ ॥ २६ ॥

धएववाक्यानांयुक्तयोनतुयुक्तयइतिबृहत्संहितायाम् ॥ २६ ॥

ममीश्वरस्यापि ॥ तादृशशक्तियुक्तत्वात् ॥ कुतः ॥ लोकेपिशाचादीनामनीश्वराणांतादृशशक्तिमत्त्वेसर्वे
श्वरस्यकुतरांतत्सिद्धेः॥ अतोनेश्वरस्यकर्तृत्वांगीकारेगौरवंकिंतुश्रौतजीवकर्तृत्वांगीकारएवतद्भवति तदभा
वात्सिद्धांतेलाघवमेवेतिभावः॥ यदभिप्रेतंश्रुतिसिद्धःपरमेश्वरोनानुपलब्धियुक्त्यानिराकार्यइतितत्रस्मृति
चाह ॥ नेति ॥ युक्तियोगाद्युक्त्युपायात् ॥ वाक्यानांविरोधेयुक्तीनांजातेसतिताएवयुक्तयोनयुक्तयः
किंत्वाभासाइत्यर्थः ॥ वाक्यानांपरस्परविरोधेयुक्तयोर्थसाधिकानतुकेवलयुक्तयइतिवा ॥२६॥

युक्त्यंतरेणजीवस्यस्वतःकर्तृत्वंनिराकुर्वत्सूत्रमुपन्यस्यव्याचष्टे ॥ कृत्स्नेति ॥ नकेवलंहिताक्रियादिदोषो जीवस्यस्वतःकर्तृत्वेकिंत्वयंवक्ष्यमाणश्च ॥ तथाहि ॥ किंजीवःसर्वकार्येषुसर्वसामर्थ्येनप्रवर्ततेंऽशेनवा ॥ नाद्यः ॥ एकेनांगुलिमात्रेणतृणादानादावपिपूर्णशक्त्याप्रवृत्तिप्रसक्तेः ॥ नचस्यादेवमितिवाच्यम् ॥ अनुभवविरोधात् ॥ नद्वितीयः॥अंशाभावात् ॥ नचसांशत्वमंगीकर्तुंशक्यम् ॥ अथेतिनिरवयवत्वश्रुतिव्याको

अयंचदोषोजीवकर्तृत्वपक्षे ॥ एकेनांगुलिमात्रेणप्रवर्तमानोऽपिपूर्णप्रवृत्तिःस्यात्॥ नचत द्युज्यते ॥ सामर्थ्यैकदेशदर्शनात् ॥ नचैकदेशेन ॥ निरवयवत्वात् ॥ अथयःसजीवःस

॥ ॐ कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपोवा ॐ ॥२७॥

नित्योनिरवयवोज्ञाताऽज्ञातासुखीदुःखीशरीरेंद्रियस्थइतिभाल्लवेयश्रुतिः ॥ नचोपाधिकृतोंऽशःसएवांशउपहितइति ॥ द्वित्वापेक्षत्वात् ॥

पात् ॥ एतेनकार्यानुसारेणप्रवृत्तिरित्यपिनिरस्तमितिभावः ॥ नजीवस्यस्वतःकर्तृत्वेऽपिदोषावकाशः ॥ तस्योपाधिकृतांशवत्त्वेनकृत्स्नप्रसक्त्ययोगात् ॥ स्वाभाविकांशाभावेनश्रुतिविरोधाभावादितिचेत् ॥ तन्नप्रष्टव्यम् ॥ किंजीवःसर्वोऽप्युपहितस्तदंशोवा ॥ आद्यंनिराह ॥ नचेति ॥ सएवसमस्तोजीवउपहितश्चेत्तर्हि उपाधिकृतांशोनभवतिसर्वस्यग्रस्तत्वादितिभावः ॥ द्वितीयंपराह ॥ अंशइति ॥ अंशउपहितइतिचनयु

क्तम् ॥ उपाधिसंबंधार्थस्वाभाविकद्वित्वापेक्षत्वात् ॥ तथाचश्रुतिविरोधः ॥ तस्याप्यौपाधिकत्वेऽनवस्थे तिभावः ॥ तर्ह्येतज्जीवस्यकर्तृत्वंयुक्तिविरुद्धत्वादविचारितरमणीयाविद्यानिमित्तमस्त्वित्यतआह ॥ नचे ति ॥ यत्प्रतीतमपियुक्तिविरुद्धंतदीश्वरकर्तामितिन्यायेनजीवकर्तृत्वमयुक्तंचेत्तस्येश्वराधीनत्वेनोपपत्तेस्त देवप्रामाणिकंग्राह्यं नत्वप्रामाणिकमविद्यानिमित्तंनापितेनोपपत्तिरितिभावः ॥ यद्वामहदादिकार्यकारण त्वमीश्वरस्यांगीकृत्यघटादिविषयएवपूर्वःपक्षःसिद्धांतश्चप्रवृत्तइतिज्ञातव्यम् ॥ तस्माज्जीवस्यस्वतःकर्तृ त्वानुपपत्तेर्युक्तंहरेर्जन्मादिकारणत्वलक्षणमितिसिद्धम् ॥ २७ ॥ अ० ७ ॥ अत्रविष्णोःसर्वकर्तृत्वेकृत्स्न

नचान्यत्कल्प्यम् ॥ यद्धियुक्त्याविरुध्येततदीशकृतमेवहीतिगत्यंतरोक्तेः ॥ २७ ॥ अ० ७ ॥

प्रसक्त्यादियुक्तिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ सर्वकर्तृत्वंविष्णोरुक्तम् ॥ तस्यचयुक्तिविरोधेलक्ष णसूत्रानुपपत्तेरवश्यमसौनिराकर्तव्यः ॥ तत्स्रष्टृत्वंविषयः ॥ किंविष्णोर्युक्तमयुक्तंवेतिसंदेहः ॥ उक्तन्यायो दोषदर्शनंचसंदेहबीजम् ॥ नयुक्तमितिपूर्वःपक्षः ॥ जीवकर्तृत्वपक्षोक्तदोषस्यात्रापिसंभवात् ॥ तथाहि ॥ किमीश्वरःकार्येषुसर्वशक्त्याप्रवर्ततेतदेकदेशेनवा ॥ नाद्यः ॥ तृणादानादावपिकृत्स्नप्रसक्तेः ॥ नद्वितीयः ॥ नेहनानास्तिकिंचनेत्यादिश्रुतिव्याकोपात् ॥ नहिवक्तुंयुक्तमयंदोषोजीवपक्षएवनेश्वरपक्षइति ॥ ईश्वरे तदस्पर्शनिमित्तस्यजीवादतिशयस्यादर्शनात् ॥ विशेषमंतरेणापिदोषास्पर्शेकिंजीवेनापराद्धम् ॥ एतेन

जीवस्येश्वराधीनकर्तृत्वांगीकारेणकृत्स्नप्रसक्त्यादिदोषपरिहारःप्रागुक्तोप्ययुक्तः ॥ अतोयुक्तिविरोधान्न विष्णोर्जगत्कर्तृत्वलक्षणंयुक्तमितिप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ श्रुतेरिति ॥ नेश्वरकर्तृत्वेयुक्ति विरोधः ॥ योऽसौविरुद्धइत्यादिश्रुतौलोकविरुद्धधर्माणामीश्वरेऽविरुद्धतयाऽवस्थानोक्तेः॥ ननुश्रुत्युक्तत्वे पियुक्तिविरुद्धंकथमुपैतुंशक्यम् ॥ अन्यथाजीवेऽपिप्रत्यक्षबलादभ्युपगंतव्यमविशेषादितिचेत् ॥ मैवम॥

नचेश्वरपक्षेऽयंविरोधः ॥ योऽसौविरुद्धोऽविरुद्धोमनुरमनुरवाग्वागिंद्रोऽनिंद्रःप्रवृत्तिरप्रवृत्तिःसपरः

## ॥ ॐ श्रुतेस्तुशब्दमूलत्वात् ॐ ॥ २८ ॥

परमात्मेतिपैंग्यादिश्रुतेरेव ॥ शब्दमूलत्वाच्चनयुक्तिविरोधः ॥ यद्वाक्योक्तंनतद्युक्तिर्विरोद्धुंशक्नु यात्कचित् ॥ विरोधेवाक्ययोःकापिकिंचित्साहाय्यकारणमितिपुरुषोत्तमतंत्रे ॥ २८ ॥

भवेज्जीवप्रतिबंधेश्वरेयुक्तिविरोधोयदिविशेषाभावोभवेत्॥ नचैवंशब्दैकसमधिगम्यत्वस्ययुक्तिविरोधपरि हारोपयोगिनःपरमेश्वरेश्रुत्यादिसिद्धत्वाज्जीवेतदभावात् ॥ नहिशब्दैकसमधिगम्यवस्तुनियुक्तिविरोधः ॥ यथाप्रत्यक्षाविषयेनप्रत्यक्षविरोधइतिभावः ॥ विरुद्धोलोकदृष्ट्याअविरुद्धःप्रमाणैःनमंतावक्तास्वामीप्र वर्तकोयस्यासौतथोक्तः ॥ शब्दैकसमधिगम्येनयुक्तिविरोधइत्यत्रस्मृतिंचाह ॥ यदिति ॥ २८ ॥

जीवएवयुक्तिविरोधोनेश्वरइत्येतमर्थंयुक्त्यंतरेणप्रतिपादयत्सूत्रमुपन्यस्यव्याचष्टे ॥ आत्मनीति ॥ युक्ति
विरोधनिरासकविचित्रशक्तिसद्भावादीश्वरेनयुक्तिविरोधः ॥ तदभावाज्जीवएवचासावित्यर्थः ॥ आद्यश्च
शब्दएवार्थः ॥ तेननान्येषामितिसिध्यति ॥ तदुक्तम् ॥ अचिंत्याःखलुयेभावानतांस्तर्केणयोजयेदिति ॥
ईश्वरस्यैवविचित्रशक्तित्वंनान्येषामित्येतत्कुतइत्यतोहीतिसूचितांश्रुतिंदर्शयति॥ विचित्रेति ॥२१॥ ननुय

परमात्मनोविचित्राश्वशक्तयःसंतिनान्येषाम ॥ विचित्रशक्तिःपुरुषःपुराणोनचान्येषांश
क्तयस्तादृशाःस्युः॥ एकोवशीसर्वभूतांतरात्मासर्वान्देवानेकएवानुविष्टइतिश्वेताश्वतरस्र

॥ ॐ आत्मनिचैवंविचित्राश्चहि ॐ ॥ २९ ॥ ॥ ॐ स्वपक्षदोषाच्च ॐ ॥ ३० ॥

तिः ॥ २९ ॥ येदोषाइतरत्रापितेगुणाःपरमेमताः ॥ नदोषःपरमेकश्चिद्गुणाएवनिरंतराइ
तिवचनाज्जीवपक्षएवदोषोनपरपक्षे ॥

थाशब्दैकसमधिगम्यत्वादिनाविष्णोर्युक्तिविरोधोप्यविरोधतांनीयते तथाचेतनत्वादिनाजीवेपिकिंननीय
ते अन्यथेश्वरेपिननेतव्यइत्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ स्वपक्षेति ॥ जीवपक्षेयुक्तिविरोधोदोष
एवनत्वदोषतांनेतव्यःकिंतुपरमेश्वरपक्षएव ॥ कुतः॥ येदोषाइतिवचनेनसयुक्तिकमुक्तत्वादितिभावः ॥ दो
षाभगवदिनरत्रप्रतीताश्चेत्तर्हितेदोषाएवनतुकयाचनविधयाऽदोषतांनेतव्याः ॥ तत्रदोषाणांसंभवेनकल्प

काभावात् ॥ तएवचेद्विष्णौप्रतीयंतेतर्हितेऽचिंत्यशक्त्यादिनागुणाएवकल्पनीयानदोषाः ॥ भगवतोनिर्दोष
निर्भेदगुणतयाश्रुतिसिद्धत्वेनकल्पकसद्भावादितिवचनार्थः ॥ ईश्वरवज्जीवस्यापिनिर्दोषत्वात्तत्रप्रतीतदोषो
ऽन्यथैवनेतव्यइत्यतआह ॥ अथेति ॥ सांजनःपुण्यपापादिलेपयुक्तः ॥ चशब्दएवार्थोतोनपरपक्षइत्या

अथयःसदोषःसांजनःसजनिःसजीवोऽथयःसनिर्दोषोनिष्कलःसगुणःपरःपरमात्मेतिका
षायणश्रुतिः ॥ ३० ॥ सर्वैर्युक्ताशक्तिभिर्देवतासापरेतियांप्राहुरजस्रशक्तिम् ॥ नित्यानंदा

## ॥ ॐ सर्वोपेताचतद्दर्शनात् ॐ ॥ ३१ ॥

नित्यरूपाजराचयाशाश्वतात्मेतिचयांवदंतीतिचतुर्वेदशिखायाम् ॥ अतोनकेवलंविचि
त्रशक्तिःकिंतुशर्वशक्तिरेव ॥ ३१ ॥

ह ॥ ३० ॥ यदुक्तंविचित्रशक्तित्वान्नेश्वरेविरोधइति ॥ तदसत् ॥ साविचित्रशक्तिर्यदाऽल्पविषयाभवतिय
दाचनस्यतितदातत्रविरोधनियमादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ सर्वेति ॥ नकेवलंसामान्यतो
विचित्रशक्तिरीश्वरःकिंतुसर्वविषयेसर्वदाविद्यमानविचित्रशक्तिः ॥ यतः ॥ सर्वैर्युक्तेतिश्रुतौतथोक्तमिति
भावः ॥ सर्वैःसर्वविषयाभिः ॥ अजस्रशक्तिंनित्यशक्तिम् ॥ श्रुत्यनुसारेणस्त्रीलिंगप्रयोगः ॥ ३१ ॥

विष्णोर्जगत्कर्तृत्वमाक्षिप्यसमादधत्सूत्रमुपन्यस्यव्याचष्टे ॥ विकरणत्वादिति ॥ नेश्वरस्यकर्तृत्वंयुक्तम् ॥ अचक्षुःश्रोत्रंतदपाणिपादमितिश्रुतेस्तस्यहस्तादिकरणशून्यत्वात् ॥ नहिहस्तादिविरहिणोमृतस्यकर्तृत्वमितिनमंतव्यम॥ अपाणिपादइतिश्रुतौपाण्यादिविरहिणोऽपिहरेर्ग्रहणादिकमुक्त्वानतस्यकार्यमितिपाण्यादिरहितत्वस्यप्राकृतविषयत्वेनसर्वोत्तमत्वेनपरमशक्तित्वेनचोपपादितत्वादितिभावः ॥ ननुपूर्वसूत्रएवविचि

नचकरणाभावादनुपपत्तिरितियुक्तम् ॥ अपाणिपादोजवनोगृहीतापश्यत्यचक्षुःसशृणोत्यकर्णः॥ सवेत्तिवेद्यंनचतस्यास्तिवेत्तातमाहुरग्र्यंपुरुषंमहांतम् ॥ नतस्यकार्यंकरणंचविद्यतेनतत्समश्चाभ्य

## ॥ ॐ विकरणत्वान्नेतिचेत्तदुक्तम् ॐ ॥ ३२ ॥

धिकश्चदृश्यते ॥ परास्यशक्तिर्विविधैवश्रूयतेस्वाभाविकीज्ञानबलक्रियाचेत्यादिश्रुतिभ्यः ॥ सर्वोपेताचेतिसामान्यपरिहारेऽपिविशेषयुक्त्यर्थंपुनराशंका ॥ ३२ ॥ अ० ८ ॥

त्राशेषशक्तिबलेननिखिलविरोधानांपरिहृतत्वात्कथमेतच्छंकावकाशइत्यतआह ॥ सर्वेति ॥ सामान्यतःसर्वविरोधानांपरिहृतत्वेऽपिविशेषतोऽस्यैवचोद्यस्यपरिहाराययुक्तिबुभुत्सयापुनःशंकेत्याशयः ॥ विशेषयुक्तिस्तुप्राकृतशरीराभावेऽपिचिदानंदाद्यात्मकविग्रहत्वादिःप्रमाणविशेषएववा ॥ अतोविष्णोर्जगत्कारणत्वेविरोधाभावाद्युक्तंलक्षणसूत्रमितिसिद्धम् ॥ ३२ ॥ अ० ॥ ८ ॥

अत्रेश्वरस्यजगत्कर्तृत्वेनिष्फलत्वादियुक्तिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ जगत्कर्तेश्वरइत्यभिहितम् ॥ तस्यचयुक्तिविरुद्धत्वेलक्षणासंभवप्रसंगादसौनिराकरणीयः ॥ जन्मादिकर्तृत्वंविषयः ॥ ईश्वरस्ययुक्तमयुक्तंवेतिसंशयः ॥ उक्तरीतिरफलत्वंचसंदेहबीजम् ॥ सयुक्तिकंपूर्वपक्षयति ॥ यदिति ॥ नविष्णोःस्रष्टृत्वादियुक्तम् ॥ तथाहि ॥ किमसौप्रयोजनमपेक्ष्यसृष्ट्यादिकंकरोतिप्रयोजनमनपेक्ष्यैववा ॥ नो

यत्प्रयोजनार्थंसृष्ट्यादितदूनत्वादपूर्णतेति अतआह॥ अथैषएवपरमआनंदइत्यादिनाक्त

## ॥ ॐ नप्रयोजनवत्त्वात् ॐ ॥ ३२ ॥

तत्कृत्यत्वान्नप्रयोजनायसृष्टिः ॥ ३२ ॥

न्यथापिसर्वकर्तृत्वम् ॥ प्रयोजनापेक्षितत्वेसृष्ट्यादेःपूर्वमपूर्णत्वप्रसंगात् ॥ अपूर्णस्यचनसर्वकर्तृत्वंयज्ञदत्तवत् ॥ प्रयोजनानुद्देशेनप्रवृत्तिरेवनदृष्टाकुतःसर्वकर्तृत्वम् ॥ अतःप्रकारद्वयेनापिविष्णोःसर्वकर्तृत्वाद्यनुपपत्तेर्विधांतरस्यचाभावादयुक्तंजन्मादिकारणत्वलक्षणमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे॥ अतइति ॥ युक्तमेवविष्णोःसर्वकर्तृत्वादि ॥ नचोक्तदोषः ॥ तस्यपूर्णानंदत्वेनप्राप्तप्राप्तव्यत्वात्फलानुद्देशेनैवप्रवृत्त्यभ्युपगमादित्यर्थः ॥ ३२ ॥

फलानुद्देशेप्रवृत्त्यनुपपत्तिभावेनपृच्छति॥ किंत्विति॥ तत्परिहारायसूत्रमुपन्यस्यव्याचष्टे॥ लोकवदिति॥ प्रयोजनानुद्देशेकीदृशीप्रवृत्तिरितिचेत्पृच्छसितर्हितस्याःकेवललीलात्वंब्रूमः॥ नहिलीलाप्रयोजनांतराय

किंतु यथालोकेमत्तस्यसुखोद्रेकादेवनृत्तगानादिलीलानतुप्रयोजनापेक्षयाएवमेवेश्वरस्य॥नारा यणसंहितायांच॥ सृष्ट्यादिकंहरिर्नैवप्रयोजनमपेक्ष्यतु ॥ कुरुतेकेवलानंदाद्यथामत्तस्यनर्तन

## ॥ ॐ लोकवत्तुलीलाकैवल्यम् ॐ ॥ ३४ ॥

म्॥ पूर्णानंदस्यतस्येहप्रयोजनमतिःकुतः॥ मुक्ताअप्याप्तकामाःस्युःकिमुतस्याखिलात्मनइति॥ देवस्यैषस्वभावोयमाप्तकामस्यकास्पृहेतिचश्रुतिः॥ ३४ ॥ अ० १ ॥

भवति॥ मत्तादिलीलायाःफलानुद्देशेनसुखोद्रेकादेवदर्शनात्॥ अतःपूर्णानंदोऽपिभगवान्लोकानुग्रहायसृष्ट्यादिक्रीडांकरोतीतिनकिंचिदयुक्तमितिभावः॥ अत्रैवस्मृतिश्रुतीदर्शयति॥ नारायणेति॥ अखिलस्वामिनस्तस्याप्तकामताकिमुवक्तव्येत्यर्थः॥ तस्माद्विरोधाभावाद्युक्तंलक्षणमितिसिद्धम्॥३४॥ अ० १॥

अत्रविष्णोःसर्वकर्तृत्वेवैषम्यादिदोषप्राप्तियुक्तिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ जगज्जन्मादिकर्तृत्वं हरेरुक्तम् ॥ तस्ययुक्तिविरोधेलक्षणस्यासंभवित्वंस्यादतोसौनिराकर्तव्यएव ॥ जन्मादिकर्तृत्वमेवविषयः ॥ ईश्वरस्ययुक्तमयुक्तंवेतिसंदेहः ॥ श्रुतिविरोधदर्शनंचसंदेहबीजम् ॥ सयुक्तिकंपूर्वपक्षयति ॥ सर्वेति ॥ नविष्णोःसर्वकर्तृत्वंयुक्तम् ॥ तथाहि ॥ किमसौप्राणिकर्मसापेक्षःसृष्ट्यादिकरोतितदनपेक्षोवा ॥ नाद्यः ॥

सर्वकर्तृत्वेवैषम्यनैर्घृण्येतस्येत्यतोवक्ति ॥ कर्मापेक्षयाफलदातृत्वान्नतस्यवैषम्यनै

॥ ॐ वैषम्यनैर्घृण्येनसापेक्षत्वात्तथाहिदर्शयति ॐ ॥ ३५ ॥

र्घृण्ये ॥ पुण्येनपुण्यंलोकंनयतिपापेनपापमितिहिश्रुतिः ॥ ३५ ॥

नियमेनकर्मापेक्षयाप्रवर्तमानस्यास्वातंत्र्यापातात् ॥ अस्वतंत्रस्यचसर्वकर्तृत्वानुपपत्तिः ॥ द्वितीयेवैषम्यनैर्घृण्येस्याताम् ॥ निर्निमित्तंविभागेनसुखादिप्रदानात् ॥ वैषम्यादिदोषवतश्चनसर्वकर्तृत्वम् ॥ कर्मानपेक्षयासर्वकर्तृत्वेचज्योतिष्टोमेनस्वर्गकामोयजेतेत्यादिवेदाप्रामाण्यंचस्यात् ॥ अतोहरेःसर्वकर्तृत्वायोगान्नयुक्तंलक्षणमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ युक्तमेवविष्णोःसर्वकर्तृत्वम् ॥ नचोक्तदोषप्रसंगः ॥ कर्मापेक्षयाफलदातृत्वांगीकारेवैषम्यादिदोषाभावादितिभावः ॥ ३५ ॥

कर्मापेक्षयाफलदातृत्वमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंतावद्व्याचष्टे ॥ नकर्मेति ॥ कर्मापेक्षया फलंददातीश्वरइत्ययुक्तम् ॥ यदपेक्षयाफलंदद्यात्तस्यापेक्ष्यस्यकर्मणएवाभावात् ॥ अस्तिपूर्वंकर्मेतिचे त् ॥ सत्यम् ॥ तस्याप्येषह्येवेतिश्रुतौभगवदधीनत्वश्रवणात्स्वकृतापेक्षयाफलदानेनवैषम्यादेरनिस्तारात् ॥ अतोनकर्मापेक्षासंभवतीतिभावः ॥ उन्निनीषतेऊर्ध्वंनेतुमिच्छति ॥ परिहारांशंव्याचष्टे ॥ नेति ॥ नापे

यदपेक्षयाऽसौफलंददातिनतत्कर्म ॥ एषह्येवसाधुकर्मकारयतितंयमेभ्योलोकेभ्यउन्निनी षतेएषउएवासाधुकर्मकारयतितंयमधोनिनीषतेइतिश्रुतेःकर्मणोपितन्निमित्तत्वादितिचे

## ॥ ॐ नकर्माविभागादितिचेन्नानादित्वात् ॐ ॥ ३६ ॥

त् ॥ न ॥ तस्यापिपूर्वकर्मकारणमित्यनादित्वात्कर्मणः ॥ भविष्यत्पुराणेच ॥ पुण्यपापा दिकंविष्णुःकारयेत्पूर्वकर्मणा ॥ अनादित्वात्कर्मणश्चनविरोधःकथंचनेति ॥ ३६ ॥

क्ष्यकर्माभावोवक्तव्यः ॥ पूर्वकर्मणःसत्त्वात् ॥ नचवाच्यंतस्यापिभगवन्निमित्तत्वेनानपेक्ष्यतेति ॥ भवे देतद्यदिपूर्वतनंकर्मेश्वरेणनिरपेक्षेणक्रियेत ॥ नैतदस्ति ॥ ततोपिपूर्वतनकर्मापेक्षयातस्यकारितत्वात् ॥ ता दृशस्यचापेक्ष्यतोपपत्तेः ॥ नचपूर्वतरस्यापीश्वरनिर्मितत्वादनपेक्षता ॥ तस्यापिपूर्वतनकर्मापेक्षयैवका रितत्वात् ॥ नचमंतव्यंयत्रैवपर्यवसानंतदारभ्यदोषइति ॥ अनादित्वात्कर्मपरंपरायाइतिभावः ॥ ३६ ॥

तथापिनियमेनकर्मापेक्षयैवफलदातुरीश्वरस्यास्वातंत्र्यंप्रसज्जतइत्यादिशंकांपरिहरत्सूत्रमुपन्यस्यव्याच
ष्टे ॥ उपपद्यतइति॥ नेश्वरस्यकर्मापेक्षयास्वातंत्र्यंकिंतूपपद्यतेचतत्॥ अपेक्ष्यकर्मसत्तादेरपिस्वाधीनत्वा
त् ॥ नहिस्वाधीनसत्तादिमदपेक्षायामस्वातंत्र्यंभवति ॥ अपेक्षातुवैषम्याद्यप्राप्तयेस्वेच्छानिमित्तैव॥ यदि

नचकर्मापेक्षत्वेनेश्वरस्यास्वातंत्र्यम् ॥ द्रव्यंकर्मचकालश्चस्वभावोजीवएवच ॥ यदनुग्र
हतःसंतिनसंतियदुपेक्षयेत्यादिनाकर्मादीनांसत्त्वस्यापितदधीनत्वात् ॥ नचपुनर्वैषम्या

## ॥ ॐ उपपद्यतेचाप्युपलभ्यतेच ॐ ॥ ३७॥

द्यापातेनदोषः ॥ तादृशवैषम्यादेरुपलभ्यमानत्वात् ॥ सकारयेत्पुण्यमथापिपापंनताव
तादोषवानीशितापि ॥ ईशोयतोगुणदोषादिसत्त्वेस्वयंपरोनादिरादिःप्रजानामितिचतुर्वेद
शिखायाम् ॥ ३७ ॥ अ० १० ॥

कर्मादिसत्ताऽपितदधीनातर्हितदपेक्षानामानपेक्षैवार्थाद्भवति॥ तथाचपुनर्वैषम्याद्यापातःस्यात् ॥ तेनचदो
षित्वमितिचेन्न ॥ स्वाधीनकर्मापेक्षयाफलदानरूपवैषम्यादेरीश्वरेऽदोषतयैवश्रुतावुपलभ्यमानत्वादितिभा
वः ॥ कासौश्रुतिरितितामुदाहरति ॥ सइति ॥ सस्वाधीनकर्मापेक्षयापुण्यादिकारयेत् ॥ एवंतस्यकर्मणाई

शितापितावतानवैषम्यादिदोषवानित्यर्थः॥ एवंतर्हिकर्मापेक्षाऽपिनिष्फला तदभावेऽपिदोषाभावसंभवादिति ॥ मैवम् ॥ कर्मानपेक्षत्वेवेदाप्रामाण्यप्रसंगात् ॥ तदुक्तम् ॥ वैषम्यंनिर्घृणत्वंचवेदाप्रामाण्यकारणम्॥ नांगीकार्यमतोन्यत्तुनवैषम्यादिनामकमिति ॥ अतोहरेःसर्वकर्तृत्वेविरोधाभावाद्युक्तंलक्षणमितिसिद्धम् ॥ ३७ ॥ अ० १० ॥ सर्वेषांयुक्तिविरोधानांपरिहृतत्वात्किमुत्तरसूत्रेणेत्यतस्तात्पर्यमाह ॥ अवशिष्टैरिति ॥ विशिष्यप्रतिपादितेभ्य.स्रष्टृत्वादिगुणेभ्योविशिष्टैःसर्वगुणैःप्रतिपादितैरुपसंहरति ॥ किमुक्तंभव

## अवशिष्टैरुपसंहरति ॥

ति॥ उक्तावशिष्टान्सर्वगुणान्युक्तिविरोधपरिहारेणसमर्थ्यविष्णोःपूर्णगुणत्वंनिगमयत्यत्रसूत्रकतेत्यर्थः ॥ अतएवात्रविष्णोःपूर्णगुणत्वेयुक्तिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ समस्तगुणसंपूर्णोविष्णुरित्युक्तम् ॥ तस्यचयुक्तिविरुद्धत्वेपूर्वाध्यायोबाधितःस्यात् ॥ अतोसौपरिहर्तव्यः॥ विष्णोर्गुणपूर्णत्वंविषयः ॥ युक्तमयुक्तंवेतिसंदेहः ॥ पूर्वाध्यायोऽन्यत्रादर्शनंचसंदेहबीजम् ॥ नयुक्तमितिपूर्वःपक्षः ॥ सर्वचेतनानामपूर्णत्वनियमात् अस्यापिचेतनत्वेनापूर्णतायाअवश्यंभावित्वात् अन्यथाऽतिप्रसंगादितिप्राप्तेसिद्धां

तयत्सूत्रंपठित्वाव्याचष्टे ॥ सर्वेति ॥ नायुक्तंविष्णोःपूर्णत्वम् ॥ तस्यचेतनत्वेऽपिस्वातंत्र्यादिनासर्वगुणोपपत्तेः ॥ स्वातंत्र्यादिमतःपूर्णगुणत्वनियमात् ॥ नकेवलंयुक्त्यासर्वधर्मोपपत्तिःकिंतर्हिगुणाःश्रुताइतिसर्वधर्मोपपादकश्रुतेश्चेतिभावः ॥ सुविरुद्धालोकदृष्ट्या ॥ अश्रुताअपिरमादिचिंत्यास्तर्दाचित्याश्चेत्यर्थः ॥

गुणाःश्रुताःसुविरुद्धाश्चदेवेसंत्यश्रुताअपिनैवात्रशंका ॥ चिंत्याअचिंत्याश्चतथैवदोषाःश्रुताश्चनाज्ञैर्हितथाप्रतीताइतिसर्वगुणोपपत्तिश्रुतेश्च ॥ ३८ ॥अ० ११॥ इतिश्रीमत्कृष्णद्वै

॥ ॐ सर्वधर्मोपपत्तेश्च ॐ ॥ ३८॥

पायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेद्वितीयाध्यायस्यप्रथमःपादः ॥ १ ॥

अतोविष्णोःसर्वगुणपूर्णत्वेयुक्तिविरोधगंधाभावादुक्तंसर्वमुपपन्नमितिसिद्धम् ॥ ३८ ॥ अ० ११ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमद्ब्रह्मसूत्रभाष्यस्यटीकायांश्रीमत्तत्त्वप्रकाशिकायांजयतीर्थमुनिविरचितायांद्वितीयाध्यायस्यप्रथमःपादः ॥ ७ ॥

श्रीवेदव्यासायनमः ॥ एतत्पादार्थंदर्शयति ॥ इतरेषामिति ॥ सर्वविरोधानांयुक्तिमूलत्वेनतद्विरोधस्य
प्राबल्यात्प्रथमपादेसनिराकृतः ॥ इतरविरोधत्रयेऽनादिकालानुवृत्तसमयविरोधस्यैवप्रबलत्वाच्छ्रुतिसम
न्वयसिद्धेब्रह्मणोजगत्कारणत्वेसमयविरोधंपरिहर्तुंतानस्मिन्पादेनिराकरोतिभगवान्सूत्रकारइत्यर्थः ॥ न
चवाच्यमितरेषांचानुपलब्धेरितिकपिलकणादादिसमयानामुक्तानुपलब्ध्याऽनाप्तोक्तत्वेननिराकृतत्वाद्व्य
र्थोयंपादइति ॥ तत्रसामान्यतोनिराकृतानामत्रविशेषतोनिराकरणात् ॥ नह्यनादिकालानुवृत्तानांप्रतीति
सुंदराणांतेषांसामान्यतोनिराकरणेऽधिकारिणोनिःशंकाप्रवृत्तिर्भवतीतिभावः ॥ आद्याधिकरणार्थंदर्शय

हरिः ॐ ॥ इतरेषांचानुपलब्धेरितिसामान्यतोनिराकरणंसमयानांकृतम् ॥ विशेषतोनि
राकरोत्यस्मिन्पादे ॥ अचेतनप्रवृत्तिमतंप्रथमतोनिराकरोति ॥

ति ॥ अचेतनेति ॥ समयास्तुद्विविधाः ॥ हैतुकपाषंडभेदात् ॥ वेदवादिनांप्रथमपादेनिराकृतत्वात् ॥ अ
क्षपादकणादौचसांख्ययोगौचहैतुकाः ॥ बौद्धपाशुपाताद्यास्तुपाषंडाइतिकीर्तिताः ॥ तत्रपाषंडिभ्योपि
हैतुकाःप्रबलाः ॥ युक्तिमत्त्वात् ॥ तेषुचसांख्यचार्वाकसमयस्यैवातिविरोधित्वम्॥ ईश्वरनिरपेक्षाचेतनप्र
वृत्तिवादित्वात् ॥ तत्रचार्वाकसमयस्यातिविरोधित्वेप्यतितुच्छत्वेनप्रथमंनिषेध्यताऽयोगादादौसांख्यस
मयोनिराकर्तव्यः ॥ सद्विविधः ॥ निरीश्वरःसेश्वरश्च ॥ तत्रनिरीश्वरस्यैवातिविरोधित्वम् ॥ अतोनिरीश्वर
सांख्यमतमेवादौनिराकरोतीतिभावः॥अतएवात्रहरेर्जगत्कारणत्वेनिरीश्वरसांख्यमतविरोधपरिहारादस्ति

शास्त्रादिसंगतिः ॥ विष्णुःसर्वकर्तेत्युक्तंतत्रचसांख्यमतविरोधेलक्षणासंभवप्रसंगादसौनिराकर्तव्यएव ॥ अ
त्रविष्णोःसर्वकर्तृत्वंविषयः ॥ युक्तंनवेतिसंदेहः ॥ समयविवादःसंदेहबीजम् ॥ नयुक्तमितिपूर्वःपक्षः ॥ प्र
कृतेरेवमहदादिकारणत्वात् ॥ भवितव्यंखलुकार्येणस्वसदृशकारणवतैव ॥ अन्यथाऽतिप्रसंगात् ॥ नही
श्वरस्यमहदादिसारूप्यमीश्वरवादिभिरभ्युपेयते ॥ नचप्रकृतिप्रेरकत्वेनेश्वरोंगीकर्तव्यः॥ केवलप्रकृतेरशे
षकर्तृत्वाभ्युपगमात् ॥ नचान्यदीश्वरांगीकारेप्रयोजनंपश्यामः ॥ अतःप्रकृतेरेवाशेषकर्तृत्वान्नेश्वरस्तत्क

अचेतनस्यस्वतःप्रवृत्त्यनुपपत्तेर्नानुमानपरिकल्पितंप्रधानंजगत्कर्तृ ॥ च

## ॥ ॐ रचनानुपपत्तेश्चनानुमानम् ॐ ॥ १ ॥

शब्देनप्रमाणाभावंदर्शयति ॥ १ ॥

र्तृत्वंचास्तीत्युक्तमितिप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ रचनेति ॥ नकार्यंस्वसदृशकारणवत्कार्य
त्वादित्यनुमानेनकारणतयाकल्पितंप्रधानंजगत्कर्तृस्वतःप्रवृत्तिमदेवहिकर्तृभवति ॥ नचप्रधानस्यस्वतःप्र
वृत्तिर्युक्ता अचेतनत्वाद्घटवत् ॥ अतोयुक्तंविष्णोर्जगत्कारणत्वमितिभावः॥ प्रामाणिकंप्रधानस्यजगत्का
रणत्वंनयुक्त्यानिराकर्तुंशक्यमित्यतआह ॥ चशब्देनेति ॥ प्राचीनमनुमानंतुकारणत्वमात्रसाधकंनप्रकृ
तोपयोगि॥ स्वतःप्रवृत्तिसाधकंतुप्रमाणंनास्त्येवेतिभावः ॥ १ ॥

अधिकरणार्थंदर्शयति ॥ सेश्वरेति ॥ अतएवात्रविष्णोःस्वतंत्रकर्तृत्वेसेश्वरसांख्यसमयविरोधनिरासाद
स्तिशास्त्रादिसंगतिः ॥ स्वातंत्र्येणजगत्कर्तेश्वरइतिनिगदितंतस्यचसांख्यसमयविरोधेलक्षणानुपपत्तिःस्या
दित्यवश्यंनिरसनीयः॥ तद्धरेःस्वातंत्र्येणजगत्कारणत्वंविषयः ॥ युक्तमयुक्तंवेतिसंशयः ॥ मतविमतिःसंदे
हबीजम् ॥ पूर्वपक्षयति ॥ यथेति ॥ नेश्वरस्यस्वतंत्रकर्तृत्वंयुक्तम् ॥ प्रधानादेवजगदुत्पत्तेःसंभवात् ॥
सेश्वरसांख्यमतंनिराकरोति ॥ यथापृथिव्याएवपर्जन्यानुगृहीतंतृणादिकमुत्पद्यतेएवं

॥ ॐ अन्यत्राभावाच्चनतृणादिवत् ॐ ॥५॥

प्रधानादीश्वरानुगृहीतंजगदिति॥ अतोब्रवीति ॥ यच्चकिंचिज्जगत्सर्वंदृश्यतेश्रूयतेपिवा॥
अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितः ॥

नचाचेतनस्यस्वतःप्रवृत्त्यनुपपत्तिरित्युक्तमेवेतिवाच्यम् ॥ प्रधानादेवजगदुत्पत्तावीश्वरस्यानुग्राहकत्वा
भ्युपगमात् ॥ यथाखलुपृथिव्येवतृणादिकार्याणांप्रधानंकारणंपर्जन्यानुग्रहेणचोत्पादयतितथाप्रधा
नस्यैवप्राधान्यमीश्वरस्त्वनुग्राहकमात्रमितिनतस्यस्वातंत्र्येणजगत्कारणत्वलक्षणंयुक्तमितिभावः ॥ सि
द्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ युक्तमेवविष्णोर्जगत्कारणत्वंस्वातंत्र्येणनतुयथातृणादीनांपर्ज
न्योनुग्राहकस्तथाऽनुग्राहकमात्रम् ॥सर्वपदार्थानांसत्तादिप्रदानायसर्वगतत्वोक्तेरीश्वरप्रेरणामंतरेणकस्या

पिवस्तुनःसत्त्वस्यैवाभावात्॥नहियदधीनंयस्यसत्तादितत्तस्यानुग्राहकमात्रमितिभावः॥ ब्रह्मैवेदंसर्वमिति तदधीनसत्तेत्युच्यते ॥ नकेवलंकार्यस्येश्वराधीनत्वान्नानुग्राहकमात्रत्वंतस्यकिंतुसर्वकारणत्वेनाभ्युपगत प्रकृतिसत्तादेरपितदधीनत्वमतश्चविष्णोरेवस्वातंत्र्यमितिसप्रमाणकंसूत्राक्षरार्थमाह ॥ सइति ॥ सएवेति

ब्रह्मण्येवेदमाविरासीद्ब्रह्मणिस्थितंब्रह्मणिलयमभ्युपैतिब्रह्मैवाधस्ताद्ब्रह्मैवोपरिष्टाद्ब्रह्मम ध्यतोब्रह्मसर्वतोब्रह्मैवेदंसर्वमित्यादिश्रुतिभ्योऽन्यत्रजगतोभावात्तृणादीनांपर्जन्यवन्ना नुग्राहकत्वमात्रमीश्वरस्य ॥ सएवभूयोनिजवीर्यचोदितांस्वजीवमायांप्रकृतिंसिसृक्षती म् ॥ अनामरूपात्मनिरूपनामनीविधित्समानोऽनुससारशास्त्रकृदितिभागवते ॥ द्रव्यंक र्मचकालश्चेत्यादिचचशब्देनप्रकृतिसत्तादिप्रदत्वंचांगीकृतम् ॥ ५ ॥ अ० २ ॥

हर्यधीनोद्बोधत्वंप्रकृतेरुच्यतेद्रव्यमितितदधीनसत्त्वम् ॥ स्वजीवमायांस्वाधीनांजीवबंधिकाम्॥सिसृक्षतीं सर्जनोन्मुखीम् ॥ आत्मनिआत्माधारत्वेन ॥ चशब्देनसूचितमितिशेषः ॥ अतःरेश्वरसांख्यमतस्याप्रा णिकत्वेनाविरोधकत्वाद्युक्तंहरेर्जगत्कारणत्वलक्षणमितिसिद्धम् ॥ ५ ॥ अ० २ ॥

अधिकरणार्थंदर्शयति ॥ लोकायतिकेति ॥ अतएवात्रविष्णोर्जगत्कारणत्वेचार्वाकसमयविरोधपरिहारा
दस्तिशास्त्रादिसंगतिः ॥ हरिर्जगत्कर्तेत्ययुक्तम् ॥ तत्रचार्वाकमतविरोधेनाभावापत्तेस्तन्निराकार्यमेव ॥ त
दीश्वरस्यजगत्कर्तृत्वंविषयः ॥ युक्तंनवेतिसंदेहः ॥ विप्रतिपत्तिःसंदेहबीजम् ॥ नयुक्तमितिपूर्वःपक्षः ॥ अं
तरेणापीश्वरंपूर्वपूर्वस्मादुत्तरोत्तरोत्पत्तिसंभवात् ॥ क्वचित्स्वभावादेवमंदिरोत्पत्तिवदुपपत्तेश्च ॥ नचसांख्यं

लोकायतिकपक्षंनिराकरोति ॥ यस्यधर्माधर्मौनस्तस्तत्सिद्धांतेकिंप्रयो

**॥ ॐ अभ्युपगमेप्यर्थाभावात् ॐ ॥ ६ ॥**

जनम् ॥ अतःस्वव्याहतेरेवोपेक्ष्यः ॥ ६ ॥ अ० ३ ॥

प्रतीवश्रुत्यादिबाधोवक्तुंयुक्तः ॥ तस्याप्रामाण्यात् ॥ नचधर्माद्यसिद्धिविरोधः ॥ तदनभ्युपगमात् ॥ नहि
धर्माद्यनभ्युपगमेकिंचिद्बाधकंपश्यामः ॥ नन्वेतस्याभावापराधेनसत्यामपिबाह्यसामग्र्यांकार्यानुत्पादोदृ
ष्टोयेनजानीमोस्त्यलौकिकंकारणमस्तीति ॥ अतोदृष्टस्यवस्तुनोऽभावान्नेश्वरस्यजगत्कारणत्वलक्षणंयु
क्तमितिप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ अभ्युपगमेऽपीति ॥ युक्तमेवविष्णोर्जगत्कारणत्वम् ॥ य

दुक्तमदृष्टार्थएवनास्तीतिकुतोजगदीश्वरःकुतस्तरांजगत्कारणत्वमिति॥ तत्रप्रष्टव्यम् ॥ तत्सिद्धांतेकिंप्रयोजनमिति ॥ अपेक्षितंखलुशास्त्रेऽधिकार्यादि ॥ तत्रनतावद्धर्मस्वर्गापवर्गादि॥ अनभ्युपगमात् ॥ नापिदृष्टंधनादि ॥ तदभावात् ॥ वार्तादिप्रयोजनत्वाच्चतस्य ॥ नचधर्माद्यभावबोधनद्वारालोकोपकारः॥ तदभाववज्ञानेपरस्परहिंसादिनाऽपकारस्यैवप्राप्तेः ॥ नचोपकारोऽपिस्वरूपतःप्रयोजनमितितेनापिप्रयोजनंवाच्यम् ॥ नतावददृष्टम् ॥ तदभावात्॥नापिदृष्टम् ॥ नहिकुवर्त्मनागच्छंतंप्रतिमार्गोपदेष्टाऽविपालोलौकिकैरदृष्टनिरपेक्षैरुपक्रियते ॥ अतोनकिंचित्समयस्यप्रयोजनम् ॥ नापिविषयः॥ अदृष्टाभावात् ॥ नापिदृष्टः ॥ अप्राप्तेशास्त्रमर्थवदितिन्यायात्॥ नापिधर्मादिभ्रांतिनिरासायतदभावः॥ तदुपायाभावात्॥ नहिप्रत्यक्षंधर्माद्यभावंगृह्णाति ॥ अपरामर्शेऽदर्शनात् ॥ परामर्शेनदर्शनंतुनानुमानाद्भिद्यते ॥ विषयप्रयोजनाभावेकाऽधिकारिणंप्रत्याशा॥ मास्तुमत्सिद्धांतेप्रयोजनादीतिचेत्तर्हियःसिद्धांतोऽसौप्रयोजनादिमानितिनियमादतःसिद्धांतेऽपिप्रयोजनाद्यभावाभ्युपगमेतस्यस्वव्याहतिःस्यात् ॥ नह्यभ्युपगमोऽप्रयोजनश्चेतियुक्तम्॥ मेमातावंध्येतिवत्स्वव्याहतंचवदन्भवानुपेक्ष्यएवजायते ॥ नतुपरिहारायविषयइतिभावः ॥ अतश्चार्वाकसमयस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तंजगत्कारणत्वंब्रह्मणइतिसिद्धम् ॥ ६ ॥ अ० ३ ॥

अधिकरणप्रतिपाद्यंदर्शयति ॥पुरुषेति ॥ अत्रविष्णोःसर्वकर्तृत्वेनिरीश्वरसांख्यैकदेशमतविरोधपरिहाराद
स्तिशास्त्रादिसंगतिः॥विष्णोर्जगत्कारणत्वमुक्तम् ॥ तत्रैवमतविरोधेऽसंभवप्राप्तेरवश्यनिरसनीयंतद्भवति॥ ई
श्वरस्यजगत्कारणत्वंविषयः॥ युक्तमयुक्तंवेतिसंदेहः॥समयविप्रतिपत्तिःसंदेहबीजम् ॥ पूर्वपक्षस्यसूत्रएवो
क्तत्वात्तदुपन्यस्यपूर्वपक्षांशंतावद्व्याचष्टे॥पुरुषेति ॥ नहरेर्जगत्कारणत्वंयुक्तम्॥प्रधानस्यैवकर्तृत्वेनेश्वरस्य
पुरुषोपसर्जनप्रकृतिकर्तृत्ववादमपाकरोति॥यथा चेतनसंबंधादचेतनमेवशरीरम

## ॥ ॐ पुरुषाश्मवदितिचेत्तथापि ॐ ॥ ७॥

श्मादिकमादायगच्छति ॥ एवमचेतनापिप्रकृतिःपुरुषसंबंधात्प्रवर्ततइतिचेत् ॥
न ॥ नक्रतेत्वक्रियतइतितत्रापितथात्वेदृष्टांताभावात् ॥ ७॥
वैयर्थ्यात्॥अचेतनस्यस्वतःप्रवृत्तिर्दूषितेतिचेन्न॥केवलप्रधानस्यकारणत्वानुपपत्तावपिपुरुषोपसर्जनस्यत
दुपपत्तेः॥भवतिचात्रप्रयोगः ॥ विप्रतिपन्नाप्रवृत्तिःपुरुषोपसर्जनाचेतननिमित्ता॥प्रवृत्तित्वादश्मानयनादि
प्रवृत्तिवदिति॥नचदृष्टांतेविवदितव्यम्॥ पुरुषसंबंधेनाचेतनस्यैवशरीरस्याऽश्माद्यादानादिप्रवृत्तिदर्शनात् ॥
अतोजगज्जन्मादिकारणत्वलक्षणमीश्वरस्येत्येतद्दूरोत्सारितमितिभावः॥ सिद्धांतांशंव्याचष्टे॥नेति॥युक्तमे
वविष्णोःसर्वकर्तृत्वम्॥ पुरुषोपसर्जनप्रधानस्यजगत्कारणत्वेप्रमाणाभावात्॥नचोक्तमनुमानम्॥ नक्रतेत्व

क्रियतेकिंचनारइतिश्रुतेः॥तत्रशरीरप्रवृत्तावपिपरमात्माधीनत्वेसिद्धेसतिविप्रतिपन्नप्रवृत्तेःपुरुषोपसर्जनप्र धानाधीनत्वसाधनेदृष्टांताभावादितिभावः॥ ७ ॥ हैतुकंमन्यश्चायंश्रुत्यवष्टंभेनोक्तंदृष्टांतदोषंनगणयतीत्य तोहेत्वंतरेणदृष्टांतेसाध्यविकलतांसाधयत्सूत्रमुपन्यस्यव्याचष्टे॥ अंगित्वेति॥ यदिशरीरमेवपुरुषोपसर्जनं प्रवर्तेततदाशरीरमंगिपुरुषोऽगमित्युक्तंस्यात् ॥ तथाचपुरुषस्यांगित्वेनशरीरस्यांगत्वेनचलौकिकपरीक्षक व्यवहारोनस्यात् ॥ विद्यतेचासावतोनपुरुषोपसर्जनशरीरस्यचप्रवृत्तिरितिदृष्टांतोनयुज्यतइतिभावः ॥

शरीरप्रवृत्तौपुरुषस्यांगित्वात् ॥ अंगमंगीसमादाययथाकार्यंकरोत्यसाविर्त्यांगित्वव्यवहा

## ॥ ॐ अंगित्वानुपपत्तेः ॐ ॥ ८ ॥

रोऽनुपपन्नः ॥ ८ ॥ अ० ४ ॥ प्रकृत्युपसर्जनपुरुषकर्तृत्ववादमपाकरोति ॥

अतोमतांतरविरोधाभावाद्युक्तंजगत्कारणत्वलक्षणंविष्णोरितिसिद्धम् ॥ ८ ॥ अ० ४ ॥ अधिकरणा र्थंदर्शयति ॥ प्रकृतीति ॥ अत्रविष्णोर्जगत्कारणत्वेनिरीश्वरसांख्यैकदेशांतरसमयविरोधपरिहारादस्तिशा स्त्रादिसंगतिः ॥ ईश्वरस्यजगत्कारणत्वमुक्तंतस्यचसमयविरुद्धत्वेलक्षणायुक्तेरसौपरिहरणीयएव ॥ तदी श्वरस्याखिलकारणत्वंविषयः ॥ युक्तमयुक्तंवेतिसंशयः ॥ मतविगानंसंदेहबीजम्॥नयुक्तमितिपूर्वःपक्षः ॥ प्रधानादेवजगदुत्पत्तिसंभवेनेश्वरानुपयोगात् ॥ नचाचेतनस्यतदनुपपत्तिदोषः ॥ पुरुषयुक्तस्योपपत्तेः ॥

नचांगित्वानुपपत्तिः ॥ प्रकृत्युपसर्जनपुरुषस्यकर्तृत्वांगीकारात् ॥ तथाचप्रयोगः ॥ विमताप्रवृत्तिरचेत
नोपसर्जनपुरुषाधीनाप्रवृत्तित्वादश्मानयनादिप्रवृत्तिवदिति ॥ नचदृष्टांतदोषः ॥ शरीरोपसर्जनपुरुषस्य
प्रवृत्तिदर्शनात् ॥ श्रुतेश्चावज्ञानात् ॥ अतोनजगत्कारणत्वलक्षणंब्रह्मणोयुक्तमितिप्राप्ते सिद्धांतयत्सूत्रमु
पन्यस्यव्याचष्टे ॥ अन्यथेति ॥ चशब्देनांगित्वानुपपत्तेःसमाकर्षः ॥ युक्तमीश्वरस्यजगत्कारणत्वम् ॥
प्रकृत्युपसर्जनपुरुषस्यकर्तृत्वेमानाभावात् ॥ प्राचीनपक्षादन्यथानुमितमितिचेन्न ॥ दृष्टांतेसाध्याभावा

शरीरसंबंधात्पुरुषःप्रवर्ततइत्यंगीकारेऽपिस्वतस्तस्यासामर्थ्याच्छरीरसंबंधएवायुक्तः ॥ १ ॥

## ॥ ॐ अन्यथानुमितौचज्ञशक्तिवियोगात् ॐ ॥ १ ॥

त् ॥ तथाहि ॥ शरीरोपसर्जनःपुरुषःप्रवर्ततइतिपक्षेकिंपुरुषस्यप्रवृत्तिशक्तिरस्तिनवा ॥ यद्यस्तितर्हिशरी
रवैयर्थ्यम् ॥ यदिनशक्तिस्तर्हिपुरुषांगित्वमनुपपन्नंस्यात् ॥ शरीरसंबंधार्थंकेवलस्यपुरुषस्यशक्त्यभावा
त् ॥ यदितत्रास्तिशक्तिस्तर्ह्यन्यत्रापिस्यादित्यन्यतरवैयर्थ्यम् ॥ शरीरसंबंधात्पूर्वमपिप्रकृतिसंबद्धस्यास्ति
शक्तिरितिचेत् तत्पूर्वमप्येवमित्यनवस्थापातात् ॥ अनादिताश्रयणेनिष्प्रकृतीनांमुक्तानांप्रवृत्तिरुदाहर्त
व्या ॥ अतोयथापुरुषस्यशरीरसंबंधक्रियायांनशरीरोपकृतस्यप्रवृत्तिर्नापिकेवलस्येतीश्वरोऽंगीकार्यः ॥
तथाश्मानयनप्रवृत्तावपीतिदृष्टांताभावइतिभावः ॥ १ ॥

एवंप्रत्येकंदूषितान्यनीश्वरमतानिसामान्यदूषणेननिराकुर्वंत्सूत्रमुपन्यस्यव्याचष्टे ॥ विप्रतिषेधादिति ॥
कुतोनीश्वरमतानांश्रुत्यादिविरुद्धत्वमित्यतआह ॥ श्रुतयइति ॥ नात्रसेश्वरसांख्येनसंतोष्टव्यम् ॥ स्वातं
त्र्यानभ्युपगमात् ॥ ईश्वरंपरंवदंतीतिहिस्मृतिः ॥ अतोनसांख्यादिमतविरोधेनलक्षणासंभवइतिसिद्धम्
॥१०॥ अ० ५ ॥ अधिकरणप्रतिपाद्यमाह ॥ परमाण्विति ॥ अत्रहरेःसर्वगुणपूर्णत्वेवैशेषिकादिमतविरो
धपरिहारादस्तिशास्त्रादिसंगतिः ॥ विष्णुरनंतगुणपूर्णइत्युक्तंतस्यचपरमाण्वारंभवादविरुद्धत्वेनाभावशं

सकलश्रुतिस्मृतियुक्तिविरुद्धत्वाच्चानीश्वरमतमसमंजसम् ॥ श्रुतयःस्मृतयश्चैवयुक्तयश्चेश्वरंपर

॥ ॐ विप्रतिषेधाच्चासमंजसम् ॐ ॥ १० ॥

म ॥ वदंतितद्विरुद्धंयोवदेत्तस्मान्नचाधमइतिपाद्मे॥१०॥अ० ५॥परमाण्बारंभवादमपाकरोति ॥

कास्यात् ॥ अतोऽसौपराकरणीयएव ॥ ईश्वरस्यानंतगुणत्वंविषयः ॥ युक्तमयुक्तंवेतिसंदेहः ॥ मतविवा
दःसंदेहबीजम् ॥ नयुक्तमितिपूर्वःपक्षः ॥ षट्रवल्विमेभावपदार्थाद्रव्यादयः ॥ तत्रगुणाश्रयोद्रव्यंपृथि
व्यप्तेजोवाय्वाकाशकालदिगात्ममनोभेदेननवविधम् ॥ तत्राकाशादिपंचकंनित्यमेव ॥ भूतचतुष्टयंतुपर
माणुरूपंनित्यमन्यदनित्यमेव ॥ कर्मान्यत्वेसतिजातिमात्राश्रयागुणाःरूपरसगंधस्पर्शशब्दसंख्यापरिमा
णपृथक्त्वसंयोगविभागपरत्वापरत्वगुरुत्वद्रवत्वस्नेहसंस्कारबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मास्ते ।
नित्याश्रितानित्याएवनित्यद्रव्येद्विविधाश्च ॥ संयोगविभागयोरसमवायिकारणंकर्मउत्क्षेपणमपक्षे (ण

माकुंचनंप्रसारणंगमनमितिपंचविधमनित्यमेव ॥ नित्यमेकमनेकसमवेतंसामान्यमनेकविधम् ॥ नित्यः संबंधस्समवायएकएव ॥ नित्यद्रव्यवृत्तयोऽनंताविशेषाः ॥ एतत्त्रयंनित्यमेव ॥ अत्रानित्यंकारणत्रित यजन्यम् ॥ यत्समवेतंकार्यमुत्पद्यतेतत्समवायिकारणंपरमाण्वादिद्रव्यमेव ॥ आदिसृष्टौचपरमाणवोद्व्य णुकादिक्रमेणावयविनमारभंते ॥ समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यमसमवायिकारणम् ॥ प्रत्या सत्तिर्द्वेधा ॥ कार्यैकार्थप्रत्यासत्तिःकारणैकार्थप्रत्यासत्तिश्चेति ॥ तत्रकार्यद्रव्यस्यावयवसंयोगएवका र्यैकार्थप्रत्यासत्त्याऽसमवायिकारणंभवति ॥ कार्यगतगुणानांचकारणगतगुणाःकर्मचकारणैकार्थप्रत्या

महत्वाद्दीर्घत्वाच्चयथाकार्यमुत्पद्यतेएवंह्रस्वत्वात्पारिमांडल्याच्चोत्पद्येत ॥

## ॥ ॐ महद्दीर्घवद्वाह्रस्वपरिमंडलाभ्याम् ॐ ॥ ११ ॥

सत्त्यादिनाऽसमवायिकारणम् ॥ कार्यगतकर्मणश्चकारणगतगुणकर्मणीकार्यैकार्थप्रत्यासत्याऽसमवायि कारणम् ॥ तत्रपरिमाणंकारणगतंकार्यगतपरिमाणस्यासमवायिकारणंभवतु परमाणुद्व्यणुकगतंद्व्यणुक त्र्यणुकगतपरिमाणकारणंनभवतिकिंतुसांख्यादिनैवतज्जन्म ॥ एतदन्यत्कारणंनिमित्तमीश्वरादृष्टकाला दि ॥ सचेश्वरआत्मविशेषःसंख्यादिपंचगुणयुक्तःकर्तृत्वोपयोगिज्ञानेच्छाप्रयत्नशालीच ॥ शिष्टषड्गु णायोग्यइतिकथंतस्यानंतगुणत्वंयुक्तंस्यात् ॥ अतोव्यर्थएवपूर्वाध्यायइतिप्राप्तेसिद्धांतयत्सूत्रमुपन्य स्यव्याचष्टे ॥ महदिति ॥ युक्तमेवहरेरनंतगुणपूर्णत्वम् ॥ वैशेषिकादीनामनुपपन्नभाषितत्वेनतत्कल्पना

याअप्रामाणिकत्वात् ॥ तथाहि॥ यदुच्यतेपरिमाणंत्र्यणुकादिगतमसमवायिकारणंभवतिनपरमाण्वादिग
तमिति ॥ तदसत् ॥ यथामहत्वाद्दीर्घत्वाच्चत्र्यणुकादिगतात्कार्येपरिमाणमुत्पद्यतेतथाह्रस्वत्वाद्व्यणुकग
तात्र्यणुकगतपरिमाणोत्पत्त्युपपत्तेः॥परमाणुपरिमाणाच्चपारिमांडल्याद्व्यणुकगतपरिमाणोत्पत्तिसंभवादि
तिभावः ॥ त्र्यणुकादिपरिमाणस्यारंभकत्वेप्यस्यतन्मास्त्वित्यतआह ॥ वाशब्दादिति ॥ इतिसूचितमिति
शेषः ॥ यदिह्रस्वत्वादेर्नारंभकत्वंतर्हिमहत्वदीर्घत्वयोरपितन्नस्यात्॥ कारणविशेषाभावादित्यर्थः ॥ नताव
दसमवायिकारणलक्षणभावाभावाभ्यांविशेषः॥ ह्रस्वत्वादावपितद्भावात् ॥ अवर्जनीयप्रत्यासत्तिरेवेतिचे
न्न ॥ महत्वेऽपिसाम्यात् ॥ पारिमांडल्यादेरारंभकत्वेसर्वकार्याणामणुत्वप्रसंगइतिचेत् ॥तत्किमिदमणुत्वं

वाशब्दादन्यथैतयोरपिनस्यात् ॥ विशेषकारणाभावात् ॥ ११ ॥

तच्छब्दावाच्यत्वंतदत्यंतसदृशपरिमाणत्वंवा ॥ आद्येनास्तिहानिः॥द्वितीयेमहत्त्वस्याप्यनारंभकत्वंस्यात्॥
नहित्र्यणुकादिपरिमाणमत्यंतसदृशंसंकेतमात्रंत्वप्रामाणिकमिति॥द्व्यणुकादिपरिमाणेकारणांतराभावाच्च
संख्यादेर्महत्त्वारंभकत्वप्रसंगात् ॥ संयोगस्यचद्रव्यनिमित्तत्वमेवकिंनस्यात् ॥ भिन्नतयाप्रतीत्यभावादि
तिचेन्न ॥ भिन्नतयाप्रतीत्यभावेप्यपेक्षाबुद्धेरात्मगतद्वित्वनिमित्तत्वात् ॥ अभ्युपगम्यचेदमुदितंकिंतुतंतू
नांयथाकथंचित्संयोगःपटस्यकारणंविवक्षितोवा ॥ नाद्यः ॥ अनभ्युपगमात् ॥ द्वितीयेकस्येतिवाच्यं
पटस्येतिचेत् ॥ कस्तदापटोऽवशिष्यते ॥ अतोऽसमवायिकारणंनामनकिंचिदस्तीतिसिद्धम्॥ ११ ॥

एवमसमवायिकारणंनिरस्यनिमित्तकारणनिरासायसूत्रमुपन्यस्यव्याचष्टे॥ उभयथेति॥ सर्वकार्याणामी
श्वरेच्छानिमित्तंचेत्तत्रप्रष्टव्यम् ॥ किमीश्वरेच्छानित्याऽनित्यावेति ॥ नाद्यः॥ सत्यामपीश्वरेच्छायांप्रलये
परमाणुचेष्टाभावेनान्यदापितस्यास्तदभावापातात् ॥ तथाचद्व्यणुकादिकार्याभावःस्यात् ॥ सतिकारणे
कार्यानुत्पादेतस्यकारणत्वायोगात् ॥ नद्वितीयः ॥ तथासतितस्याःकार्यत्वेननिमित्तमपेक्षितंस्यात् ॥नच
तदस्ति ॥ तदुत्पत्तावीश्वरेच्छायाअनपेक्षायामन्यत्रापितत्प्रसंगः॥ पूर्वेच्छानिमित्तमित्तचेन्न ॥ प्रमाणाभा

ईश्वरेच्छायानित्यत्वेतद्भावेऽपिपरमाणुकर्माभावान्नेदानीमपितत्स्यात् ॥अनित्यत्वेतत्का

## ॥ ॐ उभयथापिनकर्मातस्तदभावः ॐ ॥ १२ ॥

रणाभावात् ॥ अतःपरमाणुचेष्टाभावात्तत्कार्याभावः ॥ वैदिकेश्वरस्यतुवेदैकवेद्यत्वेनसर्वशक्ति
त्वोक्तेःसर्वमुपपद्यते॥

वात्॥अतोऽनित्यत्वेतदभावेनेश्वरेच्छातःपरमाणुकर्माभावान्नद्व्यणुकाद्युत्पत्तिःस्यात् ॥ अतोद्वेधापिदुष्टत्वे
नेश्वरेच्छानिमित्तमितिभावः ॥ अत्रपरिमाणाभिधानसन्निधापितद्व्यणुकादिकंतदितिपरामृशति ॥ ईश्वरे
च्छायानिमित्तत्वनित्यत्वयोरभ्युपगमात् ॥ समंभवतामेतद्दूषणमित्यतआह ॥ वैदिकेति ॥ नायमस्मत्पक्षे
दोषः ॥ सत्यामपीश्वरेच्छायांकार्यानुत्पादादेःसर्वस्येश्वराचिंत्यशक्तितएवोपपत्तेः ॥ साचपरास्यशक्तिर्वि
विधैवश्रूयतइत्यादिश्रुतिसिद्धा ॥ नचपरपक्षेसममेतत् ॥ तेनानुमानमात्रेणेश्वरमभ्युपगच्छतातस्याचिंत्य

शक्त्यनंगीकारादितिभावः ॥ इतश्चनायंदोषोस्मत्पक्षेइत्याह ॥ स्वतएवेति ॥ नेश्वरेच्छामात्रंनिमित्तंयेन प्रलयेपिकार्योत्पत्तिप्रसंगःकिंतुकालोपि ॥ नचास्तिप्रलयेसोऽपीतिवाच्यम् ॥ कालविशेषस्यसृष्टिकाल स्याभावात् ॥ नचैतदन्यमतेऽपिसमानम् ॥ अस्माभिःकालेस्वाभाविकसृष्टिकालत्वादिविशेषाणामंगीकृ तत्वेनतदुपपत्तेः ॥ परेणपुनःसृष्ट्याद्युपाधितएवकालविशेषस्यांगीकृतत्वात् ॥ सृष्टिमंतरेणसृष्टिकालानुप पत्तिःसृष्टिकालमंतरेणतदनुपपत्तिरित्यन्योन्याश्रयापातादितिभावः ॥ ननुसत्यामपीश्वरेच्छायांसृष्टिका लाभावेनकार्योत्पादोपरमेसामोघास्यादितिचेत्तत्राप्याह॥ स्वतएवेति॥ नैषदोषः॥तत्तत्कालएवेश्वरेच्छा

स्वतएवकालेविशेषांगीकृतेश्च ॥ १२ ॥

यानित्यायाअपिसृष्टिविषयत्वादिविशेषाविर्भावाभ्युपगमात् ॥ नचान्यमतेप्येतत्समानम् ॥ अस्माभिस्त द्विशेषाणामनौपाधिकत्वांगीकारात् ॥ परेणसृष्ट्याद्युपाधिनिबंधनत्वाभ्युपगमात् ॥ तथाचोक्तदोषइति भावः ॥ कालस्यनिमित्तत्वमीश्वरेच्छानिमित्तत्वनिरासन्यायेननिरस्तमित्यभिप्रेत्यतद्दोषंवास्वपक्षेपरिहर ति ॥ स्वतएवेति ॥ नायंदोषोस्मत्पक्षेऽस्माभिःकालेसृष्टिकालत्वादिविशेषांगीकारात् ॥ तस्यैवनिमित्तत्वा त् ॥ नचैवंपरपक्षे ॥ अस्माभिःकालविशेषाणांस्वाभाविकत्वोररीकारात् ॥ परेणसृष्ट्याद्युपाधिनिबंधन त्वाभ्युपगतेस्तत्रचोक्तंदूषणमितिभावः ॥ अदृष्टस्यनिमित्तत्वंवापराकृत्यतंदोषंस्वपक्षेपरिहरति॥ स्वतएवे ति॥ नायमस्मत्पक्षेदोषोभवति ॥ अस्माभिःसृष्ट्यादिकालेपूर्वंसत्येवादृष्टेसमुद्बोधविशेषांगीकारात् ॥ नचै

तदन्यमतेसंभवति ॥ अस्माभिःकालेस्वाभाविकविशेषांगीकारात् ॥ परेणपुनःस्वतःकालेसृष्टिकालत्वादि
विशेषानंगीकारेणकदोद्बोधइत्यस्यपरिहाराभावात्॥उपाध्युक्तौसोऽपिकदेत्यस्यपरिहाराभावादितिभावः
॥१२॥एवंपरपक्षेनिमित्तकारणासंभवंदर्शयित्वासमवायिकारणनिरासायसूत्रमुपन्यस्यव्याचष्टे ॥ समवा
येति॥अत्रकार्यकारणपदमवयवावयविविषयम् ॥ आदिपदेनाऽनित्यगुणक्रियातद्वतांसंग्रहः॥अथवाकार्य

कार्यकारणादीनांसमवायसंबंधांगीकारात्तस्यच

## ॥ ॐ समवायाभ्युपगमाच्चसाम्यादनवस्थितेः ॐ ॥१३॥

भिन्नत्वसाम्यात्समवायांतरापेक्षायामनवस्थितिः ॥

कारणपदेनैवैषांसंग्रहः॥ आदिपदेननित्यगुणगुणिजातिव्यक्तिविशेषविशेषिणांप्रसंगाद्ग्रहणम्॥ परमाण्वा
दीनांद्रव्यादिकारणत्वंनोपपन्नम्॥ तेषांभिन्नत्वमभ्युपेत्यसमवायाभ्युपगमात्॥ भिन्नयोरवयवावयवित्वा
दिविशेषणविशेष्यभावोपपत्तयेसमवायोऽगीकार्यएवातस्तदभ्युपगमेकोदोषइतिचेन्न ॥ तथासतिसमवा
यस्यापिसमवायिभ्यांभिन्नत्वसाम्यान्मृद्घटसमवायइत्यादिविशेषणविशेष्यभावोपपत्तयेसमवायांतरा
पेक्षापातात् ॥ तत्रापिभिन्नत्वसाम्यात्समवायस्यसमवायइत्यादिविशेषणविशेष्यभावोपपत्तयेसमवायां

तरापेक्षेत्यनवस्थास्यादितिभावः ॥ संत्वनंताःसमवायाःप्रामाणिकत्वान्नदोषइत्यतआह ॥ नचेति ॥ तत्त्र ॥ समवायानंत्येमूलक्षयाभावान्नानवस्थादूषणमित्यतआह ॥ प्रथमेति ॥ मूलभूतावयवावयव्यादिसंबंधस्यैवप्रमाणाभावेनासिद्धेस्तत्सिद्ध्यर्थमभ्युपगंतव्यसंबंधानांसुतरामसिद्धिरित्यस्यैवमूलक्षतिरितिभावः ॥ मास्तुतर्हिसमवायपरंपरा प्रथमसमवायएवस्वनिर्वाहकइतितत्राह॥ स्वनिर्वाहकत्वइति ॥ यदिसम

नचतत्प्रमाणम् ॥ प्रथमसंबंधासिद्धौवचतदसिद्धिः ॥ स्वनिर्वाहकत्वेसमवायएवनस्यात् ॥१३॥

वायःस्वस्मिन्स्वयमेवविशेषणविशेष्यभावबुद्धिजनकस्तर्हिसएवनस्यात् द्रव्यस्यैवगुणगुण्यादिरूपेणास्वनिर्वाहकत्वोपपत्तौतद्वैयर्थ्यादितिभावः ॥ नचसंबंधत्वात्तस्यस्वनिर्वाहकत्वम् ॥ संयोगेऽपिप्रसंगात् ॥ नचैवमतिप्रसंगः ॥ प्रमाणसदसद्भावेनव्यवस्थोपपत्तेः ॥ नचसमवायेप्रमाणमस्ति ॥ रूपंनित्यसंबंधसंबद्धंगुणत्वान्महत्त्ववदित्यत्रसाध्यशून्यंनिदर्शनम्॥विशेषणविशेष्यभावत्वेनहेतुनातस्यसंबंधनिबंधनत्वसाधनेव्यभिचारः ॥ विशेषणेऽतिप्रसंगः ॥१३॥

एवंपरपक्षेकारणत्रयनिरासेनसृष्टिनिरस्यप्रलयनिरासार्थंसूत्रंपठित्वाव्याचष्टे ॥ नित्यमिति ॥ परपक्षेका र्यंनित्यदास्यान्नतुकदाचित्प्रलयः ॥ समवायिकारणपरमाणूनांसदासद्भावान्निमित्तस्यचेश्वरेच्छादेर्नित्य त्वात् ॥ असमवायिकारणसंयोगाद्यभावान्नेतिचेन्न ॥ तदनुत्पत्तावपिकारणाभावात् ॥ तदसमवायिका रणकर्माद्यभावस्यचानुपपत्तेः ॥ अदृष्टस्यचबाह्यसामग्रीसत्त्वेस्वाभावापराधेनकार्यनिरोधकत्वादर्शना त् ॥ नचैवंवैयर्थ्यम् ॥ सामग्रीसंपत्तावुपयोगादितिभावः ॥किंचतत्पक्षेपदार्थजनिरपिनित्यास्यात् ॥ सम

नित्यत्वाच्चपरमाणूनांसमवायस्यचतस्यैवजनित्वांगीकारान्नित्यमेवकार्यंस्यात् ॥अन्य

## ॥ ॐ नित्यमेवचभावात् ॐ ॥ १४ ॥

## ॥ ॐ रूपादिमत्त्वाच्चविपर्ययोऽदर्शनात् ॥ १५ ॥

थानकदाचित् ॥ १४ ॥ रूपादिसत्त्वाच्चपरमाणूनामनित्यत्वंतथादृष्टत्वाल्लोके ॥ १५ ॥

वायस्यनित्यमेवभावांगीकारात् ॥प्रागसतःसत्तासमवायस्यैवजनित्वाभ्युपगमादितिसूत्रस्यार्थांतरम् ॥सम वायिकारणादिसत्त्वेपिकार्योत्पत्त्युपरमेबाधकमाह ॥ अन्यथेति॥१४॥ एवंपरमाणूनांनित्यत्वमभ्युपेत्यत्त दारंभवादोदूषितः॥ इदानींतन्नित्यत्वमपिपराकुर्वन्सूत्रमुपन्यस्यव्याचष्टे ॥रूपादीति॥ पार्थिवादिपरमाणू नांरूपादिमत्त्वहेतुनाप्रकृतनित्यत्वविपर्ययोभवति॥ यद्रूपादिमत्तस्यघटादेरनित्यत्वदर्शनादित्यर्थः॥१५॥

ननुरूपादिमत्त्वेपिपरमाणूनांनित्यत्वंकिंनस्यादस्तुवाऽनित्यत्वंकिंबाधकमित्याशंकांपरिहरन्सूत्रमुपन्यस्य व्याचष्टे॥उभयथाचेति॥ यदिरूपादिमतामपिपरमाणूनांनानित्यत्वंतर्हितद्वद्घटादेरपिकिंनस्यात् ॥ नचा वयवित्वादिविशेषः॥ रूपादिमत्त्वादेवतत्सिद्धेः॥ अस्त्वनित्यत्वंपरमाणूनांकिंबाधकमित्युक्तमेवेतिचेन्न॥ तथासतिपरपक्षेतत्समवायिकारणाभावेनतदुत्पत्त्यभावान्नद्व्यणुकादिकार्योत्पत्तिरितिभावः ॥ १६ ॥ एवं

नित्यत्वेपरमाणूनांतद्वत्सर्वनित्यत्वंस्यात् ॥ विशेषप्रमाणाभावात् ॥ अनित्यत्वेकारणाभा

## ॥ ॐ उभयथाचदोषात् ॐ ॥१६॥

## ॥ ॐ अपरिग्रहाच्चात्यंतमनपेक्षा ॐ ॥१७॥

वात्तदुत्पत्त्यभावः॥ १६ ॥ श्रुतिस्मृत्यपरिगृहीतत्वाच्चातिशयेनानपेक्ष्यता ॥ आन्वीक्षि कींतर्कविद्यामनुरक्तोनिरर्थकामितिचमोक्षधर्मे ॥ १७॥ अ० ॥ ६ ॥

प्रपंचेनदूषितंपरमाण्वारंभवादमप्रामाणिकत्वेनापिदूषयन्सूत्रंपठित्वाव्याचष्टे ॥ अपरिग्रहाच्चेति ॥ नके वलंश्रुत्याद्यपरिगृहीतत्वंतस्यतद्विरुद्धत्वंचेतिभावेनाह ॥आन्वीक्षिकीमिति॥ अहमासंपंडितकोहैतुकोवेद निंदकः ॥आन्वीक्षिकीमित्यादिस्तगालवाक्यम्॥ अतःपरमाण्वारंभवादस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तं पूर्वाध्यायोक्तमीश्वरस्यानंतगुणत्वमितिसिद्धम्॥ १७ ॥ अ० ॥ ६ ॥

अधिकरणार्थंदर्शयति ॥ परमाणुपुंजेति ॥ द्विविधसमयिनांमध्येहैतुकनिरासानंतरंपाषंडिनांनिराकरणं प्राप्तम् ॥ पाषंडिनोपिद्विविधाः ॥ अवैदिकावैदिकाश्च ॥ तत्रावैदिकानामतिविरोधिनांनिराकरणंप्रथम प्राप्तम् ॥ तत्रबौद्धजैनानांमध्येबौद्धस्यैवप्राथमिकत्वादादौतन्निराक्रियायुक्ता॥ बौद्धानांबहुविधत्वेपिपर माणुकारणताभ्युपगंतृनिराकरणसंगत्यावैभाषिकसौत्रांतिकमतमत्रनिषिध्यतइतिभावः ॥ अत्रविष्णोर्ज गत्कारणत्वेबौद्धमतविरोधनिरासादस्तिशास्त्रादिसंगतिः ॥ हरिर्जगत्कर्तेत्युक्तम् ॥ तत्रबौद्धमतविरोधेना भावशंकास्यादितितद्दूषणीयमेव ॥ ईश्वरस्यजगत्कारणत्वमेवविषयः ॥ युक्तमयुक्तंवेतिसंदेहः ॥ समय परमाणुपुंजवादिमतमपाकरोति ॥ समुदायस्यैकहेतुकत्वंनयुज्यते ॥

## ॥ ॐ समुदायउभयहेतुकेपितदप्राप्तिः ॐ ॥ १८ ॥

विवादःसंदेहबीजम् ॥ नयुक्तमितिपूर्वःपक्षः॥ रूपविज्ञानवेदनासंज्ञासंस्काररूपेणावस्थितंखलुजगत्परमा र्थसत्तदशेषंपरमाणुसमुदायमात्रंनत्ववयवीनामकश्चिदस्ति ॥ परमाणुसमुदायएवघटादिबुद्ध्युपपत्तौपर माणुपरिणामस्यतदारब्धस्यवाऽवयविनोऽभ्युपगमस्यव्यर्थत्वात् ॥ विद्यमानंसर्वंक्षणिकमेवएतदेवहिपदा र्थानांसत्त्वंयत्कालतःक्षणिकत्वंदेशतःपरमाणुत्वंतच्चैतत्कार्यंकालकर्मनिमित्तेनभवत्यतःकिमीश्वरेण ॥ न चतदनभ्युपगमेमानविरोधः॥ आगमप्रामाण्यानभ्युपगमात् ॥ अतोनलक्षणंयुक्तमित्येवंप्राप्तेसिद्धांतय त्सूत्रमुपन्यस्यव्याचष्टे ॥ समुदायइति ॥ नविष्णोर्जगत्कारणत्वमयुक्तम् ॥ बौधानामनुपपन्नभाषित्वेन

॥ ३६ ॥

तत्कल्पनायादुष्टत्वात् ॥ तथाहि॥ कालकर्मादिनिमित्तेनक्षणिकःपरमाणुनिमित्तकःसमुदायोभवतिनत्वव यवीकश्चिदस्तीतियदुक्तंतत्रप्रष्टव्यम्॥ किमयंसमुदायएकपरमाणुहेतुकोऽनेकपरमाणुहेतुकोवेति॥ आद्य स्तावदनुपपन्नः ॥ एकस्मात्समुदायइत्यस्यव्याहतेः॥ द्वितीयोऽपिकिंमिलितानेकहेतुको विरलानेकहेतु कोवा ॥ नाद्यः॥ मिलितानेकतःसमुदायःसमुदायेसतिमिलितत्वमित्यन्योन्याश्रयतयासमुदायानुपपत्तेः॥ नोत्तरः ॥ अमिलितपरमाणूनांसदासद्भावेनसमुदायस्यापिसदातनत्वापत्त्याप्रलयाभ्युपगमविरोधापातात्

उभयहेतुकेप्यन्योन्याश्रयत्वात्तदप्राप्तिः ॥ अन्यथासर्वदासमुदायसत्त्वंस्यात् ॥ १८ ॥

**॥ ॐ इतरेतरप्रत्ययत्वादितिचेन्नोत्पत्तिमात्रनिमित्तत्वात् ॐ ॥ १९ ॥**

सर्वदाविद्यमानोपिसमुदायःपरस्परापेक्षयाव्यवह्रियतइतिचेन्न ॥

दितिभावः ॥ अत्रातिपीडायामनवस्थापिद्रष्टव्या ॥ १८ ॥ उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे ॥ इतरेति ॥ यदुक्तंसमुदायस्यविरलानेकहेतुकत्वेसदातनत्वंस्यादितितदङ्गीक्रियतएव ॥ नचै वंप्रलयानुपपत्तिः ॥ सदातनत्वेऽपिसमुदायस्यवित्तिव्यवहाराभावेनप्रलयोपपत्तेः ॥ नचविद्यमानत्वेव्यव हाराभावोऽपिकुतइतिवाच्यम् ॥ व्यवहारादेरिदंचेदंचेतिपरमाणुपरस्परापेक्षानिबंधनत्वात् ॥ परस्परापे क्षाचपरमाणूनांसामीप्यापेक्षा ॥ नचास्तिप्रलयेतत्सामीप्यमतोनोक्तदोषइतिभावः ॥ परिहारांशंव्याच ष्टे ॥ नेति॥ वित्तिव्यवहारयोःकादाचित्कतयासमुदायस्यसदातनत्वेऽपिनदोषइतिनयुक्तम् ॥ तथासतिक

दापिसमुदायेवित्तिव्यवहाराभावापातात् ॥ विरलाहिपरमाणवोमिलितपरमाणूनुत्पादयंति ॥ तेचपुरुष
णदृश्यंते ॥ तेचैकैकंकार्यमुत्पाद्यनश्यंत्येवतेप्येवंतथाचकथंद्रष्टुःपरस्परापेक्षाततोव्यवहारादिकथंघटेत॥
नह्यन्यत्रदर्शनमन्यत्रपरस्परापेक्षाऽन्यत्रव्यवहारादीतियुज्यते ॥ पुरुषस्यापितथात्वमितिभावः॥अथविर
लपरमाणुभ्योजातामिलितपरमाणवःस्थायिनोऽतोयुक्तोव्यवहारइत्यतआह ॥ कारणेसतीति ॥ यदिपर

एकंकार्यमुत्पाद्यतस्यविनष्टत्वात्परस्परप्रत्ययस्तदपेक्षयाव्यवहारइतिनयुज्यते॥ कारणेसतिकार्यं

## ॥ ॐ उत्तरोत्पादेचपूर्वनिरोधात् ॐ ॥ २० ॥

भवत्येवेतिहितस्यनियमः॥१९॥ कार्योत्पत्तावेवकारणस्यविनाशान्नविशेषकार्योत्पत्तिः॥२०॥

माणवःस्थायिनस्तर्हितेप्रतिक्षणंकार्यमुत्पादयेयुः ॥ कारणेसतिकार्यंभवत्येवेतितन्नियमात् ॥ तथाचा
ल्पतरकालेप्येकस्माद्घटात्कुलालशालापूर्तिप्रसंगइतिभावः ॥ यद्यप्यत्रक्षणिकत्वहानिरेववाच्यातथापि
सैवतदभ्युपगमकारणप्रदर्शनेनोक्तावेदितव्या ॥ १९ ॥ एवंविरलपरमाणुभ्योमिलितपरमाणूत्पत्तिमभ्यु
पेत्यव्यवहाराद्यसंभवोदर्शितः॥ अथविशेषकार्योत्पत्तिमपिनिराकुर्वत्सूत्रमुपन्यस्यव्याचष्टे ॥ उत्तरेति॥
नक्षणिकमतेविशेषकार्योत्पत्तिश्चयुक्ता ॥ कारणस्यस्वसदृशकार्यजननएवसामर्थ्यात् ॥ अन्यथाघटा

त्पटोत्पत्तिप्रसंगात् ॥ नचवाच्यंसदृशकार्योपजननसमर्थमपिकारणंकार्यमुत्पाद्यपश्चाद्विसादृश्यमुत्पादय तीति ॥ नचातिप्रसंगः ॥ अदृष्टाधीनत्वादिति ॥ सदृशमेकंकार्यमुत्पाद्यैवकारणस्यविनष्टत्वात् ॥ अन्य थाक्षणिकत्वविरोधइतिभावः ॥ २० ॥ एवंविसदृशकार्योत्पत्तिनिरासेनव्यवहारादिकंपराकृत्येदानींप्र तिक्षणोत्पत्तिमेवचनिराकुर्वत्सूत्रमुपन्यस्यव्याचष्टे ॥ असतीति ॥ नप्रतिक्षणंकार्योत्पत्तिर्युक्ता ॥ तथा हि ॥ किंकारणेविनष्टेकार्यमुत्पद्यतेविद्यमानेवा ॥ नाद्यः ॥ यस्मिन्विनष्टेयदुत्पद्यतेतस्यतत्कार्यत्वेऽतिप्र

कारणेविनष्टेकार्यमुत्पद्यतेचेत्तत्कार्यमितिप्रतिज्ञाहानिः ॥ तत्कालेकारणमस्तिचेद्विना

## ॥ ॐ असतिप्रतिज्ञोपरोधोयौगपद्यमन्यथा ॐ ॥ २१ ॥

शकारणाभावाद्यौगपद्यंसर्वकार्याणाम् ॥ २१ ॥

संगात् ॥ नद्वितीयः॥ एकस्मिन्क्षणेस्वयमात्मानंलब्ध्वाकार्योत्पत्तिक्षणेऽपितस्यावस्थानेकारणस्यद्विक्षण कत्वप्रसंगात् ॥ क्षणिकस्यचद्विक्षणावस्थानेतदुत्तरत्रविनाशकारणाभावात्पुनस्तस्मात्कार्योत्पत्तयःस्युः तेभ्यश्चतथेतिसर्वकार्याणांयौगपद्यंस्यात्॥तथायस्मिन्क्षणेकारणंतस्मिन्नेवकार्यावस्थानप्रसंगात्तत्का र्याणांचैवमितिसर्वकार्याणांयौगपद्यंप्रसज्ज्येत ॥ नचक्षणार्धेसमुत्पन्नंक्षणार्धेकार्यमुत्पादयतीतियुक्तम् ॥ क्षणस्यपूर्वमध्यापरकलाविकलत्वाभिलापादितिभावः ॥ २१ ॥

एवंक्षणिकवादेकार्योत्पादंपराकृत्यविनाशंचपराकुर्वत्सूत्रंपठित्वाव्याचष्टे ॥ प्रतिसंख्येति ॥ संतानमंतरे
णयःप्रतिक्षणंविनाशःयश्चसंतानेनसहक्षणिकमतेतयोरनुपपत्तिः॥ तथाहि ॥ प्रतिक्षणंकारणंकार्यंनिर्वर्त्य
नश्यतीतिवक्तव्यम् ॥ तत्रस्वकार्यवियोगकालेकारणंसदेवेतिकार्यमुत्पादयेत्॥कारणेसतिकार्यंभवत्येवेति
नियमाभ्युपगमात् ॥ तदुत्पत्त्यनंतरंचैवमितिकथंप्रतिक्षणंनाशोयुज्येत ॥ नाप्यन्यः ॥ सतोहिघटस्यात्यं
तिकोनाशः ॥ अतोसौसत्वात्कार्यमुत्पादयेदेव ॥ कारणेसतिकार्यंभवत्येवेतिनियमात् ॥ तत्कार्यंचैवमि

कारणेसतिकार्यंभवत्येवेतिनियमान्निस्संतानःससंतानश्चविनाशोनयुज्यते ॥ २२ ॥

## ॥ ॐ प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॐ ॥ २२॥

तिकथंसंतानोच्छेदावसरइतिभावः॥ संतानोनित्यएवेतिचेन्न ॥ प्रलयानुपपत्तेः ॥ विविक्ततयाप्रलयोपप
त्तिरितिनिरस्तम्॥ संतानस्यनित्यत्वेक्षणिकत्वविरोधः अवास्तवत्त्वान्नासौक्षणिकइतिचेन्न ॥ संतानिनाम
पितथात्वापातात् ॥ नहिसंतिसंतानिनोनसंतानइतियुक्तम् ॥ एतेनसमुदायस्यावास्तवत्त्वंपरास्तम्॥ समुदा
योऽपिसमुदायिमात्रंतदतिरिक्तोवा ॥ नाद्यः ॥ विरोधात् ॥ द्वितीयेसएवावयवी ॥ अवास्तवत्त्वेघटादिबु
द्धीनांनिरालंबनत्वापातात् ॥ परमाणवएवावलंबनमितिचेन्न ॥ तेषामनेकत्वादतींद्रियत्वाच्चेति ॥ २२ ॥

तथापिनसतांभावानांक्षणिकताशक्यानिषेद्धुम् ॥ अर्थक्रियाकारित्वंखलुसत्त्वंनाम ॥ नचतत्क्षणिकता मंतरेणोपपन्नम् ॥ यद्याद्यक्षणेघटोघटांतरमुत्पाद्यनस्वयंनश्यतितदाघटांतरमपितथेत्यनंतकार्यापत्तिः ॥ अतोऽर्थक्रियाकारित्वसत्त्वसिद्ध्यैक्षणिकत्वमेष्टव्यंभावानामित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ उभयथेति ॥ अर्थक्रियाकारित्वंसत्त्वंतदन्यथानुपपत्त्याक्षणिकत्वंभावानामितिवदन्प्रष्टव्योजायते ॥ का

कारणेसतिकार्यंभवत्येवेतिनियमेसर्वदाकार्यभावान्नकार्यकारणविशेषः ॥ अ

## ॥ ॐ उभयथाचदोषात् ॐ ॥ २३ ॥

नियमेकार्यानुत्पत्तिः ॥ २३ ॥

रणेसतिकार्यंभवत्येवेतिनियमोऽस्तिनवेति ॥ यद्यस्तिनदाकार्यस्यापियावत्कारणभावित्वात्सव्येतरगोविषाणवन्नकार्यकारणभावः ॥ नियमाभावेतत्कालेऽर्थक्रियाकारित्वाभावेनाऽसत्त्वापत्त्यानकदापिततःकार्योत्पत्तिस्यात्तथाचक्षणिकताव्याहन्यतइतिभावः ॥ नचवाच्यंकथंतर्हिघटादिसत्त्वव्यवस्थेति ॥ जलाहरणादियोग्यतयैवतदुपपत्तेः ॥ २३ ॥

माभूदर्थापत्त्याक्षणिकत्वसिद्धिर्यत्सत्तत्क्षणिकं यथादीपादिसंतश्चामीभावाइत्यनुमानेनसेत्स्यति ॥ नच साध्यविकलतादृष्टांतस्य ॥ यद्विरुद्धधर्माधिकरणंतन्नाना यथाघटपटौ तथाचायंदीपःपूर्वोत्तरक्षणस्थो पिविरुद्धधर्माधिकरणंपरिमाणविशेषदर्शनादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ आकाशेचेति ॥ नचोक्तानुमानेनभावानांक्षणिकत्वसिद्धिः ॥ यत्सत्तदक्षणिकम् ॥ यथाआकाशमित्यन्यत्राकाशदृष्टांते नाक्षणिकत्वस्यापिसाधयितुंशक्यत्वात् ॥ नचाकाशेसाध्याभावः ॥ विशेषदर्शनाभावेनक्षणिकत्वसाध

दीपादिषुविशेषदर्शनात्क्षणिकत्वेनान्यत्रापिक्षाणिकत्वमनुमीयतेचेदाकाशादिष्वविशेष

## ॥ ॐ आकाशेचाविशेषात् ॐ ॥२४॥

दर्शनादन्यत्रापितदनुमीयेत ॥२४ ॥

काभावादितिभावः ॥ अथहेत्वंतरेणतत्रक्षणिकत्वसिद्धिरितिचेन्न ॥ पंचस्कंधातिरिक्तत्वेनतत्रतदनभ्यु पगमात् ॥ नचोत्पत्त्यनंतरमेवमुसलाहतघटेव्यभिचारः ॥ तत्रापिपूर्वमध्यापरकलाविकलकालवृत्ति त्वाभावात् ॥ आकाशेनसत्त्वमितिचेत् ॥ किमिदंसत्त्वं यदाकाशेनसंप्रतिपन्नम् ॥ अर्थक्रियाकारित्वंचे त्तर्हित्वदनुमानेऽसिद्धिःसाधनविकलताचनिदर्शनस्य ॥ अथस्वरूपेणविद्यमानताभावरूपतावासाऽऽका शेननास्ति ॥ २४ ॥

एवंप्रतिपक्षेणानुमानंनिरस्यबाधेनापिपराकुर्वत्सूत्रंपठित्वाव्याचष्टे ॥ अनुस्मृतेश्चेति ॥ परिलूनपुनर्जातकुं
तलकलापप्रत्यभिज्ञावद्भ्रमोयमित्यतआह ॥ प्रत्यभिज्ञायाइति ॥ किंप्रत्यभिज्ञायाबाधितत्वेनभ्रांतित्वंक
ल्प्यतेबाधकमंतरेणवा ॥ नाद्यः ॥ तदभावात् ॥ द्वितीयेदीपादिविशेषदर्शनस्यभ्रमत्वप्रसंगइतिभावः ॥ वि
रुद्धधर्माध्यासोबाधकमितिचेन्न ॥ तस्यकालादिभेदेनोपपत्तेः ॥ नहितादृशेऽन्यत्वमस्मत्संमतमन्यथाक्ष

तदेवेदमितिप्रत्यभिज्ञानाच्च ॥ प्रत्यभिज्ञायाभ्रांतित्वे

## ॥ ॐ अनुस्मृतेश्च ॐ ॥ २५ ॥

विशेषदर्शनस्यापिभ्रांतित्वम् ॥ २५ ॥ अ० ७ ॥

णोपिभावभेदप्रसंगात् ॥ एतेनप्रदीपोऽपिव्याख्यातः ॥ घटोयंनिरंतरोत्तरक्षणवृत्तिध्वंसप्रतियोगीघटत्वा
न्मुसलाहतैकक्षणवृत्तिघटवदितिचोक्तरीत्यापरास्तम् ॥ घटइतिकिंपरमाणवःपक्षीक्रियंतेसमुदायोवा ॥
नाद्यः ॥ दृष्टांताभावात् ॥ नद्वितीयः ॥ तस्याऽवस्तुत्वात् ॥ अतोवैभाषिकादिमतस्यानुपपन्नत्वेनावि
रोधकत्वाद्युक्तमीश्वरस्याशेषजगत्कारणत्वलक्षणमितिसिद्धम् ॥ २५ ॥ अ० ७ ॥

अधिकरणार्थंदर्शयति ॥ शून्येति॥ अत्रहरेर्जगत्कारणत्वेशून्यमतविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ जगत्कारणमीश्वरइत्युक्तम् ॥ तत्रशून्यसमयविरोधेऽभावबुद्धिःस्यादित्यतोऽसौनिराकर्तव्यएव ॥ परमेश्वरस्यजगत्कारणत्वंविषयः ॥ युक्तमयुक्तंवेतिसंदेहः ॥ मतविमतिःसंदेहबीजम् ॥ नयुक्तमितिपूर्वःपक्षः ॥ एकंशून्यमेवखल्वंतत्रयविरहितंपरमार्थतोविद्यमानंतस्मादेवैतदशेषंजगदुदेति ॥ नचतस्यासंगस्यजगत्का

शून्यवादमपाकरोति ॥ अदृष्टत्वान्नासतःकारणत्वंयुज्यते ॥२६ ॥

## ॥ ॐ नासतोदृष्टत्वात् ॐ ॥ २६ ॥

रणत्वानुपपत्तिः ॥ संघतिसंबंधेनोपपत्तेः॥ नचश्रुतिविरोधः ॥ तत्प्रामाण्यानभ्युपगमात् ॥ अतःशून्यादेव जगदुदयसंभवादीश्वरेणोपयोगाभावात्सुतरामयुक्तंलक्षणमितिप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ नेति ॥ नशून्यस्यजगत्कारणत्वंयुक्तम ॥ तत्प्रमाणाभावात् ॥ नतावत्प्रत्यक्षमत्रास्ति ॥ नाप्यनुमानम् ॥ क्वाप्यसतःकारणत्वादर्शनेनदृष्टांताभा ात् ॥ आगमस्तुनेष्टोदृष्टोवेतिभावः ॥ २६ ॥

नन्वदृष्टमपिजगत्कारणत्वंशून्यस्याभ्युपगतंचेत्कोदोषइत्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ उदासीनानामिति ॥ यद्यदृष्टमप्यसतःकारणत्वंकल्प्येत एवंतर्हिखपुष्पादीनामपिसकाशात्सौख्यादिसिद्धिः

असतःकारणत्वेउदासीनानांहेयोपादेयबुद्धिवर्जितानांखपुष्पादीनामपिसकाशात्कार्य

## ॥ ॐ उदासीनानामपिचैवंसिद्धिः ॐ ॥ २७ ॥

सिद्धिः ॥ चशब्दान्नचेदन्यत्रापिनस्यात् ॥ अविशेषात् ॥ २७ ॥

स्यात् ॥ नचसाभ्युपगंतुंशक्यते ॥ तेषांहेयोपादेयबुद्धिविषयतावर्जितत्वादितिभावः ॥ खपुष्पादीनामकारणत्वेऽपिशून्यादेवजगदुत्पत्तौकोदोषइत्यतआह॥ चशब्दादिति ॥ इतिसूचितमितिशेषः ॥ अन्यत्रशून्यात् ॥ असत्त्वाविशेषादितिभावः ॥ २७ ॥

भवेदेतद्दूषणंयदिशून्यतत्वात्परमार्थतोमृदोघटइवजगदुत्पद्येत ॥ नैतदस्ति ॥ संवृतिवशाच्छून्यमेवजगदा
कारेणविवर्ततइत्यभ्युपगमात् ॥ नहिशून्येजगदध्यस्तमित्यत्रोक्तदोषप्रसरः ॥ असतएवरजताकारेणप्रती
यमानत्वादित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥नेति ॥ शून्यमेवजगदाकारेणावभातिनपरमार्थतोजग
दस्तीत्ययुक्तंसदितिदृष्टत्वादित्यर्थः ॥ नचासदेवरजताकारेणावभातीतियुक्तम् ॥ नेदंरजतंकिंतुशुक्तिरेवेति
बाधविरोधात् ॥ २८ ॥ ननुसदितिदृश्यमानस्यस्वप्नस्यरज्जुभुजंगादेश्चासत्त्वंदृष्टमतोजगतःसत्त्वेनदृष्टस्या
नचजगदेवशून्यमितिवाच्यम ॥ दृष्टत्वात् ॥ २८ ॥ नचदृष्टस्यापिस्वप्नादिवदभावः ॥

॥ ॐ नाभावउपलब्धेः ॐ ॥ २८ ॥ ॥ ॐ वैधर्म्याच्चनस्वप्नादिवत् ॐ ॥ २९ ॥

तस्योत्तरकालेस्वप्नोयंनायंसर्पइत्याद्यनुभवात् ॥ नचात्रतादृशंप्रमाणमस्ति ॥२९॥ अ० ८॥
प्यसत्त्वंकिंनस्यादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ वैधर्म्याच्चेति ॥ नजगतःसत्त्वेनोपलब्धस्या
पिस्वप्नादिवदसत्त्वंवाच्यम् ॥ स्वप्नस्यासत्त्वस्यैवाभावात् ॥ स्वप्नजाग्रत्त्वंदृष्टांतइतिचेन्न ॥ तथापिनतद्वद
सत्त्वंजगतः ॥ ततोजाग्रत्त्वादेःस्वप्नएवायंनजाग्रत्रज्जुरयंनसर्पइत्यादिबाधकविषयत्वेनवैलक्षण्यादित्याश
यः ॥ प्रकृतेऽपिबाधकादसत्त्वंकिंनस्यादित्याशंकांचशब्दाभिप्रायेणपरिहरति ॥ नचेति ॥ तदेवंशून्यमत
स्याप्ययुक्तत्वाद्युक्तमीश्वरस्यजगत्कारणत्वलक्षणमितिसिद्धम् ॥ २९ ॥ अ० ८ ॥

अधिकरणार्थंदर्शयति ॥ विज्ञानेति ॥ अत्रेश्वरस्यजगत्कारणत्वेविज्ञानवादविरोधनिरासादस्तिशास्त्रादिसंगतिः ॥ ईश्वरोजगत्कारणमित्युक्तम् ॥ तत्रचयोगाचारमतविरोधेऽनुपपन्नत्वप्रसंगात् ॥ अवश्यंनिरसनीयंतद्भवति ॥ हरेर्जगत्कारणत्वमेवविषयः ॥ युक्तमयुक्तंवेतिसंदेहः ॥ समयविवादएवसंदेहबीजम् ॥ नयुक्तमितिपूर्वःपक्षः ॥ नित्यंनिरंजनंविज्ञानतत्त्वमेकमेवखलुविद्यमानंतन्मात्रमेवेदंजगन्नतुततोतिरिक्तमस्ति ॥ ततोजगदुदयेनेश्वरेणकृत्यमित्ययुक्तंलक्षणमितिप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ नेति ॥ नविज्ञानातिरिक्तंजगदितिवदनूप्रष्टव्योजायते ॥ किंविज्ञानतत्त्वेजगदध्यस्तमितिपक्षउतपरमार्थतोविज्ञान

विज्ञानवादमपाकरोति ॥ नविज्ञानमात्रंजगत्तथानुभवाभावात् ॥ ३० ॥

॥ ॐ नभावोऽनुपलब्धेः ॐ ॥ ३० ॥

जगतोरभेदएवेति ॥ तत्राद्योऽतीताधिकरणन्यायेननिराकर्तव्यः ॥ नापिद्वितीयः ॥ विज्ञानात्मकंजगदित्यत्रप्रमाणाभावादितिभावः॥ नचसहोपलंभनियमादभेदोनीलतद्धियोरितियुक्तम् ॥ भेदप्रतीतिविरोधात्॥ नचेयंभ्रांतिः॥बाधकाभावात्॥ अनुमानस्यैवबाधकत्वेस्फुटमितरेतराश्रयत्वंसहोपलंभादभेदइतिप्रतिज्ञाहेत्वोर्विरोधश्च ॥ साहित्यस्यभेदएवोपपत्तेः ॥ नचयत्प्रकाशतेतद्विज्ञानं यथाज्ञानंप्रकाशतेचनीलादयइतियुक्तम् ॥ प्रकाशतइतिविज्ञानविषयत्वाभ्युपगमेस्ववृत्तिविरोधेनदृष्टांतसाधनाभावः ॥ अज्ञानेव्यभिचारश्चप्रकाशत्वाभिप्रायेऽसिद्धिरिति ॥ ३० ॥

युक्त्यंतरेणापिजगतोविज्ञानात्मकत्वंपराकुर्वत्सूत्रमुपन्यस्यव्याचष्टे ॥ क्षणिकत्वाच्चेति ॥ नचज्ञानेपिक्ष
णिकत्वंभ्रांतमितिवाच्यम् ॥ मानाभावात् ॥ ३१ ॥ एवंप्रत्येकंदूषितानिबौद्धमतानिपुनःसामान्यदूषणे
नपराकुर्वत्सूत्रमुपन्यस्यव्याचष्टे.॥ सर्वथेति ॥ श्रुत्यादिकमुक्तंवक्ष्यमाणंचद्रष्टव्यम् ॥ एतच्चाधिकारिणं
प्रति ॥ अतोबौद्धराद्धांतस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तंहरेर्जगत्कारणत्वलक्षणमितिसिद्धम् ॥ ३२ ॥

ज्ञानंक्षणिकमर्थानांचस्थायित्वमुक्तम् ॥ अतश्चनैक्यम् ॥ ३१ ॥ प्रमाणाभावात्सर्वश्रु

**॥ ॐ क्षणिकत्वाच्च ॐ ॥ ३१ ॥** **॥ ॐ सर्वथानुपपत्तेश्च ॐ ॥ ३२ ॥**

तिस्मृतियुक्तिविरुद्धत्वाच्चनैतेपक्षाग्राह्याः ॥ ३२ ॥ अ० ९ ॥ स्याद्वादिमतंदूषयति ॥

अ० ९॥अधिकरणार्थंदर्शयति॥ स्यादिति ॥ अत्रेश्वरस्यजगत्कारणत्वेजैनमतविरोधनिरासादस्तिशास्त्रा
दिसंगतिः॥ ईश्वरोजगत्कारणमित्युक्तम् ॥ तच्चस्याद्वादिमतविरोधेमंदस्यानुपपत्तिशंकास्यादितितन्निरासः
कर्तव्यएव ॥ तत्परमात्मनोजगत्कारणत्वंविषयः ॥ युक्तमयुक्तंवेतिसंदेहः ॥ समयविगानंसंदेहबीजम् ॥
नयुक्तमितिपूर्वःपक्षः ॥ सदसदुभयमुभयविलक्षणंनैतत्सर्वंचेतिसप्तभंगिजगदात्मादृष्टात्परिदृष्टसाधनैश्चभ
विष्यति ॥ सचकायपरिमाणः ॥ अतःकिमीश्वरेणेतिलक्षणसूत्रमयुक्तमितिप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्य

व्याचष्टे ॥ नेति ॥ यदुच्यतेजैनैर्जगत्सप्तभंगीति नतद्युक्तम् ॥ व्यवस्थितसदसत्प्रकारद्वयातिरिक्तप्रकार स्याप्रामाणिकत्वेनासंभवात् ॥ एकैकप्रकाराभ्युपगमेदोषदर्शनादेतदुपेयतइतिनवाच्यम् ॥ तथासतिदोष भीरुणासर्वमपिपरित्याज्यंस्यात् ॥ सदसत्प्रकारद्वयेचनकोपिदोषइतिभावः ॥ ३३ ॥ यदपिजीवस्यशरी रपरिमितत्वमभ्युपेयतेतत्प्रष्टव्यम् ॥ किंतत्सर्वशरीरगतचेष्टोपपत्त्यर्थमभ्युपेयतेशरीरावच्छेदमंतरेणात्मनः

सत्स्यादसत्स्यात्सदसत्स्यात्ततोन्यच्चस्यादित्येतन्नैकस्मिन्युज्यते ॥ अदृष्टत्वेनासंभवात् ॥ ३३ ॥

**॥ ॐ नैकस्मिन्नसंभवात् ॐ ॥३३॥ ॥ॐ एवंचात्माकार्त्स्न्यम् ॐ ॥३४॥**

जीवस्यशरीरपरिमितत्वांगीकारेणवादिशरीरस्थस्यहस्त्यादिशरीरेऽकार्त्स्न्यंस्यात् ॥ ३४ ॥

परिमाणाभावप्रसंगभयाद्वा ॥ तत्राद्यंपक्षंप्रतिक्षेप्तुंसूत्रमुपन्यस्यव्याचष्टे ॥ एवंचेति ॥ जैनमतप्रसंगस न्निधापितमात्मनः शरीरपरिमाणत्वमेवमितिपरामृशति ॥ यद्यात्मासर्वशरीरचेष्टोपपत्यर्थंशरीरपरिमाणां गीक्रियते एवंतर्हिपिपीलिकादिशरीरस्थस्तत्परिमाणएवस्यात् ॥ तथाचतस्यैवकर्मवशाद्गजगर्दभादिश रीरप्राप्तौ तत्रापूर्णतास्यात् ॥ ततश्चनसर्वशरीरचेष्टेतिभावः ॥ गजादिशरीरस्थस्याणुशरीरप्राप्तावतिरेकः स्यात्तथाचशरीरपरिमाणत्वभंगइत्यपिद्रष्टव्यम् ॥ ३४ ॥

यदायच्छरीरंप्राप्नोतितदातत्परिमाणोऽनेनोक्तदोषइत्याशंकांपरिहरन्नुत्तरसूत्रमवतारयति ॥ नेति ॥ न
चात्मनस्तत्तच्छरीरस्थस्यतत्तत्परिमाणत्वमितियुक्तम् ॥ तथासतिविकारित्वापत्तेः॥ ततश्चानित्यत्वप्रसंगे
स्तेनचानिर्मोक्षप्रसंगः॥तथाचशास्त्रवैयर्थ्यापातादितिभावः ॥ ३५ ॥ द्वितीयपक्षंपरिहरन्नुत्तरसूत्रमवतारयति

तत्तच्छरीरस्थस्यतत्तत्परिमाणत्वमितिनमंतव्यम् ॥ विकारित्वादनित्यत्वप्रसंगः ॥ ३५ ॥

॥ ॐ नचपर्यायादप्यविरोधोविकारादिभ्यः ॐ ॥ ३५ ॥

॥ ॐ अंत्यावास्थितेश्चोभयनित्यत्वादविशेषात् ॐ ॥ ३६ ॥

परिमाणाभावेस्वरूपाभावप्राप्त्यांत्यपरिमाणस्थितेस्तदर्थत्वेनशरीरस्थितेरप्यनित्यत्वा
दविशेषेणसर्वशरीरनित्यत्वंस्यात् ॥ ३६ ॥ अ० १० ॥

चष्टे ॥ अंत्येति ॥ शरीरावच्छेदमंतरेणात्मनःस्वतःपरिमाणाभावात् ॥ शरीरपरिमाणत्वंवदन्प्रष्टव्यः ॥
किंमोक्षेजीवस्यपरिमाणमस्तिनवेति ॥ नतावद्द्वितीयः ॥ परिमाणाभावेस्वरूपाभावप्रसंगः ॥ नहिपरिमाण
शून्यंद्रव्यमस्ति ॥ अतोमोक्षेपरिमाणमभ्युपगंतव्यमेव ॥ किंचातः॥तथासतितस्यशरीरमंतरेणानुपपत्तेः॥

मोक्षेऽपिशरीरमुररीकरणीयंप्रसज्जेत ॥ अंगीक्रियतएवातोनानिष्टमितिचेत्तर्हीदंभवान्पृष्टोव्याचष्टाम् ॥ तच्छरीरमनित्यंनित्यंवा ॥ नाद्यः॥ संसारसमानधर्मतापातात् ॥ नद्वितीयः ॥ यद्यात्मादेहश्चेत्युभयंनित्यंत र्हीदानींतनसर्वशरीरैःकिमपराद्धम् ॥ तेषामपिनित्यत्वंस्यात् ॥ शरीरत्वाविशेषादितिभावः॥ तस्माज्जैनमत स्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तंजगत्कारणत्वलक्षणंविष्णोरितिसिद्धम् ॥ ३६ ॥ अ० १० ॥ अधिकर णार्थंदर्शयति ॥ पाशुपतेति ॥ अवैदिकपाषंडिसमयनिरासानंतरंवैदिकाभासानिरसनीयाः ॥ तेचपाशुपत

पाशुपतपक्षमपाकरोति ॥

शाक्तेयसौरस्कांदगाणपत्याः ॥ तेषुपाशुपतस्यैवप्राबल्यात्तन्मतमादौदूष्यतइतिभावः ॥ अथहरेर्जगत्क र्तृत्वेपाशुपतमतविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ विष्णुरेवाशेषजगत्कर्तेत्युक्तम् ॥ तस्यपाशुपतमत विरोधेऽदार्ढ्यंस्यादितितन्निराकर्तव्यमेव ॥ तद्विष्णोर्जगत्कारणत्वंविषयः ॥ [illegible] ॥ सम यविप्रतिपत्तिःसंदेहबीजम् ॥ नयुक्तमितिपूर्वःपक्षः ॥ पशुपतिःखलुसार्वज्ञ्यादिगुणशाली[illegible] कृत्यहरिहिरण्यगर्भादिजगदुत्पत्त्यादिकरोति ॥ तथाश्रुतिस्मृतयोऽस्मिन्नर्थेगमंति ॥ तथाचकाथाविहरेर्ज

गत्कारणत्वस्यातोनलक्षणसूत्रंयुक्तमितिप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ पत्युरिति ॥ नपत्युरज्ञ
जनप्रसिद्धेश्वरस्यपशुपतेर्जगत्कारणत्वंयुक्तम् ॥ पारतंत्र्यजननमरणादिदोषित्वेनश्रुतत्वात् ॥ नहिसकल
कारणस्यदोषित्वंयुक्तमितिभावः ॥ ब्रह्मद्विषेचतुर्मुखस्यपंचममुखच्छेत्रे ॥ शर्वोहिंसनशीलाय ॥ हंतवैहं

यंकामयेतंतमुग्रंकृणोमितंब्रह्माणंतमृषिंतंसुमेधाम ॥ अहंरुद्रायधनुरातनोमिब्रह्मद्विषेश
रवेहंतवाउ ॥ अस्यदेवस्यमीळ्हुषोवयाविष्णोरेषस्यप्रभृथेहविर्भिः ॥ विदेहिरुद्रोरुद्रियं

## ॥ ॐ पत्युरसामंजस्यात् ॐ ॥ ३७॥

महित्वंयासिषंवर्तिरश्विनाविरावत् ॥ एकोनारायणआसीन्नब्रह्मानेशानोनाग्नीषोमावि
त्यादिश्रुतेः ॥ पारतंत्र्येणासमंजसत्वान्नपशुपतिरीश्वरोजगत्कर्ता ॥ ३७ ॥

तुमेवनतुभीषणाद्यर्थमितिभावः ॥ अस्यासमंतादीशस्याभीष्टसेचकस्यविष्णोर्देवस्यहविर्भिःप्रभरणेकृ
तेसत्यहंकाररूपेणबंधकोरुद्रोरौद्रंमहिमानंयथालेभेतथायुवामपिविष्णुपूजयैवान्नवर्द्धनंप्राप्तवंतौस्थइ
त्यर्थः ॥ ३७ ॥

युक्त्यंतरेणपशुपतेर्जगत्कारणत्वंपराकुर्वंत्सूत्रमुपन्यस्यव्याचष्टे ॥ संबंधेति ॥ जगतासंबंधमात्रमशरीर स्यापिसंभवतीत्युक्तःकोसौसंबंधइत्यतःकार्यकर्तृत्वभावइतिभावेनोक्तम् ॥ कर्तृत्वेनेति ॥ इदमुक्तंभवति॥ रुद्रोनकर्ताअशरीरत्वान्मृतपुरुषवदिति ॥ ३८ ॥ हेत्वंतरेणपशुपतेर्जगत्कर्तृत्वंनिराकुर्वंत्सूत्रमुपन्यस्यव्या

अशरीरत्वात्तस्यजगतासंबंधोनयुज्यते कर्तृत्वेनमृतपुरुषवत् ॥ ३८ ॥ पृथिव्याद्यधिष्ठा

॥ ॐ संबंधानुपपत्तेश्च ॐ ॥ ३८ ॥

॥ ॐ अधिष्ठानानुपपत्तेश्च ॐ ॥ ३९ ॥

॥ ॐ करणवच्चेन्नभोगादिभ्यः ॐ ॥ ४० ॥

नेस्थितोहिकुलालादिःकार्यंकरोति ॥ नचास्यतदस्ति ॥ ३९॥ इदमेवजगत्तस्यकरणवद धिष्ठानादिरूपंनित्यस्यापिकस्यचिद्भावाद्युज्यतइतिचेन्न ॥

चष्टे ॥ अधिष्ठानेति ॥ नरुद्रःकर्तानिरधिष्ठानत्वात् ॥ यःकर्ताससाधिष्ठानोयथाकुलालादिरित्यर्थः॥३९॥ उक्तमाक्षिप्यसमादधत्सूत्रंपठित्वाऽऽक्षेपांशंतावद्व्याचष्टे ॥ करणवदिति ॥ नपशुपतेःशरीराधिष्ठानाभावेन कर्तृत्वानुपपत्तिः ॥ कारकग्रामस्यैवसाक्षात्प्रयत्नाधिष्ठेयतयाऽस्मदादिशरीरसमानत्वेनशरीरांतरापेक्षाभा

वात् ॥ साक्षात्प्रयत्नाधिष्ठेयविषयेऽपिशरीरापेक्षायांतत्रापितत्प्रसंगात् ॥ तस्यैवचाधिष्ठानत्वमुपपद्यते ॥
नचवक्तव्यंप्रलयेसर्वस्यापिविनाशान्नकारकसमूहस्याप्यधिष्ठानत्वादियुज्यतइति॥ प्रलयेऽपिमायादेःका
रककलापस्यानित्यस्यविद्यमानत्वात् ॥ अन्यथाकार्यजन्मासंभवादितिभावः॥ परिहारांशंव्याचष्टे॥ नेति॥
तदेवस्फुटीकरोति ॥ उत्पत्तीति ॥ यदिकारकव्रातस्यैवसाक्षात्प्रयत्नाधिष्ठेयतयाशरीरादिवदेवकर्तृत्वोपयो

भोगादिप्राप्तेः ॥ उत्पत्तिनाशौसुखदुःखभोगाश्चप्राप्येतेतद्वताः ॥ ४० ॥ देहवत्त्वेंऽतवत्त्व

## ॥ ॐ अंतवत्त्वमसर्वज्ञतावा ॐ ॥ ४१ ॥

म् ॥ अन्यथाज्ञानाभावः ॥

गितातर्हितदुपादानहाननिमित्तोत्पत्तिमरणेचपशुपतेःस्याताम् ॥ साक्षात्प्रयत्नाधिष्ठेयशरीरोपादानहान
योस्तद्दर्शनात् ॥ तथाचसुखदुःखभोगप्राप्तिःस्यात्ततश्चनकर्तृत्वमितिभावः ॥ ४० ॥ उक्तपक्षावेवविकल्प
भंग्यादोषांतरेणदूषयत्सूत्रंपठित्वाव्याचष्टे ॥ अंतवत्त्वमिति॥ पशुपतिःकर्तेतिवदन्प्रष्टव्योजायतेकिमसौ
शरीरीनवेति ॥ शरीरीचेत्परिच्छिन्नःस्याद्यज्ञदत्तवत् ॥ तथाचनजगत्कर्तृत्वम् ॥ यदिनशरीरीतर्हितस्यज्ञा
नमेवनस्यात् कुतःसार्वज्ञ्यमितिनजगत्कारणत्वमितिभावः ॥ शरीराभावेकुतोज्ञानाभावइत्यतोव्यतिरेक

व्याप्तिंदर्शयति ॥ शरीरिणएवेति ॥ नचवक्तव्यमिच्छागृहीतविग्रहत्त्वान्नांतवत्वादीति ॥ अशरीरस्येच्छा
योगात् ॥ अनेनशरीरानपेक्षंज्ञानंनित्यत्वादितिपरास्तम् ॥ ननुविष्णावप्येतेदोषाःप्रसरंत्येवेतिकर्तृत्वानुपप
त्तिरित्याशंकांसूत्रकृतानिरस्तामपिपुनःप्रमाणविशेषैःपरिहरति॥ विष्णोस्त्विति ॥ बुद्धीतिश्रुत्येश्वरस्यशरी

शरीरिणएवहिज्ञानोत्पत्तिर्दृष्टा ॥ विष्णोस्तुश्रुत्यैवसर्वैर्विरोधाःपरिहृताः ॥ यदात्मको
भगवांस्तदात्मिकाव्यक्तिः ॥ किमात्मकोभगवान् ॥ ज्ञानात्मकऐश्वर्यात्मकःशक्त्यात्म
कइति ॥ बुद्धिमनोंगप्रत्यंगवत्तांभगवतोलक्षयामहे ॥ बुद्धिमान्मनोवानंगवान्प्रत्यंगवा
निति ॥ सदेहःसुखगंधश्चज्ञानभाःसत्पराक्रमोज्ञानज्ञानःसुखसुखःसविष्णुःपरमोऽक्षरइ
त्यादिकया ॥ ४१ ॥ अ० ॥ ११ ॥

रित्वाभिधान्याज्ञानाभावादिदोषाःपरिहृताः ॥ यदात्मकःइत्यादिकयातुतद्देहस्यज्ञानाद्यात्मकभगवत्स्वरू
पाभिधान्यांतवत्त्वादिदोषाःपरिहृताः॥एवंपाशुपतमतनिरासन्यायेनान्येपिचत्वारस्समयानिराकृतावेदित
व्याः ॥ तस्मात्पाशुपतसमयस्यानुपपन्नत्वेनाविरोधकत्वाद्युक्तंलक्षणसूत्रमितिसिद्धम्॥४१॥अ०॥११॥

अधिकरणार्थंदर्शयति ॥ शक्तीति ॥ पूर्वन्यायेननिरस्तमपिशक्तिमतमसाधारणदोषाविष्कारेणपुनर्दूषय तीतिभावः॥अत्रविष्णोर्जगत्कारणत्वेशक्तिमतविरोधपरिहारादस्तिशास्त्रादिसंगतिः॥ विष्णोर्जगत्कारणत्व मुक्तम् ॥ तत्रशाक्तेयमतविरोधेऽनुपपत्तिशंकास्यादतस्तन्निरसनीयमेव ॥ विष्णोर्जगत्कारणत्वंविषयः॥ यु क्तमयुक्तंवेतिसंदेहः ॥ समयविवादःसंदेहबीजम् ॥ नयुक्तमितिपूर्वःपक्षः ॥ शक्तेरेवखलुसार्वज्ञ्यादिगुण

शक्तिपक्षंदूषयति ॥ नहिपुरुषाननुगृहीतस्त्रीभ्यउत्पत्तिर्दृश्यते॥४२॥ यदिपुरुषोंऽगीक्रिय

॥ ॐ उत्पत्यसंभवात् ॐ ॥४२॥ ॥ ॐ नचकर्तुःकरणम् ॐ ॥४३॥

तेतस्यापिकारणाभावादनुपपत्तिः ॥ ४३ ॥

शालिनीसकलजगज्जननीश्रुतिस्मृतीतिहासपुराणेषुपठ्यतेऽतोनहरेर्जगत्कारणत्वलक्षणंसंभवतीतिप्राप्तेसि द्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ उत्पत्तीति ॥ नशक्तेरेवजगत्कर्तृत्वंयुक्तम् ॥ पुरुषाननुगृहीतत्वात्॥ नहि पुरुषाननुगृहीतस्त्रीमात्रात्क्वचिदुत्पत्तिर्दृष्टेतिभावः ॥ ४२ ॥ अस्त्वेवशक्त्यनुग्राहकःपुरुषःसदाशिवोऽतस्त स्याजगदुत्पत्तिर्युक्तेति ॥ केषांचिच्छाक्तेयानांमतंनिराकुर्वत्सूत्रमुपन्यस्यव्याचष्टे ॥ नचेति॥ यदिपुरुषोंऽ गीक्रियतेशक्त्यनुग्राहकस्तथापितस्योत्पत्त्युपयोगिज्ञानादिसाधनाभावेनोत्पत्त्यनुपपत्तिरेवेत्यर्थः॥४३॥

शक्त्यनुग्राहकस्यपुंसःसार्वज्ञ्यादिसद्भावेनयुक्ततराजगदुत्पत्तिरितिकेषांचिद्यन्मतंतन्मतनिरासायसूत्रंपठित्वाव्याचष्टे ॥ विज्ञानेति ॥ यदिशक्त्यनुग्राहकस्येश्वरस्यविज्ञानादिकारणमंगीक्रियतेतदातेनैवजगदुत्पत्तिसंभवाद्व्यर्थंशक्तेरपिपृथक्कर्तृत्वांगीकरणंस्यात् ॥ तथाचानेनशाक्तेयमतेनप्रकृतपाशुपतमतस्याप्रतिषेधःकृतःस्यात् ॥ अनुमतमेवस्यात् ॥ तच्चनिरस्तमितिभावः ॥ ४४ ॥ एवंशाक्तेयमतत्रयंपृथङ्निरस्यसमु

यदिविज्ञानादिकरणंतस्यांगीक्रियतेतदाततएवसृष्ट्याद्युपपत्तेरीशवादांतर्भावः ॥ ४४ ॥ सकलश्रु

## ॥ ॐ विज्ञानादिभावेवातदप्रतिषेधः ॐ ॥ ४४ ॥

## ॥ ॐ विप्रतिषेधाच्च ॐ ॥ ४५ ॥

त्यादिविरुद्धत्वाच्चासमंजसम् ॥ ४५॥अ० १२॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेद्वितीयाध्यायस्यद्वितीयःपादः ॥ श्रीकृष्णार्पणमस्तु ॥७॥

दितदूषणेनापिनिराकुर्वत्सूत्रमुपन्यस्यव्याचष्टे ॥ विप्रतिषेधाच्चेति॥ असमंजसंशाक्तिमतमितिशेषः॥अतोऽयुक्तत्वाच्छाक्तेयमतस्याविरोधकत्वेनोपपन्नमेवविष्णोर्जगत्कारणत्वलक्षणमितिसिद्धम् ॥ ४५॥ अ० १२ ॥ इतिश्रीमद्ब्रह्मसूत्रभाष्यस्यटीकायांतत्त्वप्रकाशिकायांजयतीर्थमुनिकृतायांद्वितीयाध्यायस्यद्वितीयःपादः समाप्तः ॥ श्रीकृष्णार्पणमस्तु ॥ ७ ॥

श्रीगुरुभ्योनमः ॥ हरिः ॐ॥ एतत्पादार्थंदर्शयति॥ जीवेति ॥ युक्तिसमयविरोधाभावेऽपिनवेदसमन्वयेन विष्णोर्जगत्कारणत्वंसिध्यति॥ वेदानांपरस्परविरोधेनाप्रमाणत्वात् ॥ नह्यप्रमाणसिद्धोऽर्थःसिध्यतीत्याशंकानिवृत्त्यर्थंश्रुतीनांविरोधःपरिहरणीयोभवति॥ श्रुतिविरोधश्चाधिभूतादिविषयोऽध्यात्मविषयश्च ॥ तत्र जिज्ञासोरध्यात्मविषयविचारस्यांतिमत्वादधिभूतादिविषयश्रुतीनांपरस्परविरोधमस्मिन्पादेपरिहरतीति भावः ॥ नचवाच्यंश्रुतीनांजीवादिविषयएवविरुद्धत्वेनोक्तबाधाभावाद्यर्थःपादद्वयारंभइति ॥ अभ्युपग

हरिः ॐ ॥ जीवपरमात्माधिभूताधिदैवेषुश्रुतीनांपरस्परविरोधमपाकरोत्यनेनपादेन ॥

तार्थद्वयेऽन्यतरार्थेऽप्रामाण्यप्राप्तावन्यार्थेनाश्वासप्रसंगात् ॥ जगत्स्वरूपानिर्णयेतत्कारणत्वानिर्णयाच्च॥ अत्रज्ञोतएवेत्यारभ्यापादसमाप्तेर्जीवविचारः ॥ असंभवस्तुनात्माश्रुतेरित्यधिकरणद्वयेपरमात्मविचारः॥ एकैकस्मिन्नेवाधिकरणेऽधिभूताधिदैवविचारः॥ अतोविचारबाहुल्याभिप्रायेणक्रमोल्लंघनम् ॥ अधिभूतंनामसकारणकार्यभूतानि ॥ तदभिमानिदेवताअधिदैवम् ॥ अत्रभूतेष्वाकाशस्योत्पत्त्याद्यष्टकेचोत्पत्तेः प्राथम्याद्ब्रह्मणिश्रुतिसमन्वयसिद्ध्यर्थमाकाशोत्पत्तिविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः॥ सक

लजगज्जन्मादिकर्ताविष्णुरित्युक्तम् ॥ तच्चाकाशस्यनित्यत्वेऽसंभविस्यात् ॥ श्रुतिविरोधेनगुणांतरस्यचा भावापातात् ॥ श्रुत्यविरोधेनाकाशस्योत्पत्तिःसमर्थनीया ॥ आकाशोऽत्रविषयः ॥ उत्पत्तिमान्नवेतिसंदेहः ॥ आत्मनआकाशःसंभूतः अनादिर्वायमाकाशइतिश्रुतिविप्रतिपत्तिःसंदेहबीजम् ॥ वियदनुत्पत्तिमदेवेतिपूर्वःपक्षः ॥ आकाशस्योत्पत्तिमत्त्वांगीकारेऽनुभूतियुक्तिबहुवाग्विरोधात् ॥ नह्यवकाशस्योत्पत्तिरनुभवानुसारिणी॥ वियदनुत्पत्तिमद्विभुत्वादित्यादियुक्तिः ॥ अनादिर्वायमाकाशइत्यादिबहुश्रुतयः ॥ न

नवियदनुत्पत्तिमत् ॥ तथाश्रुतेः ॥१॥

## ॥ ॐ नवियदश्रुतेः ॐ ॥ १ ॥

चात्मनआकाशःसंभूतइतिश्रुत्यातदुत्पत्तिसिद्धिः ॥ अनुभूत्यादिविरुद्धायास्तस्याःप्रामाण्यानुपपत्तेः ॥ अतएवानुत्पत्तिश्रुतेर्भाक्तत्त्ववर्णनंचपरास्तम् ॥ तस्मादाकाशोत्पत्तिश्रुतेरप्रामाण्यादयुक्तंश्रुतिसमन्वयेनाकाशकारणत्वंब्रह्मणः ॥ नचसंभूतश्रुतेरन्यार्थतयाविरोधाभावः ॥ तथासतिवाय्वादावप्यन्यार्थतापातात् ॥ नह्यस्तिसंभवशब्दोयत्रश्रूयतेतत्रामुख्योयत्रापकल्प्यतेतत्रमुख्यइति ॥ अतोदुष्परिहरंश्रुत्यप्रामाण्यमितिप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ नेति ॥ अत्रोत्पत्त्यसंभवादितिप्रकृतानुत्पत्तिःसंबध्यते ॥ यदुक्तंवियदनुत्पत्तिमदितिनतद्युक्तम् ॥ तथानुत्पत्तौश्रुत्यभावादित्यर्थः ॥ १ ॥

नवियतउत्पत्त्यभावेप्रमाणंनियमेनवक्तव्यम् ॥ उत्पत्तौप्रमाणाभावादेवतत्सिद्धेः ॥ नहिघटेप्रमाणाभावे पुनस्तदभावेप्रमाणापेक्षास्यादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ अस्तीति ॥ नोत्पत्तौप्रमाणाभावः श्रुतेरेवविद्यमानत्वादितिभावः ॥ २॥ नवियतोऽनयाश्रुत्योत्पत्तिःसाधयितुंशक्या अनादित्वाभिधायकश्रुतिविरोधादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ गौणीति॥ शून्यःसूक्ष्मोऽलौकिकोऽतींद्रियः ॥ नोत्पत्तिश्रुतेरनादित्वश्रुतिविरोधः ॥ अनादित्वश्रुतिर्गौणानादित्वपराउत्पत्तिश्रुतिस्तुमुख्यार्थेतिव्यवस्थायोगा

अस्त्येवचोत्पत्तिश्रुतिः ॥ आत्मनआकाशःसंभूतइत्यादि ॥ २ ॥ अनादिर्वायमाकाशः

## ॥ ॐ अस्तितु ॐ ॥ २ ॥ ॥ ॐ गौण्यसंभवात् ॐ ॥ ३ ॥

शून्योऽलौकिकइत्यादिश्रुतिर्गौणी ॥ अन्यथोत्पत्तिश्रुतिबाहुल्यासंभवात् ॥ ३ ॥

त्॥ तथाहि ॥ आकाशपदेनभूतावकाशतद्देवताउच्यंते॥ तत्रभूतंस्वरूपतएवोत्पत्तिमद्रूपित्वात्॥ आकाशेनीलिमोदेतीतिश्रुतेः॥ तदभिमानिनोऽपिशरीरोत्पत्तिद्वारास्त्येवोत्पत्तिः॥अवकाशतदभिमानिनोरप्यस्तिपराधीनविशेषलाभलक्षणोत्पत्तिरितिसर्वविषयत्वादुत्पत्तिश्रुतिर्मुख्यार्था॥ अनादित्वश्रुतिस्तुनसर्वविषयेतिभवतिगौणीभूतेकथमप्यवृत्तेः॥स्यादेतत् ॥ किमेतयाव्यवस्थयाऽनादित्वश्रुत्यनुसारेणानुत्पत्तिरेवकिंनाश्रीयते॥नैवम्॥तथासत्युत्पत्तिश्रुतेर्विषयाभावेनाप्रामाण्यापातात्॥अनुभवाद्यनुसारिश्रुतिविरोधेनाप्रामाण्यमुक्तमितिचेन्न॥उत्पत्तिश्रुतीनामपिबाहुल्येनप्रबलत्वादितिभावः॥ अनेनानुभवादिविरोधोऽपिनिरस्तः॥३॥

नकेवलमुक्तंव्यवस्थाऽसंभवयुक्तिसिद्धाऽपितुश्रुतिसिद्धाचेत्यर्थप्रतिपादकंसूत्रमुपन्यस्यतांश्रुतिमुदाहर ति ॥ शब्दाच्चेति ॥ आत्मापरमात्मापुरुषादिपदैर्जीवचैतन्यप्रकृतिस्वरूपकालप्रवाहाउच्यंते ॥ तदभिमा निप्रकृतिश्चप्राणोमुख्यवायुःश्रद्धातत्पत्नी॥ पुरुषपदेनगृहीतयोरप्यनयोश्चैतन्यमात्रादधिकमपिनित्यत्वम स्तीतिदर्शयितुंपुनःसपरिकरयोर्ग्रहणम् ॥ उक्तप्रतिज्ञाद्वयसमर्थनायव्याप्तिरुच्यते ॥ यानीति ॥ नित्यत्व

अथहवावनित्यानिपुरुषःप्रकृतिरात्माकालइति ॥ अथयान्यनित्यानिप्राणःश्रद्धाभूता निभौतिकानीति ॥ यानिहवावउत्पत्तिमंतितान्यनित्यानि ॥ यानिहवाअनुत्पत्तिमंतिता

## ॥ ॐ शब्दाच्च ॐ ॥ ४ ॥

निनित्यानिनह्येतानिकदाचनोत्पद्यंतेनविलीयंतेपुरुषःप्रकृतिरात्माकालइति ॥ अथैतान्यु त्पत्तिमंतिचानुत्पत्तिमंतिचप्राणःश्रद्धाकाशइतिभागशोह्युत्पद्यंतइतिभाल्लवेयश्रुतेश्च॥४॥

व्याप्तस्यानादित्वहेतोरुपनयोनहीतिनविलीयंतइतिनिगमनम् ॥ एवमनित्येष्वपिप्राणादीन्युत्पत्तिमंतित स्माल्लीयंतेइत्युपनयनिगमनेद्रष्टव्ये ॥ प्राणादिषुनसर्वेषामनित्यत्वमेवेत्युच्यते ॥ अथेति ॥ तस्मान्नित्यानि त्यानीतिशेषः ॥ तत्रोपपत्तिर्भागशइति ॥ बहुभागैरुत्पद्यंतेकैश्चिन्नोत्पद्यंतइत्यर्थः ॥ तत्प्रकारश्चाकाश स्योक्तः ॥ प्राणस्योपरिवक्ष्यते ॥ ४ ॥

भवेदाकाशस्यगौणमनादित्वमुत्पत्तिर्मुख्यतइतिव्यवस्थायद्यनादित्वश्रुतिर्भाक्ताभवेत् ॥ नैतदस्ति॥ नजा
यतेम्रियतइत्यादावनुत्पत्तिमच्छब्दस्यमुख्यार्थत्वदर्शनादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ स्या
दिति ॥एकस्यैवाकाशस्यगौणमुख्यापेक्षयाऽनुत्पत्तिमत्त्वमुत्पत्तिमत्त्वंचेत्युक्तव्यवस्थायुक्तैव॥ अनुत्पत्तिम

स्यादेवैकस्योत्पत्तिमत्त्वमनुत्पत्तिमत्त्वंचगौणमुख्यापेक्षया ॥ यथाब्रह्मशब्दः ॥ अथक

॥ ॐ स्याच्चैकस्यब्रह्मशब्दवत् ॐ ॥५॥

स्मादुच्यतेपरंब्रह्मेतिबृहतिबृंहयतिचेतिश्रुतेः ॥ परेब्रह्मणिमुख्योऽपिगौणत्वेनविरिंचादिष्व
पिवर्तते ॥ अतएवाब्रह्मत्वंचतेषाम् ॥ एवमन्यत्राप्यनुत्पत्तिमच्छब्दः ॥ ५ ॥

च्छब्दस्यब्रह्मणिमुख्यार्थस्याप्याकाशेब्रह्मशब्दवदमुख्यत्वोपपत्तेरितिभावः ॥ ब्रह्मशब्दःपरब्रह्मणिकुतो
मुख्यइत्यतउक्तम् ॥ अथेति ॥ शब्दप्रवृत्तिनिमित्तसद्भावादितिभावः ॥ विरिंचादिष्वमुख्यताकुतइत्यत
उक्तम् ॥ अतएवेति ॥ ब्रह्मशब्दस्यतत्रामुख्यत्वादेवहितेषामपूर्णत्वमन्यथातन्नस्यादित्यर्थः॥ ५ ॥

युक्तंब्रह्मशब्दस्यपरब्रह्मणिमुख्यत्वमन्यत्रामुख्यत्वम्॥कारणसद्भावात्॥ नचप्रकृतेकारणमुपलभ्यतइत्या
शंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ प्रतिज्ञेति॥ यदिब्रह्माकाशयोरुभयोरप्यनुत्पत्तिमच्छब्दोमुख्योऽगी
क्रियतेतर्हिब्रह्मेदंसर्वमसृजतेतिप्रतिज्ञाविरोधःस्यात्॥अतोब्रह्मण्येवमुख्योनुत्पत्तिमच्छब्दोऽन्यत्रामुख्यः॥
नचवाच्यमत्राकाशशब्दाश्रवणात्तस्यमुख्यानुत्पत्तावपिनप्रतिज्ञाहानिरिति ॥ आकाशस्यापिसर्वमध्यप

ब्रह्मणोऽन्यस्यनित्यत्वेसइदंसर्वमसृजतेत्यादिप्रतिज्ञाहानिः॥ आकाशस्यापिसर्वस्मादव्य

## ॥ॐ प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॐ ॥ ६ ॥

तिरेकात् ॥ आत्मावाइदमेकएवाग्रआसीत्सदेवसोम्येदमग्रआसीत् एकमेवाद्वितीयंब्र
ह्मइदंवाअग्रेनैवकिंचनासीदित्यादिश्रुतिभ्यः ॥ ६ ॥

तितत्वात् ॥ संकोचेकारणाभावात् ॥ तथाप्यत्राकाशब्रह्मणोःसादित्वानादित्वेस्फुटंनप्रतीयेतेइतिचेन्न ॥
आत्मेत्यादिश्रुतीनांस्पष्टंतद्वाचकानांसद्भावात् ॥ बहुश्रुतिविरोधेचैकस्याअमुख्यत्वंनियतमितिभावः ॥
अनेनासंभवादित्युक्तमेवविवृतंभवतिइदमस्येत्यर्थः ॥ ६ ॥

अनुमानेनापिब्रह्मणएवानादित्वमन्येषांसादित्वमनुत्पत्तिश्रुतेर्मुख्यामुख्यत्वसिद्ध्यर्थंसाधयत्सूत्रमुपन्यस्यप्रतिज्ञाहेतूबहिरेवदर्शयित्वाव्याप्तिदर्शनपरतयाव्याचष्टे ॥ यावदिति ॥ अत्रेमौप्रयोगौभवतः ॥ वियदुत्पत्तिमद्विभक्तत्वाद्घटादिवत् ॥ ब्रह्मनोत्पत्तिमदविभक्तत्वाद्व्यतिरेकेणघटादिवदिति ॥ विकारिणएवविभक्तादृश्यंतेनाविकारिणोऽतोविभक्तत्वस्यनविपक्षवृत्तितेतिभावः ॥ अत्रैवस्मृतिसंमतिंचाह ॥ एकइति ॥

विभक्तत्वाच्चविकारित्वंयुक्तम् ॥ विकारिणएवहिविभक्तालोकेदृश्यंते॥ एकोऽविभक्तः परमःपुरुषोविष्णुरुच्यते ॥ प्रकृतिःपुरुषःकालस्त्रयएतेविभागिनः ॥ चतुर्थस्तुमहान्प्रोक्तः

## ॥ ॐ यावद्विकारंतुविभागोलोकवत् ॐ ॥ ७ ॥

पंचमाहंकृतिर्मता ॥ तद्विभागेनजायंतआकाशाद्याःपृथक्पृथक् ॥ योविभागीविकारी ससोऽविकारःपरोहरिः ॥ अविभागात्परानंदोनित्योनित्यगुणात्मकः ॥ विभागोह्यल्पशक्तिःस्यान्नतदस्तिजनार्दनइतिबृहत्संहितायाम् ॥ ७ ॥ अ० १ ॥

विष्णुरविभक्तःप्रकृत्यादयस्त्रयोविभागवत्त्वेनप्रोक्तामहानपितथाप्रोक्तः॥ अहंकृतिरपिविभक्तत्वेनमता ॥ यद्येवंकितर्हीत्यतआह ॥ तदिति ॥ सचासौविभागश्चेतितथोक्तस्तेनहेतुनाऽऽकाशाद्याःपृथक्पृथगिति परंपरयानैकस्मात् ॥ विभागित्वेपिकुतोजन्मेतितत्राह ॥ यइति ॥ विष्णुरविभक्तश्चेत्ततःकिमित्यत्राह ॥ सइति ॥ द्रव्यत्वादविभागादित्यसिद्धमित्यतआह ॥ विभागइति ॥ नचास्यप्राचीनश्रुतिविरोधः ॥ तत्र

स्वरूपतएवोत्पत्तेरभावस्योक्तत्वात् ॥ अनेनवियत्पदमनादित्वेनप्रसिद्धानांप्रकृत्यादीनामुपलक्षणार्थमि
तिसूचितंभवति ॥ अतःश्रुत्यविरोधेनभगवदितरस्योत्पत्तिसिद्धेर्युक्तःसर्वकारणेब्रह्मणिश्रुतिसमन्वयइतिसि
द्धम् ॥ ७ ॥ अ० १ ॥ अत्रेश्वरेवेदसमन्वयसिद्धयेमुख्यवायूत्पत्तिविषयश्रुतिविरोधपरिहारादस्तिशास्त्रा
दिसंगतिः ॥ सर्वोत्पादकोहरिरित्यभिहितम् ॥ तत्रमुख्यवायोरुत्पत्त्यभावेतदयुक्तंस्यादितितदुत्पत्तिःसमर्थ

अथहनित्याश्चानित्याश्चतेजोबन्नान्याकाशइति तान्यनित्यानिवायुर्वावनित्योवायुनाहिस
र्वाणिभूतानिनेनीयंते ॥ अथहचेतनाश्चाचेतनाश्चतेजोबन्नान्याकाशइतितान्यचेतनानिवा
युर्वावचेतनोवायुनाहिसर्वाणिभूतानिविज्ञायंते ॥ कुविदंगनमसायेवृधासःपुरादेवाअनवद्या
सआसन् ॥ तेवायवेमनवेबाधितायावासयन्नुषसंसूर्येण ॥ सावाएषादेवतानादिर्योयंपवतइ
ति ॥ यस्यनादिर्नमध्यंनांतोनोदयोननिम्लोचइत्यादिश्रुतिभ्योवायोरनुत्पत्तिरिति ॥

नीया ॥ मुख्यवायुर्विषयः ॥ उत्पत्तिमान्नवेतिसंदेहः ॥ तासांवायुर्वत्सःसावाएषादेवताऽनादिर्योयंपवतइ
तिश्रुतिविगानंसंदेहबीजम् ॥ सयुक्तिकंपूर्वपक्षयति ॥ अथेति ॥ वायोरनुत्पत्तिरेववायुर्वावनित्यःसावाए
षादेवतानादिरित्यादिश्रुतेः ॥ नचाकाशानुत्पत्तिश्रुतिवद्गौणार्थत्वम् ॥ तथासत्याकाशादिवन्मुख्यवायोरु
त्पत्त्यनुत्पत्तिमत्त्वेतेजोबन्नाकाशानामनित्यत्वमुक्त्वावायोर्नित्यत्वोक्तिरयुक्तास्यात् ॥ नचाकाशशब्देन

भूतमेवात्रेतिनियामकमस्ति ॥ किंचवायोरनुत्पत्तिर्गौणीतिस्वरूपमात्रविषयेतिवक्तव्यम् ॥ तथासतितस्य सर्वचेतनसाम्येनातिशयितचेतनत्वमयुक्तंस्यात् ॥ सर्वदेवतोपास्यताचनोत्पत्तिमत्त्वेघटते ॥ तस्योदयनिम्लोचाभावेचकुतोजन्मसंभवः ॥ एवंविधस्यचोत्पत्त्यंगीकारेऽनुभवव्याकोपःस्यात् ॥ अतोऽत्यंतमनुभूतियुक्तिबहुवाग्विरोधेनवायोरुत्पत्त्ययोगादुत्पत्तिश्रुतिरप्रमाणमेवेतिनजगत्कारणेब्रह्मणिश्रुतिसमन्वयोयुक्तइतिभावः ॥ एवमधिकाशंकयापूर्वपक्षितेऽतिदेशेनसिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ मुख्य

अतोब्रवीति ॥ एतेनमुख्यामुख्यानुत्पत्तिवचनेनविभक्तत्वाच्चवाय्वनुत्पत्तिश्रुतिरपिव्याख्याता ॥

## ॥ ॐ एतेनमातरिश्वाव्याख्यातः ॐ ॥ ८ ॥

वायुरप्युत्पत्तिमानेव ॥ अनुत्पन्नत्वेनाश्रुतत्वात् ॥ प्राणाद्वायुरजायतेत्यादावुत्पन्नत्वेनश्रुतत्वाच्च ॥ नचोदाहृतश्रुतिविरोधः ॥ तस्याःस्वरूपविषयत्वेनैवाकाशानुत्पत्तिश्रुतिव्याख्यानेनैवव्याख्यातत्वात् ॥ उत्पत्तिश्रुतेःपुनःशरीरविषयत्वाद्व्यवस्थोपपत्तेः ॥ नचैवंव्यवस्थाऽभ्युपगमेकारणाभावः ॥ अथैतान्युत्पत्तिमंतिचानुत्पत्तिमंतिचप्राणःश्रद्धाकाशइतिभागशोह्युत्पद्यंतइतिवायोर्मुख्यामुख्योत्पत्त्यनुत्पत्त्यभिधायकवचनात् ॥ अनुत्पत्तिश्रुतिर्ब्रह्मण्येवमुख्याऽन्यत्रामुख्येत्यस्यस्याच्चैकस्येत्यादिनाकथितत्वाच्चविभक्तशक्तित्वाच्चवायोर्मुख्यानुत्पत्त्यनुपपत्तेः ॥ किंचवायोरनुत्पत्तिंवदन्प्रष्टव्योजायते ॥ किंवायुरेवानादिरी

शोपिवा ॥ नाद्यः ॥ प्रमाणविरोधेनवायोरेवानुत्पत्त्यनुपपत्तेः ॥ नद्वितीयः ॥ द्वयोरपिस्वातंत्र्यापातात् ॥ पराधीनविशेषलाभोह्युत्पत्तिः ॥ नचस्वातंत्र्यंद्वयोर्युक्तम् ॥ अन्योन्यानुरोधाननुरोधयोर्विरोधात् ॥ अतोवायोर्मुख्यानुत्पत्तौबाधकसद्भावाद्युक्तैवोक्तव्यवस्थेतिभावः ॥ वायोर्मुख्यानुत्पत्त्यभावेवियदादिभ्यउत्पत्त्यनुत्पत्तिमद्भ्योविशेषेणानुत्पत्तिश्रुतिर्मुख्यचेतनत्वादियुक्तिश्चविरुणद्धीत्याशंकांपरिहर्तुंस्मृतिमुदाहरति ॥ नित्यइति ॥ परःपरानित्यः ॥ एतद्ब्रह्मस्वात्मानंचतत्रप्रतिव्यूह्यस्वगुणैस्तदतिक्रम्यधारयतीत्य

नित्यःपरमनित्यश्चतथानित्यःपरस्तथा ॥ चतुर्धैतज्जगत्सर्वंपरानित्यंतुपार्थिवम् ॥ अनित्यानितुभूतानिनित्योवायुरुदाहृतः ॥ परस्तुनित्यःपुरुषःप्रकृतिःकालएवच ॥ एतच्चतुष्टयंविष्णुःस्वयंनित्यःपरात्परः ॥ प्रतिव्यूह्यव्यूह्यचासावतीत्यचजनार्दनः ॥ धारयत्यनिशंदेवोनित्यानंदैकलक्षणइतिकौर्मे ॥ ८ ॥ अ० २ ॥

र्थः ॥ तत्रवायोःपरात्परनित्यत्वंस्वातंत्र्यलक्षणंपरनित्यत्वंदेहादेरपिनित्यत्वंचनास्त्येवतथापिसम्यगनित्यताशून्येभ्योनित्येभ्योवियदादिभ्यःस्वरूपातिरिक्तज्ञाननित्यत्वाभिप्रायेणातिशयेननित्यतोच्यते ॥ अतःश्रुत्यविरोधेनवायोरुत्पत्तिसिद्धेर्युक्तोब्रह्मणिश्रुतिसमन्वयइतिसिद्धम् ॥ नन्वत्राकाशानंतरंभूतवायोःप्राप्तिर्नमुख्यस्येति ॥ मैवम् ॥ वायुशब्देनखलुभूतंतदमुख्यमुख्याभिमानिनौचोच्यंते ॥ तत्रमुख्यवायुविषयएवविवादप्राप्तेः ॥ नहिभूतादिविषयेश्रुतिविरोधोऽस्ति ॥ तैत्तिरीयश्रुतावाकाशाद्वायुरितिश्रुयते॥ छंदोगश्रुतौ

तुतेजःपूर्वैवसृष्टिरितिचेन्नैवम् ॥ उक्त्यनुक्त्योर्विरोधाभावात् ॥ किंचनित्यविभुवियदुत्पत्तौनिर्णीतायां वायुभूतविषयेशंकासाम्यस्याप्यभावेनाधिकाशंकाप्रागेवनास्तीत्युक्तएवसूत्रार्थइति ॥ ८ ॥ अ० २ ॥ अत्रसर्वजगत्कारणेब्रह्मणिश्रुतिसमन्वयसिद्ध्यर्थंतदुत्पत्तिविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः॥ सकलजगत्कारणंब्रह्मेत्युक्तम् ॥ तस्यचोत्पत्तिमत्त्वेकारणत्वानुपपत्तेस्तन्निराकार्यमेव ॥ ब्रह्मात्रविषयः॥ उत्पत्तिमन्नवेतिसंदेहः ॥ असतःसदजायतसदेवसोम्येदमग्रआसीदितिश्रुतिविरोधःसंदेहबीजम् ॥ तत्रसूत्र

असद्वाइदमग्रआसीत्ततोवैसदजायत असतःसदजायतइत्यादिश्रुतिभ्यःसतोप्युत्पत्तिरितिचेन्न ॥

## ॥ ॐ असंभवस्तुसतोऽनुपपत्तेः ॐ ॥ ९ ॥

मेवोदाहृत्यपूर्वपक्षंतावद्बहिरेवाह ॥ असंभवस्त्विति ॥ अस्त्येवोत्पत्तिर्ब्रह्मणःसदजायतेतिश्रुतेः ॥ नचब्रह्मणःसर्वकारणस्योत्पत्तौकारणाभावः ॥ असतस्तत्कारणतयाश्रुतत्वात् ॥ नचानादित्वेऽपिश्रुतिरस्तीतिवाच्यम्॥ असंभवदुद्भवयोर्नभोनभस्वतोरुत्पत्तावनादितयासमस्यब्रह्मणोऽनुत्पत्तिरयुक्तेतिजन्मश्रुतेःसयुक्तिकत्वेनप्राबल्यात् ॥ अनुत्पत्तिश्रुतिश्चसर्वात्मनानुत्पत्तिवादिनीत्यभिमानिनश्चेत्तर्ह्यप्रमाणमेव ॥ नचेदाकाशादाविवव्यवस्थास्यात् ॥ अतोब्रह्मणोऽप्युत्पत्तिमत्त्वान्नतत्राशेषकारणतयाश्रुतिसमन्वयोयुक्तइतिभावः ॥ सिद्धांतयत्सूत्रंव्याचष्टे ॥ नेति ॥ मयापिवियदादिवद्व्यवस्थयाब्रह्मणोऽनुत्पत्तेरंगीकृतत्वात् ॥ सि

द्धार्थाप्रतिज्ञेत्यतआह ॥ तुशब्देनेति ॥ नव्यवस्थयाब्रह्मणोनुत्पत्तिःसूत्रेप्रतिज्ञायते येनसिद्धार्थाप्रतिज्ञा स्यात् किंतुसर्वात्मनानुत्पत्तिरेवेतिभावः ॥ अतएवतुशब्दमेवेतिव्याचष्टे॥ अस्यांचप्रतिज्ञायांसतइत्यनेनै वस्वातंत्र्याख्योव्यतिरेकीहेतुःसूचितः ॥ तेनैवपूर्वपक्षयुक्तेर्गतिश्चोक्ताभवतिगगनपवनादीनामस्वातंत्र्यादे वोत्पत्तिरिति ॥ नन्वसतस्सदजायतेत्यादिश्रुतौब्रह्मणोप्युत्पत्तिश्रवणात्कथंसर्वात्मनाऽनुत्पत्तिरुच्यतइत्यत

अनुत्पत्तिरेवसतः ॥ तुशब्देनोक्तव्यवस्थामपाकरोति ॥ नह्यसतःसदुत्पद्यतेऽदृष्टत्वादनुपपत्तेः ॥ त
द्वाएतद्ब्रह्माक्षुर्बृहतिबृंहयतिचेति ॥ तद्वाएतदसदाहुः ॥ नह्यासादयतिकश्चनेति ॥ तद्वाएतत्परमाहुः
परतोहितद्दुदीक्षतइतिश्रुतेरसच्छब्दोब्रह्मवाची ॥ देवानांपूर्वेयुगेऽसतःसदजायतेतिब्रह्मवाअसत्
सद्भावप्राणःप्राणोवावमहान्सहओजोबलमित्याचक्षतइतिपैंगिश्रुतिः॥

आह ॥ नहीति ॥ नानयाश्रुत्याब्रह्मणोजनिःसिध्यति ॥ असतःसकाशात्पदार्थोत्पत्तेरदृष्टत्वेनप्रातीति कार्थस्याप्यनुपपन्नत्वादितिभावः ॥ तर्ह्येतच्छ्रुतेरप्रामाण्यप्रसंगइत्यतःश्रुत्यंतरेणतांसम्यग्व्याचष्टे ॥ तदि ति ॥ तद्वाएतदसदाहुः नह्यासादयतिकश्चनेत्यस्यैवात्रोपयोगित्वेऽपितस्यब्रह्मपरत्वज्ञापनायान्यांशोदाहर णम् ॥ असच्छब्दस्यब्रह्मपरत्वेऽपिकःसमस्तश्रुत्यर्थइत्यतआह ॥ देवानामिति ॥ कथंप्राणःसदितिमहत्वा दिसद्गुणत्वादित्याह ॥ प्राणइति ॥ एतच्छ्रुत्यैवोक्तार्थसिद्धावप्यसच्छब्दस्यब्रह्मणिनिर्वचनार्थंपूर्वश्रुत्युदा

हरणम् ॥ सच्छब्दवाच्यस्यवायोर्ब्रह्मजातत्वेस्मृतिंचाह ॥ त्वमिति ॥ रामकृष्णादिरूपेणहरेर्जायमानत्वा
त्कथंजन्माभावइत्यतआह ॥ अजायमानइति ॥ अजायमानस्यकीदृशंजन्मेत्यतआह ॥ प्रत्यक्षत्व
मिति ॥ क्रमादित्युपचयाधिक्यक्रमात् ॥ पुरुषस्यचेतनत्वात्कथंविकारइत्यतआह ॥ पुरुषइति॥ तेनवि
कारेणविशेषितत्वंभवतीत्यर्थः ॥ तर्हितस्यनोत्पत्तिरित्यतआह ॥ परतंत्रेति ॥ जगत्कारणत्वात्परमेश्वर

त्वंदेवशक्त्यांगुणकर्मयोनौरेतस्त्वजायांकविरादधेऽजः ॥ ततोवयंसत्प्रमुखायदर्थेबभूविमात्मन्करवामकिंतइतिभागवते ॥ अजायमानोबहुधाविजायतइतिच ॥ प्रत्यक्षत्वंहरेर्जन्मनविकारःकथंचन ॥ पुरुषःप्रकृतिःकालोमहानित्यादिषुक्रमात् ॥ विकारएवजननंपुरुषेतद्विशेषणम् ॥ परतंत्रविशेषोहिविकारइतिकीर्त्यतइतिचपाद्मे ॥ अविकारोपिभगवान्सर्वशक्तित्वहेतुतः ॥ विकारहेतुकंसर्वंकुरुतेनिर्विकारवान् ॥ शक्तिशक्तिमतोश्चापिनविभेदःकथंचन ॥ अविभिन्नापिसेच्छादिभेदैरपिविभाष्यतइतिभागवततंत्रे ॥ १ ॥ अ० ॥ ३॥

स्यकथमविकारित्वमित्यतआह ॥ अविकारोऽपीति ॥ सर्वशक्तित्वेनसर्वंकरोतीत्यनेननिमित्तमित्युक्तंभव
ति ॥ विकारहेतुकंप्रकृत्याद्युपादानकंनिर्विकारवानिततद्धर्मादेरविकारउच्यते ॥ शक्त्याचेज्जगत्कारण
त्वंतद्विनाशेतदभावःस्यादित्यतआह ॥ शक्तीति ॥ इच्छाज्ञानप्रयत्नानांकर्तृत्वोपयोगित्वात् ॥ कथंश
क्त्यातदित्यतआह ॥ अविभिन्नाऽपीति ॥ एकैवेत्यर्थः ॥ एतेनेच्छादिपूर्वकारणत्वंनोपादानस्येत्युक्तंभव

ति ॥ अतःश्रुत्यविरोधेनब्रह्मणोऽनादित्वसिद्धेर्युक्तःश्रुतिसमन्वयस्तत्रेतिसिद्धम् ॥ १ ॥ अ० ॥ ३ ॥ एवं सर्वस्यापिब्रह्मेतरस्योत्पत्तौसिद्धायांवियदादीनांचपरमात्मनोजन्मेत्यत्रविवादाभावेऽत्रब्रह्मणिश्रुतिसमन्वयसिद्ध्यर्थंतेजोजन्मविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः॥ सकलजगत्कारणंब्रह्मेत्युक्तम् ॥ तत्र तेजसोवायुजातत्वेतदभावप्रसंगइतितन्निरसनीयमेव ॥ वायोरनंतरप्राप्तंतेजोऽत्रविषयः॥ किंवायोर्जायते ब्रह्मणोवेतिसंदेहः ॥ वायोरग्निस्तत्तेजोऽसृजतेतिश्रुतिविरोधःसंदेहबीजम् ॥ वायोर्जायतइतिपूर्वःपक्षः ॥

वायोरग्निरित्यादेर्नान्यतउत्पत्तिर्ग्राह्या ॥ अतएवपरात्तदपिजायते ॥ तत्तेजोऽसृजतेतिस्याह ॥

॥ ॐ तेजोतस्तथाह्याह ॐ ॥ १० ॥

वायोरग्निरितिश्रुतेः ॥ नचतेजोवायुद्वारापरमात्मजातत्वाभिधायकत्वंश्रुतेर्वाच्यम् ॥ किंब्रह्मवायुद्वारमंतरेणतेजःस्रष्टुमीष्टेनवा ॥ आद्येऽप्यर्थंवायुद्वारासर्जनम् ॥ द्वितीयेसिद्धंनःसमीहितंयावतास्माभिरप्युभयकारणत्वमेवोच्यते ॥ नचतत्तेजोऽसृजतेतिश्रुतिविरोधः ॥ तस्योभयकारणत्वेप्यविरोधात् ॥ ब्रह्ममात्रकारणत्वाभिधायकत्वेनिरवकाशैतच्छ्रुतिविरोधेनाप्रामाण्यापातात् ॥ अतोनजगत्कारणत्वेनब्रह्मणःसर्वश्रुतिवेद्यतेतिप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ तेजइति ॥ नवायोरग्निरित्यादिश्रुत्यातेजसोवायोरुत्पत्तिर्ग्राह्याकिंतुब्रह्मणःसकाशादेवतेजोजायते ॥ तत्तेजोऽसृजतेतिश्रुतेः ॥ नचवायोरग्निरित्यादिश्रुति

विरोधः ॥ तत्रवायुद्वारातेजसोब्रह्मजातत्वोक्तेः ॥ नचद्वारवैय्यर्थ्यादुभयकारणत्वंवाच्यम् ॥ वाय्वादेर कारणत्वेपिवाय्वादिद्वारमनुसृत्यब्रह्मणःस्वेच्छयैवलीलयातेजःप्रभृतिकारणत्वस्यश्रुत्यादिसिद्धत्वात्॥ श्रुत्यादिकंचोत्तराधिकरणेप्रदर्शयिष्यतइतिभावः ॥ ननुकारणत्वेनचाकाशादिषुयथाव्यपदिष्टोक्तेरित्यधिकरणेवाय्वादिशब्दानांब्रह्मणिसमन्वयस्योक्तत्वेनतेजसोब्रह्मजातत्वस्यसिद्धत्वात् किंपुनरुक्त्येत्यतआह॥

कारणत्वेनेत्युक्तेप्यमुख्यतयान्येषामपिशब्दोक्तत्वात्पुनरुक्तिरुभय
कारणत्वनिवृत्त्यर्थम् ॥ १० ॥ अ० ॥ ४ ॥

कारणत्वेनेति ॥ कारणत्वेनेत्यत्रैवब्रह्मणस्तेजःकारणत्वसिद्धावपितस्यपुनरुक्तिर्युक्ता ॥ उभयकारणत्वनिवृत्त्यर्थत्वात् ॥ नचतत्तेननिरस्तंभवति ॥ तत्रवाय्वादीनामप्यमुख्यतयावाय्वादिशब्दवाच्यत्वस्यांगीकृतत्वेनोभयकारणत्वाविरोधादितिभावः ॥ अतःश्रुत्यविरोधेनतेजसोब्रह्मकारणत्वेसिद्धेयुक्तोब्रह्मणिवेदसमन्वयइतिसिद्धम् ॥ स्यादेतत् ॥ एतच्छ्रुतीनामुपादाननिमित्तविषयतयास्वतएवव्यवस्थितत्वात्किमेतेनायासेनेति ॥ मैवम् ॥ वायुप्रभृतीनांदेवतात्वादुपादानशक्तेश्चपरमात्माधीनत्वादिति ॥ १० ॥ अ० ४ ॥

अत्रब्रह्मणिश्रुतिसमन्वयसिद्ध्यर्थमपांजन्मविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसं तिः ॥ सकलका
रणंब्रह्मेत्युक्तम् ॥ तत्रापांतेजोजातत्वेतद्विरुद्धंस्यादितितन्निराकरणीयम् ॥ तेजसोऽनन्तरंप्राप्ताआपोऽत्र
विषयः ॥ किंतेजसोजायंतेब्रह्मणोवेतिसंदेहः ॥ अग्नेरापस्तदपोऽसृजतेतिश्रुतिविगानंसंदेहबीजम् ॥ अग्ने
रापोजायंतेइतिपूर्वःपक्षः ॥ अग्नेरापइतिश्रुतेः ॥ नचान्यश्रुतिविरोधः ॥ विमताआपस्तेजसोजायंतेअ

ब्रह्मैवेदमग्रआसीत्तदपोसृजततदिदंसर्वमिति

॥ ॐ आपः ॐ ॥ ११ ॥

श्रुतेरग्नेरापइत्युक्तेऽपिब्रह्मणएवाबादिसृष्टिः॥

प्वात् स्वेदादिवदितियुक्तियुक्तत्वेनतेजोजातत्वश्रुतेःप्राबल्यात् ॥ बलवदेतच्छ्रुतिविरुद्धायास्तस्याएवा
प्रामाण्योपपत्तेः ॥ तथाचश्रुत्यंतरं तत्तेजऐक्षतबहुस्यांप्रजायेयेतितदपोऽसृजत ॥ तस्माद्यत्रक्वचशोचति
स्वेदतेवापुरुषस्तेजसएवतदध्यापोजायंतेइति ॥ अतोनसर्वकारणेब्रह्मणिश्रुतिसमन्वयसिद्धिरितिप्राप्तेसि
द्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ आपइति ॥ अत्राप्यतस्तथाह्याहेतिग्राह्यम् ॥ नाग्नेरापइतिश्रुतेरपाम
न्यतउत्पत्तिर्ग्राह्या किंत्वापोऽपिब्रह्मणएवजायंतेब्रह्मैवेतिश्रुतेरित्यर्थः ॥ अत्रन्यायप्राप्तभूतवायुपृथिव्योष

ध्यादीनांब्रह्मजातत्वज्ञापनार्थमादिपदंभाष्ये ॥ सूत्रेअप्पदमन्योपलक्षणम् ॥ वाय्वादेस्सर्वस्यब्रह्मजातत्वंकुतइत्यतआह ॥ एतस्मादिति ॥ ननुविष्णोरिवान्येषामपिकारणत्वंकिंनस्यात्तथाश्रुतेरितिशक्त्यभावादित्याह ॥ कर्तेति ॥ उक्तयुक्त्युपेताश्रुतिःकथंतर्ह्युपपद्यतइत्यतआह ॥ वामनेचेति ॥ महाशक्तिरपिहरिर्लीलयैवाग्न्यादिषुस्थित्वाऽऽबादिकंजनयतीतिश्रुत्यादितद्विषयमितिभावः॥ननुकारणत्वेनेत्यत्रैवापांब्रह्म

एतस्माज्जायतेप्राणोमनःसर्वेंद्रियाणिच ॥ खंवायुर्ज्योतिरापःपृथिवीविश्वस्यधारिणी
त्यादिच ॥ कर्तासर्वस्यवैविष्णुरेकएवनसंशयः ॥ इतरेषांतुसत्ताद्यायतएवतदाज्ञयेतिभ
विष्यत्पुराणे ॥ वामनेच ॥ तत्रतत्रस्थितोविष्णुस्तत्तच्छक्तीःप्रबोधयन् ॥ एकएवमहाश
क्तिःकुरुतेसर्वमंजसेति ॥ घर्मात्स्वेदादिदृष्टेःपुनःप्रतिषेधः ॥ ११ ॥ अ० ॥ ५ ॥

णोजन्मनःसिद्धत्वाद्व्यर्थमेवेदमधिकरणम्॥ अथोभयकारणनिवृत्त्यर्थमुच्यतेतदपिपूर्वन्यायेननिवृत्तमित्यतआह ॥ धर्मादिति ॥ भवतुवायोरग्न्युत्पत्तौद्वारत्वप्रतिपादकतातच्छ्रुतेरत्रपुनरग्नेःकारणत्वमेव प्रत्यक्षानुकूल्यादितिविशेषाकांक्षानिवृत्त्यर्थमेतदधिकरणमितिभावः ॥ तस्माच्छ्रुत्यविरोधेनापांब्रह्मजातत्वसिद्धेर्युक्तोहरौवेदसमन्वयइतिसिद्धम् ॥ ११ ॥ अ० ॥ ५ ॥

एवंसर्वस्यसाक्षादन्यद्वारावाब्रह्मजातत्वेसिद्धेऽत्रोक्तसमन्वयसिद्ध्यर्थंद्वारविषयश्रुतिविरोधपरिहारादस्ति शास्त्रादिसंगतिः ॥ वस्त्वंतरद्वारासाक्षाद्वाब्रह्मजगत्कारणमित्युक्तम् ॥ तत्रद्वारकारणविषयश्रुतीनांविरोधे नाप्रामाण्येसमन्वयासंभवात्तन्निरासःकार्यएव ॥ प्रकृताआपएवात्रविषयः ॥ किमन्नस्यद्वारकारणंउतपृथिव्याइतिसंदेहः ॥ किमस्यसंदेहस्यबीजंकिंचतत्रप्राप्तमिति ॥ तत्रश्रुतिविगानंसंदेहबीजंदर्शयन्पूर्वपक्षयति ॥ ताइति ॥ नापःपृथिव्याःकारणंनाप्यन्नस्य ॥ श्रुतिद्वयस्यपरस्परविरुद्धत्वात् ॥ निरवकाशत्वेना

ताआपऐक्षंतबह्व्यःस्यामप्रजायेमहीति ॥ ताअन्नमसृजंतेत्यद्भ्योऽन्नसृष्टिःश्रूयते ॥ अद्भ्यः

पृथिवीतिकुत्रचित्पृथिवीसृष्टिः ॥ अतोविरुद्धत्वादप्रामाण्यमिति ॥

न्यतरग्रहणायोगात् ॥ नचान्नशब्दस्यपृथिव्यर्थत्वेनाविरोधः ॥ अन्नश्रुतेःप्रसिद्धान्नपरत्वेनस्वीकारेबहुवाक्यानुसारित्वगुणलाभात् ॥ तस्माद्यत्रक्वचवर्षतितदेवभूयिष्ठमन्नंभवत्यद्भ्यएवतदध्यन्नाद्यंजायते अन्नमशितंत्रेधाविधीयतइतिप्रसिद्धान्नलिंगाच्चनापिपृथिवीपदेनान्नग्रहः ॥ अद्भ्यएवान्नसृष्ट्यंगीकारेअद्भ्यःपृथिवीपृथिव्याओषधयःओषधीभ्योन्नमितिश्रुतिविरोधात् ॥ नापिपृथिव्यन्नयोरद्भ्यएवोत्पत्तिः ॥ उक्तश्रुतिविरोधादेव ॥ नचान्नस्यैवाद्भ्यओषधीभ्योऽपिजन्म॥बहुकल्पनापातात्॥ नचाद्भ्यःपरंपरयान्नमुत्पद्यतइत्यविरोधः॥ मुख्यार्थत्यागेकारणाभावात् ॥ अतःश्रुतिद्वयस्यपरस्परविरुद्धत्वादप्रामाण्यमेवेतिनश्रुति

समन्वयोब्रह्मणियुक्तइतिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ नात्रापांद्वारकारणत्वानि र्णयाच्छ्रुतिद्वयस्याप्रामाण्यंकल्प्यम् ॥ अपांपृथिवीकारणत्वात् ॥ नचताअन्नमसृजंतेतिश्रुतिविरोधः ॥ यतस्तत्रपृथिव्यन्नशब्देनोच्यतइत्यर्थः ॥ कुतोऽसावन्नशब्दःपृथिवीपरइत्यतआह ॥ भूतेति ॥ तत्तेजोऽसृजततदपोसृजत ॥ तासांत्रिवृतंत्रिवृतमेकैकामकरोदित्यादेरस्यप्रकरणस्यभूतविषयत्वादित्यर्थः ॥ नन्वन्नश्रुतौजाग्रत्यांकथंप्रकरणमात्रेणनिर्णयइत्यतआह ॥ कार्ष्ण्येति ॥ यदग्नेरोहितंरूपंतेजसस्तद्रूपंयच्छु

अतोवक्ति ॥ पृथिवीतत्रान्नशब्देनोच्यते ॥ भूताधिकारत्वात्॥ कार्ष्ण्यंप्रचुराचपृथिवी॥

## ॥ ॐ पृथिव्यधिकाररूपशब्दांतरादिभ्यः ॐ ॥ १२ ॥

नान्नस्यतथाविशेषः॥ आपश्चपृथिवीचान्नम् ॥ पृथिवीवाअन्नम्॥ ताआपोऽन्नमसृजंत ॥ पृथिवीवाअन्नमित्यादिशब्दांतराच्च ॥

क्लंतदपांयत्कृष्णंतदन्नस्येत्यस्यांश्रुतावन्नस्यकृष्णरूपंप्रतीयते ॥ तच्चप्राचुर्येणपृथिव्याएवलिंगम् ॥ अतः प्रकरणलिंगाभ्यामुक्तश्रुतिबाधइतिभावः ॥ ननुकार्ष्ण्यस्यचान्नेऽपिसंभवतःकथंपृथिवीलिंगत्वमित्यतआह ॥ नेति ॥ तथाविशेषःपृथिवीवत्कार्ष्ण्यप्राचुर्यम् ॥ नकेवलंप्रकरणलिंगाभ्यामन्नश्रुतेरवाचकायाएवपृथिवीपरत्वमुच्यतेऽपितुपृथिव्यामपितस्याविद्यतेवाचकत्वशक्तिःश्रौतपदप्रयोगादितिभावेनाह ॥ आपश्चेति ॥ नचवृष्टिजत्वलिंगविरोधः॥ पार्थिवपदार्थानांवृष्ट्युत्पन्नार्थत्वेनोपपत्तेः ॥ नाप्यन्नमशितमितिलिंग

विरोधः ॥ तेजोशितमितिवत्पार्थिवार्थत्वोपपत्तेः ॥ किमन्नश्रुतेरर्थांतरकल्पनयाश्रुतिद्वयाप्रामाण्यमेव किंनाभ्युपेयतेइत्यतआह ॥ आदीति ॥ सूचितेतिशेषः ॥ अत्रायंप्रयोगः ॥ वेदोनाप्रमाणंअप्रामाण्यकारणदोषशून्यत्वात्प्रत्यक्षवदिति ॥ नचहेतोरसिद्धिः ॥ अपौरुषेयवाक्यदोषासंभवात् ॥ आदिपदेनाप्तवा

आदिशब्दाद्युक्तिः॥ अपौरुषेयत्वेनादोषस्यवाक्यस्यनाप्रामाण्यमित्यादि॥ कौर्मेच॥ विरोधोवाक्ययोर्यत्रनाप्रामाण्यंतदिष्यते ॥ यथाविरुद्धतानस्यात्तथार्थःकल्प्यएतयोरिति ॥ रक्तोग्निरुदकंशुक्लंकृष्णात्रपृथिवीस्वतः ॥ नाभिपद्माभिसंबंधात्पीतासेत्यभिधीयते ॥ क्षत्ररक्ताभिसंबंधाद्रक्तोदकबहुत्वतः ॥ शुक्लत्वमेत्येवमेववर्णांतरगतिर्भवेत् ॥ विष्णुवीर्याभियोगाच्चपीतत्वंभुवइष्यते ॥ स्वर्णवीर्योहिभगवाननादिःपरमेश्वरइतिव्योमसंहितायाम् ॥ १२ ॥ अ० ॥ ६ ॥

क्यानुसारित्वादि ॥ एवंयुक्तिबलाद्वेदप्रामाण्यसिद्धौविरोधावभासेऽन्यार्थतैवकल्प्यानाप्रामाण्यमितिभावः ॥ अत्रैवस्मृतिमाह ॥ कौर्मेचेति ॥ यदुक्तंप्राचुर्येणकृष्णापृथिवी[illegible]प्रमाणमाह ॥ रक्तइति ॥ एवमेवेत्युक्तमेवदर्शयति ॥ विष्णिवति ॥ एवंश्रुत्यविरोधेनापांपृथिवीकारणत्वसिद्धेर्युक्तःश्रु[illegible]मन्वयोहराविति सिद्धम् ॥ १२ ॥ अ० ६ ॥

एवमधिभूताधिदैवोत्पत्तिविषयश्रुतिविरोधंपराकृत्यात्रब्रह्मणिश्रुतिसमन्वयसिद्ध्यर्थंतत्संहारविषयश्रुतिवि
रोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ जगत्सृष्ट्यादिकर्ताहरिरित्यभिहितम् ॥ तत्रसंहारकर्तृत्वेऽन्यगतेतदभा
वापातात्तन्निषेध्यमेव ॥ प्रकृताधिदैवाधिभूतानिविषयः ॥ उत्पत्तिमत्त्वाल्लीयंतइतिसिद्धम् ॥ किंभगवता
लीयंतेरुद्रेणवेतिसंदेहः ॥ यत्प्रयंत्यभिसंविशंतिरुद्रोमाविशांतकइतिश्रुतिर्विरोधःसंदेहबीजम् ॥ पूर्वपक्षय
ति ॥ प्राणानामिति ॥ रुद्रएवसंहारकः ॥ श्रुतौतस्यांतकत्वश्रवणात् ॥ नचवाच्यंरुद्रादिनाम्नांविष्णुपरत्वा

प्राणानांग्रंथिरसिरुद्रोमाविशांतकस्तेनान्नेनाप्यायस्वेत्यादिनान्यःसंहर्ताप्रतीयतेइति ॥

दियंश्रुतिस्तत्पराकिंनस्यात् रुद्रविषयत्वेवारुद्रस्यसंहारद्वारत्वाभिधात्रीकिंनस्यादिति ॥ यथाकथंचिद्वि
ष्णोःसंहर्तृत्वाभ्युपगमेलोकदृष्टिविरोधात् ॥ तस्यजगदुत्पादकत्वात् ॥ लोकेचपितुरन्यस्यैवमारकत्वदर्श
नात् ॥ नचरुद्रस्यसंहर्तृत्वेत्यंतसुप्रसिद्धेऽङ्गीकृतेविरोधोस्ति ॥ येनश्रुतेरन्यार्थताकल्प्यतेनचश्रुतिविरो
धः॥ तस्यायुक्तिसहितैतच्छ्रुतिर्विरोधात् ॥ नचभाक्तार्थत्वेनाविरोधः ॥ युक्तिविरोधानिस्तारात् ॥ अतोरु
द्रस्यैवसंहर्तृत्वादन्याश्रुतिरप्रमाणमेवेति नविष्णौश्रुतिसमन्वयोयुक्तइतिभावः ॥ रुद्रत्वंप्राणानामाश्रयो

तकश्वासिसत्वंमामाविशआहुतिरूपेणान्नेनदत्तेननिमित्तेनमामाप्यायस्वेत्यर्थः ॥ सिद्धांतयत्सूत्रमवतार्यं व्याचष्टे ॥ अतइति ॥ विष्णुरेवसंहारकर्तातस्याभिध्यानादितिश्रुतौसंसारमोक्षोभगवदभिध्यानाद्भवतीति हिश्रूयते ॥ किंचातस्तदिच्छाधीनत्वलिंगेनतत्कृतोऽनुमीयते ॥ एवंचानादेर्बंधस्यलयकर्तासुतरांसादेर्ज

अतोब्रूते ॥ तस्याभिध्यानाद्योजनात्तत्वभावाद्भूयश्चांतेविश्वमायानिवृत्तिरितिबंधलय स्यतदभिध्याननिमित्तत्वलिंगात्तत्कर्तृत्वंप्रतीयतेकिमुसादेर्जगतः॥ इत्येतस्मादेवसंहारक

## ॥ ॐ तदभिध्यानादेवतुतल्लिंगात्सः ॐ ॥ १३ ॥

र्ताविष्णुरितिप्रतीयते ॥ किमुयमप्येतिभुवनंसांपरायेसनोहरिर्घृतमिहायुषेत्तुदेवः ॥ यइ दंसर्वंविलापयतिसहरिः परःपरमात्मेत्यादिश्रुतिभ्यः ॥ इतिएवशब्दः ॥

गतःसंहारकर्तैतिसिध्यतीत्यर्थः ॥ भगवतिमनोयोजनाद्भूयोयथार्थध्यानाच्चजाताद्भगवदभिध्यानात् परि पाककालेविश्वबंधकमायानिवृत्तिर्भवतीत्यर्थः ॥ नन्वस्तुविष्णोरनादिभवभेत्तुर्विश्वसंहारेसामर्थ्यंसंहर्तृत्वं कुतइत्यतआह ॥ इत्येतस्मादिति ॥ उक्तादेतस्मादेवहेतोःसंहारकर्ताविष्णुरितिप्रतीयते ॥ शक्तस्यैवतत्सं भवात् ॥ अथैतावताप्यपरितोषेसुतरांस्पष्टश्रुतिभ्योज्ञायतइत्यर्थः ॥ इत्यर्थमेवशब्दःसूचयतीतिशेषः ॥

विष्णोरेवसंहर्तृत्वेप्रागुक्तश्रुतिविरोधइत्यतआह॥ स्रष्टेति ॥ अत्रपरतंत्रेपि ॥ सृष्ट्यादिकमितिपूर्वत्रसंबध्यते ॥ परतंत्रसंहर्तृत्वपराश्रुतिरितिभावः ॥ पारतंत्र्यंचसंहारद्वारत्वमितिभावेनाह ॥ निमित्तमिति ॥ काल

स्रष्टापाताचसंहर्तासएकोहरिरीश्वरः ॥ स्रष्टृत्वादिकमन्येषांदारुयोषावदुच्यते ॥ एकदेशक्रियाचात्रनतुसर्वात्मनेरितम् ॥ सृष्ट्यादिकंसमस्तंतुविष्णोरेवपराद्भवेदितिचस्कांदे ॥
निमित्तमात्रमीशस्यविश्वसर्गनिरोधयोः ॥ हिरण्यगर्भःशर्वश्चकालाख्यारूपिणस्तवेतिचभागवते॥ सब्रह्मणाविसृजतिसरुद्रेणविलापयतिसोनुत्पत्तिरलयएकएवहरिःपरःपरानंदइतिचमहोपनिषदि ॥ १३ ॥ अ० ॥ ७ ॥

इत्याख्यारूपेयस्यासौतथोक्तः ॥ रूपस्यकालत्वंसंहर्तृत्वादिगुणसंपन्नत्वम् ॥ स्मृतेर्मूलभूतांश्रुतिंचाह ॥ सइति ॥ नचोक्तयुक्तिविरोधः ॥ ममत्वादिदोषराहित्येनलोकपितृवैलक्षण्याद्विष्णोर्लोकविरोधस्यादोषत्वात्॥ अतःश्रुत्यविरोधेनसंहारस्यभगवत्कर्तृत्वसिद्धेर्युक्तस्तस्मिन्श्रुतिसमन्वयइतिसिद्धम्॥१३॥अ०७॥

अत्रेऽस्मिन्वेदसमन्वयसिद्ध्यर्थमधिभूतादिसंहारविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ सर्वंभगव
तिलीयतइत्युक्तम् ॥ तद्विषयएवश्रुतीनांविरोधेसमन्वयानुपपत्तेरवश्यनिरसनीयोऽसौभवति ॥ प्रकृताधि
भूतादीनिविषयः ॥ किमुत्पत्तिक्रमानुसारेणलीयंतेव्युत्क्रमेणवेतिसंदेहः ॥ किमस्यबीजमितिश्रुतिविगानं
दर्शयति ॥ अतएवेति ॥ उत्पत्तिक्रमेणैवलीयंतइतिपूर्वःपक्षः ॥ अतएवेतिश्रुतेः ॥ नचपक्षांतरेऽपिश्रुतिर
स्तीतिवाच्यम् ॥ उत्पत्तिक्रमानुसारेणैवलयांगीकारेलोकानुकूलत्वगुणेनक्रमश्रुतेःप्राबल्यात् ॥ नचलोके

अतएवहीदंपरात्क्रमादुत्पद्यतेक्रमाद्विलीयतेनासावुदेतिनास्तमेतीतिभाल्लवेयश्रुतौक्रमाल्लयःप्रती

## ॥ ॐ विपर्ययेणतुक्रमोऽतउपपद्यतेच ॐ ॥ १४ ॥

यते ॥ अक्षरात्परमादेवसर्वमुत्पद्यतेक्रमात् ॥ व्युत्क्रमाद्विलयश्चैवतस्मिन्नेवपरात्मनीतिचतुर्वेदशि
खायां व्युत्क्रमाल्लयःप्रतीयतेअतआह ॥ क्रमवचनमपिविपरीतक्रमापेक्षया ॥

व्युत्क्रमादपिलयोदृश्यतइतिवक्तव्यम् ॥ क्रमस्यैवप्रायिकत्वात् क्रमादुत्पद्यतेक्रमाद्विलीयतेक्रमेणैवोत्प
त्तिर्विलयश्चक्रमेणैवास्योत्पत्तिविलयावित्यादिबहुश्रुत्यनुसारित्वाच्च ॥ अतोबलवच्छ्रुतिविरुद्धाऽसौश्रुतिर
प्रमाणमेवेतिसमन्वयानुपपत्तिरित्येवंप्राप्तेसिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ उत्पत्तिक्रमवैप
रीत्येनैवलयः ॥ क्रमवाचिश्रुतेरप्युत्पत्तिक्रमविपरीतक्रमापेक्षत्वात् ॥ कुतोऽर्थांतरकल्पनंक्रमश्रुतेः ॥ य

स्यामेवश्रुतौक्रमाल्लयःश्रूयतेतस्यामेवव्युत्क्रमाल्लयस्यश्रुतत्वादित्यर्थः ॥ श्रुतित्वाविशेषाद्व्युत्क्रमश्रुत्याक्रमश्रुतेःकुतोबाधोविपरीतमेवाकिंनस्यादित्यतआह ॥ अनुरूपइति ॥ अस्तिक्रमव्युत्क्रमयोःक्रमपदप्रवेशो ननुव्युत्क्रमपदप्रवेशः ॥ अतोनिरवकाशयाव्युत्क्रमश्रुत्यासावकाशक्रमश्रुतिबाधोयुक्तइतिभावः ॥ तथाचश्रुत्यंतरम् ॥ द्विविधक्रमउद्दिष्टोव्युत्क्रमोऽनुक्रमस्तथा ॥ सृष्टावन्योलयेचान्यइतिवेदविदोविदुरिति ॥

कर्ताप्राणादिकस्यास्यहंताभूम्यादिकस्यच ॥ यःक्रमाद्व्युत्क्रमाच्चैवसहरिःपरउच्यतइत्यत
एवभाल्लवेयश्रुतिवचनात् ॥ अनुरूपःक्रमःसृष्टौप्रतिरूपोलयेक्रमः ॥ इतिक्रमेणभगवान्
सृष्टिसंहारकृद्विभुरितिचपाद्मे ॥ पूर्वेषांपूर्वेषांसामर्थ्याधिक्यादुपपद्यतेच ॥ वामनेच ॥
पूर्वपूर्वेयतोविष्णोःसन्निधानंक्रमाधिकम् ॥ सामर्थ्याधिक्यमेतेषांपश्चादेवलयस्तथा ॥
व्याप्तिश्चाभ्यधिकातेषामतएवनसंशयइतिच ॥ १४ ॥ अ० ८ ॥

एतेनबह्वीनामपिश्रुतीनांविरोधःपरिहृतः ॥ व्युत्क्रमाल्लयांगीकारेलोकविरोधान्नासौयुक्तइत्यतआह ॥ पूर्वेषामिति ॥ लौकिकानांप्रायःसामर्थ्यसाम्यात्क्रमाल्लयेपिनासौप्रकृतेभवति ॥ अत्रपूर्वोत्पन्नानांसामर्थ्याधिक्यात् ॥ एवंचलोकविरोधस्यैवगुणत्वादितिभावः ॥ ननुपूर्वोत्पन्नानांसामर्थ्याधिक्यमेवकुतोयेन पश्चाल्लयःस्यादित्यतआह ॥ वामनेचेति ॥ पूर्वपूर्वोत्पन्ने ॥ प्रथमावा ॥ सन्निधीयतेऽत्रेतिसन्निधानंप्रतिमा ॥ तस्माच्छ्रुत्यविरोधेनव्युत्क्रमाल्लयसिद्धेर्युक्तोहरौसमन्वयइतिसिद्धम् ॥ १४ ॥ अ० ८ ॥

अत्रब्रह्मणिश्रुतिसमन्वयसिद्ध्यर्थमधिभूतादिलयविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ सक
ललयकर्ताहरिरित्युक्तम् ॥ लयविषयेचश्रुतिविरोधेनसमन्वयःसंभवेदितिनिवार्योऽसौभवति ॥ प्रकृताधि
भूतादीनिविषयः ॥ किंसर्वाण्युत्पत्तिक्रमवैपरीत्येनलीयतेकानिचित्क्रमेणापिवेतिसंशयः ॥ अक्षरात्पर
मादेवेतिश्रुतेर्वक्ष्यमाणलिंगदर्शनस्यचविरोधःसंदेहबीजम् ॥ पूर्वपक्षस्यसूत्रएवोक्तत्वात्तत्पठित्वापूर्वपक्षां
शंतावद्व्याचष्टे ॥ अंतरेति ॥ नसर्वेषांव्युत्क्रमेणलयःकिंतुकेषांचित्क्रमात्केषांचिद्व्युत्क्रमात् ॥ तथाहि॥ वि

प्राणान्मनोमनसश्चविज्ञानम ॥

## ॥ ॐ अंतराविज्ञानमनसीक्रमेणतल्लिंगादितिचेन्ना विशेषात् ॐ ॥ १५ ॥

ज्ञानतत्त्वंतावन्मनस्तत्त्वादुत्पन्नंश्रूयतेमनसश्चविज्ञानमितिश्रुतौ ॥ तस्यचपश्चादुत्पन्नस्यविज्ञानतत्त्वस्यप
श्चादेवलयः ॥ पूर्वावस्थितस्यमनस्तत्त्वस्यपूर्वमेवलयःश्रूयतेयच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञानआत्मनी
तिश्रुतौ ॥ अनेनचालिंगदर्शनेनविज्ञानमनसीविनाऽन्येषांव्युत्क्रमाल्लयस्यप्राप्तत्वादुक्तमेवयुक्तम् ॥ लोका
नुकूलंचैतत् ॥ लोकेऽपिकेषांचित्क्रमात्केषांचित्व्युत्क्रमाल्लयदर्शनात् ॥ नचसामर्थ्यतारतम्यंविरोधः ॥
विज्ञानमनसोःसमसामर्थ्यस्यापिसंभवात् ॥ नचेतरश्रुतिविरोधः॥ तस्याःसयुक्तिकलिंगदर्शनविरुद्धायाअ

प्रामाण्योपपत्तेः॥ तथाचनश्रुतिसमन्वयोर्हरौसिध्यतीतिभावः॥ वाङ्मनसीयच्छेद्वाङ्मनसिलीयतइतिस्म
रेदित्यर्थः॥ सिद्धांतांशंव्याचष्टे॥ नेति॥ नविज्ञानमनस्तत्त्वेविनाविपरीतक्रमेणलयःकिंतुसर्वेषामपि॥
विज्ञानमनस्तत्त्वयोर्यथोत्पत्तिलयइतिविशेषप्रमाणाभावात्॥सर्वेषामपिव्युत्क्रमाल्लयस्यश्रुतत्वाच्चेतिभा

यच्छेद्वाङ्मनसीप्राज्ञस्तद्यच्छेज्ज्ञानआत्मनीतिलिंगाद्विज्ञानमनसीअंतराविपरीतक्रमइ
तिचेन्न॥ विशेषप्रमाणाभावात्॥ १५॥ मनसश्चविज्ञानमितिव्यपदेशश्चराचरेष्वालो

## ॥ॐ चराचरव्यपाश्रयस्तुस्यात्तद्व्यपदेशोभाक्तस्त द्भावभावित्वात् ॐ॥ १६॥

चनाद्विज्ञानंभवतीतिभागापेक्षयास्यान्नविज्ञानतत्त्वापेक्षया॥

वः॥१५॥ अस्येवोक्तंलिंगदर्शनंकेषांचित्क्रमाल्लयःकेषांचिद्व्युत्क्रमाल्लयइत्यत्रातःकथंविशेषप्रमाणाभाव
इत्याशंकांपरिहरन्सूत्रमुपन्यस्यव्याचष्टे॥ चराचरेति॥ यद्यपियच्छेद्वाङ्मनसीप्राज्ञइतितत्त्वानांलयक्रमो
भवेत्तथापिनतेषांतथोत्पत्तिः॥ विज्ञानतत्त्वान्मनस्तत्त्वस्योत्पन्नत्वात्॥ नचमनसश्चविज्ञानमितिश्रुतिवि
रोधः॥ मनःशब्दोहितत्त्वेंऽतःकरणेचवर्ततेतथाविज्ञानशब्दोऽपितत्त्वेवबोधेच॥ अयंचव्यपदेशःसाधारण

मनोविज्ञानराश्योरिंद्रियावबोधाख्यभागविषयएवनतुमनोविज्ञानतत्त्वविषयः ॥ नचेंद्रियादिविषयकत्वे काचनानुपपत्तिः ॥ चराचरविषयमनोभावेनालोचनेनावबोधस्योत्पद्यमानत्वात् ॥ अतोनेदंलिंगदर्शनं विज्ञानमनस्तत्त्वयोःक्रमेणलयेविशेषप्रमाणमितिभावः ॥ तत्त्वविषयमेवेदंवाक्यंकिंनस्यादित्यतआह ॥

स्कांदेच ॥ परादव्यक्तमुत्पन्नमव्यक्तात्तुमहांस्तथा ॥ विज्ञानतत्त्वंमहतःसमुत्पन्नंचतुर्मुखात् ॥ विज्ञानतत्त्वात्तुमनोमनस्तत्त्वाच्चखादिकम् ॥ एवंबाह्यापरासृष्टिरंतस्तद्व्यक्त्यपेक्षया ॥ विपरीतक्रमोज्ञेयोयस्मादंतेहरेर्दृशिरिति ॥ १६ ॥ अ० १ ॥

स्कांदेचेति ॥ बाह्याब्रह्मांडात् ॥ अथकचित्तत्त्वानामेवायंक्रमःश्रूयतेचेत्तत्रापिब्रह्मांडांतराभिव्यक्तौज्ञानिनांतत्त्वापरोक्षेचक्रमोऽसौज्ञातव्यः ॥ अधमानांतत्त्वानांप्रथममभिव्यक्तेरितिभावेनवाक्यशेषमुदाहरति ॥ अंतरिति ॥ अंतर्ब्रह्मांडस्यदेहस्यवाव्यक्तौविपरीतक्रमइत्यत्रलिंगंयस्मादिति ॥ अतःश्रुत्यविरोधेन सर्वेषामपिव्युत्क्रमाल्लयसिद्धेर्युक्तोहरौश्रुतिसमन्वयइतिसिद्धम् ॥ १६ ॥ अ० १ ॥

अत्रपरमात्मनिश्रुतिसमन्वयसिद्ध्यर्थंतल्लयविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ सकलजगज्जन्मादिकर्तापरमात्मेत्युक्तम् ॥ तस्यचलयप्राप्तौतदनुपपत्तेरसौनिरसनीयः ॥ सर्वोत्पत्तिलयकर्तृत्वेनप्रकृतपरमात्माविषयः ॥ लीयतेनवेतिसंदेहः ॥ नित्योनित्यानामंतस्तमसिनिलीनइतिश्रुतिविरोधःसंदेहबीजम् ॥ तत्रसूत्रमुपन्यस्यपूर्वपक्षंसूचयन्व्याचष्टे ॥ नात्मेति ॥ परमात्माऽपिलीयतएव ॥ तमसिनिलीनइतिश्रुतेः ॥ नचेयंश्रुतिर्नेश्वरविषयेतिवाच्यम् ॥ सइदंसर्वंविसृजतीत्यादितल्लिंगात् ॥ नचास्तिश्रुत्यंतरमपीति

सइदंसर्वंविलाप्यांतस्तमसिनिलीनस्तद्विलाप्यव्युत्तिष्ठतेसइदंसर्वंविसृजतिविलापयति

॥ ॐ नात्माश्रुतेर्नित्यत्वाच्चताभ्यः ॐ ॥ १७ ॥

विस्थापयतिप्रस्थापयतिआच्छादयतिप्रकाशयतिविमोचयत्येकएवेतिश्रुतेः ॥ परमात्मापिनलीयतेअश्रुतत्वाद्ब्रह्मलयस्य ॥

वाच्यम् ॥ विष्णुर्लयवांश्चेतनत्वाज्जीववदितियुक्तिसाहित्येनलयश्रुतेःप्राबल्यात् ॥ नचवक्तव्यंस्वातंत्र्यहेतुनापरमात्मनोनुत्पत्तेरुक्तत्वात्कथंलयइति ॥ स्वतंत्रस्यापिलीलयाविग्रहग्रहणपरित्यागोपपत्तेः ॥ अतःसयुक्तिकश्रुतिविरोधेनान्यश्रुतेरप्रामाण्यान्नोक्तसमन्वयोऽयुक्तइतिवाच्यंकस्यामपिश्रुतौब्रह्मलयस्याश्रुतत्वादितिभावः ॥ प्रस्थापयतिप्रेरयति ॥ आच्छादयत्यज्ञानेन ॥ नन्वंतस्तमसिनिलीनइतिब्रह्मलयस्य

श्रुतत्वात्कथमुच्यतेऽश्रुतत्वमित्यतआह॥ निलीनेति ॥ कुतोनिलीनश्रुतिरपिहितत्वपरेत्यतआह ॥ तुच्छ्ये नेति ॥ अस्यांश्रुतौनासदासीदित्यादिनासर्वस्यलयमुक्त्वातमआसीदितिप्रकृतेरवस्थानमभिधायब्रह्मणस्त दपिहितत्वंपुनःप्रादुर्भावश्चोच्यते ॥ अतस्तत्समाख्यानादत्रापिनिलीनशब्दोऽपिहितत्वार्थएवेतिभावः॥ ब्र ह्मणोनिलीनत्वमपिहितत्वमेवेत्यत्रश्रुतिंचाह ॥ सइति ॥ निलीनइत्युक्त्वापुरुषादीन्स्वयंपश्यतिनैनंपश्यति कश्चनेतिवचनान्निलीनशब्दोऽपिहितार्थेप्रयुक्तइतिज्ञायतइतिभावः ॥ किमर्थमेवंनिलीनश्रुतेरर्थांतरंपरि

निलीनशब्देनापिहितत्त्वमुच्यते॥ तुच्छयेनाभ्वपिहितंयदासीदितिश्रुतेः ॥ सएतस्मिंस्तम सिनिलीनःप्रकृतिंपुरुषंकालंचानुपश्यतिनैनंपश्यतिकश्चनेतिपैंगिश्रुतिः ॥ नित्योनित्यानां चेतनश्चेतनानाम्॥ सनित्योनिर्गुणोविभुःपरःपरमात्मानित्योविभुःकारणोलोकसाक्षीपरो गुणैःसर्वदृक्शाश्वतश्चेत्यादिश्रुतिभ्योनित्यत्वाच्च ॥ १७ ॥ अ० १० ॥

कल्प्यतेलयइत्येवार्थःकिंनस्यात् ॥ समाख्यादीनांश्रुतेर्दुर्बलत्वात्॥ नचश्रुत्यंतरबलात्तस्याप्रामाण्यो पपत्तेरित्यतआह ॥ नित्यइति ॥ नित्यत्वश्रुतिविरोधादर्थांतरमेवयुक्तम् ॥ नचतदप्रामाण्यम् ॥ बाहुल्ये नप्राबल्यात् ॥ नचसयुक्तिकायाअपिप्राबल्यम् ॥ श्रुतिविरुद्धयुक्तेःस्वयममानत्वादितिभावः ॥ गुणै गुणेभ्यः ॥ नचोदाहृतश्रुतीनांस्वरूपविषयत्वंवाच्यम् ॥ नित्योनित्यानामितिदेहनित्यत्वस्याप्युक्तत्वात् ॥ अतःश्रुत्यविरोधेनपरमात्मलयस्यनिरस्तत्वाद्युक्तस्तस्मिन्श्रुतिसमन्वयइतिसिद्धम् ॥ १७ ॥ अ० १० ॥

एवमधिभूताधिदैवपरमात्मविषयश्रुतिविरोधेनिरस्तेऽत्रहरौश्रुतिसमन्वयसिद्ध्यर्थंजीवजन्मविषयश्रुतिवि
रोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ सर्वजगत्कर्ताविष्णुरित्युक्तम् ॥ तत्रजीवस्यानादित्वेनतदनुपपन्नमिति
तद्दूष्यंभवति ॥ सर्वमध्यपतितोजीवोऽत्रविषयः ॥ किमुत्पद्यतेनवेतिसंशयः ॥ संशयबीजंश्रुतिविरोधंदर्श
यति ॥ नित्येति ॥ नित्यत्वादेवानुत्पत्तिरितिभावः ॥ व्युच्चरंतिउत्पद्यंते ॥ नजीवउत्पत्तिमानितिपूर्वःप

नित्योनित्यानामितिजीवस्यापिनित्यत्वमुक्तम् ॥ सर्वएतेचिदात्मानोव्युच्चरंतीत्युत्पत्तिरुच्यते ॥

क्षः ॥ अनादित्वादीश्वरवत् ॥ नचसाध्याविशिष्टताहेतोः ॥ प्रागभावशून्यतायाविवक्षितत्वात् ॥ नचतत्र
विवादः ॥ उत्पत्तेरेवाभावप्रसंगात् ॥ कारणशून्यतांवानादित्वंब्रूमः ॥ नचतत्रापिविवादः ॥ कारणानुप
लब्धेरेव ॥ नचाकाशादीनामेवंभूतानामप्युत्पत्तिमत्त्वेनव्यभिचारः ॥ असंप्रतिपत्तेः ॥ श्रुतिश्चास्यानुत्प
त्तिंब्रूते ॥ नचश्रुत्यंतरविरोधः ॥ अनादित्वश्रुतेर्युक्त्युपेतायाःप्राबल्यात्तद्विरोधेनाप्रामाण्यात् ॥ नचदेहा
देरुत्पत्तेःप्रत्यक्षसिद्धत्वाद्बाधः ॥ व्यधिकरणत्वात् ॥ अतोनजगत्कारणेब्रह्मणिश्रुतिसमन्वयसिद्धिरित्येवं

प्राप्तेसिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ जीवोप्युत्पद्यतएवसचेश्वरादेव ॥ श्रुतिसिद्धत्वात् ॥ नचानादिनित्यत्वश्रुत्यादिविरोधः ॥ नित्यत्वाविरोधेनैवोपपत्तेःश्रुत्युक्तत्वादितिभावः ॥ १८ ॥ नन्व नादिनित्यस्यजीवस्योत्पत्तिःश्रुतावपिकथंयुज्यते ॥ नित्यत्वमभ्युपेत्योत्पत्तिवचनस्यवंध्यात्वमभ्युपग

अतोविरोधइत्यतआह ॥ जीवोप्यतएवपरमेश्वरादुत्पद्यते ॥ शब्दादेव ॥ तेवाएतेचिदात्मानोवि नष्टाःपरंज्योतिर्निविशंत्यविनष्टाएवोत्पद्यंते ॥ नविनश्यंतिकदाचनेनितिकाषायणश्रुतिः ॥१८ ॥ नि

॥ ॐ ज्ञोतएव ॐ ॥ १८ ॥ ॥ ॐ युक्तेश्च ॐ ॥ १९ ॥

त्यस्यापिहिजीवस्योपाध्यपेक्षयोत्पत्तिर्युज्यते ॥ उत्पद्यंतेचिदात्मानोनित्यानित्यात्परात्मनः ॥ उ पाध्यपेक्षयातेषामुत्पत्तिरपिगीयतइंतिचव्योमसंहितायाम् ॥ १९ ॥ ँ० ॥ ११॥

म्यमातृत्वसाम्यादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥युक्तेश्चेति ॥युक्ताचानादेरपिजीवस्योत्पत्ति स्तदुपाधेरुत्पत्तेः ॥ नचैवंजीवोत्पत्तिरित्युपचारमात्रंस्यात् ॥ पराधीनविशेषलाभस्योत्पत्तेरत्रविवक्षित त्वादितिभावः ॥ अत्रस्मृतिसंमतिमाह ॥ उत्पद्यंतइति ॥ अतःश्रुत्यविरोधेनजीवस्यब्रह्मजातत्वसिद्धेर्युक्त स्तत्रश्रुतिसमन्वयइंतिसिद्धम् ॥ १९ ॥ अ० ॥ ११ ॥

अत्रपरमेश्वरेश्रुतिसमन्वयसिद्ध्यर्थंजीवपरिमाणविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ श्रुतिसमन्वयःपूर्वंहरावुक्तः ॥ जीवपरिमाणविषयेचश्रुतीनांविरोधेनाप्रामाण्येनासौयुक्तःस्यादितिविरोधोनिराकार्यएव ॥ प्रकृतोजीवएवविषयः॥ किंव्यासोऽणुर्वेतिसंशयः॥ संशयबीजंश्रुतिविगानंदर्शयति॥ व्याप्ताहीति ॥ सर्वात्मानःसर्वस्यादानादिकर्तारःसर्वरूपाःपूर्णाः॥यंवाएतइतिवाक्यशेषोद्धारोजीवत्वज्ञापनार्थः॥ व्याप्तत्वमणुत्वंचप्रतीयतेजीवस्येतिशेषः ॥ जीवोव्याप्तएवेतिपूर्वःपक्षः ॥ व्याप्ताह्यात्मानइतिश्रुतेः ॥ नचे

व्याप्ताह्यात्मानश्चेतनानिर्गुणाश्चसर्वात्मानःसर्वरूपाअनंताइतिकाषायणश्रुतौव्याप्तत्वंप्रतीयते॥अणुर्ह्येषआत्मायंवाएतेसिनीतः ॥

यंश्रुतिर्नजीवविषया ॥ बहुवचनविरोधात्॥ नचेश्वररूपबाहुल्यार्था॥बाधकंविनाश्रुतेर्बाधायोगात् ॥ नचाणुत्वश्रुतिविरोधः ॥ व्याप्तश्रुतेर्युक्तियुक्तायाबलवत्त्वात् ॥ तथाहि ॥ नतावदणुरात्मा ॥ सर्वदेहगतस्पर्शज्ञानात् ॥ रूपादीनांतत्तदिंद्रियैर्ज्ञानात् ॥ नचेदंज्ञानमणावात्मनिसंभवति॥ नहिकश्चिदप्राप्तकरणेनक्रियांनिर्वर्तयति ॥ नचात्मादेहपरिमाणः ॥ उक्तदोषत्वात्तत्पक्षस्य ॥ शरीरपरिमाणत्वेचात्मनःशरीरवत्सांशत्वंस्यात् ॥ मध्यमपरिमाणस्यतन्नियमात् ॥ तेषांत्वंशानांप्रत्येकंचेतनत्वेनविरुद्धादिक्कियंशरीरमुन्मथ्येता

क्रियंवापद्येत॥ नहियुगपदनेकेषामैकमत्यंसंभवति ॥ नचसमुदायोनामकश्चिद्धर्मीभवति ॥ नचांशारब्धो
ऽशीस्वीकर्तुंशक्यते ॥ अनित्यत्वप्रसंगात् ॥ अतःपरिशेषादात्मनोव्याप्तत्वमेवसिध्यति ॥ तथाऽन्यप्रयोगः ॥
सर्वमिदंमूर्तमात्मनास्पृष्टंमूर्तत्वाच्छरीरवदिति॥ सयुक्तिकव्याप्तिश्रुतिविरोधादणुश्रुतेरेवाप्रामाण्यम् ॥ तथा

पुण्यंचापुण्यंचेतिगौपवनश्रुतावणुत्वमित्यतोविरोधइत्यतोब्रवीति ॥ हेतूनांसकाशाज्जी

## ॥ ॐ उत्क्रांतिगत्यागतीनाम् ॐ ॥ २० ॥

वोऽणुरेव ॥ सोऽस्माच्छरीरादुत्क्रम्यामुंलोकमभिगच्छत्यमुष्मादिमंलोकमागच्छतिसग
र्भीभवतिसप्रसूयतेसकर्मकुरुतइतिपौष्यायणश्रुतेः ॥ २० ॥

चनप्रागुक्तसमन्वयसिद्धिरित्येवंप्राप्तेसिद्धांतयत्सूत्रमवतार्यतच्छेषमेवपूरयति ॥ अतइति ॥ जीवोऽणुरेवन
व्याप्तः ॥ उत्क्रांतिगत्यागतिमत्त्वात्पतत्रिशरीरवत् ॥ नहिव्याप्तद्रव्यस्यव्योमादेरुत्क्रांत्याद्यस्ति ॥ अतोऽनि
राकृतमध्यमपरिमाणस्यात्मनोव्याप्त्यनुपपत्तावणुत्वमेवसिध्यतीतिभावः ॥ सतीष्वात्मनउत्क्रांतिगत्याग
तिषुभवेद्विभुत्वाभावस्ताएवकुतइत्यतआह ॥ सइति ॥ २० ॥

एवमुत्क्रांत्यादिहेतुभ्योजीवस्याणुत्वेसिद्धेकिंचित्प्रसंगाच्चित्यते ॥ किमिदमुत्क्रांत्यादिकमात्मनःपरमेश्वरेण स्वयमेववेति ॥ किंतावत्प्राप्तमितितत्राह ॥ तन्नेति ॥ उदाहृतश्रुतौजीवस्योत्क्रांत्यादौस्वातंत्र्यप्रतीतेः ॥ स्वयमेवतस्योत्क्रांत्यादिनेश्वरेणेत्यर्थः ॥ अत्रजीवस्योत्क्रांत्याद्येवश्रूयतेनत्वन्याधीनतायाविधिर्निषेधोवास्त्यतोनानेनदृढनिर्णयइत्यतआह ॥ एकइति ॥ स्मृत्यनुसारेणश्रुतेरपिपराधीनत्वनिषेधोऽर्थइतिभावः ॥

तत्रस्वातंत्र्यप्रतीतेः ॥ एकःप्रसूयतेजंतुरेकएवप्रलीयते ॥ एकोऽनुभुंक्तेसुकृतमेकएवतुदुष्कृतमित्यादेश्चस्वयमेवेत्यतोवक्ति ॥ सएतेनैवस्वात्मनापरेणमंगर्भमनुप्रविशतिपरेणजायतेपरेण

## ॥ॐ स्वात्मनाचोत्तरयोः ॐ ॥ २१ ॥

कर्मकुरुतेपरेणनीयतेपरेणोन्नीयते ॥ तंवाएतमभिवदंतिस्वात्मेतिएषह्यानंदमादत्तेएषह्येनंजीवमभिजीवयत्येषउद्गमयत्येषआगमयतीत्युत्तरयोर्वाक्ययोःपरमात्मनैवोत्क्रांत्यादयः॥२१॥

एवंप्राप्तेपरिहारायसूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ नैतच्छ्रुतिगतसाधारण्योक्त्याजीवस्यस्वयमेवोत्क्रांत्यादीतिमंतव्यंकिंतुपरमात्मनैव ॥ उत्तरवाक्यद्वयेतथोक्तत्वात् ॥ तदनुसारेणसाधारणपूर्ववाक्यस्यापितदर्थत्वोपपत्तेरितिभावः ॥ स्मृतिस्तुप्रसवादिदुःखानुभवविषयेतिहृदयम् ॥ उन्नीयतेमोक्षाय ॥ एषह्येवेति द्वितीयवाक्यंपूर्ववाक्यस्थस्वात्मशब्दंव्याख्याति ॥ २१ ॥

उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंतावद्व्याचष्टे॥ नेति॥ नजीवोऽणुर्व्याप्तोह्यात्मानइत्यनणुत्वाभिधायकश्रुतेः ॥ उत्क्रांत्यादिकंतुमनोगतमात्मन्युपचर्यतइतिभावः॥ परिहारांशंव्याचष्टे॥ नेति॥ नैतच्छ्रुतिबलेनात्मनोव्याप्तत्वंवक्तव्यम् ॥ अस्याःश्रुतेःपरमात्मविषयत्वात् ॥ सआत्मेदंसृजतीत्यत्रपरमात्मनःपठितत्वेनास्यास्तत्प्रकरणत्वात् ॥ एतद्वाक्यस्यविष्णुपरत्वेबहुवचनविरोधइतिचेन्न ॥ परमात्मन्येवबहुवच

व्याप्ताह्यात्मानश्चेतनानिर्गुणाश्चेतिव्याप्तिश्रुतेर्नाणुर्जीवइतिचेन्न ॥ सआत्मेदंसृजतिसद्विधेदंबिभर्ति ॥ अंतर्बहिश्चसबहुधेदमनुप्रविश्यात्मनोऽभिनयति ॥ सआत्मासआत्मानः

## ॥ ॐ नाणुरतच्छ्रुतेरितिचेन्नेतराधिकारात् ॐ ॥ २२॥

सईशःसविष्णुःसपरःपरोवरीयानितिपरमात्माधिकारात् ॥ एकशब्दैर्द्विशब्दैश्चबहुशब्दैश्चकेशवः ॥ एकएवोच्यतेवेदैस्तावतानास्यभिन्नतेतिभविष्यत्पुराणे ॥

नश्रवणादितिभावः ॥ अतएवैतच्छ्रुतेरबाधकत्वेनोत्क्रांत्यादीनामौपचारिकत्वकल्पनंपरास्तम् ॥ ईश्वरस्यबहुवचनवाच्यत्वेभेदःस्यादित्यतआह ॥ एकेति ॥ एकस्मिन्ननेकवचनप्रयोगसंप्रतिपन्नस्थलेदर्शयति ॥ तदिति ॥ अत्रपरमात्मनएकस्यैवशरीराधिष्ठातृत्वमुक्त्वातत्रद्विवचनयुक्तमंत्रौप्रमाणयतिश्रुतिरतोनिरंतरेऽपिहरौबहुरूपत्वापेक्षयाबहुवचनंयुक्तमितिभावः ॥ हेअश्विनावाशुगतीमनसोजवीयसापटुनातेनशरीराख्येनरथेनायातंशरीरेसन्निहितौभवतंयंरथंयुवयोरर्थमेवदेवाःकृतवंतः यत्संबंधाच्चजीवस्यभगवत्प्रसादेन

विद्योत्पन्नंतत्त्वज्ञानंजीवन्मुक्तिमुक्त्यवस्थेचसाध्येभवतइतिप्रथममंत्रार्थः ॥ निमिषश्चितूचक्षुर्निमेषणाद पिवांयुवयोःसकाशाद्यदवनंतदस्मदंतिकेभवत्विति द्वितीयार्थः ॥ २२ ॥ यदुक्तंव्याप्तिश्रुतिरीश्वरविषयात त्प्रकरणादितिनतद्युक्तम्॥ प्रकरणमात्रेणदुर्बलेनबहुवचनश्रुतेर्बाधायोगादित्याशंकांपरिहरत्सूत्रमुपन्यस्य व्याचष्टे ॥ स्वशब्देति ॥ नकेवलंप्रकरणबलेनैतच्छ्रुतेरीश्वरपरत्वमुच्यतेकिंतर्हिवाक्यशेषेश्रुतात्मश्रुतेरपरि

तदयंप्राणोऽधितिष्ठति ॥ तदुक्तमृषिणाआतेनयातमित्यादिच ॥२२ ॥ एषोह्यात्माभ्युद्ग

तोमानशक्तेस्तथाप्यसौप्रमितियातिवेदैः ॥ पूर्णोऽचिंत्यःसर्वदेवैकयोनिःसर्वाधीशःसर्ववि

## ॥ ॐ स्वशब्दोन्मानाभ्यांच ॐ ॥ २३ ॥

त्सर्वकर्तेतिवाक्यशेषेआत्मशब्दोन्मानाभ्यांच॥ आत्मामेयःपरंब्रह्मपरानंदादिकाभिधाः॥

वदंतिविष्णुमेवैकंनान्यत्रासांगतिःक्वचिदितिचकौर्मे ॥ २३ ॥

मितत्वलिंगाच्चेतिभावः ॥ मानशक्तेरभ्युद्गतःपरिमाणातीतःप्रमितियातिज्ञानविषयोभवति ॥ कुतएतच्छ्रु तिलिंगयोर्वैष्णवत्वमित्यतआह ॥ आत्मेति ॥ नचमंतव्यंव्याप्ताह्यात्मानइत्यत्रैवात्मशब्दानंत्ययोःश्रवणा त्किंवाक्यशेषग्रहणेनेति ॥ तत्रबहुवचनसमभिव्याहारवशादन्यार्थतायाएवझटितिप्रतिभासात् ॥ वाक्य शेषस्यतुनिश्चितत्वादिति ॥ २३ ॥

स्यादेतत् ॥ अथापिनजीवस्याणुत्वंयुक्तम् ॥ तत्रतत्रपरिज्ञानायोगादित्याशंकांपरिहरत्सूत्रंपठित्वाव्याच
ष्टे ॥ अविरोधइति ॥ नाणुत्वेऽपिजीवस्यतत्रतत्रपरिज्ञानायोगः ॥ अंशैःशरीरेव्याप्तत्वात् एकदेशपतित
चंदनबिंदोरंशैःशरीरव्याप्तिवदेवेतिभावः ॥ प्रतिदृष्टांतस्यापिसंभवान्ननियामकंविनादृष्टांतमात्रेणार्थसिद्धि
रित्यतआह ॥ अणुमात्रोऽपीति ॥ २४ ॥ उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंतावद्व्याचष्टे ॥

अणोरपिजीवस्यसर्वशरीरव्याप्तिर्युज्यते ॥ यथाहरिचंदनविप्रुषएकदेशपतितायाःसर्वश

॥ ॐ अविरोधश्चंदनवत् ॐ ॥ २४ ॥

॥ ॐ अवस्थितिवैशेष्यादितिचेन्नाभ्युपगमाद्धृदिहि ॐ ॥ २५ ॥

रीरव्याप्तिः॥ अणुमात्रोप्ययंजीवःस्वदेहंव्याप्यातिष्ठति ॥ यथाव्याप्यशरीराणिहरिचंदन
विप्रुषइतिचब्रह्मांडपुराणे ॥ २४॥ सम्यगसम्यगवस्थानविशेषाद्युज्यतेचंदनस्येतिचेन्न॥

अवस्थितीति ॥ नचंदनबिंदोरिवस्वरूपतदंशाभ्यांशरीरव्याप्तिरात्मनः॥ चंदनबिंदोःशरीरैकदेशेसम्यगव
स्थानस्यान्यत्रासम्यगवस्थानस्यचानुभवसिद्धत्वेनतथात्वस्यसंभवात् ॥ नह्यात्मनःक्वचिच्छरीरदेशेस
म्यगवस्थानंक्वचिदसम्यगवस्थानमस्तियेनतस्यस्वरूपांशाभ्यांशरीरव्याप्तिप्रतीमइतिभावः ॥ परिहारांशं
व्याचष्टे ॥ नेति॥ नशरीरेसम्यगवस्थानाभावआत्मनोयेनदृष्टांतेवैषम्यंहृदिह्येषआत्मेतिश्रुतेरात्मनोऽपिचं

दनबिंदुवत्सम्यगसम्यगवस्थानाभ्युपगमादितिभावः ॥ २५ ॥ एवंस्वरूपतदंशाभ्यामात्मनःशरीरव्याप्य
व्याप्तीसदृष्टांतमुक्त्वाप्रकारांतरेणापितदुपपादकंसूत्रंपठित्वाव्याचष्टे ॥ गुणाद्वेति ॥ अणोरपिजीवस्यशरी
रव्याप्तिश्चिद्गुणस्यव्याप्तत्वेनोपपद्यते ॥ नचगुणिनोऽणुत्वेनगुणस्यव्याप्तिरयुक्ता ॥ आलोकवदुपपत्तेरिति

त्हृदिह्येषआत्मेतिजीवस्यापितथाभ्युपगमात् ॥ २५ ॥ यथालोकस्यप्रकाशगुणेनव्या

॥ ॐ गुणाद्वालोकवत् ॐ ॥ २६ ॥

प्तिर्ज्योतीरूपेणाव्याप्तिरेवंचिद्गुणेनव्याप्तिर्जीवरूपेणाव्याप्तिरितिवा ॥

भावः ॥ नन्वालोकस्यद्रव्यत्वात्कथंगुणत्वमुच्यतइति ॥ मैवम् ॥ तद्द्रव्यत्वेमानाभावात् ॥ रूपित्वंमान
मितिचेन्न ॥ तेनघटादिरूपस्यैवप्रतीयमानत्वात् ॥ नहिव्योम्निवर्तमानस्यप्रकाशस्यरूपंगृह्यते ॥ दीपंवि
हायवृत्तिःप्रमाणमितिचेन्न ॥ तस्यद्रव्यत्वसाधकताविवादात् ॥ तर्हिकुतस्तद्गुणत्वमितिचेन्न ॥ तदनुवि
धानादिनैवेतिब्रूमः ॥ द्रव्यत्वेचाऽऽलोकःकार्यमकार्यंवा ॥ आद्येपिकिंदीपकार्यमन्यस्यवा ॥ नाद्यः ॥

कारणंविहायकार्यदृत्तेरनभ्युपेयत्वात् ॥ नद्वितीयः ॥ दीपप्रकाशइतिप्रयोगानुपपत्तिप्रसंगात्कारणांतरा
दर्शनाच्च ॥ नांत्यः ॥ अप्रतीतिप्रसंगात् ॥ दीपावयवएवाऽऽलोकइतिचेन्न ॥ तथासतिप्रदीपानुविधानानु
पपत्तेः ॥ नहिजीर्णकंथातंतवःकतिचनविकीर्णाःकंथयासहैवगच्छंति ॥ अवस्थिताएवावयवादीपाप
गमेतमसानदृश्यंतइतिनयुक्तम् ॥ विरोधात् ॥ क्रमेणचैवंसतिप्रकाशबाहुल्यंस्यात् ॥ तदैवोत्पन्नप्रदीपा

स्कांदेच ॥ असम्यक्सम्यगितिचव्यवस्थाभेदतःसुराः ॥ व्याप्यव्याप्तियुतास्त्वन्येचिद्गुणे
नैवनान्यथा ॥ चिद्गुणस्यस्वरूपत्वात्तद्व्याप्तिश्चेतियुज्यते ॥ शक्तियोगात्सुराणांतुविवि
धाचव्यवस्थितिरिति ॥ २६ ॥ अ० १२ ॥

वयवाःसर्वतोविकीर्णाभवंतीत्यनुभवविरुद्धमितियुक्तमुक्तमालोकोगुणइत्यप्राधान्यसाम्येनवागुणत्वो
क्तिरिति ॥ अंशैर्गुणेनचव्याप्तिरित्येकत्रविरुद्धमित्यतआह ॥ स्कांदेचेति ॥ व्याप्तिसाधकानुमानंतुघटादे
रपिव्याप्तिसाधकाभाससमानयोगक्षेमम् ॥ अतःश्रुत्यविरोधेनजीवस्याणुत्वसिद्धेर्युक्तोहरौश्रुतिसमन्व
यइतिसिद्धम् ॥ २६ ॥ अ० १२ ॥

अत्रेश्वरेश्रुतिसमन्वयसिद्ध्यर्थंजीवविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ जगत्कारणेहरौश्रुतीनांसमन्वयःप्रागुक्तःसचश्रुतीनांविरोधेनाप्रामाण्येनयुक्तःस्यादितिसर्वथानिराकार्यः ॥ प्रकृतोजीवएवविषयः ॥ किमेकरूपःकिंवाऽनेकरूपइतिसंदेहः ॥ संदेहबीजंश्रुतिविगानंदर्शयति ॥ सइति ॥ जीवत्वज्ञापनायादिवाक्योद्धारः ॥ एकरूपएवेतिपूर्वःपक्षः ॥ सएकधेतिश्रुतेः ॥ नचान्यत्राप्यस्तिश्रुतिरितिवाच्यम् ॥ ऐ

सनित्योनिरवयवःपुण्ययुक्पापयुक्चसइमंलोकममुंचावर्ततेसविमुच्यतेसएकधानसप्त धानदशधानशतधेतिगौपवनश्रुतावेकस्याबहुत्वंप्रतीयते ॥ सपंचधाससप्तधासदशधाभवति ॥ सशतधाचसहस्रधासगच्छतिसमुच्यतइतिपाराशर्यायणश्रुतौबहुरूपत्वंप्रतीयते॥

करूप्यश्रुतेःसयुक्तिकत्वात् ॥ युज्यतेखलुविभावात्मनियोगप्रभावेनशरीरबहुतयाबाहुरूप्यम् ॥ तन्ननिषिद्धम् ॥ नचवक्तव्यमणोरप्यात्मनोंऽशबाहुल्याद्बहुरूपत्वमिति ॥ निरवयवत्वात् ॥ सनित्योनिरवयवइतिश्रुतेः ॥ नचमंतव्यंयोगिनोऽघटितघटकसामर्थ्यवत्त्वेनोपपन्नंबहुरूपत्वम् ॥ दृश्यतेहिसमाधिसामर्थ्याद्देवतेषांसमुद्रपानादीति ॥ तथासतिजीवस्येश्वरेणगुणसाम्यापातात् ॥ एतदेवैश्वर्यंयत्कर्तुमकर्तुमन्यथाकर्तुंसामर्थ्यम् ॥ अतःसयुक्तिकैतच्छ्रुतिविरोधेनबहुरूपश्रुतेरप्रामाण्यमेव ॥ नचश्रुतेरीश्वरविषयतासमुच्य

तइतिजीवलिंगात् ॥ ततश्चनहरौश्रुतिसमन्वयोयुक्तइतिप्राप्तेसिद्धांतयत्सूत्रमवतारयति ॥ अतइति ॥ अतोविरोधःसंदेहबीजमस्तितंपरिहरतीत्यर्थः॥ सूत्रंव्याचष्टे ॥ यथेति ॥ अस्यैवजीवस्यबहुरूपत्वम्॥ अणुत्वेप्यंशव्यतिरेकेणबहुत्वोपपत्तेः ॥ नचांशिनंविहायान्यत्रांशस्यगमनमनुपपन्नम् ॥ गंधादौदृष्टत्वात् ॥ नचश्रुतिविरोधः ॥ तस्याःस्वरूपैक्यविषयत्वात् ॥ नचभिन्नांशशून्यत्वादनुपपत्तिः॥योगसंपद्दातदुपपत्तेः ॥

अतोविरोधंपरिहरति ॥ यथापुष्पाद्गंधःपृथग्गच्छत्येवमंशिनोर्जीवादंशाःपृथग्गच्छंति ॥

अथैकएवसन्गंधवद्व्यतिरिच्यते ॥ अथैकीभवति ॥ अथबहूीभवति ॥ तंयथायथेश्वरःप्र

## ॥ ॐ व्यतिरेकोगंधवत्तथाचदर्शयति ॐ ॥ २७॥

कुरुतेतथातथाभवतिसोऽचिंत्यःपरमोगरीयानितिशांडिल्यश्रुतिः ॥ अचिंत्ययेशशक्त्येव

ह्येकोऽवयववर्जितः ॥ आत्मानंबहुधाकृत्वाक्रीडतेयोगसंपदेतिचपाद्मे॥ २७॥ अ० १३॥

नचेश्वरेणसाम्यापातः ॥ योगिनामपिबहुरूपत्वशक्तेर्योगाराधितेश्वरप्रसादायत्तत्वात् ॥ नचेश्वरस्याप्येतद्दशक्यम् ॥ तस्याचिंत्यशक्तित्वात् ॥ कुतएतत्सर्वमितिचेदथेतिश्रुतेरेवेतिभावः ॥ अत्रचशब्दसूचितांस्मृतिंचदर्शयति ॥ अचिंत्ययेति ॥ तदेवंश्रुत्याविरोधेनजीवस्यबहुरूपत्वोपपत्तेर्युक्तोहरौश्रुतिसमन्वयइति सिद्धम् ॥ २७ ॥ अ० १३ ॥

अत्रपरब्रह्मणिश्रुतिसमन्वयसिद्ध्यर्थंजीवस्यपरमात्माभिन्नत्वादिविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादि संगतिः ॥ जगत्कारणेब्रह्मणिश्रुतीनांसमन्वयोनिरूपितः ॥ सचाद्वैतश्रुत्याभेदश्रुतेर्विरोधेनानुपपन्नःस्यादि त्यवश्यमसौनिरसनीयः ॥ प्रकृतजीवएवात्रविषयः ॥ किंपरब्रह्मणाभिन्नउताभिन्नइतिसंशयः ॥ संशयबी जंश्रुतिविवादंदर्शयति ॥ तत्त्वमसीति ॥ परमात्माभिन्नएवजीवइतिपूर्वःपक्षः ॥ तत्त्वमसीत्यादिश्रुतेः ॥ नच

तत्त्वमस्यहंब्रह्मास्मीत्यादिषुजीवस्यपरेणाभेदःप्रतीयते ॥ नित्योनित्यानांचेतनश्चेतना

## ॥ ॐ पृथगुपदेशात् ॐ ॥ २८ ॥

नांद्वासुपर्णेत्यादिषुभेदः ॥ अतउच्यते ॥

विपर्ययेप्यस्तिश्रुतिरितिवाच्यम् ॥ अद्वैतश्रुतेःषड्विधतात्पर्यलिंगयुक्तायाबलवत्त्वात् ॥ एकमेवाद्वितीयमि त्युपक्रमात् ॥ तत्त्वमसीत्युपसंहारात् ॥ तत्त्वमसितत्त्वमसीतिनवकृत्वोऽभ्यासात् ॥ अद्वैतस्यप्रमाणांतरा प्राप्तत्वेनापूर्वत्वात् ॥ तस्यतावदेवचिरमितिफलश्रवणात् ॥ येनाश्रुतंश्रुतंभवतीत्याद्यर्थवादात् ॥ मृत्पिंडा दृष्टांतेनोपपादनात् ॥ एवंश्रुतेरद्वैतएवतात्पर्यावगमात् ॥ तद्विरुद्धभेदश्रुतेरतत्त्वावेदकत्वमेवेतिनपरमात्मनि परमार्थतःश्रुतिसमन्वयोयुक्तइतिप्राप्तेसिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ पृथगेवजीवःपरमा

त्मनः ॥ भिन्नोऽचिंत्यइतिश्रुतेः ॥ नचास्तिविपर्ययेऽपिश्रुतिरितिवाच्यम् ॥ विरुद्धधर्माधिकरणत्वयुक्तियु
क्तत्वेनभेदश्रुतेःप्राबल्यादितिभावः ॥ २८ ॥ नन्वेवंसत्यद्वैतश्रुतेर्निर्विषयतयाऽप्रामाण्यंप्राप्तमित्याशंकांप
रिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ तदिति ॥ तच्छब्देनस्वात्मनेतिप्रकृतस्यपरामर्शः ॥ नाभेदश्रुतेरप्रामाण्यप्रा
प्तिः ॥ परमात्मगुणसदृशानंदादिगुणस्वरूपत्वेनजीवस्यगौणवृत्त्याऽभेदव्यपदेशोपपत्तेः ॥ यथाखलुसक
लजगद्गुणसदृशगुणात्मकत्वेनपरमात्माजगदितिव्यपदेशः ॥ सर्वंखल्विदंब्रह्मेत्यादौतथैवेतिभावः ॥ अत्रै

भिन्नोऽचिंत्यःपरमोजीवसंघात्पूर्णःपरोजीवसंघोह्यपूर्णः॥ यतस्त्वसौनित्यमुक्तोह्ययंचबंधान्मोक्षंततए

## ॥ ॐ तद्गुणसारत्वात्तद्व्यपदेशःप्राज्ञवत् ॐ ॥ २९ ॥

वाभिवांछेदितिसोपपत्तिककौशिकश्रुतेर्भिन्नएवजीवः ॥२८॥ ज्ञानानंदादिब्रह्मगुणाएवास्ययतःसारः
स्वरूपमतोऽभेदव्यपदेशः ॥ यथासर्वगुणात्मकत्वात्सर्वात्मकत्वंब्रह्मण उच्यतेसर्वंखल्विदंब्रह्मेति ॥

वस्मृतिसंमतिमाह ॥ भविष्यदिति ॥ गौणीवृत्तिरमुख्येतिचेत् ॥ सत्यम् ॥ मुख्यार्थासंभवादाश्रीयते ॥ न
हिसार्वज्ञ्यादिगुणवताब्रह्मणाऽल्पज्ञानादिमतोजीवस्याभेदोयुक्तः ॥ नसार्वज्ञ्यादिपारमार्थिकमितिचेन्न ॥
यःसर्वज्ञइत्यादिश्रुतिसिद्धत्वात् ॥ श्रुतिसिद्धसार्वज्ञ्यादेरपिमिथ्यात्वेबौद्धराद्धांतापत्तिः ॥कश्चैवंवादिनोऽद्वै
तश्रुतिसिद्धार्थेविश्वासहेतुरन्यत्राभिनिवेशात् ॥ उपजीव्यप्रमाणाविरुद्धंचाद्वैतबोधनम् ॥ जीवपरमात्मवि

त्यैः प्रमाणैर्भेदस्यैव ग्रहणात् ॥ परेणापि हि प्रमाणविरोधभी[redacted]रुणा लाक्षणिकोर्थोंगीकृतोऽद्वैतश्रुतेः ॥ तथा च सुतरां युक्तं गौणार्थग्रहणम् ॥ लक्षणावृत्तौ हि तत्त्वंपदवाच्य[redacted]र्थपरित्यागेनासिपदमात्रे मुख्यार्थताऽशेषप्रमाणविरुद्धांगीकर्तव्या ॥ वरं हि तत्तस्त्वंपद[redacted]ख्यार्थमंगीकृत्य[redacted]सिपदमात्रस्य गौणार्थवर्णनम् ॥ नात्र प्रमाणविरोधेन श्रुतेरमुख्यार्थताऽभ्युपगम्यते येन गौणार्थोंगीकार्यः स्यात्[redacted] किं नु श्रुतेरेव तथाभिप्रेतत्वादिति कश्चित् ॥ स प्रष्टव्यः कथमयं श्रुतेरभिप्रायो लोकोत्तरप्रज्ञेन विज्ञायत इति[redacted] ॥ तात्पर्यलिंगैरिति वदन् देवानांप्रियोऽसावुपेक्षितव्यः ॥ नहि लिंगानि तात्पर्यावबोधकानि लाक्षणिकार्थग्र[redacted]हणे कारणानीति युक्तम् ॥ लिंगबलाद्द्वैत एव तात्पर्यं भविष्यत्सर्वणि च ॥ भिन्ना जीवाः परो भिन्नस्तथाऽपि ज्ञानरूपतः ॥ प्रोच्यंते ब्रह्मरूपेण वेदवादेषु सर्वश इति ॥ २१ ॥ अ० ॥ १४ ॥

त्पर्ये सिद्धे प्रमाणविरोधाद्गौणार्थमनंगीकृत्य लक्षणाश्रीयत इति चेन्न ॥ उपक्रमादीनामन्यार्थत्वात् ॥ तथा चैतत्तथोक्तमन्यत्रेति ॥ अथापीदं स्यात् ॥ रूढियोगौ विना कश्चिन्नैवार्थो वेदगो भवेदिति वदन् भाष्यकारः कथमेवं श्रुतिं व्याख्याति ॥ न च परमात्मसमन्वयविषयकं तद्वाक्यम् ॥ अर्थांतरप्रस्ताव एवोदाहृतत्वात् ॥ कश्चिदिति विशेषणाच्चेति ॥ मैवम् ॥ तत्र रूढियोगौ विहाय केवलवृत्त्यंतरस्य निषिद्धत्वात् ॥ रूढियोगपूर्वकगौण्यादिवृत्तेरपि वारणात् ॥ सा च परकीयन्यायेनैव ॥ अस्ति हि तत्त्वमसीत्यादिश्रुतीनामसत्त्वमसीत्यादिरूपो रूढ्यार्थः ॥ अतः श्रुत्यविरोधेन जीवपरमात्मभेदसिद्धे युक्तस्तत्र वेदसमन्वय इति सिद्धम् ॥ २१ ॥ अ० १४ ॥

अत्रेश्वरेश्रुतिसमन्वयसिद्ध्यर्थंजीवनित्यत्वविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ श्रुतिसमन्वयोहरावुक्तः ॥ श्रुतेर्जीवनित्यत्वविषयायाःश्रुत्यंतरविरोधेनाप्रामाण्येतदनुपपत्तिप्रसंगात्परिहर्तव्यमेतत् ॥ प्रकृतोजीवएवात्रविषयः ॥ नित्योऽनित्योवेतिसंदेहः ॥ ब्रह्मन्लयमभ्युपैति आनंत्यायकल्पतइतिश्रुतिविरोधःसंदेहबीजम् ॥ तत्रसफलंपूर्वपक्षयति ॥ जीवस्यापीति ॥ अनित्यएवजीवः ॥ अनित्यत्वश्रुतेः ॥ नचवक्तव्यंसोऽनादिनेतिश्रुतिर्जीवनित्यत्वेप्यस्ति ॥ अत्रजीवस्यानादिकर्मसंबंधानंत्यप्राप्त्योरुक्तत्वादिति ॥

जीवस्याप्युत्पत्तिरुक्ता ॥ अतस्तस्यसोऽनादिनापुण्येनपापेनचानुबद्धः ॥ परेणनिर्मुक्त आनंत्यायकल्प्यतइत्यनादिकर्मसंबंध आनंत्यावाप्तिश्चनयुज्यतइति ॥

अनित्यत्वश्रुतेःसयुक्तिकत्वेनप्राबल्यात् ॥ उक्ताखलुजीवस्योत्पत्तिर्ज्ञौतएवेति ॥ उत्पत्तिमतश्चानित्यत्वंनियतमेव ॥ घटादौदृष्टत्वात् ॥ नचवक्तव्यं तत्रोत्पत्तिरुपाधेरेवोक्तानतुजीवस्यातःकथंतस्यानित्यत्वमपीति ॥ उपाधेरुत्पत्तिमत्त्वेप्रतिबिंबस्योत्पत्तिनियमात् ॥ नहिदृष्टमुपाधेरुत्पत्तिमत्त्वेऽपिप्रतिबिंबस्यानादित्वम् ॥ अतोस्त्येवजीवस्योत्पत्तिर्विनाशश्चातःसयुक्तिकश्रुतिविरोधात्तस्यानादिकर्मसंबंधाद्ययुक्तेस्तदभिधायकश्रुतेरप्रमाणत्वादयुक्तोब्रह्मणिश्रुतिसमन्वयइतिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥

अतइति ॥ नित्यएवजीवः॥प्रतिबिंबस्यबिंबोपाधितत्सन्निधिनाशंविनानाशानुपपत्तेः॥ बिंबस्यपरमात्मनो ऽनाद्यनंतत्वात् ॥ उपाधेश्चयावत्परमात्मभावित्वात् ॥ सर्वगतबिंबस्योपाधिसन्निधेश्चनित्यत्वात् ॥ अतो जीवस्यानाद्यनंतत्वान्नानादिकर्मसंबंधाद्यनुपपत्त्याऽप्रमाणताचश्रुतेर्भवति॥ नचानित्यत्वश्रुतिविरोधः ॥ त स्याउपाधिविषयत्वात् ॥ नचोपाधेरनित्यत्वेपुनर्जीवस्यानित्यत्वापत्तिरितिवाच्यम्॥ नहियेनोपाधिनाजी वःप्रतिबिंबस्तस्यवोत्पत्तिविनाशौब्रूमोःपितुधात्वादिपदोदितबाह्योपाधेरेव ॥ कुतएतदखिलमितिचेन्नित्यः

अतआह॥ यावत्परमात्मातिष्ठत्यनाद्यनंतत्वेनैवंजीवोऽपिनित्यःपरोनित्योजीवोनित्यास्त

॥ ॐ यावदात्मभावित्वाच्चनदोषस्तद्दर्शनात् ॐ ॥ ३० ॥

स्यधातवः॥अतउत्पद्यतेचम्रियतेचविमुच्यतेचेतिचाग्निवेश्यश्रुतिः॥ आत्मानित्यःसुखदुः खेत्वनित्येजीवोनित्योधातुरस्यत्वनित्यइतिचभारते ॥ ३० ॥ अ० १५ ॥

परइतिश्रुतेःस्मृतिवचनद्वयाच्चेतिभावः॥ उक्तंचैतदन्यत्र॥ जीवोपाधिर्द्विधाप्रोक्तःस्वरूपंबाह्यएवच बाह्यो पाधिर्लयंयातिमुक्तावन्यस्यतुस्थितिः॥ सर्वोपाधिविनाशेतुप्रतिबिंबःकथंभवेत्॥ कथंचात्मविनाशायप्रय त्नःसेत्स्यतिक्वचिदिति ॥ तथाउपाधेश्चैवनित्यत्वान्नैवजीवोविनश्यति॥ स्वरूपत्वादुपाधेश्चनभिन्नोपाधिक ल्पनमिति॥ अतःश्रुत्यविरोधेनजीवस्यनित्यत्वसिद्धेर्युक्तोहरौवेदानांसमन्वयइतिसिद्धम्॥३०॥ अ०१५॥

अत्रेश्वरेश्रुतिसमन्वयसिद्ध्यर्थंजीवस्वरूपविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ परमेश्वरेश्रुतिसमन्वयउक्तः ॥ जीवस्यज्ञानाद्यात्मकत्वाभिधायकश्रुतेःश्रुत्यंतरविरोधेनाप्रामाण्येतदनुपपत्तेरवश्यंनिरसनीयएव ॥ प्रकृतोजीवएवविषयः ॥ ज्ञानादिरूपोनवेतिसंदेहः ॥ संदेहबीजंश्रुतिविगानंदर्शयति ॥ विज्ञानात्मेति ॥ अनानंदादिरूपत्वमानंदादिरूपत्वाभावः ॥ नजीवोज्ञानादिरूपइतिपूर्वःपक्षः ॥ तथाश्रुतेः ॥

विज्ञानात्मासहदेवैश्चसर्वैःसआनंदःसबलःसओजःसपरेणामुंलोकंनीयतेसविमुच्यतइतिजीवस्य ज्ञानानंदादिरूपत्वमुच्यते ॥ सदुःखाद्विमुक्तआनंदीभवति ॥ सोऽज्ञानाद्विमुक्तोज्ञानीभवति ॥ सोऽबलाद्विमुक्तोबलीभवति ॥ सनित्योनिरातंकोवतिष्ठतइतिपैंगिश्रुतावनानंदादिरूपत्वंप्रतीयते ॥

नचयुक्तमस्तिविपरीताऽपिश्रुतिः॥ नचासावीश्वरविषया॥प्राणाभूतानिसंप्रतिष्ठंतियत्रसपरेणामुंलोकमितिश्रुतिविरोधादिति ॥ अनानंदादिरूपत्वश्रुतेःसयुक्तिकत्वात् ॥ नह्यानंदादिरूपत्वमात्मनोऽनुभूयते ॥ नचप्रतिबंधकाद्विद्यमानाप्यानंदादिरूपतानानुभूयतइतिवाच्यम् ॥ जीवस्याहमितिनित्याभिव्यक्तत्वेनतत्स्वरूपभूतानांव्यवधानस्यैवानुपपत्तेः ॥ आनंदादिरूपत्वेचजीवस्यनकेनचिन्मोक्षायप्रयतितव्यम् ॥ अन्नावरणादननुभवोमोक्षेत्वभिव्यक्तेरनुभवइतिवदन्प्रष्टव्यः ॥ किमावरणमानंदादीनामज्ञानंशरीरादिर्वा ॥

नाद्यः ॥ तस्यैवानुपपत्तेरुक्तत्वात् ॥ नद्वितीयः ॥ वैपरीत्यात् ॥ अतएवमोक्षेऽभिव्यक्तिरित्ययुक्तम् ॥ तदेवंसयुक्तिकश्रुतिविरोधादप्रमाणमेवान्यश्रुतिरतोनेश्वरेश्रुतिसमन्वयोयुक्तइतिप्राप्ते ॥ सिद्धांतयत्सूत्रम वतार्यव्याचष्टे ॥ अतइति ॥ अस्येतितद्गुणसारत्वंप्रकृतंपरामृश्यते ॥ भवत्येवानंदादिरूपोजीवः ॥ न चोक्तश्रुतियुक्तिविरोधः ॥ यथापुरुषयोषिदादीनामपत्योत्पत्तिशक्तिस्वरूपत्वेऽपिकालतस्तदभिव्यक्तेर्ना यंपूर्वंपुमानिदानींतुपुमानित्यादियुज्यते ॥ एवंजीवस्यस्वरूपत्वेनमुक्तेःपूर्वमपिसतोज्ञानानंदादेरीश्वरप्रसादेना

अतआह ॥ यथाबालस्यसदेवपुंस्त्वंयौवनेभिव्यज्यतेएवंसतामेवानंदादीनांव्यक्त्यपेक्ष

## ॥ ॐ पुंस्त्वादिवत्त्वस्यसतोऽभिव्यक्तियोगात् ॐ ॥ ३१ ॥

यातदुक्तिः ॥ बलमानंदओजश्चसहोज्ञानमनाकुलम् ॥ स्वरूपाण्येवजीवस्यव्यज्यंतेपर माद्विभोरिरितिगौपवनश्रुतिः ॥ ३१ ॥

भिव्यक्तिनिमित्तेनानंदीभवतीत्यादिव्यपदेशोपपत्तेः ॥ प्रागनभिव्यक्तत्वेनानुभवाभावसंभवात् ॥ तदभि व्यक्त्यर्थंचमुमुक्षूणांप्रयत्नोपपत्तेरितिभावः ॥ नचावरणानुपपत्तिः ॥ ज्ञानाभावातिरिक्ततन्निमित्ताविद्या भ्युपगमात् ॥ ननुप्रागसतामुत्पत्तिश्रादिर्नोश्रुतिःकिनस्यात्किमभिव्यक्तिकल्पनयेत्यतआह ॥ बलमिति ॥ एतच्चसज्जीवविषयंकेषांचिद्दुःखादिरूपत्वंमिश्रत्वंचज्ञातव्यम् ॥ ३१ ॥

यदुक्तंजीवस्वरूपभूतानामानंदादीनांप्रागनभिव्यक्तानांमोक्षेऽभिव्यक्तिरितितदयुक्तम ॥ जीवस्वरूपस्यनि
त्याभिव्यक्तत्वेनतत्स्वरूपभूतामीश्वरप्रसादेनाभिव्यक्त्ययोगादितिचेत्तत्रप्रष्टव्यम ॥ किंजीवस्यानंदादिरू
पत्वमंगीकृत्यतदावरणाभावात्तन्निवृत्तिर्नाभ्युपगम्यतेकिंवाऽऽनंदादिरूपत्वमेवानंगीकृत्येदमुच्यते ॥ प्रथम
पक्षदूषणायसूत्रमुपन्यस्यव्याचष्टे ॥ नित्येति ॥ यदिजीवस्वरूपस्याऽऽनंदादिरूपत्वमंगीकृत्यावरणाभावा
व्यक्त्यनंगीकारेदेवानांनित्योपलब्धिरानंदादीनामसुराणांनित्यानुपलब्धिर्मनुष्याणांच

## ॥ ॐ नित्योपलब्ध्यनुपलब्धिप्रसंगोऽन्यतरनियमोवान्यथा ॥ ॐ ॥ ३२ ॥

नित्योपलब्ध्यनुपलब्धीप्रसज्जेते ॥ नित्यानंदोनित्यज्ञानोनित्यबलःपरमात्मा नैवमसुराए
वमनेवंचमनुष्याइत्याग्निवेश्यश्रुतिः॥

द्यक्तिरावरणनिवृत्तिर्मोक्षेनांगीक्रियतेतर्हिदेवादीनांमोक्षयोग्यानांनित्यमानंदाद्यनुभवःस्यात् असुरादी
नांनकदाप्यानंदाद्यनुभवःस्यात् ॥ दुःखाद्यनुभवएवभवेत् ॥ मध्यममानुषाणांचनित्यमानंदादीनामु
पलब्धिः ॥ केवलतदुपलब्ध्याभावोदुःखाद्युपलब्धिश्चसमैवस्यात् ॥ आवरणाभावेऽनुभवाभावायोगा
दिति ॥ अतोस्यैवाविद्यावरणंभगवत्प्रसादेनतन्निवृत्तिश्चेतिभावः ॥ द्वितीयंप्रमाणविरोधेनपराचष्टे ॥ नि

त्येति ॥ एवंसुराइतिस्तद्द्वयम् ॥ यद्यप्यत्रप्रागुक्तश्रुतिरतिदेष्टुंयुक्तातथापितत्राशेषार्थानुक्तेःश्रुत्यंतरोदाहरणम् ॥ अधिकरणार्थंस्मृतिंचाह ॥ भविष्यदिति ॥ दुःखोपलब्धिमात्रास्तद्योग्याः ॥ उपाधिर्बाह्यः ॥ तदेवंश्रुत्यविरोधेनजीवस्यानंदादिरूपत्वसिद्धेर्युक्तोहरौश्रुतिसमन्वयइतिसिद्धम् ॥ ३२ ॥ अ० १६ ॥ अ

भविष्यत्पर्वणिच ॥ नित्यानंदज्ञानबलादेवानैवंतुदानवाः ॥ दुःखोपलब्धिमात्रास्तेमानुषास्तूभयात्मकाः तेषांयदन्यथादृश्यंतदुपाधिकृतंमतम् ॥ विज्ञानेनात्मयोग्येननिजरूपेव्यवस्थितिः ॥ सम्यग्ज्ञानंतुदेवानांमनुष्याणांविमिश्रितम् ॥ विपरीतंतुदैत्यानांज्ञानस्यैवंव्यवस्थितिरिति ॥ ३१ ॥ अ० १६ ॥ ईश्वरस्यैवकर्तृत्वमुक्तंयत्कर्मकुरुतेतदभिसंपद्यतइतिजीवस्याप्युपलभ्यते ॥

त्रेश्वरेश्रुतिसमन्वयसिद्ध्यर्थंजीवकर्तृत्वविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ ईश्वरेश्रुतिसमन्वयउक्तः ॥ सचजीवकर्तृताविषयश्रुतीनांविरोधेनाप्रामाण्येऽनुपपन्नःस्यादितितन्निरासःकार्यएव॥ प्रकृतोजीवएवविषयः॥किंकर्तानवेतिसंदेहः ॥ संदेहबीजंश्रुतिविगानंदर्शयति॥ ईश्वरस्येति ॥ ईश्वरस्यैवकर्तृत्वमुक्तमित्यनेननान्यःकर्तेत्यादिश्रुतिंसूचयति ॥ जीवोनकर्तेतिपूर्वःपक्षः ॥ कर्तृत्वाभावस्यश्रुतत्वात् ॥

जीवकर्तृत्वेप्यस्तिश्रुतिः ॥ नचासावीश्वरविषया॥तदभिसंपद्यतइतिफलसंपत्तिश्रवणादितिचेन्न ॥ अकर्तृ क्त्वश्रुतेःसयुक्तिकत्वेनप्राबल्यात् ॥ समर्थितंहीश्वरस्यैवानन्ययोगेनकर्तृत्वमितरव्यपदेशादित्यादावतए वद्वयोःकर्तृत्वमपिप्रत्युक्तम् ॥ ईश्वरस्यैवकर्तृत्वांगीकारेकल्पनालाघवंचस्यात् ॥ जीवस्यापितदंगीकारे तुगौरवंस्यात् ॥ नखलुलाघवायश्रुत्यादिसिद्धमीश्वरस्यकर्तृत्वंहातुंयुक्तम् ॥ अतःसयुक्तिकश्रुतिविरोधेन

अतआह ॥ जीवस्यकर्तृत्वाभावेशास्त्रस्याप्रयो

## ॥ ॐ कर्ताशास्त्रार्थवत्त्वात् ॥ ॐ ॥ ३३ ॥

जकत्वप्राप्तेर्जीवोऽपिकर्ता ॥ ३३ ॥

कर्तृत्वश्रुतेरप्रामाण्याद्युक्तोनारायणेश्रुतिसमन्वयइतिप्राप्तेसिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ अस्त्येवजीवस्यापिकर्तृत्वम् ॥ तदभावेविधिनिषेधशास्त्रवैयर्थ्यप्रसंगात् ॥ नहिकर्तारमंतरेणारण्यरोदना यमानशास्त्रस्यसार्थक्यंभवति ॥ नचजडंप्रतितौभवतोनापीश्वरंप्रति ॥ तथासतिपुण्यपापलेपप्रसंगेना नीश्वरत्वापत्तेः ॥ अतोजीवस्यकर्तृत्वांगीकारेशास्त्रस्यार्थवत्त्वसिद्धेःसोपिकर्तांगीकार्यइतिभावः ॥३३॥

जीवस्यस्वतःकर्तृत्वाभावेऽपिपरगतकर्तृत्वेविवेकाग्रहोऽस्येवातस्तादृशंकर्तारंप्रतिशास्त्रंप्रवर्ततामित्याशंकां
परिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ विहारेति ॥ नजीवस्यकाल्पनिकंकर्तृत्वंकिंतुपारमार्थिकमेव ॥ विगलि
ताखिलकल्पनेऽपिकैवल्येविहारादिकर्तृत्वोपदेशादितिभावः ॥ ३४ ॥ अस्तुमोक्षेजीवस्यस्वाभाविकंक

स्त्रीभिर्वायानैर्वाज्ञातिभिर्वाऽज्ञातिभिर्वेत्यादिमोक्षेऽपि ॥ ३४ ॥

॥ ॐ विहारोपदेशात् ॐ ॥ ३४ ॥

॥ ॐ उपादानात् ॐ ॥ ३५ ॥

साधनाद्युपादानप्रतीतेश्च ॥ ३५ ॥

र्तृत्वंप्रामाणिकत्वात् संसारेतुकाल्पनिकमेवंकिंनस्यात्तावतापिचास्त्रसार्थक्यादित्याशंकांपरिहरत्सूत्रंपठि
त्वाव्याचष्टे ॥ उपादानादिति ॥ नजीवस्यसंसारेऽपिकर्तृत्वंकाल्पनिकम् ॥ मोक्षाद्यर्थंसाधनाद्युपादानप्र
तीतेः ॥ ततश्चफलदर्शनात् ॥ नहिपरानुष्ठितसाधनेष्वात्मीयताकल्पनमात्रेणफलाभिसंबंधोभवत्यतिप्रसं
गादितिभावः ॥ ३५ ॥

एवमुपपत्त्याप्रत्यक्षेणचसाधितंजीवकर्तृत्वंश्रुत्याऽपिसमर्थयत्सूत्रमुपन्यस्यव्याचष्टे ॥ व्यपदेशाच्चेति ॥ आत्मानमेवलोकमुपासीतेत्यादावुपासनादिक्रियायांकर्तृत्वेनात्मनोव्यपदेशात्तस्यापिकर्तृत्वमस्त्येव ॥ अत्रजीवउपासीतेत्युक्त्यभावात्कथमयंजीवस्यकर्तृत्वव्यपदेशइति ॥ मैवम् ॥ नहितावक्रियाकर्तृशून्यायु

आत्मानमेवलोकमुपासीतेतिक्रियायांव्यपदेशाच्च ॥ अन्यथात्मै

**॥ ॐ व्यपदेशाच्चक्रियायांनचेन्निर्देशविपर्ययः ॐ ॥ ३६ ॥**

वलोकमितिनिर्देशःस्यात् ॥ ३६ ॥

क्ता ॥ नतावज्जडंकर्तृ ॥ जीवस्यात्रकर्तृत्वेनश्रुत्यनभिमतत्वेपरमात्माभिप्रेतःस्यात् ॥ अन्यथाश्रुतिवैयर्थ्यापातात् ॥ तथाचतस्यकर्तृत्वेन ॥ व्यपदेशःस्यान्नतुकर्मत्वेन ॥ अतोजीवस्यैवात्रकर्तृत्वमुच्यते तथाचप्रामाणिकत्वान्नगौरवमितिभावः ॥ ३६ ॥

नन्वेवंजीवस्यापिकर्तृत्वेकथमीश्वरस्यैवकर्तृत्वंपूर्वंसमर्थितंकथंचश्रुतिरुपपद्येत अतस्तद्विरोधोस्त्येवेत्याश
येनाशंक्यतत्परिहारायसूत्रमवतार्यव्याचष्टे ॥ तर्हीति ॥ इदंवस्त्वहंज्ञास्यामीत्येवंनिरूपितेऽपियथाजीव
स्यनज्ञानेनियमोस्ति ॥ स्वेच्छानुसारेणनज्ञानलाभः ॥ तथाकरिष्यामीतिनिरूपितेऽपिकर्मणिनियमाभा
वादीश्वरस्यतुतद्भावात्सएवकर्तानजीवइत्युक्तंप्राक्नतुसर्वथाकर्तृत्वाभावादितिभावः ॥ नचायंदृष्टांतःसा
तर्हिकथमीश्वरस्यैवकर्तृत्वमित्यतोवक्ति ॥ यथाज्ञानेइदंज्ञास्यामीत्यनियमःप्रतीयतेएवंकर्मण्य

## ॥ ॐ उपलब्धिवदनियमः ॐ ॥ ३७॥

## ॥ ॐ शक्तिविपर्ययात् ॐ ॥ ३८ ॥

पिजीवस्य ॥ यआत्मानमंतरोयमयतीतिचश्रुतिः ॥ ३७॥ कुतः अल्पशक्तित्वाज्जीवस्य ॥३८॥
ध्यसमः ॥ नहिजिज्ञासुर्ज्ञानक्रियायामेवसाक्षाद्व्याप्रियतेकिंतुतत्साधनएवेति ॥ ईश्वरस्यैवनियमेनकर्तृत्वं
नजीवस्येत्यत्रप्रमाणमाह ॥ यइति ॥ ३७ ॥ ननूभयोःकर्तृत्वाविशेषेऽपीश्वरस्यैवनियमेनकर्तृत्वंनजीव
स्येतत्किंनिबंधनंवैलक्षण्यमितिपृच्छति ॥ कुतइति ॥ स्वातंत्र्यपारतंत्र्यनिमित्तौनियमानियमावितिपरि
हारंवक्तुमीशजीवयोःस्वातंत्र्यपारतंत्र्येसाधयत्सूत्रंपठित्वाव्याचष्टे ॥ शक्तीति ॥ ईश्वरस्यपूर्णशक्तित्वा
त्स्वातंत्र्यंजीवस्यतद्विपर्ययादस्वातंत्र्यंप्रतीयतइतिभावः ॥ ३८ ॥

युक्त्यंतरेणैतत्प्रतिपादयत्सूत्रमुपन्यस्यव्याचष्टे ॥ समाधीति ॥ समाधानमलंबुद्धिरस्तीश्वरस्येतितस्यस्वा तंत्र्यंजीवस्यचतदभावादस्वातंत्र्यंप्रतीयतेस्वनंत्रस्यपूर्णकामत्वादितिभावः एवंचेत्किंतर्हीत्यनआह ॥ अ तइति ॥ यतएवमीशजीवयोःस्वातंत्र्यपारतंत्र्येप्रतीयेते ॥ अतःस्वातंत्र्यपारतंत्र्याभ्यांनियमानियमावि

समाधानाभावाच्चास्वातंत्र्यंप्रतीयते ॥ ३९ ॥ अतः ॥ यथातक्षणःकारयितृनियतत्वं

॥ ॐ समाध्यभावाच्च ॐ ॥ ३९ ॥

॥ ॐ यथाचतक्षोभयथा ॐ ॥ ४० ॥

कर्तृत्वंचविद्यतेएवंजीवस्यापि ॥ ४० ॥

तिभावः ॥३९॥ नन्वेवंयदिजीवस्यनस्वातंत्र्येणकर्तृत्वमपित्वीश्वरेच्छयैवकथंतर्हिकर्तोच्यते स्वतंत्रःखलु कर्तेत्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ यथेति ॥ यथातक्षाप्रासादकारयितृनियतोऽपिकर्तोच्यते तथेश्वरनियतोऽपिजीवःकर्तेतिव्यपदेष्टुंशक्यतइत्यर्थः ॥ ४०॥

ननुकिंतक्षणइवजीवस्यकर्तृत्वशक्तिर्जीवाधीनैवेश्वराधीनतातुवचनवेतनदानादिवदुतकर्तृत्वशक्तिरपीश्व राधीना॥यद्याद्यस्तर्हिईश्वरस्यैवकर्तृत्वमितिगतःपक्षः॥ द्वितीयेनजीवस्यकर्तृत्वमित्याशंकांपरिहरत्सूत्रमु पन्यस्यव्याचष्टे ॥ परादिति ॥ नास्माभिस्तत्कर्तृत्वसामर्थ्यंजीवाधीनमुच्यतेयेनापसिद्धांतःस्यात्किंतुप



साचकर्तृत्वशक्तिःपरादेव ॥ कर्तृत्वंकरणत्वंचस्वभावश्चेतनाधृतिः ॥ यत्प्रसादादिमेसंति

## ॥ ॐ परात्तुतच्छ्रुतेः ॐ ॥४१॥

## ॥ ॐ कृतप्रयत्नापेक्षस्तुविहितप्रतिषेधावैयर्थ्यादिभ्यः ॐ ॥ ४२ ॥

नसंतियदुपेक्षयेतिपैंगिश्रुतिः ॥ ४१॥ ततोऽप्रयोजकत्वंशास्त्रस्यनापद्यते ॥ कृतप्रयत्नापे क्षत्वात्तत्प्रेरकत्वस्य ॥

रमात्माधीनमेव ॥ तथाश्रुतेरितिभावः ॥ ४१॥ नन्वस्मिन्नपिपक्षेदोषयुक्तःकर्तृत्वशक्तेरीश्वराधीनत्वेतस्यै वकर्तृत्वंनजीवस्येतिपुनःशास्त्रवैयर्थ्यमित्येतामाशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ कृतेति॥ यतोयंपरोवि धिनिषेधशास्त्रावैयर्थ्यायैवस्वस्यवैषम्यनैर्घृण्यपरिहारायचजीवस्यानादिकर्मप्रयत्नयोग्यतापेक्षएवजीवं

प्रेरयतिनत्वनपेक्षोऽतोनजीवशक्तेरीश्वराधीनत्वेऽपिशास्त्रवैयर्थ्यम्॥अनपेक्षयाप्रेरणेहितत्स्यादितिभावः॥ अवैषम्यादिसंगृहीतमितिशेषः ॥ उक्तोऽपिदोषपरिहारःस्मारयितुंपुनरत्रोक्तः ॥ सूत्रार्थेस्मृतिसंमतिमाह॥ पूर्वेति ॥ संस्कारोयोग्यता ॥ कर्मापेक्षयाप्रेरकत्वेतत्कर्माकर्तृत्वमीश्वरस्येत्यतआह ॥ तच्चेति ॥ तर्हितत्प्रे

आदिशब्देनावैषम्यादि ॥ पूर्वकर्मप्रयत्नंचसंस्कारंचाप्यपेक्ष्यतु ॥ ईश्वरःकारयेत्सर्वंतच्चे
श्वरकृतंमतम् ॥ अनादित्वाददोषश्चपूर्णशक्तित्वतोहरेरितिभविष्यत्पर्वणि ॥ एतदेवं
नचाप्येवमेतदस्तिनचास्तिचेतिमोक्षधर्मे ॥ ४२ ॥ अ० १७ ॥

रणापेक्षाभावइत्यतआह ॥ अनादित्वादिति ॥ तर्हिकर्मणामानंत्यात्कथंतत्कारयितृत्वमीश्वरस्येतितत्राह ॥ पूर्णेति ॥ अधिकरणार्थेस्मृतिंचाह ॥ एतदिति ॥ एतज्जीवस्यकर्तृत्वमेवंप्रामाणिकंनचाप्येवमीश्वरवत्स्वातंत्र्येणातएतदस्तिनचास्तिचेत्युच्यतइत्यर्थः ॥ अतःश्रुत्यविरोधेनजीवस्यकर्तृत्वसिद्धेर्युक्तोभगवतिश्रुतिसमन्वयइतिसिद्धम् ॥ ४२ ॥ अ० १७॥

अत्रपरमात्मनिश्रुतिसमन्वयसिद्ध्यर्थंजीवविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ हरौश्रुतिसमन्वयोनिरूपितः ॥ सचजीवविषयश्रुतिविरोधेनाप्रामाण्येऽनुपपन्नःस्यादितिनिराकार्यः ॥ प्रकृतोजीवोत्रविषयः ॥ किमीश्वरांशोनेतिसंदेहः ॥ संशयबीजंश्रुतिविगानंदर्शयति ॥ अंशाएवेति ॥ तत्रनजीवोहरेरंशःनाप्यनंशइतिनिर्णयोयुज्यतइतिपूर्वःपक्षः ॥ नतावदंशत्वंनिर्णेतुंशक्यम् ॥ नैवांशइतिश्रुतेः ॥ नचत

अंशाएवहीमेजीवाःअंशीहिपरमेश्वरः ॥ स्वयमंशैरिदंसर्वंकारयत्यचलोहरिरितिगौपवन
श्रुतावंशत्वंजीवस्योपलभ्यते ॥ नैवांशोनसंबंधोनापेक्ष्योजीवःपरस्य ॥ तथाऽपितुयथा
योगंफलदःप्रभुरकराणनियम्यःसकस्यापिससर्वस्यनियामकइतिभाल्लवेयश्रुतौ ॥

त्रपरस्येतिजीवांतरविवक्षा ॥ तथापीत्यादिवाक्यशेषविरोधात् ॥ नाप्यनंशत्वनिर्णयः ॥ अंशाएवेतिश्रुतेः ॥ नचविकल्पेनाविरोधोयवव्रीहिश्रुत्योरिव ॥ वस्तुविकल्पायोगात् ॥ अंशाएवनैवांशइतिसावधारणत्वात् ॥ नचदेशकालविभेदेनव्यवस्थितोविकल्पः॥विशेषप्रमाणमंतरेणतादृशनिश्चयायोगात् ॥ नचजीवेशाभेदस्यसयुक्तिकंनिरस्तत्वादनंशत्वश्रुतिर्बलवतीतिवाच्यम् ॥ अभेदाभावेप्यंशत्वस्याविरोधात् ॥ सम्स्तपटाद्भिन्नस्याप्येकस्यतंतोस्तदंशत्वदर्शनात् ॥ अतःश्रुतिद्वयस्यापिनानात्वादप्रामाण्यमेवेतिनोक्तसम

न्वयोयुक्तइतिप्राप्तेसिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ जीवःपरमात्मनोंऽशोभवत्येव॥ मांरक्षत्वि
त्यादिनानाप्रकारेणजीवस्येशसंबंधित्वव्यपदेशात् ॥ तत्संबंधित्वमेवतदंशत्वमितिवक्ष्यामइतिभावः ॥ यः
पराद्धरेरवमोजीवोऽस्यजगतःपितरंवेदानेनावरेणायंपरोज्ञातइतिव्यपदिश्यते ॥ तज्ज्ञानंचदुर्लभंकोनुसर्व
ज्ञकल्पः ॥ प्रजासुब्रह्मप्रावोचत ॥ कस्यचैतदेवंमनोज्ञानमाधिक्येनजातमित्यर्थः ॥ यस्तद्ब्रह्मवेदसतस्यपि

अतोब्रवीति ॥ मांरक्षतुप्रभुर्नित्यंपुत्रोहंपरमात्मनः ॥ अवःपरेणपितरंयोअस्यानुवेदपरए

## ॥ ॐ अंशोनानाव्यपदेशादन्यथाचापिदाशकितवा
## दित्वमधीयतएके ॐ ॥ ४३ ॥

नावरेणयस्तद्वेदसपितुष्पितासत ॥ यस्ताविजानात्सपितुष्पितासत् ॥ द्वासुपर्णासयुजास
खात्येत्यादिनानानाव्यपदेशादंशोजीवः ॥

तुःपिताभवदित्यर्थः ॥ याभगवन्मूर्तयोमदुपास्याःस्त्रीलिंगशब्दावाच्यास्ताएवपरमपुरुषानाहुः ॥ यस्ता
पश्यतिसएवचक्षुष्मान् ॥ योनजानातिसोंधः ॥ यःसर्वज्ञोभगवत्पुत्रोविरिंचःसएवसम्यक्जानाति ॥ य
श्चजानातिसतस्यजगत्पितुरभिव्यंजकत्वात्पिताभवदित्यर्थः ॥ एतद्दीर्घतमोवाक्यम् ॥ नानाव्यपदेशादं

शोजीवइत्यत्रश्रुतिंचाह ॥ तथाचेति ॥ हेत्वंतरेणैतत्समर्थयति ॥ अन्यइति ॥ अन्यथावक्ष्यमाणाभेदापे
क्षयाएतच्छ्रुतिद्वयेनजीवेशयोर्भेदाभेदावुच्येते ॥ नचान्यतरश्रुतिबाधोयुक्तः ॥ नचसाक्षाद्भेदाभेदावुपप

तथाचपाराशर्यायणश्रुतिः ॥ अंशोह्येषपरस्ययोऽयंपुमानुत्पद्यतेचम्रियतेचनानाह्ये
नंव्यपदिशंति ॥ पितेतिपुत्रेतिभ्रातेतिसखेतिच ॥ अन्यःपरोन्योजीवोनासावस्यकृत
श्चन ॥ नायंतस्यापिकश्चनेति ॥ अन्यथाचकाषायणश्रुतिः ॥ ब्रह्मदाशाब्रह्मकि
तवा ब्रह्मैवेमेदाशाइत्यभेदेनाप्येकेऽधीयते ॥ तथाचाग्निवेश्यश्रुतिः ॥ अंशोह्येषप
रस्यभिन्नंह्येतमधीयिरेअभिन्नंह्येनमधीयिरइति ॥ वाराहेच ॥ पुत्रभ्रातृसखित्वेन
स्वामित्वेनयतोहरिः ॥ बहुधागीयतेवेदैर्जीवोंशस्तस्यतेनतु ॥ यतोभेदेनतस्यायमभे
देनचगीयते ॥ अतश्चांशत्वमुद्दिष्टंभेदाभेदौनमुख्यतइति ॥ ४३ ॥

न्नौ ॥ विरोधात् ॥ अतःश्रुतिद्वयाऽन्यथानुपपत्त्याभेदमंगीकृत्याऽभेदस्थानेंशत्वंवक्तव्यमितिभावः ॥ उ
क्तंचाभेदश्रुतयोंऽशत्वादिति ॥ भेदाभेदोक्त्यन्यथानुपपत्त्यांशोजीवइत्यत्रापिश्रुतिमाह ॥ तथाचेति ॥
समस्तसूत्रार्थेस्मृतिंचाह ॥ वाराहेचेति ॥ ४३ ॥

श्रुत्याचैतमर्थंसाधयत्सूत्रंपठित्वातांश्रुतिमुदाहरति ॥ मंत्रेति ॥ पादोंशः ॥ ४४ ॥ स्मृत्याप्येतमर्थंसाधय त्सूत्रंपठित्वातांस्मृतिमुदाहरति ॥ अपीति ॥ जीवलोकेजीवच्छरीरेजीवभूतोजीवाख्यः ॥ ४५ ॥ नजीवस्येश्वरांशत्वंयुक्तम् ॥ तथासत्यंशत्वाविशेषान्मत्स्यादिसाम्यापातादनंशत्वश्रुतिविरोधाच्चेत्याशंकांपरि

पादोस्यविश्वाभूतानीति ॥ ४४ ॥ ममैवांशोजीवलोकेजीवभूतःसनातनइति ॥ ४५ ॥

॥ ॐ मंत्रवर्णात् ॐ ॥४४॥

॥ ॐ अपिस्मर्यते ॐ ॥ ४५ ॥

॥ ॐ प्रकाशादिवन्नैवंपरः ॐ ॥ ४६ ॥

अनंशत्वश्रुतेर्गतिंचाह ॥ अंशत्वेऽपिनमत्स्यादिरूपीपरएवंविधः ॥

हरत्सूत्रमवतारयति ॥ अनंशत्वेति ॥ मत्स्याद्यसाम्यंचार्थः ॥ सूत्रंव्याचष्टे ॥ अंशत्वेपीति ॥ जीवानांमत्स्यादीनांचभगवदंशत्वाविशेषेऽपिनसर्वसाम्यं ॥ मत्स्यादीनांस्वरूपांशत्वात् जीवानांभिन्नांशत्वात् ॥ नचांशत्वाविशेषाद्भेदाभेदानुपपत्तिः ॥ कालाग्निखद्योतादिष्वग्न्याद्यंशेष्वंशत्वाविशेषेऽपितद्दर्शनादितिभावः ॥ ननुकालाग्निखद्योतादीनांतेजःप्रभृतिभूतकार्याणांभेदाभेदसाम्यात्कथमत्रैतेदृष्टांताइत्यतआह ॥

अभिमानीति ॥ तेजोजलपृथिव्यभिमानिनांकालाग्न्यमृताब्धिमेर्वभिमानिनामभिन्नत्वात्खद्योताद्यभिमानिनांभिन्नत्वाद्युक्तंदृष्टांतत्वमितिभावः ॥४६ ॥ ननुतत्रतथात्वेऽपिजीवानांमत्स्यादीनांचाभेदःकिंनस्या

यथातेजोंशस्यैवकालाग्नेःखद्योतस्यचनैकप्रकारात् ॥ यथाजलांशस्यामृतसमुद्रस्यमूत्रादेश्चयथाचपृथिव्यंशस्यमेरोर्विष्ठादेश्चाभिमानिदेवतापेक्षयैतत् ॥ ४६ ॥ एतेस्वांशक

॥ ॐ स्मरंतिच ॐ ॥ ४७॥

लाःपुंसःकृष्णस्तुभगवान्स्वयम् ॥ इंद्रारिव्याकुलंलोकंमृडयंतियुगेयुगे॥ अतःपरंयद्व्यक्तमव्यूढगुणबृंहितम् ॥

दित्याशंकांस्मृतिभिःपरिहरत्सूत्रमुपन्यस्यताःस्मृतीरुदाहरति ॥ स्मरंतिचेति ॥ परमपुरुषांशैःसर्वमवति

ष्ठतइत्युक्तेकेतेंशाइत्याशंकायांसविस्तरंवराहादीनांभगवदंशत्वमुक्त्वाजीवानामपितदुक्तम् ॥ ऋषयोमनवोदेवामनुपुत्रामहौजसः ॥ कलाःसर्वेहरेरेवसप्रजापतयःस्मृताइति ॥ तत्रवराहादीनांस्वरूपांशत्वमभिधी

यते ॥ एतेपरमपुरुषस्यस्वरूपांशविभागाः ॥ स्वयंकृष्णोभगवान्मूलरूप्येव ॥ वराहादयोलोकंमृडयंतीतिजीवानामंशत्वेनोक्तानांभिन्नत्वमुच्यते॥ यदतःपरमपुरुषाद्भिन्नमकार्यमनाद्यनपगतसत्त्वादिगुणयुक्तंचैतन्यंसजीवः ॥ यश्चादृष्टाश्रुतभगवत्स्वरूपत्वात्संसरतीति ॥ कृष्णशब्दश्चनारायणेऽपिदृष्टःकृष्णोमुक्तैरिज्यतेवीतमोहैरित्यादौ ॥ मत्स्यादीनांजीवानांचस्वरूपास्वरूपांशलक्षणयोगित्वाच्चांशिनाभेदाभेदाविति

अदृष्टाश्रुतवस्तुत्वात्सजीवोयःपुनर्भवः ॥ स्वांशश्चाथोविभिन्नांशइतिद्वेधांशइष्यते ॥
अंशिनोयत्तुसामर्थ्यंयत्स्वरूपंयथास्थितिः ॥ तदेवनाणुमात्रोऽपिभेदःस्वांशांशिनोःक्वचि
त् ॥ विभिन्नांशोऽल्पशक्तिःस्यात्किंचित्सादृश्यमात्रयुगितिवाराहे ॥ नत्वत्समोस्त्यभ्य
धिकःकुतोन्यइतिच ॥ ४७ ॥

भावेनस्वरूपास्वरूपांशलक्षणंतावत्स्मृत्यादर्शयति ॥ स्वांशश्चेति॥यत्स्वरूपंयथानंदादियथास्थितिर्यथासर्वोत्तमत्वादितदेवस्वरूपांशस्यभवति ॥ एतच्चस्वरूपांशलक्षणंकृष्णाद्यवतारेष्वस्तीतिस्मृत्याऽऽह ॥ नेति ॥ जीवेषुविभिन्नांशलक्षणंत्वनुभवसिद्धम् ॥ एवंजीवानांमत्स्यादीनांचांशिनाभेदाभेदसद्भावान्नैकविधेत्युक्तम् ॥४७ ॥

युक्त्यंतरेणैकविधतांपराकुर्वत्सूत्रमुपन्यस्यव्याचष्टे ॥ अनुज्ञेति ॥ जीवानांप्रवृत्तिमोक्षयोरंशिपरमात्मा धीनत्वात्तेषांमत्स्यादीनांचांशत्वसाम्येऽपिनैकविधतेत्यर्थः ॥ केनप्रतीयतइत्यतआह ॥ देहेति ॥ परानुज्ञ याप्रवृत्तिःपरतोबंधनिवृत्तिश्चजीवस्येत्यत्रक्रमेणश्रुतीचाह ॥ यइति ॥ मत्स्यादीनामपिप्रवृत्तिमोक्षयोरी

परानुज्ञयाप्रवृत्तिःपरतोबंधनिवृत्तिश्चजीवस्यप्रतीयते ॥ अंशत्वेऽपिदेहसंबंधात् ॥ य आत्मानमंतरोयमयति तमेवंविद्वानित्यादिना ॥ नतुपरस्य ॥ वासुदेवःसंकर्षणःप्रद्युम्नो ऽनिरुद्धोहंमत्स्यःकूर्मोवराहोनारसिंहोवामनोरामोरामःकृष्णोबुद्धःकल्किरहंशतधाहं सहस्रधाहममितोहमनंतोहंनैवैतेजायंतेनम्रियंतेनैषामनुज्ञानबंधोनमुक्तिःसर्वएवह्येतेपू

॥ ॐ अनुज्ञापरिहारौदेहसंबंधाज्ज्योतिरादिवत् ॐ ॥ ४८ ॥

र्णाअजराअमृताःपराःपरानंदाइतिचतुर्वेदशिखायाम् ॥ युज्यतेचज्योतिरादिवत् ॥ य थाऽऽदित्योवियद्गतस्तत्प्रकाशश्चैकप्रकारः ॥ शुक्लंकृष्णंकनीनिकेतितदंशस्याप्यक्ष्णोदेह संबंधान्नतादृशीशक्तिः ॥ तदनुग्राह्यत्वंतेनैवावृत्तिपरिहारश्च ॥

श्वराधीनत्वात्कथंनजीवविधतेत्यतआह ॥ नेति ॥ तदेवकुतइत्यतआह ॥ वासुदेवइति ॥ शतधानाराय णादिः ॥ सहस्रधाविश्वादिः॥अमितोऽतिबहुरूपःपरादिः ॥ अनंतोऽजितादिः॥यदुक्तंजीवोंश्यधीनप्रवृत्त्या दिमान्देहसंबंधित्वादितितद्व्याप्त्यभावान्नयुज्यतइत्यतआह ॥ युज्यतेचेति ॥ तदेवस्फुटयति ॥ यथेति ॥

आदित्योमंडलाभिमानीवियद्गतस्तत्प्रकाशाभिमानीतदंशश्चैकप्रकारोऽनुज्ञादिरहितः ॥ त्रिवृदिववैचक्षुःशु क्लंकृष्णंकर्नीनिकेतिश्रुतावक्षणःसूर्यमंडलसाम्योक्त्यातदंशत्वमुच्यते ॥ अतएवतदभिमानिनोऽपितदभिमा न्यंशत्वंतस्यचापभ्रष्टस्यदेहदोषलिप्तत्वादंश्यधीनप्रवृत्त्यादिमत्त्वमितिभावः॥ आवरणंतमः॥ एवमुत्तरत्रा प्यभिमानिविवक्षाद्रष्टव्या॥ विरोधीपित्तधातुः॥ अत्रायंप्रयोगोभवति॥ जीवःस्वांश्यधीनप्रवृत्त्यादिमान्

यथाबाह्यजलस्यामृतसमुद्रस्यचैकत्वंतदंशस्यापिश्लेष्मणस्तदनुग्राह्यत्वंतेनैवविरोधिनि वृत्तिश्च ॥ मोक्षधर्मेच ॥ यत्किंचिदिहलोकेस्मिन्देहबद्धंविशांपते ॥ सर्वंपंचभिराविष्टं भूतैरीश्वरबुद्धिजैः ॥ ईश्वरोहिमहद्भूतंप्रभुर्नारायणोविराट् ॥ भूतांतरात्माविज्ञेयःसगुणो निर्गुणोऽपिच ॥ भूतप्रलयमव्यक्तंशुश्रूषुर्नृपसत्तमेति ॥

स्वांशिकर्मानिर्मितशरीरसंबंधित्वादपभ्रष्टवदिति॥ यदुक्तंमत्स्यादीनांनांश्यधीनप्रवृत्त्यादिमत्त्वमिति ॥ तद सत् ॥ तेषामप्युक्तविधदेहसंबंधित्वात् ॥ तथाचनविशेषः ॥ अथदेहसंबंधित्वेऽपिनांश्यधीनप्रवृत्तित्वंतर्हि तत्रैवहेतोर्व्यभिचारइत्यतआह ॥ मोक्षधर्मेचेति ॥ शुश्रूषुस्तस्येतिशेषः ॥ अवतारप्रसंगेचैतदुक्तम् ॥ अ त्राप्ययंप्रयोगः ॥ मत्स्यादिःस्वांश्यधीनप्रवृत्त्यादिर्नभवति स्वांशिकर्मानिर्मितदेहासंबंधित्वात् वियद्गतप्र

काशाद्यभिमानिवदिति ॥ अतएवदृष्टांतोविद्वतः ॥ सूत्रार्थेस्मृतिंचाह ॥ वाराहेचेति ॥ देहयोग्यत्वादित्यु
त्त्यामुक्तानामपिसंग्रहोभवति ॥ सूर्यप्रभाक्षिर्णानैकप्रकारे ॥ ४८ ॥ युक्त्यंतरेणमत्स्यादीनांजीवानांचैक
वाराहेच ॥ अंशाश्चदेहयोग्यत्वाज्जीवाबंधादिसंयुताः ॥ अनुग्राह्याश्चेश्वरेणनतुमत्स्यादिकोह
रिः ॥ अदेहबंधयोग्यत्वाद्यथासूर्यप्रभाक्षिणी ॥ यथाऽमृतसमुद्रस्यश्लेष्मादेश्चविरूपता ॥ अ
नुग्राह्यत्वमन्यस्यतेनैवावृत्तिरोधनमिति ॥ ४८ ॥ अपूर्णशक्तित्वाच्चजीवस्यनमत्स्यादिसाम्यम् ॥
तथाचचतुर्वेदशिखायाम् ॥ तस्यहवाएतस्यपरमस्यत्रीणिरूपाणिकृष्णोरामःकपिलइति ॥ तस्य

## ॥ ॐ असंततेश्चाव्यतिकरः ॐ ॥४९॥

हवाएतस्यपरमस्यपंचरूपाणिदशरूपाणिशतरूपाणिसहस्ररूपाण्यमितरूपाणितानिहवाएतानि
सर्वाणिपूर्णानिसर्वाण्यनंतानिसर्वाण्यसंमितानिसर्वाण्यमितानि ॥ अथावराःसर्वएवाऽपूर्णाःसर्व
एवबध्यंते अथमुच्यंतेचकेचनेति ॥ ४९ ॥
विध्यंनिराकुर्वत्सूत्रंपठित्वाव्याचष्टे ॥ असंततेश्चेति ॥ जीवस्यसम्यक्शक्त्यभावान्मत्स्यादीनांतुतद्भावादं
शत्वेप्युक्तस्याव्यतिकरोव्यत्यासाभावइतिभावः ॥ मत्स्यादीनांपूर्णशक्तित्वंनजीवस्येत्येतत्कुतइत्यतआ
ह ॥ तथाचेति ॥ कृष्णादिःकश्चनव्यूहः ॥ पंचनारायणादीनि ॥ असंमितानि निरुपमानि ॥ ४९ ॥

युक्त्यंतरेणोक्तमर्थंस्थापयत्सूत्रमुपन्यस्यन्व्याचष्टे ॥ आभासएवेति ॥ अंशत्वाविशेषेऽपिजीवानांप्रतिबिं
बांशत्वमस्ति ॥ रूपंरूपमितिश्रुतेः ॥ नचतन्मत्स्यादीनामतोनैकविधतेतिभावः ॥ जीवसमुदायःपरमेश्वर
स्यरूपंरूपंप्रतिरूपोभूत्वावर्ततेतद्विबरूपमस्यमुक्त्यर्थंसाक्षात्कारविषयोभवति सचपरमेश्वरःस्वसामर्थ्ये

रूपंरूपंप्रतिरूपोबभूवेतिप्रतिबिंबत्वाच्चनसाम्यम् ॥ वाराहेच ॥ द्विरूपावंशकौतस्यपरम
स्यहरेर्विभोः ॥ प्रतिबिंबांशकश्चाथस्वरूपांशकएवच ॥ प्रतिबिंबांशकाजीवाःप्रादुर्भा

## ॥ ॐ आभासएवच ॐ ॥ ५० ॥

वाःपरेस्मृताः ॥ प्रतिबिंबेष्वल्पसाम्यंस्वरूपाणीतराणित्विति॥ सोपाधिरनुपाधिश्चप्रतिबिं
बोद्विधेयते ॥ जीवईशस्यानुपाधिरिंद्रचापोयथारवेरितिपैंगिश्रुतिः॥ यथैषापुरुषेच्छाया
एतस्मिन्नेतदाततमितिश्रुतिः ॥ ५० ॥ अ० १८॥

नानंतजीवबिंबरूपोज्ञायते ॥ अस्यानंतानिहरिनामकानिरूपाणिव्यूहशःसंतीतिप्रसिद्धमित्यर्थः ॥ सूत्रा
र्थेस्मृतिंचाह ॥ वाराहेचेति ॥ परेस्वरूपांशाः ॥ नजीवस्यपरमात्मांशत्वंयुक्तंतदतिरिक्तोपाध्यभावादि
त्यतआह ॥ सोपाधिरिति ॥ एवमंशत्वेनश्रुत्यादिसिद्धस्यजीवस्यमत्स्यादिवदंशत्वंनास्ति ॥ अतएवानंश
त्वश्रुतिरुपपन्नेत्युक्तंभवति ॥ नचाप्रामाण्यमेवांकिनस्यात्किंयथाकथंचिदविरोधापादनेनेतिवाच्यम् ॥

वाक्याप्रामाण्यकल्पनस्यवक्तृमिथ्याज्ञानादिमूलत्वात् ॥ वेदस्यापौरुषेयत्वादिति ॥ अतःश्रुत्यविरोधेन जीवस्येश्वरांशत्वोपपत्तेर्युक्तोहरौश्रुतिसमन्वयइतिसिद्धम् ॥ ५० ॥ अ० ॥ १८ ॥ अत्रब्रह्मणिश्रुतिसमन्वयसिद्ध्यर्थेजीवस्येश्वरप्रतिबिंबत्वविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ हरौसर्वश्रुतीनांसमन्वयोनिरूपितः ॥ तत्रजीवप्रतिबिंबताविषयश्रुतीनांविरोधेनाप्रामाण्येसमन्वयानुपपत्तिरित्यसौनिरसनीयएव ॥ प्रकृतोजीवएवविषयः ॥ भगवत्प्रतिबिंबोनवेतिसंदेहः ॥ श्रुतिविगानंसंदेहबीजम् ॥ रूपंरूपमितिश्रुतिरेका ॥ प्रकरणवशाद्विरुद्धश्रुत्यंतरमनुमीयते ॥ नजीवाभगवत्प्रतिबिंबाइतिपूर्वःपक्षः ॥ तथाश्रुतेप्रतिबिंबानांमिथोवैचित्र्येकारणमाह ॥

## ॥ ॐ अदृष्टानियमात् ॐ ॥ ५१ ॥

अनादिविद्याकर्मादिवैचित्र्याद्वैचित्र्यम् ॥ ५१ ॥

विद्यमानत्वात् ॥ नचप्रतिबिंबत्वश्रुतिविरोधः ॥ अन्यश्रुतेःसयुक्तिकत्वात् ॥ अस्तिखल्वयंजीवानामन्योन्यंभेदःसुरनरतिर्यगादिरूपः ॥ नचैकप्रतिबिंबानांमिथोवैचित्र्यंसंभवति ॥ भवतिचेद्भवत्वेकोभगवत्प्रतिबिंबः ॥ तदयंप्रयोगः ॥ नजीवाएकप्रतिबिंबाभेदवत्त्वात् घटपटवदिति ॥ अतःसयुक्तिकश्रुतिविरोधात्प्रतिबिंबत्वश्रुतिरप्रमाणमितिनोक्तसमन्वयसिद्धिरित्येवंप्राप्तेसिद्धांतयत्सूत्रमवतारयति ॥ प्रतिबिंबानामिति ॥ जीवानांप्रतिबिंबत्वमभ्युपेत्यतेषांवैचित्र्यकारणमाह सूत्रकारइत्यर्थः ॥ सूत्रंव्याचष्टे ॥ अनादीति ॥ न

चवैचित्र्यान्यथानुपपत्त्यासर्वेषांप्रतिबिंबत्वाभावोवाच्यः ॥ अशेषजीवानांभगवत्प्रतिबिंबत्वेऽपिविद्याद्य
दृष्टवैचित्र्येणदेवदानवमानवादिवैचित्र्यस्योपपत्तेः ॥ यथाप्रज्ञंहिसंभवाइत्यादिश्रुतेः ॥ नचादृष्टवैचित्र्यमे
वासंभावितम् ॥ तस्यापिपूर्वादृष्टवैचित्र्यादुपपत्तेः ॥ तस्याप्येवमनादित्वादितिभावः ॥ ५१ ॥ किंवैचि
त्र्यस्यादृष्टकारणकल्पनयारागद्वेषमोहादीनांदोषाणामेवतन्निमित्तत्वोपपत्तेरित्याशंकांपरिहरन्सूत्रमुप

इच्छाद्वेषसुखदुःखादिवैचित्र्यंचादृष्टादेव ॥

**॥ ॐ अभिसंध्यादिष्वपिचैवम् ॐ ॥ ५२ ॥**

चशब्देनप्रतिक्षणवैचित्र्यंच ॥ ५२ ॥

न्यस्यव्याचष्टे ॥ अभिसंधीति ॥ नदोषवैचित्र्यादेतद्वैचित्र्यंवाच्यम् ॥ तस्यापिसादित्वेनकारणगवेषणेऽ
दृष्टस्यैवग्राह्यत्वादितिभावः ॥ पूर्वदोषवैचित्र्यादुत्तरोपपत्तौकिमदृष्टेनेत्यतआह ॥ चशब्देनेति ॥ संगृही
तमितिशेषः ॥ दोषवैचित्र्यस्यादृष्टवैचित्र्यंविनाजीववैचित्र्यनिमित्तत्वेतदभावेप्येकस्मिन्पुंसिप्रतिक्षणवै
चित्र्यंनस्यात् ॥ अस्तिचैतदतस्तदन्यथानुपपत्त्याऽदृष्टमेवकारणंग्राह्यमितिभावः॥ ५२ ॥

स्वर्गस्थाःसुराभूमिष्ठाःनराइत्यादिस्थानवैचित्र्याद्देववैचित्र्योपपत्तेःकिमदृष्टेनेत्याशंकांपरिहरत्सूत्रंपठि
त्वाव्याचष्टे ॥ प्रदेशादिति ॥ नस्थानवैचित्र्यमेववैचित्र्येहेतुः ॥ निष्कारणस्थानवैचित्र्यस्यैवानुपपत्त्या
तत्कारणान्वेषणेऽदृष्टस्यैवांगीकार्यत्वादितिभावः ॥ युक्त्यंतरमाह ॥ एकेति ॥ एवंयुक्तेरविरुद्धत्वात् ॥

नस्वर्गनरकभूम्यादिप्रदेशविशेषाद्वैचित्र्यम्॥तत्प्राप्तेरदृष्टापेक्षत्वात् ॥ एकदेशस्थितानामे

॥ ॐ प्रदेशादितिचेन्नांतर्भावात् ॥ ५३ ॥

ववैचित्र्यदर्शनाच्च ॥ ५३ ॥ अ० ११ ॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभा
ष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेद्वितीयाध्यायस्यतृतीयःपादः ॥

अन्याश्रुतिर्निरुपाधिप्रतिबिंबत्वादिविषयेतिद्रष्टव्यम् ॥ तदेवंश्रुत्यविरोधेनजीवस्यप्रतिबिंबत्वसिद्धेर्युक्तो
जगत्कारणेनारायणेश्रुतिसमन्वयइतिसिद्धम् ॥ ५३ ॥ अ० ११ ॥ ॥ इतिश्रीमदानंदतीर्थभग
वत्पादाचार्यविरचितस्यश्रीमद्ब्रह्मसूत्रभाष्यस्यटीकायांजयतीर्थमुनिविरचितायांतत्त्वप्रकाशिकायांद्वि
तीयाध्यायस्यतृतीयःपादः ॥ ३ ॥

हरिः ॐ ॥ एतत्पादार्थंदर्शयति ॥ युक्तीति ॥ अत्रापिपूर्ववच्छ्रुतीनांपरस्परविरोधपरिहारएवपादार्थः ॥ युक्तिसाहित्यस्यपूर्वत्रापिसाम्यात् ॥ अत्रत्ययुक्तीनांश्रुत्यादिसिद्धत्वेनप्राबल्यात् ॥ पादभेदोऽध्यात्मविषयतयाच ॥ तत्रादावीश्वरस्यश्रुतिसमन्वयेनजगत्कारणत्वसिद्ध्यर्थमिंद्रियोत्पत्तिविषयश्रुतिविरोधपरिहारा

हरिः ॐ ॥ युक्तिसहितश्रुतिविरोधंश्रुतीनामपाकरोत्यनेनपादेन ॥ प्राणाएवेदमग्रआसुस्तेभ्यो भूतानिजज्ञिरेभूतेभ्योऽडमंडस्यांतस्त्विमेलोकाअथप्राणाएवानादयःप्राणानित्याइतिकाषायणश्रुतौप्राणानामनुत्पत्तिःश्रूयते ॥ नोपादानंहींद्रियाणामतोऽनुत्पत्तिरिष्यते ॥ उपादानकृतास्त्रष्टिःसर्वलोकेषुदृश्यतइतिभविष्यत्पर्वणि ॥ एतस्माज्जायतेप्राणोमनःसर्वेंद्रियाणिचेतिच ॥

दस्तिशास्त्रादिसंगतिः ॥ जगत्कारणेब्रह्मणिसर्वश्रुतिसमन्वयोनिरूपितः ॥ तत्रप्राणोत्पत्तिविषयश्रुतीनांविरोधेनाप्रामाण्येतदसिद्धेःसपरिहर्तव्योभवति ॥ सर्वजगदंतःपातिनःप्राणाएवविषयः ॥ किमुत्पत्तिमंतोनवेतिसंदेहः ॥ संशयबीजंश्रुतिविगानंदर्शयन्पूर्वपक्षंसूचयति ॥ प्राणाइति ॥ अथतस्मात् ॥ इतिचप्राणाना

मुत्पत्तिःश्रूयतइतिशेषः ॥ प्राणानोत्पत्तिमंतःप्राणाएवानादयइतिश्रुतेः ॥ नचोत्पत्तावपिश्रुतिरस्तीतिवाच्यम् ॥ अस्याःस्पष्टार्थायानिरवकाशत्वेनप्राबल्यात् ॥ प्राणानोत्पत्तिमंतोनिरुपादानत्वाद्व्यतिरेकेणघटवदितियुक्तियुक्तत्वेनापिप्राबल्यात् ॥ नचात्रासिद्ध्यादिशंकाकर्तव्यानोपादानमितिस्मृतिगृहीतत्वात्॥ अतः प्रबलश्रुतिविरोधादुत्पत्तिश्रुतिरप्रमाणमेवेतिनेश्वरस्यश्रुतिसमन्वयेनजगत्कारणत्वसिद्धिरितिभावः ॥ सि

अतउच्यते ॥ यथाऽऽकाशादयःपरमात्मनउत्पद्यंतेतथाप्राणाअपि ॥ १ ॥ अनादित्वश्रु

## ॥ ॐ तथाप्राणाः ॐ ॥ १ ॥ ॐ गौण्यसंभवात् ॐ ॥ २ ॥

तिर्गौणानादित्वापेक्षया ॥ मुख्यासंभवात् ॥

द्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ उत्पत्तिमंतएवप्राणाः ॥ आकाशादीनामुत्पत्तिमत्त्वेकथितयुक्तिसमुदायादेवेत्यर्थः ॥ अत्रपुनर्विप्रतिपत्त्यभावेनकारणस्याविचारात्सिद्धवत्कृत्यपरमात्मनइत्युक्तम् ॥ १ ॥नन्वाकाशोत्पत्तिसिद्ध्यर्थमनुत्पत्तौश्रुत्यभावोहेतुरुक्तःकथमसाविहसंभवतिश्रुतेर्विद्यमानत्वादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ गौणीति ॥ सत्यमस्त्यनुत्पत्तिश्रुतिरितितथापिनासौप्राणानामनुत्पत्तिवक्तिकिंतुगौणानुत्पत्तिवादिन्येव ॥ मुख्यानुत्पत्तेरसंभवात् । मुख्यासंभवेगौणार्थांगीकारस्यन्यायप्रा

त्वादितिभावः ॥ एतस्माज्जायतइत्यादिश्रुत्यसंभवोऽपिद्रष्टव्य ॐ॥ तत्किंगौणानादित्वंप्राणानांकथंचमु

ख्यासंभवःप्रत्युतोत्पत्तिरेवनसंभवत्युपादानाभावादित्यतआह ॥ नित्यानीति ॥ उपचयात्पूर्वमसमर्थानि

नसंसारकारणानिस्युरित्यतउक्तम् ॥ सृष्टिकालइति ॥ प्रलयेवियुक्तांशानांप्रतिसृष्टिकालमितिभावः ॥

अत्राहंकारकारणत्वस्याप्यनिषेधादविरोधः ॥ अहंकारोत्पन्नभूतानामपिसूक्ष्मप्राणैरस्त्युपचयइतितत्रा

नित्यान्येतानिसूक्ष्मेणहींद्रियाणितुसर्वशः ॥ तेषांभूतैरुपचयःसृष्टिकालेविधीयते ॥ परेणसा

## ॥ ॐ प्रतिज्ञानुपरोधाच्च ॐ ॥ ३ ॥

म्यसंप्राप्तेःकस्यस्यान्मुख्यनित्यतेतिहिभविष्यत्पर्वणि ॥ २ ॥ इदंसर्वमसृजतेति ॥३॥ अ० १॥

प्यविरोधः ॥ मुख्यनित्यतायांस्वातंत्र्यंभवति ॥ अनेनयावद्विकारमित्यादियुक्तयोगृहीताभवंति ॥ २ ॥

प्रतिज्ञाहानिरित्युक्तयुक्त्याप्येतमर्थंसमर्थयत्सूत्रंपठित्वातदुपात्तश्रुतिमेवोदाहरति ॥ प्रतिज्ञेति॥ सूत्रेणान्व

यः॥प्राणानामुत्पत्त्यंगीकारेसर्वमसृजतेतिश्रुत्युक्तप्रतिज्ञानुपरोधादुत्पत्तिमंतःप्राणाइत्यतःश्रुत्यविरोधेनप्रा

णानांपरमात्मोत्पन्नत्वसिद्धेर्युक्तमीश्वरस्यश्रुतिसमन्वयेनजगत्कारणत्वमितिसिद्धम् ॥ ३ ॥ अ० १ ॥

अत्रब्रह्मणःश्रुतिसमन्वयेनजगत्कारणत्वसिद्ध्यर्थंमनोजन्मविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ जगत्कारणेब्रह्मणिश्रुतिसमन्वयउक्तः ॥ तत्रमनोजन्मविषयश्रुतीनांविरोधेनाप्रामाण्येनासावुपपद्यतइतिसनिराकार्यएव ॥ अत्रप्रकृतेंद्रियांतर्गतंमनोविषयः ॥ किमुत्पत्तिमन्नवेतिसंशयः ॥ मनःसर्वेंद्रियाणिचनित्यंमनोनादित्वादितिश्रुतिविरोधःसंदेहबीजम् ॥ पूर्वपक्षयति ॥ द्विधेति ॥ मनोनोत्पत्तिमत् ॥ नित्यं

द्विधाहैवेंद्रियाणिनित्यान्यनित्यानिच ॥ तत्रनित्यंमनोनादित्वात् ॥ नह्यमनाःपुमान्तिष्ठत्यनित्यान्यन्यानीतिगोपवनश्रुतौमनसोऽनुत्पत्तिःसयुक्तिकाश्रूयते ॥

मनोऽनादित्वादितिश्रुतेः ॥ नचोत्पत्तिश्रुत्यनुसारेणेंद्रियानुत्पत्तिश्रुतिवदनादित्वश्रुतेर्गौणार्थत्वमितिसांप्रतम् ॥ इंद्रियाणामनित्यत्वमुक्त्वाविशिष्यमनसोनित्यत्वाभिधानात् ॥ किंचमनसःसादित्वेतद्विनाकदाचिदनादिपुरुषेणावस्थातव्यम् ॥ नचैवंभवति ॥ तथासतितदासंसाराभावप्रसंगात् ॥ मनोहिसंसारहेतुः ॥ तदाहुः ॥ मनएवमनुष्याणांकारणंबंधमोक्षयोरिति ॥ संसारसादित्वंत्वप्रामाणिकंसर्वप्रमाणविरुद्धंचातोनित्यमेवमनः ॥ एवंचयुक्तियुक्तविशेषश्रुतेःप्राबल्यात्तद्विरोधेनोत्पत्तिश्रुत्यप्रामाण्यान्नश्रुतिसमन्वयेनेश्वरस्यजग

त्कारणत्वसिद्धिरितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ नानुत्पत्तिर्मनसः ॥ उत्पन्नत्वे श्रुतिसद्भावात् ॥ नचास्यागत्यंतरंवाच्यम् ॥ पृथङ्मनसोजन्माभिधायकत्वेनविशेषश्रुतित्वात् ॥ नचान्यें द्रियवन्मनसोप्युत्पत्तिमत्त्वेतस्येंद्रियांतर्गतस्यपृथगभिधानंव्यर्थमितिमंतव्यम् ॥ अन्येंद्रियेभ्योऽपिप्रागु त्पन्नत्वाभिप्रायेणतदुपपत्तेरितिभावः ॥ पूर्वोक्तत्वादितिपूर्वमुत्पन्नतयोक्तत्वात् ॥ ननुकुतोमनसःपूर्वोत्प

अतआह ॥ मनःसर्वेंद्रियाणिचेतिपूर्वोक्तत्वान्नानुत्पत्तिर्मनसोयुज्यते॥ पूर्वंमनःसमुत्पन्नं

## ॥ ॐ तत्प्राक्श्रुतेश्च ॐ ॥ ४ ॥

ततोन्येषांसमुद्भवः॥ तदनुत्पत्तिवचनमल्पोपचयकारणादितिवायुप्रोक्तवचनंचशब्देनसं गृहीतम् ॥४॥अ० २॥

त्तिःकथंचोत्पत्त्यंगीकारेश्रुत्यादिविरोधपरिहारइत्यतआह ॥ पूर्वमिति ॥ नोत्पत्तिमत्त्वेमनसःश्रुतिविरो धः ॥ प्रलयेपींद्रियवत्सूक्ष्मस्वरूपसत्ताभ्युपगमात् ॥ अतएवनयुक्तिविरोधः ॥ नचविशिष्योक्तिविरो धः ॥ अन्येंद्रियेभ्योऽल्पोपचयाभिप्रायेणतदुपपत्तेरितिभावः ॥ अतःश्रुत्यविरोधेनमनसोभगवदुत्पन्नत्व सिद्धेर्युक्तोजगत्कारणेब्रह्मणिश्रुतिसमन्वयइतिसिद्धम् ॥ ४ ॥ अ० २ ॥

अत्रजगत्कारणेहरौश्रुतीनांसमन्वयसिद्ध्यर्थंवागुत्पत्तिविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ श्रुतिसमन्वयेनजगत्कारणत्वंविष्णोरुक्तम् ॥ तद्वागुत्पत्तिविषयश्रुतिविरोधेनाप्रामाण्येऽनुपपन्नंस्यादितित स्यनिराकरणमावश्यकम् ॥ प्रकृतेंद्रियांतःपातिवागिंद्रियमत्रविषयः ॥ उत्पत्तिमन्नवेतिसंदेहः ॥ सर्वेंद्रिया णिचनह्येषोत्पद्यतइतिश्रुतिविगानंसंदेहबीजम् ॥ पूर्वपक्षयति ॥ नित्ययेति ॥ नवागुत्पत्तिमती ॥ अनादि त्वेश्रुतिसद्भावात् ॥ नचेयंश्रुतिर्वेदविषया समाख्याश्रुतौनित्ययानित्ययेत्यवतार्यश्रुतिर्वाव नित्येतिव्याख्या

नित्ययाऽनित्ययास्तौमिपरमात्मानमच्युतमिति ॥ वाग्वावनित्या ॥ नह्येषोत्पद्य तेऽस्यांहिश्रुतिरवतिष्ठतइतिसयुक्तिकंपौष्यायणश्रुतौवाचोऽनुत्पत्तिरुच्यते ॥

तत्वात्सामान्यवाक्शब्दस्यविशेषार्थकल्पनोपपत्तेरुत्पत्तिश्रुत्यानुकूल्याच्चेतिवाच्यम् ॥ अस्यांहिश्रुतिरव तिष्ठतइतिवाक्यशेषादस्याविशेषश्रुतित्वात् ॥ नहिश्रुतौश्रुतिरवतिष्ठते ॥ किंचोत्पत्तिमत्त्वेवाचःश्रुतंश्रुत्या श्रयत्वंतस्यानोपपद्यते ॥ नहिनित्याश्रयोऽनित्यःक्वचित्दृष्टः ॥ अथापिस्यात् ॥ सूक्ष्मरूपानादित्वपराश्रु तिःकिंनस्यात् ॥ उत्पत्तिश्रुत्यानुकूल्यादुपचयोप्यस्तीति ॥ मैवम् ॥ श्रुतश्रुत्याश्रयत्वादेव ॥ श्रुत्याश्रयत्वं नामवाचोनित्यंश्रुत्युच्चारणसामर्थ्यंनित्यसर्वगतानांवर्णानामन्यथाविशिष्यवागाश्रयत्वोक्तिवैयर्थ्यात् ॥

सद्भावेदोच्चारणसामर्थ्यायावाचोऽव्यर्थमुपचयकल्पनम् ॥ अतःसयुक्तिकविशेषश्रुतिविरोधादप्रामाण्यंवा
गुत्पत्तिश्रुतेरतोनश्रुतिसमन्वयेनहरेर्जगत्कारणत्वसिद्धिरितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अ
तइति ॥ वागुत्पत्तिमत्येव ॥ मनःपूर्वरूपंवागुत्तररूपमितिमनोलक्षणकारणवत्त्वश्रुतेः ॥ कारणवतश्चकार्य
तानियमात् ॥ नचवाक्शब्दस्यसाधारणत्वाद्व्याहरणार्थता ॥ वाचाव्याहरतीतिपूर्ववाक्यबलेनेंद्रियार्थ

अतोब्रवीति॥तस्मान्मनएवपूर्वरूपंवागुत्तररूपमितिमनःपूर्वकत्वाद्वाचोनानुत्पत्तिः ॥ वागिंद्रियस्य

## ॥ ॐ तत्पूर्वकत्वाद्वाचः ॐ ॥ ५ ॥

नित्यत्वंश्रुतिसन्निधियोग्यता॥ उत्पत्तिर्मनसोयस्मान्ननित्यत्वंकुतश्चनेतिवायुप्रोक्ते॥५॥ अ० ३॥

त्वविशेषश्रुतित्वादितिभावः ॥ अत्रपूर्वोत्तरशब्दौकारणकार्यपरौ ॥ वागिंद्रियस्योत्पत्तिपक्षेश्रुत्यादिविरो
धइत्यतआह ॥ वागिंद्रियस्येति ॥ नित्यश्रुतिसन्निधानान्नित्यत्वोपचारो नतुनित्यत्वम् ॥ नचनित्याश्रय
त्वादेवनित्यत्वम्॥ यतोनित्याश्रयत्वंननित्यदाऽपितुतद्योग्यतैव ॥ अतएवनोपचयवैयर्थ्यंचेतिभावः ॥ म
नसःसकाशात् ॥ एवमभ्युपगमएवनित्यत्वश्रुतिरप्युपपन्नाननित्यत्वे ॥ तस्याअप्येतदर्थत्वात् ॥ वाग्वाव
नित्येत्युक्तेतत्कथमित्याशंकायामुपचारोयमित्युपचारबीजंब्रुच्यतेअस्यांहीति ॥ एवंचसतिवेदाश्रयत्वेन

नित्ययापुराणाद्याश्रयत्वेनचानित्ययेतिवाक्यार्थौघटते ॥ एवंचसमाख्यानुरोधः ॥ अन्यथानवाक्यार्थोपपत्तिः ॥ अतःश्रुत्यविरोधेनोत्पत्तिसिद्धेर्वाचोयुक्तःश्रुतिसमन्वयोजगत्कारणेहरावितिसिद्धम् ॥ ५ ॥

अ० ३ ॥ अत्रश्रुतिसमन्वयेनविष्णोर्जगत्कारणत्वसिद्धयेप्राणसंख्याविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ उक्तोजगत्कारणेब्रह्मणिश्रुतिसमन्वयःप्राणसंख्याश्रुतीनांविरोधेनाप्रामाण्येऽनुपपन्नःप्रा

> सप्तप्राणाःप्रभवंतितस्मादितिश्रुतिः ॥ सप्तैवमारुताबाह्येप्राणाःसप्ततथाऽऽत्मनि ॥ अधिदैवतथाऽध्यात्मेसंख्यासाम्यंविदोविदुरितिचस्कांदे ॥ द्वादशवाएतेप्राणाद्वादशमासाद्वादशादित्याद्वादशराशयोद्वादशग्रहाइतिकौंडिन्यश्रुतौद्वादशप्राणादृश्यंते ॥

प्तोतीत्यवश्यंपराकार्यः ॥ प्रकृतप्राणाएवात्रविषयः ॥ किंसप्तोतद्वादशवेतिसंदेहः ॥ संदेहबीजंश्रुतिविगानंदर्शयन्पूर्वपक्षंचसूचयति ॥ सप्तेति ॥ श्रुतिःप्राणानांसप्तत्वंवक्तीतिशेषः ॥ ग्रहाःसोमस्यसप्तैवप्राणाःसप्तप्राणाइतिश्रुतेः ॥ नचद्वादशप्राणेषुसप्तापिसंभवंतीतिद्वादशत्वाविरोधिनीयंश्रुतिरितिवाच्यम् ॥ द्वादशत्वेकारणविशेषमंतरेणसप्तत्वोक्तेरयोगात् ॥ किंचाभिमानिनांसप्तत्वाच्चप्राणानांसप्तत्वमभिमान्यभिमन्यमानयोःसमसंख्यात्वनियमादिति ॥ अथवाद्वादशप्राणाः ॥ द्वादशवाएतेप्राणाइतिश्रुतेः ॥ नचसयुक्तिकत्वे

नबलवत्यासप्तत्वश्रुत्याबाधः ॥ द्वादशमासाइत्यादिश्रुतेरेकदैवत्याभिप्रायेणप्रवृत्तत्वेनप्राणाभिमानिनां द्वादशत्वस्याभिप्रेतत्वात्सप्तत्वेकथितयुक्तेरत्रापिसाम्यात् ॥ अन्यथाश्रुतेरुन्मत्तवाक्यत्वापातात् ॥ अतएवश्रुतिद्वयस्यापिसमबलत्वेनान्यतरमात्रबाधायोगात् परस्परविरोधेनाप्रामाण्याश्चैश्रुतिसमन्वयेननारायणस्यजगत्कारणत्वमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ नप्राणसंख्यानिर्णया

अतोवक्ति ॥ ज्ञानेंद्रियापेक्षयासप्तत्वम् ॥ गुहाशयांनिहिताःसप्तसप्तेतिविशेषणात् ॥

स ॥ ॐ सप्तगतेर्विशेषितत्वाच्च ॐ ॥ ६ ॥

भावेनश्रुतिद्वयस्याप्रामाण्यंकल्प्यम् ॥ द्वादशप्राणाइतिनिर्णयोपपत्तेः ॥ नचसप्तत्वश्रुतियुक्तिविरोधः ॥ द्वादशप्राणेषुसप्तप्राणानामपिविद्यमानत्वात् ॥ नचविवक्षाविशेषमंतरेणसप्तत्वोक्तिर्व्यर्थैतिवाच्यम् ॥ श्रोत्रचक्षुःस्पर्शनरसनघ्राणमनोबुद्धीनांज्ञानसाधनेंद्रियत्वात्तद्विवक्षयासप्तत्वश्रुतेःप्रवृत्तत्वात् ॥ सप्तानांश्रुत्युक्तानांज्ञानेंद्रियत्वंकुतइतिचेन्न ॥ तद्वाक्यशेषेसप्तानांज्ञानार्थत्वेनविशेषितत्वादितिभावः ॥ गुहाहृदयमाशयःस्थानंयस्याबुद्धेस्तदर्थंयेप्रतिशरीरंसप्तसप्तप्राणानिहितास्तेयत्रचरंतीत्यर्थः ॥ विशेषणबलेनतेषां

ज्ञानार्थत्वमस्तुतथापितेतावतएवकिंनस्युरित्यतआह ॥ सप्तेति ॥ चशब्दात्संगृहीतमितिशेषः ॥ एतच्छ्रुता
वेवंसावकाशायामितराऽपिश्रुतिरत्रोदाहर्तव्या ॥ ६ ॥ नसप्तप्राणेभ्योऽन्येप्राणाःसंति ॥ सद्भावेऽत्रसह
पाठप्रसंगात् ॥ अत्रचसहपाठाभावोऽनादित्वेनवाभवेत्परमात्मनोवातदकारणत्वेनतदुभयंचोक्तविरुद्ध
म् ॥ नचकारणांतरंपश्यामः ॥ अतःप्राणांतराणामेभिःपरमात्मनःसकाशादुत्पन्नत्वेनोच्यमानैःसहपाठा

सप्तप्राणास्त्ववगतेपंचप्राणाश्चकर्मणः ॥ एवंप्राणद्वादशकंशरीरेनित्यसंस्थितमितिभविष्यत्स्य
र्ववचनंचशब्दात् ॥६ ॥ हस्तादीनांकर्मविषयत्वान्नसहपाठः ॥ संसारस्थितिहेतुत्वात्स्थितं

## ॥ ॐ हस्तादयस्तुस्थितेऽतोनैवम् ॐ ॥ ७॥

कर्मविदोविदुः ॥ तस्माद्गतिहेतुत्वाज्ज्ञानंगतिरिहोच्यतइतिचवायुप्रोक्ते ॥ ७ ॥ अ० ४ ॥

भावादभावइत्याशंकांपरिहरन्सूत्रंपठित्वाव्याचष्टे ॥ हस्तादयइति ॥ नसहपाठाभावेनप्राणांतराभावः ॥
अनादित्वाद्यभावेऽपिपाणिपादपायुगुह्यवाचःकर्मार्थानींद्रियाण्यतएतावतैववैलक्षण्येनासहपाठोपपत्ते
रितिभावः ॥ ननुगतिस्थितशब्दौकुतोज्ञानकर्मार्थावित्यतआह ॥ संसारेति ॥ सजातीयत्वेनान्यत्रापिश
ब्दःप्रपदशब्दवदितिज्ञातव्यम् ॥ अतःश्रुत्यविरोधेनप्राणानांद्वादशत्वसिद्धेर्युक्तंश्रुतिसमन्वयेनेश्वरस्यजग
त्कारणत्वमितिसिद्धम् ॥ ७ ॥ अ० ४ ॥

अत्रपुरुषोत्तमेजगज्जन्मादिकारणेश्रुतिसमन्वयसिद्ध्यर्थंप्राणपरिमाणविषयश्रुतिविरोधपरिहारादस्तिशा स्त्रादिसंगतिः ॥ जगत्कारणेब्रह्मण्युक्तःश्रुतिसमन्वयःप्राणपरिमाणविषयश्रुतीनांविरोधेऽनुपपन्नःप्रसज्जते ऽतोसौनिराकर्तव्यः ॥ प्रकृतप्राणाएवात्रविषयः ॥ किंव्याप्ताउताणवइतिसंदेहः ॥ संदेहबीजंश्रुतिविरोधं दर्शयन्पूर्वपक्षंचसूचयति ॥ दिवीति ॥ व्याप्तिःप्राणानामितिशेषः ॥ श्रुतिःप्राणानामणुत्वंवक्तीतिशेषः ॥

दिवीवचक्षुराततमितिव्याप्तिःप्रतीयते ॥ दूरश्रवणदर्शनादियुक्तिश्च ॥ अणु भिःपश्यत्यणुभिःशृणोतिप्राणावाअणवःप्राणैश्चैतद्भवतीतिचकौंडिन्यश्रुतिः ॥

पश्यतिजानातिकुतोत्रोक्ताअणवःप्राणाःज्ञानकर्मकरणत्वलिंगादित्यर्थः ॥ व्याप्ताःप्राणाः ॥ तथाश्रुतेः ॥ नचाणुत्वश्रुतिविरोधः ॥ विष्णोर्व्याप्तत्वेदृष्टांतत्वेनचक्षुर्व्याप्तेरुक्तत्वादेतच्छ्रुतेःप्राबल्यात् ॥ अतिसुदृढंहि दृष्टांतत्वेनोपादीयते ॥ किंचास्तितावद्दूरस्थवस्तुदर्शनश्रवणस्मरणादितेनपश्यामोऽस्तिप्राणानांव्याप्तिरि ति॥इंद्रियाणांप्राप्यकारित्वात् ॥ अन्यथाकरणत्वविरोधात् ॥ नचस्वस्थानंविहायविषयेणेंद्रियंसन्निकृ ष्यतइतिविशेषप्रमाणमस्ति ॥ अतःप्रबलश्रुतिविरोधादणुत्वश्रुतिरप्रमाणमेवेतिनजगत्कारणेब्रह्मणिश्रुति

समन्वयोयुक्तइतिभावः ॥ सिद्धांतयत्सूत्रमवतारयति ॥ अतइति ॥ अणवएवप्राणाः ॥ नचैतावताश्रुति
युक्तिविरोधः॥यावतातेजसाव्याप्ताश्चेतिसूत्रार्थःस्फुटतयानोक्तः ॥ अतिसुदृढार्थश्रुतिसिद्धेव्याप्तत्वेकुतो
ऽणुत्वंप्राणानांतेजसाव्याप्तिश्चेत्यतआह ॥ तद्यथेति ॥ चक्षसश्चक्षुषःनचव्याप्तश्रुतेःसुदृढार्थतयाबलवत्त्व
म्॥ अत्राप्यात्मनोऽणुत्वादौचक्षुषोदृष्टांततयोक्तत्वाद्विशेषश्रुतित्वाच्चबलवत्त्वमिति॥ यदींद्रियाणिस्वरूप
तोवितत्यावस्थितानितदासर्वग्रहणंचप्रसज्जेतसुप्त्याद्यभावश्च ॥ स्यादेतत् ॥ शब्दोहिवक्तृवक्त्रादुत्पन्नःश
अतोवक्ति ॥ तद्यथाक्षणुनश्चक्षसःप्रकाशोव्याततएवमेवास्यपुरुषस्यप्रकाशो

## ॥ॐ अणवश्च ॐ॥८॥

व्याततोऽणुर्ह्येवैषपुरुषोभवतीतिशांडिल्यश्रुतिः ॥ ८ ॥ अ० ॥ ५ ॥

ब्दांतरमुत्पादयतिसोप्येवम्॥ यत्रतुप्रतिघातकारणेनद्रव्येणाहन्यतेनतत्रोत्पादयति॥ तत्रयःकर्णशष्कुल्य
वच्छिन्नेवियत्युत्पद्यतेसश्रूयतेइतिकथंदूरस्थश्रवणमनुज्ञायतइति ॥ मैवम् ॥ श्रोत्रोत्पन्नशब्दग्रहणेमाना
भावात्॥ अन्यथाऽप्राप्यग्रहणप्रसंगइतिचेन्न ॥ चक्षुर्वच्छ्रोत्रस्यैवगमनोपपत्तेः ॥ श्रोत्रस्याकाशतयाऽमू
र्तत्वान्नेतिचेन्न॥ किमाकाशपदेनोच्यते ॥ अवकाशइतिचेत्तत्कुतोवकाशत्वंश्रोत्रस्यपरिशेषादितिचेन्न ॥
भूताकाशस्यद्रव्यांतरस्यविद्यमानत्वेनपरिशेषानुपपत्तेः ॥ तदनभ्युपगमेश्रुत्यादिविरोधः ॥ पृथिव्यादीना

मप्युपपद्यतेश्रोत्रत्वम्॥ अन्यत्रोपक्षीणानितानीतिचेत् ॥ तच्छरीराऽनारंभकत्वप्रसंगः ॥ बधिराभावप्रसंगइतिचेत्सममवकाशेपि॥ अदृष्टकारणत्वंचसमानम् उपहतिश्चपृथिव्यादीनामेवसंभवतिनावकाशमात्रस्येतियुक्तएवाभ्युपगमः॥ यद्वाचक्षुर्विषयएवतदभ्युपगमः॥ अतएवपूर्वोत्तरपक्षयोस्तद्विषयश्रुत्युदाहरणम् ॥ अतःश्रुत्यविरोधेनप्राणानामणुत्वसिद्धेर्युक्तोजगत्कारणेहरौश्रुतिसमन्वयइतिसिद्धम् ॥८॥अ० ५॥

अत्रश्रुतिसमन्वयेनपरमात्मनोजगत्कारणत्वसिद्ध्यर्थंमुख्यप्राणजन्मविषयश्रुतिविरोधपरिहारार्दस्तिशा

नैषप्राणउदेतिनास्तमेत्येकलएवमध्येस्थाताऽथैनमाहुर्मध्यमइतिमुख्यप्राणस्या
नुत्पत्तिःश्रूयते ॥ यस्मान्निर्यत्परित्यागउत्पत्तिर्मरणंतथा ॥ तस्योत्पत्तिर्मृतिश्चैव
कथंप्राणस्ययुज्यतइत्युक्तिर्वायुप्रोक्ते ॥ आत्मतएषप्राणोजायतइतिच ॥

स्त्रादिसंगतिः ॥ जगत्कारणेहरावुक्तःश्रुतिसमन्वयोमुख्यप्राणजन्मविषयश्रुतीनांविरोधेऽनुपपन्नःस्यादतोसौनिरसनीयएव ॥ सर्वप्राणप्रेरकःप्राणशक्त्यासन्निधापितोमुख्यप्राणोऽत्रविषयः ॥ उत्पत्तिमान्नवेतिसंदेहः ॥ संदेहबीजंश्रुतिविरोधंदर्शयन्पूर्वपक्षंचसूचयति॥ नेति ॥ मध्येजननमरणयोर्मध्यावस्थायाम् ॥ इतिचोत्पत्तिःश्रूयतइतिशेषः ॥ मुख्यप्राणोनोत्पत्तिमान् ॥ नैषप्राणउदेतीतिश्रुतेः॥ नचमुख्यवाध्वनुत्पत्तिश्रुतिवदियमन्यथायोजनीयोत्पत्तिश्रुत्यानुकूल्यादितियुक्तम्॥तस्याखिलोत्पत्तिमरणकारणत्वेनोत्पत्त्या

द्ययोगयुक्तियुक्तानादित्वश्रुतेःप्राबल्यात्॥ नहिसर्वंजननहेतोर्जन्मोपपद्यते॥ दुःखहेतवेस्वजननायप्रवृत्त्ययोगात्॥ अतःप्रबलानादित्वश्रुतिविरोधादुत्पत्तिश्रुतिरप्रमाणमेवातोनजगत्कारणेपरमेश्वरेश्रुतिसमन्वयोपपत्तिरितिभावः ॥ सिद्धांतयत्सूत्रमवतारयति ॥ अतइति ॥ यथेतरेप्राणाउत्पद्यंतेतथाश्रेष्ठश्चप्राणोजाय

अतआह ॥ सौक्ष्म्येणह्वाएषोऽवतिष्ठते स्थूलत्वेनोदेतिसूक्ष्मश्चाथोस्थूलश्च ॥

## ॥ ॐ श्रेष्ठश्च ॐ ॥ १ ॥

प्रकृतितःसूक्ष्मोऽन्यतःस्थूलोथैनमाहुःसादिरनादिरितीतिगौपवनश्रुतेः ॥ १ ॥

तइतिसूत्रार्थोऽतिरोहितइतिनाभिहितः ॥ ननुकुतोमुख्यप्राणस्योत्पत्तिस्तदंगीकारेऽनादित्वश्रुतिविरोधादित्यतआह॥ सौक्ष्म्येणेति ॥ स्थूलादिभावस्यस्वरूपत्वात्कथंतस्योत्पत्त्यादीत्यतउक्तम् ॥ प्रकृतितइति ॥ स्वभावतः ॥ अन्यतःशरीरादितः ॥ १ ॥

नन्वनादित्वश्रुतिःसयुक्तिकत्वेनप्रबलाकथमुत्पत्तिश्रुतिमात्रानुसारेणान्यथाव्याख्यायते ॥ अपितूत्पत्ति श्रुतिरेवचेष्टाबाह्यवायुविषयतयाव्याख्यातव्या ॥ तयोरपिचेष्टायामितिवाक्येनप्राणशब्दवाच्यत्वो क्तेः ॥ उत्पत्त्यंगीकारेचविरोधाभावादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ नेति ॥ प्राणशब्दस्य चे ष्टायांबाह्यवायौचवृत्त्युक्तेःप्राणोत्पत्तिश्रुतिस्तयोरुत्पत्तिवादिनीस्यादितिनोपपद्यते ॥ सप्राणमसृजतेति

चेष्टायांबाह्यवायौचमुख्यप्राणेचगीयते ॥ प्राणशब्दस्त्रिषुह्येषुमुख्येमुख्यःप्रकीर्तित
इतिवायुक्रिययोरपिव्यपदेशादुत्पत्तिश्रुतिस्तयोर्नस्यात्॥सप्राणमसृजतखंवायुर्ज्यो

## ॥ ॐ नवायुक्रियेपृथगुपदेशात् ॐ ॥१०॥

तिरापस्तपोमंत्राःकर्मेतिपृथगुपदेशात् ॥ भूतानिचेष्टामंत्राश्चमुख्यप्राणादिदंजगत् ॥
मुख्यप्राणःपरस्माच्चनपरःकारणान्वितइतिवायूक्ते ॥ १० ॥ अ० ॥ ६ ॥

प्राणोत्पत्तिश्रुतेश्चेष्टादिविषयत्वानुपपत्त्यामुख्यप्राणविषयत्वात् ॥ नचात्रापिचेष्टादिकंवाच्यम् ॥ सप्राण मसृजतेतिप्राणोत्पत्तिमुक्त्वाप्राणाच्छ्रद्धांखंवायुर्ज्योतिरापःपृथिवींद्रियंमनोन्नमन्नाद्वीर्यंतपोमंत्राःकर्म लोकेषुनामचेतिवायुकर्मणोःपृथगुत्पत्त्यभिधानात् ॥ अन्यथापुनरुक्तिप्रसंगइतिभावः ॥ मुखेप्रधाने ॥ मणिर्मुखंप्रधानश्चेत्युत्तमस्यवचोभवेदित्यभिधानात् ॥ श्रुत्यर्थनिश्चायिकांस्मृतिंचाह ॥ भूतानीति ॥

सप्राणमसृजतमुख्यप्राणःपरस्माच्चेतिश्रुतिस्मृतिभ्यांयुक्तिविरोधोऽपिपरिहृतः ॥ मुख्यप्राणस्यपरमात्म जातत्वाभिधानात्॥यत्प्राप्तिरित्याद्युक्तमाहात्म्यवतोऽपिमुख्यप्राणस्यातिमाहात्म्यवद्विष्णूत्पन्नत्वोपपत्तेः तदुक्तम् ॥महत्वान्महतांविष्णुःकर्ताप्राणस्यचैकराट्॥किंनामनसृजेद्देषयेनशक्त्येदमावृतमिति॥अतः श्रुत्य विरोधेनमुख्यप्राणस्यजननसिद्धेर्युक्तंजगत्कारणत्वंश्रुतिसमन्वयेनवासुदेवस्येतिसिद्धम् ॥ १० ॥ अ० ६

प्राणादिदमाविरासीत्प्राणोधत्तेप्राणेलयमभ्युपैतिनप्राणःकिंचिदाश्रितइत्याग्निवेश्यश्रुतौ॥ यदाश्र यादस्यचेष्टासोऽन्यंकथमुपाश्रयेत् ॥ यथाप्राणस्तथाराजासर्वस्यैकाश्रयोभवेदितिचयुक्तिर्भार ते ॥ प्राणस्यैतद्वशेसर्वंप्राणःपरवशोस्थितः ॥ नपरःकिंचिदाश्रित्यवर्ततेपरमोयतइतिपैंगिश्रुतिः ॥

अत्रजगत्कारणेहरौश्रुतिसमन्वयसिद्ध्यर्थंमुख्यप्राणविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ ज गत्कारणेब्रह्मण्युक्तःश्रुतिसमन्वयोःमुख्यप्राणविषयश्रुतीनांविरोधेनाप्रामाण्येअयुक्तःस्यादितिसनिराका र्यः ॥ प्रकृतोमुख्यप्राणएवात्रविषयः ॥ स्वतंत्रःपरतंत्रोवेतिसंदेहः ॥ संदेहबीजंश्रुतिविगानंदर्शयन्पूर्वप क्षंचसूचयति ॥ प्राणादिति ॥ श्रुतौप्राणस्यस्वातंत्र्यंप्रतीयतेइतिशेषः ॥ उपाश्रयेत्तस्मात्प्राणःस्वातंत्र्येण

सर्वाश्रयइतिशेषः ॥ श्रुतिःपारतंत्र्यंवक्तीतिशेषः ॥ मुख्यप्राणःस्वतंत्रएव ॥ नप्राणःकिंचिदाश्रितइतिश्रुतेः ॥ नचपारतंत्र्येऽपिश्रुतिरस्तीतितद्विरोधः ॥ अखिलजगच्चेष्टकत्वमाहात्म्यवत्त्वेनतस्यानन्याश्रयत्वयुक्तियुक्ततयास्वातंत्र्यश्रुतेःप्राबल्यात्॥नचोत्पत्तिमतःस्वातंत्र्यायोगात्पारतंत्र्यश्रुतिरपियुक्तियुक्तेतिवाच्यम् ॥ स्वातंत्र्यवादिनोजन्मासंप्रतिपत्तेः॥ तच्छ्रुतीनामपिस्वातंत्र्यश्रुतियुक्तिविरोधेनाप्रामाण्यात् ॥ लील

अतआह ॥ चक्षुरादिवन्मुख्यप्राणोऽपिपरमात्मवशएव ॥ सर्वंह्येवैतत्परमेवतिष्ठ

## ॥ ॐ चक्षुरादिवत्तुतत्सहशिष्ट्यादिभ्यः ॐ ॥ ११ ॥

ते ॥ प्राणश्चप्राणाश्चप्राणिनश्चसह्येकएवैतान्नयत्युन्नयतिवशीकरोतीतिगौपव
नश्रुतौचक्षुरादिभिःसहतद्वशत्वेनैवशंसनात् ॥

याविग्रहग्रहणोपपत्तेश्च॥ अतःप्रबलश्रुतिविरोधापरिहारादप्रमाणंपारतंत्र्यश्रुतिरतोननारायणस्यश्रुतिसमन्वयेनजगत्कारणत्वसिद्धिरितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ मुख्यप्राणःपरमात्माधीनएवनतुस्वतंत्रः ॥ तद्वशत्वेनश्रुत्युक्तत्वात् ॥ नचोत्पत्ताविवपारतंत्र्येऽपिकाचनव्यवस्थाऽपितुच

क्षुरादिवदेवसर्वात्मनातैःसहपरमात्मवशत्वोक्तिरितिभावः ॥ उन्नयतिऊर्ध्वंनयति ॥ ननुस्वातंत्र्येयुक्तियुक्तश्रुतिसद्भावान्नश्रुतिमात्रेणनिर्णयइत्यतआह ॥ सर्वेति ॥ तर्हितस्येश्वरत्वानन्येश्वरत्वश्रुतिविरोधइत्यतआह ॥ कथमिति ॥ युक्तिविरोधाच्छ्रुतिर्बाध्यतइतिभावः ॥ तर्हिकोऽर्थःश्रुतेरित्यतआह ॥ अवांतरे

सर्वकर्त्तापिसन्प्राणःपरमाधारतःस्थितः ॥ कथमेवान्यथासस्याद्यतोनैवेश्वरद्वयम् ॥
अवांतरेश्वरत्वेनतस्येश्वरवचोभवेत् ॥ अतोमध्यमतामाहुस्तस्यवेदप्रवेदिनः ॥ अन
न्येश्वरताप्राणेतदन्येश्वरवर्जनात् ॥ यतोविशेषवाक्येनर्क्रियतेसमतावचः ॥ नान्यो
ऽतोस्तिद्रष्टानान्यदतोऽस्तिद्रष्टृत्यादिवचनयुक्तयश्चादिशब्दोक्ताः ॥११॥

ति ॥ नकेवलंयुक्तिविरोधाच्छ्रुतेरन्यार्थताकिंतुविशेषश्रुतेरपीत्याह ॥ यतइति ॥ विशेषवाक्येनप्राणस्यैतद्वशेसर्वमित्यादिनासमतावचःसाधारणवाक्यंक्रियतेबाध्यतइत्यर्थः ॥ यतोऽतउक्तएवार्थइतिशेषः ॥ नान्योऽतइत्यनेनभगवदितरस्यस्वातंत्र्येणद्रष्टृत्वाद्यभावउच्यते ॥ वचनयुक्तयोवचनानियुक्तयश्चवचनोक्तायुक्तयइतिवा ॥ ११ ॥ ॥११॥

यद्दिचक्षुरादिवद्देवेश्वराधीनत्वंमुख्यप्राणस्यतर्हितस्यावांतरेश्वरत्वाद्यसंभवेनस्वातंत्र्यश्रुतिर्व्यर्थास्यादि त्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ अकरणत्वाच्चेति ॥ चशब्दश्चक्षुरादीनांकरणत्वसमुच्चयार्थः ॥ प्रा णस्यचक्षुरादीनांचेश्वरवशत्वसाम्येऽपिकर्तृप्रयोज्यत्वाप्रयोज्यत्ववैलक्षण्येनातिशयोपपत्तेर्नोक्तदोषः ॥

इतरेषांप्राणानांकरणत्वान्मुख्यस्याकरणत्वाच्चतस्यान्येभ्यउत्तमत्वंयुज्यते॥ मां

## ॥ ॐ अकरणत्वाच्चनदोषस्तथाहिदर्शयति ॐ ॥ १२ ॥

ङव्यश्रुतिश्च ॥ तानिहवाएतानिसर्वाणिकरणान्यथप्राणएवाकरणस्तस्मान्मुख्य स्तस्मान्मुख्यइत्याचक्षतइति ॥ १२ ॥ अ० ७ ॥

एतच्चश्रुत्युक्तत्वात्सिध्यतीतिभावः ॥ अतःश्रुत्यविरोधेनमुख्यप्राणस्येश्वरवशत्वसिद्धेर्युक्तंश्रुतिसमन्वयेन जगत्कारणत्वंहरेरितिसिद्धम् ॥ १२ ॥ अ० ७ ॥ अत्रजगत्कारणेहरौश्रुतिसमन्वयसिद्ध्यर्थंप्राणादिविष यश्रुतीनांविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ विष्णोर्जगत्कारणत्वेकथितःश्रुतिसमन्वयःप्राणादिविषय

श्रुतीनांविरोधेनाप्रामाण्येऽनुपपन्नःस्यादित्यसौनिराकार्यः ॥ मुख्यप्राणप्रसंगसन्निधापिताःप्राणादयोऽत्र विषयः ॥ किंमुख्यप्राणस्यदासाउततत्स्वरूपाणीतिसंदेहः॥ संदेहबीजंश्रुतिविगानंदर्शयन्पूर्वपक्षंचसूचय ति ॥ सर्वइति ॥ श्रुतिर्दासत्वंस्वरूपत्वंचवक्तीतिशेषः ॥ तत्रप्राणादयोमुख्यप्राणदासाः ॥ सर्वैवाएतेमुख्य

सर्वैवाएतेमुख्यदासाःप्राणोपानोव्यानउदानःसमानइत्यथप्राणोवावसम्राडितिकौंडि
न्यश्रुतिः ॥ प्राणापानादयःसर्वेंमुख्यदासायतोऽनिशम् ॥ अतस्तदाज्ञयानित्यंस्वानि
कर्माणिकुर्वतइतियुक्तिर्वायुप्रोक्ते ॥ मुख्यस्यैवस्वरूपाणिप्राणाद्याःपंचवायवः ॥
सएवप्राणिनांदेहेपंचधावर्ततेऽनिशमितिगौपवनश्रुतिः॥

दासाइतिश्रुतेः ॥ नचश्रुत्यंतरविरोधः ॥ प्राणादयोमुख्यप्राणदासाः॥तदाज्ञयाकर्मकारित्वात् ॥ योयदाज्ञ याकर्मकरोतिसतद्दासःयथालोकइतियुक्तियुक्तत्वात् ॥ तथाचश्रुतिः ॥ एषप्राणइतरान्प्राणान्पृथक्पृ थगेवसन्निधत्तइत्यादिमुख्यप्राणस्वरूपाणिचैतानिमुख्यस्यैवस्वरूपाणिप्राणाद्याइतिश्रुतेः ॥ नचसयुक्ति

कश्रुतिविरोधः ॥ प्राणादयोमुख्यप्राणरूपाण्येवव्यक्तसद्गुणत्वादितियुक्तियुक्तत्वात्स्वरूपत्वश्रुतेरपिपायू
पस्थेअपानंचक्षुःश्रोत्रेमुखनासिकाभ्यांप्राणःस्वयंप्रतिष्ठते॥ मध्येतुसमानएषह्येतद्धुतमन्नंसमंनयतितस्मा
देताःसप्तार्चिषोभवंतिनाडीसहस्राण्यासुव्यानश्चरत्यथैकयोर्ध्वउदानःपुण्येनपुण्यंलोकंनयतिपापेनपापं

अतोवक्ति॥अथपंचवृत्त्यैतत्प्रवर्तते ॥ प्राणोवावपंचवृत्तिः॥ प्राणोपानोव्यानउदानःसमा

## ॥ ॐ पंचवृत्तिर्मनोवद्व्यपदिश्यते ॐ ॥ १३॥

नइतितेभ्योवाएतेभ्यःपंचदासाःप्रजायंते ॥ प्राणाद्धावप्राणोपानादपानोव्यानाद्व्यानउदा
नादुदानःसमानादेवसमानोयथाहवैमनःपंचधाव्यपदिश्यते ॥

पृथिव्यांयादेवतासैषापुरुषस्यापानमवष्टभ्येत्यादेः ॥ नचैतद्व्यक्तसद्गुणत्वंदासेषुसंभवति ॥ उभयत्रापि
तद्भावेस्वामिभृत्यभावानुपपत्तेः॥ एवंचश्रुतिद्वयस्यापिसमानबलत्वेनविरुद्धत्वाच्चाप्रामाण्यम् ॥ नचोभ
यंयुक्तम्॥वस्तुविकल्पाभावादिति॥ अतोनविष्णौजगत्कारणेश्रुतिसमन्वयइतिभावः॥ सिद्धांतंयत्सूत्रमव
तार्यतस्यस्पष्टार्थत्वात्तदुपात्तश्रुतिमेवोदाहरति ॥ अतइति ॥ नकेवलंप्राणादयोमुख्यदासाएवापितुतद्वृत्त

योऽपि॥ नचवस्तुविकल्पप्रसंगः॥ पृथगुभयत्रिधाभ्युपगमात्॥ अतएवनश्रुतीनांयुक्तियुक्तानामविरोधा दप्रामाण्यम्॥ कुतएतत्॥ यतोमनोदृष्टांतेनपंचदासत्वान्पंचवृत्तिश्चमुख्यप्राणोव्यपदिश्यतेऽतएवेतिभावः॥ संकल्पविकल्परूपंमनः॥ निश्चयरूपाबुद्धिः॥ अस्वरूपेस्वरूपमतिरहंकारः॥ स्मरणहेतुश्चित्तम्॥ चेतसोऽन्या

मनोबुद्धिरहंकारश्चित्तंचेतनेतितेभ्योवाएतेभ्यःपंचदासाःप्रजायंते ॥ मनसोवाएमनोबुद्धे र्बुद्धिरहंकारादहंकारश्चित्ताच्चित्तंचेतनायाएवचेतनैवमितीति ॥ १३ ॥ अ० ॥ ८ ॥

भिश्चेतना॥ नचप्राणादीनांमुख्यदासत्वेव्यक्तसद्गुणत्वविरोधः॥ दासानामपितदुपपत्तेः॥ नचस्वामिभृत्यभा वानुपपत्तिः॥ मुख्यप्राणस्यततोऽधिकव्यक्तसद्गुणतयातदुपपत्तेः॥ अशेषगुणपूर्णानिमुख्यरूपाणिपंचच॥ तद्दासाःपंचचान्येऽपिप्राणाद्याःसद्गुणैर्युताइतिश्रुतेः ॥ दासानुपक्रम्यसद्गुणत्वोक्तेर्नश्रुतेर्मुख्यप्राणविषयत्व म्॥अतःश्रुत्यविरोधेनप्राणादिस्वरूपसिद्धेर्युक्तोजगत्कारणेब्रह्मणिश्रुतिसमन्वयइतिसिद्धम्॥१३॥अ. ८॥

अत्रेश्वरेजगत्कारणश्रुतिसमन्वयसिद्ध्यर्थंमुख्यप्राणपरिमाणविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ जगत्कारणत्वसिद्ध्येहरावुक्तःश्रुतिसमन्वयः ॥ मुख्यप्राणपरिमाणविषयश्रुतीनांविरोधेनाप्रामाण्येऽयुक्तःस्यादितिसनिराकार्यः ॥ प्रकृतोमुख्यप्राणएवविषयः ॥ व्याप्तोऽणुर्वेतिसंदेहः ॥ संदेहबीजंश्रुतिविरोधंदर्शयन्पूर्वपक्षंचसूचयति॥ प्राणएवेति ॥ सर्वंसर्वसत्ताप्रदः ॥ अन्यथाव्याप्त्यभावेऽसौनधारयेत् ॥

प्राणएवाधस्तात्प्राणउपरिष्टात्प्राणोमध्यतःप्राणःसर्वतःप्राणएवेदंसर्वमितिप्राणस्य व्याप्तिःप्रतीयते ॥ यतःसर्वंजगद्व्याप्यतिष्ठतिप्राणएवतु ॥ अतोधृतंजगत्सर्वमन्यथाकेनधार्यतइतियुक्तिर्वायुप्रोक्ते॥ अणुर्नैतत्सृज्यतेअणुर्नैतद्धार्यते अणौलयमभ्युपैतिप्राणोवाअणुःप्राणैर्ह्येतद्भवतीतिचसौत्रायणश्रुतिः ॥

तथा नधार्यतइत्यर्थः॥ श्रुतिरणुत्वंवक्तीतिशेषः ॥ व्याप्तएवमुख्यप्राणः ॥ प्राणएवाधस्तादितिश्रुतेः ॥ नचाणुत्वेऽपिश्रुतिरस्तीतितद्विरोधः ॥ सर्वजगद्धारकत्वयुक्तियुक्तत्वाद्व्याप्तिश्रुतेः ॥ तथाचश्रुतिः ॥ महान्वैमुख्यप्राणोयेनव्याप्तंचराचरमिति ॥ समस्कंधगतोलोकान्योबिभर्तिमहाबलइतिचहरिवंशे॥ अतःप्रबलश्रुतिविरोधादप्रमाणमणुत्वश्रुतिरितिसमन्वयेनहरेर्जगत्कारणत्वसिद्धिरितिभावः ॥ सिद्धांतयत्सूत्रमवतार

यति ॥ अतइति ॥ अणुरेवमुख्यप्राणः॥ नचश्रुत्यादिविरोधः॥यतोऽसौबहिर्देहाद्वर्तमानेनमुख्यरूपेणव्या
प्तश्चेतिसूत्रार्थः ॥ कुतोऽयंविशेषइत्यतआह ॥ सइति ॥ प्राणश्चमुख्यएवेतिज्ञापनायवाक्यशेषोद्धारः ॥
नचेदंश्रुतिमात्रंसयुक्तिकश्रुतिबाधनायनालमितिवाच्यम् ॥ विशेषश्रुतित्वात् ॥ नाडीसंचारित्वयुक्तेश्च ॥
अणुर्वैमुख्यप्राणोयउत्क्रामतिनाडीभिरितिश्रुतेः ॥ अतःश्रुत्यविरोधेनमुख्यप्राणस्याणुत्वसिद्धेर्युक्तोजग

अतआह ॥ सवाएषप्राणोऽणुर्महान्नामांतर्वाअणुर्बहिर्महान्प्राणोवाईशितव्येशईशोह्यसौसर्व

## ॥ॐ अणुश्च ॐ ॥१४॥

स्येशितव्यश्चपरस्येतिकौंडिन्यश्रुतिः ॥ १४ ॥ अ॰ १ ॥ करणत्वंप्राणानामुक्तम् ॥

त्कारणेब्रह्मणिश्रुतिसमन्वयइतिसिद्धम् ॥ १४ ॥ अ॰ ॥ १ ॥ अत्रजगत्कारणेनारायणेश्रुतिसमन्वयसि
द्ध्यर्थमिंद्रियविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः ॥ श्रुतिसमन्वयेनोक्तंहरेर्जगत्कारणत्वमिंद्रि
यविषयश्रुतीनांविरोधेनाप्राप्त्येऽयुक्तंस्यादितिनिरसनीयोऽसौ ॥ अधिकरणसंगतिंदर्शयति ॥ करणत्व
मिति ॥ करणत्वाच्चेतिचशब्देनेंद्रियाणांकरणत्वमुक्तम् ॥ तान्येवविषयः ॥ किंजीवकरणान्युतब्रह्मक

रणानीतिसंदेहः ॥ संदेहबीजंश्रुतिविगानंदर्शयन्पूर्वपक्षंसूचयति ॥ जीवस्येति ॥ श्रुतौब्रह्मकरणत्वंप्रतीय तइतिशेषः ॥ जीवकरणानींद्रियाणि ॥ जीवस्यकरणान्याहुःप्राणानितिश्रुतेः ॥ नचश्रुत्यंतरविरोधः ॥ जीववशत्वेनप्राणानांदृश्यमानत्वयुक्तियुक्तत्वेनजीवकरणत्वश्रुतेःप्राबल्यात् ॥ अनुभूयतेखलुस्वाधीन त्वमिंद्रियाणाम् ॥ अतःप्रबलश्रुतिविरोधाद्ब्रह्मकरणत्वश्रुतिरप्रमाणमेवेतिनश्रुतिसमन्वयेनविष्णोर्जगत्का

जीवस्यकरणान्याहुःप्राणानेतांस्तुसर्वशः ॥ यस्मात्तद्वशगाएतेदृश्यंतेसर्वदेहिष्वितिसौत्रायणश्रु तौसयुक्तिकंजीवकरणत्वंप्रतीयते ॥ ब्रह्मणोवाएतानिकरणानिचक्षुःश्रोत्रंमनोवागिति ॥ तद्योतैः

## ॥ॐ ज्योतिराद्यधिष्ठानंतुतदामननात् ॐ ॥ १५ ॥

कारयतीतिचकाषायणश्रुतौ ॥ अतआह ॥ यज्ज्योतिराद्यधिष्ठानंब्रह्मतदेवैतैःकरणैःप्रवर्तयति ॥ यःप्राणेतिष्ठन्नित्यादितदामननात् ॥ १५ ॥

रणत्वसिद्धिरितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ ब्रह्मैवचक्षुरादिभिःकरणैर्दर्शनादि कारयतिनपुनर्जीवकारणानि ॥ ब्रह्मणएवतेजःप्रभृतिभूतप्रेरकत्वेनतदंशभूतानामपिचक्षुरादीनांब्रह्मप्रयो ज्यत्वस्यैवोपपत्तेः ॥ सर्वप्राणप्रेरकमुख्यप्राणप्रेरकत्वश्रुतेर्यश्चक्षुषितिष्ठन्नित्यादिश्रुतेश्चेतिभावः ॥ चक्षुरा दिवदितिप्रकृतत्वाज्ज्योतिरादिग्रहणम् ॥ १५ ॥

यदिप्राणानांब्रह्मकरणत्वंकथंतर्हिजीवकरणत्वश्रुतिरुपपद्येत किंतुब्रह्मकरणत्वस्यविरोधएवेत्याशंक्यतत्प
रिहारत्वेनसूत्रमवतार्यव्याचष्टे ॥ कथमिति ॥ ब्रह्मकरणत्वांगीकारेऽपिप्राणानांनजीवकरणत्वश्रुतिविरो
धः ॥ स्वकरणैरेवप्राणैर्ब्रह्मजीवेनदर्शनादिकारयतीत्येतदर्थत्वोपपत्तेर्जीवकरणत्ववाक्यस्यब्रह्मेंद्रियैर्जीवे
नदर्शनादिकारयतीत्येतच्चश्रुतिसिद्धमितिभावः ॥ स्तुतिरस्तुतिरितिस्वातंत्र्येणप्रवृत्तियुक्तस्तद्विहीनश्च ॥

कथंजीवकरणत्वश्रुतिरित्यतोवक्ति ॥ जीवेनैवस्वकरणैःकारयतिपरमात्माऽतोनविरोधः ॥ एषह्य
नेनात्मनाचक्षुषादर्शयतिश्रोत्रेणश्रावयतिमनसामनयतिबुद्ध्याबोधयतितस्मादेतावाहुःस्तुतिरस्तुति

## ॥ ॐ प्राणवताशब्दात् ॐ ॥ १६ ॥

रितीतिभाल्लवेयश्रुतिः ॥ करणैःकरणंब्रह्मपुरुषापेक्षयाऽखिलम् ॥ श्रोत्रादिभिःकारयतिकरणानी
त्यतोविदुः ॥ नजीवापेक्षयामुख्यंकारयेत्परमेश्वरः ॥ केवलात्मेच्छयातस्मान्मुख्यत्वंतस्यनिश्चि
तमितिवाराहे ॥ १६ ॥

अस्तुब्रह्मजीवेनचक्षुरादिनादर्शनादिकारयतीतितथापिजीवकरणत्वश्रुतिस्तदर्थेत्येतत्कुतइत्यतआह ॥
करणैरिति ॥ करणानिजीवस्य ॥ यद्येतानिब्रह्मणस्तर्हिमुख्यप्राणस्याप्येतत्संभवतीत्यकरणत्वहेतुनाप्राण
एवाकरणस्तस्मान्मुख्यइत्युक्तं मुख्यत्वंविरुद्धंस्यादिंद्रियाणांजीवकरणत्वेतदुपपत्तिरित्यतआह ॥ नेति॥
जीवापेक्षयाब्रह्मकरणत्वंतत्रविवक्षितमितिभावः ॥ मुख्यंमुख्यप्राणम् ॥ १६ ॥

एवमस्वतंत्रकर्तुः करणान्यन्याधीनान्यपिसाधनत्वात्तत्करणानीत्युच्यंते यथापरकीयकुठारेणापिवृश्चतो
ऽसौतत्करणमुच्यतइत्येकमर्थंजीवकरणत्वश्रुतेरुक्तार्थांतरप्रतिपादकंचसूत्रंपठित्वाव्याचष्टे॥ तस्यचेति ॥
प्राणानांब्रह्मकरणत्वेऽपियुज्यतेजीवकरणत्वश्रुतिः ॥ जीवकरणसंबंधस्यानादिनित्यत्वात् ॥ परकीयेबहु
कालसंबंधिन्युपचारतस्तदीयत्वव्यवहारदर्शनादितिभावः ॥ एतेनानुभवोप्याभिमानिकतयाव्याख्यातः॥
अनादिसंबंधनिधनोऽयंव्यवहारःश्रौतइति ॥ कुतएतदित्यतआह ॥ अथेति ॥ अवियोगीनिजीवेनेतिशे

अनादिनित्यत्वाज्जीवकरणसंबंधस्ययुज्यतेतत्करणत्वश्रुतिः ॥ अथावियोगीनिकरणैर्वा

॥ ॐ तस्यचनित्यत्वात् ॐ ॥१७॥

वनवियुज्यतेदेहेनैववियुज्यतइत्येतद्भावकरणानांकरणत्वंयद्भावनवियुज्यतइतिगौणवत्श्रु
तिः ॥ चशब्दःकरणसंबंधग्राही ॥ १७ ॥ अ० १० ॥

षः ॥ करणानांकरणत्वमिंद्रियाणांजीवकरणत्वव्यवहारेनिमित्तमित्यर्थः ॥ प्राणवतेतिजीवस्यप्रकृतत्वा
दत्रतत्परामर्शोयुक्तोतःकथमुच्यतेसंबंधस्येत्यतआह ॥ चशब्दइति ॥ तच्छब्देनजीवपरामर्शेऽपिचश
ब्देनप्राणवत्पदसन्निधापिताःप्राणाःप्राणसंबंधश्चसमुच्चीयंते ॥ नहिप्राणान्प्राणवत्त्वंचविनाप्राणवान्भव
ति ॥ अतोयुक्तेयंव्याख्येतिभावः ॥ संबंधिनोरभावेसंबंधाभावात्तदुक्तिः ॥ तस्माच्छ्रुत्यविरोधेनप्राणानां
ब्रह्मकरणत्वसिद्धेर्युक्तोजगत्कारणेहरौश्रुतिसमन्वयइतिसिद्धम् ॥ १७ ॥ अ०॥१०॥

अत्रजगत्कारणेहरौश्रुतिसमन्वयसिद्ध्यर्थंप्राणविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः॥ विष्णौज
गत्कारणेकथितःश्रुतिसमन्वयःप्राणविषयश्रुतीनांविरोधेनाप्रामाण्येनसेत्स्यतीत्यसौनिराकर्तव्यः॥तत्रसंश
यबीजंश्रुतिविगानंदर्शयन्विषयसंशयपूर्वपक्षांश्चसूचयति॥ अथेति ॥ प्राक्प्रकृतमिंद्रियत्वमत्रविषयः ॥
तत्काचिच्छ्रुतिःप्राणशब्दवाच्यानांत्रयोदशानामपिवक्ति॥ सामान्येनोक्तत्वात् ॥ सामान्यवचनस्यचसर्व
गामित्वात् ॥ अन्याश्रुतिर्द्वादशानामेवतद्वक्ति॥ अतोविप्रतिपत्तेःसंशयः ॥ किंसर्वेषांप्राणानामिंद्रियत्वमु

अथेंद्रियाणिप्राणावाइंद्रियाणिप्राणाहीदंद्रवंतीतिसयुक्तिकपैत्रायणश्रुतिःसामान्येनप्रा
णानामिंद्रियत्वंवक्ति ॥ द्वादशैवेंद्रियाण्याहुर्मनोबुद्धीतुद्वादशेइतिचकाषायणश्रुतिः ॥

तैकस्यनिवार्यंद्वादशानामेवेति ॥ सर्वेऽपिप्राणाइंद्रियाणि ॥ प्राणावाइंद्रियाणीतिश्रुतेः ॥ नचसामान्यश्रु
तित्वाद्विशेषश्रुत्येतरयाबाधः ॥ इदंद्रवणयुक्तियुक्तत्वात् ॥ अस्तिखलुसर्वेषांप्राणानामिदंद्रवणमिति ॥
अयुक्तंचद्वादशानामेवेंद्रियत्वग्रहणम् ॥ अन्यतमनिवारणस्याशक्यत्वात् ॥ मुख्यप्राणेनेंद्रियत्वमितिचे
न्न ॥ तथात्वेचक्षुषोऽनिंद्रियत्वंकिंनस्यात् ॥ नहिमुख्यप्राणचक्षुषोःकश्चनविशेषोस्तियेनमुख्यप्राणोनें
द्रियंचक्षुरिंद्रियमितिनिश्चिनुमः॥ उभयोरीशवशत्वाविशेषात् ॥ प्रातिस्विकविशेषाणांतुश्रोत्रादिष्वपिसा

म्यात् ॥ चक्षुरादिष्वप्येवंद्रष्टव्यम् ॥ अतोयुक्तियुक्ताद्यश्रुतिविरोधात्द्वितीयाऽप्रमाणमेवेतिजगत्कारणे ब्रह्मणिश्रुतिसमन्वयोऽयुक्तइतिभावः ॥ द्वादशेएकादशद्वादशे ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइ

अतःकस्येंद्रियत्वंनिवार्यमिति ॥ अतोवक्ति ॥ मुख्यप्राणमृतेतएवेंद्रियाणि ॥ द्वादशैवें द्रियाण्याहुःप्राणोमुख्यस्त्वनिंद्रियम् ॥ द्रवतामिंद्रियाणांहिनियंताप्राणएकराडितिपौत्रा

## ॥ ॐ तइंद्रियाणितद्व्यपदेशादन्यत्रश्रेष्ठात् ॐ ॥ १८ ॥

यणश्रुतिः ॥ श्रोत्रादीनितुपंचैवतथावागादिपंचकम् ॥ मनोबुद्धिसहायानिद्वादशैवेंद्रियाणितु ॥ विषयद्रवणात्तेषामिंद्रियत्वमुदाहृतम् ॥ तेषांनियामकःप्राणःस्थितएवाखिलप्रभुरितिबृहत्संहितायाम् ॥ १८ ॥

ति॥ नतेसर्वेप्राणाइंद्रियाणिकिंतर्ह्येकमृतेद्वादशैवतत्रचमुख्यप्राणमृतेऽन्येप्राणाइंद्रियाणिनमुख्यस्तथाविशेषश्रुतेरितिभावः ॥ इदंद्रवणवतस्तस्यकथमिंद्रियत्वंनास्तीत्यतउक्तम् ॥ द्रवतामिति ॥ अत्रैवस्मृतिमाह ॥ श्रोत्रादीनीति ॥ १८ ॥

यदिमुख्यप्राणोनेंद्रियंतर्हिचक्षुरपिनस्याद्विशेषाभावादित्याशंकांपरिहरत्सूत्रमुपन्यस्यतदुपात्तश्रुतिमेवो दाहरति ॥ भेदेति ॥ नमुख्यप्राणस्यचक्षुरादीनांचाविशेषोमंतव्योयेनतस्यविशिष्यानिंद्रियत्वोक्तिविरो धः॥ मुख्यप्राणस्यसर्वकर्तृंकारयितृत्वेनेश्वरसाम्यस्यान्येषांचतदभावस्यश्रुतत्वादितिभावः ॥१९॥ नन्व

स्थितएवहीदंमुख्यप्राणःकरोतिकारयतिबलतिबालयतिधत्तेधारयतिप्रभुंवाएनमाहुरथें द्रियाणिनस्थितानिनकुर्वंतिनकारयंतिनबलंतिनबालयंतिनधत्तेनधारयंतितानिहवाएता

## ॥ ॐ भेदश्रुतेः ॐ ॥ १९ ॥

## ॥ ॐ वैलक्षण्याच्च ॐ ॥ २० ॥

न्यबलानितस्मादाहुरिंद्रियाणिकरणानीतिपौत्रायणश्रुतेः ॥१९॥ पुरुषापेक्षयाप्रवृत्तिरिं द्रियाणांदृश्यतेनमुख्यस्य॥ प्राणाग्नयएवैतस्मिन्पुरेजाग्रतीतिचश्रुतेः ॥२०॥ अ० ११॥

यंमुख्यप्राणःपरमात्मवशोनवा ॥ आद्येनतस्यैवानिंद्रियत्वसिद्धिरीश्वरवशत्वसाम्यात् अवांतरवैलक्षण्य स्यान्यत्रापिसंभवात् द्वितीयेप्रागुक्तविरोधः इत्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ वैलक्षण्याच्चेति ॥ भवेदीशवशःप्राणस्तथाऽपिनोक्तविरोधः॥ ईशाधीनत्वेऽपिवैलक्षण्यात्॥ईश्वरपरवशाहींद्रियाणांप्रवृत्ति जीवप्रयत्नापेक्षैव जाग्रत्येवभावेनसुषुप्तावभावेनचतथादर्शनात्॥मुख्यप्राणस्यहिकेवलेश्वरेच्छाधीनैवप्र

वृत्तिर्नजीवापेक्षेतिभावः ॥ मुख्यप्राणस्यप्रवृत्तिर्नपुरुषप्रयत्नापेक्षयेत्येतत्कुतइत्यतश्चशब्दसूचितांश्रुतिंप
ठति॥प्राणेति॥एषपुरुषोनशृणोतिनपश्यतिनजिघ्रतिनरसयतेनस्पृशतेनाभिवदतेनादत्तेनानंदयतेनविसृजते
नयापयतेस्वपितीत्याचक्षतइतींद्रियाणांसुप्तौप्रवृत्त्यभावमभिधायप्राणाग्नयइतिमुख्यप्राणरूपाणांपुरुष
प्रयत्नानपेक्षाभगवदधीनाप्रवृत्तिरुच्यते ॥ नहिसुषुप्तस्यप्रयत्नोऽस्ति ॥ अतःश्रुत्यविरोधेनमुख्यप्राणस्या

विरिंचोवाइदंविरेचयतिविदधातिब्रह्मावावविरिंचएतस्माद्धीमेरूपनामनीतिगौपवन
श्रुतिः ॥ यस्माद्विरेचयेत्सर्वंविरिंचस्तेनभण्यते ॥ एकोहिकर्ताजगतोब्रह्मैवचचतुर्मु
खइतिचयुक्तिर्ब्राह्मे॥ अथकस्मादुच्यतेपरमइतिपरमाद्ध्येतेनामरूपेव्याक्रियेतेतस्मा
देनमाहुःपरमइति ॥ अथकस्मादुच्यतेब्रह्मेतिबृहत्वाद्बृंहणत्वाच्चेत्याग्निवेश्यश्रुतिः ॥

निंद्रियत्वसिद्धेर्युक्तोजगत्कारणेविष्णौश्रुतिसमन्वयइतिसिद्धम् ॥२०॥ अ०॥११॥ अत्रजगत्कारणेब्रह्म
णिश्रुतिसमन्वयसिद्ध्यर्थंशरीरादिविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः॥जगत्कारणेहरावुक्तःश्रु
तिसमन्वयःशरीरादिविषयश्रुतीनांविरोधेनाप्रामाण्येनसिध्येदित्यसाववश्यंनिरसनीयः॥ तत्रेंद्रियादीनामा
श्रयःशरीरंतत्प्रसंगसंनिधापितंविषयः ॥ किंविरिंचसृष्टंपरमात्मसृष्टंवेतिसंदेहः॥ संदेहबीजंश्रुतिविगानंदर्श
यन्पूर्वपक्षंचसूचयति ॥ विरिंचइति ॥ विरेचयतीत्येतस्यैवव्याख्यानंविदधातीति ॥ नामरूपकर्तृत्वंपरम

त्वेहेतुरुच्यतेब्रह्मशब्दस्तुनिरुच्यतेश्रुतिर्विरिंचस्यविष्णोश्चनामरूपकर्तृत्वंवक्तीतिक्रमेणशेषः॥ विरिंचस्यै
वदेहादिकर्तृत्वम्॥ विरिंचोवाइदमितिश्रुतेः॥ नचश्रुत्यंतरविरोधः॥ विरिंचत्वयुक्तियुक्तत्वादाद्यश्रुतेः॥
नचस्रष्टिद्वारत्वेनश्रुत्याद्युपपत्तिरितिवाच्यम ॥ असंभवेहिमुख्यार्थस्यामुख्यार्थत्वंकल्प्यते ॥ नचविरिं
चेनामरूपात्मकदेहादिसृष्टिशक्तिर्नसंभवतियेनात्रश्रुत्यादेरमुख्यार्थत्वंकल्पयामः॥ अतःसयुक्तिकैतच्छ्रु
तिविरोधेनाप्रमाणमन्याश्रुतिस्तथाचनश्रुतिसमन्वयेनपरमात्मनोजगत्कारणत्वसिद्धिरितिभावः॥ सिद्धां

अतआह ॥ नामरूपकृद्भिःपरादेव॥ सर्वाणिरूपाणिविचित्यधीरोनामानिकृत्वाभिवदन्य

## ॥ ॐ संज्ञामूर्तिक्लृप्तिस्तुत्रिवृत्कुर्वतउपदेशात् ॐ ॥ २१ ॥

दास्तइतिश्रुतेः॥ त्रिवृत्कुर्वतइतिहेतुगर्भः॥ त्रिवृत्करणापेक्षत्वान्नामरूपयोः ॥

तयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ परमात्मनःसकाशादेवनामरूपात्मकदेहादिप्रपंचस्योत्पत्तिर्भव
तिसर्वाणिरूपाणीतिपुरुषसूक्तमंत्रोक्तत्वादितिभावः॥ यदितिलिंगविपर्यासः॥ नामरूपयोर्विरिंचस्रष्टत्वे
प्यस्तिश्रुतिरतःकथमयंनिश्चयइतितत्राह ॥ त्रिवृदिति ॥ विशेषणस्यहेतुगर्भत्वेननामरूपकर्तापरः ॥ पृ
थिव्यादिभूतत्रयस्यमिश्रीभावस्त्रिवृत्त्वंतत्कर्तृत्वादितियुक्तिरुक्ताभवति॥ तत्रत्रिवृत्कर्तृत्वेकुतोनामादिकर्तृ
त्वंहरेरित्यतआह ॥ त्रिवृदिति ॥ नामादिकरणंत्रिवृत्करणापेक्षम्त्रिवृत्करणमंतरेणरूपोपपत्त्यभावस्यवक्ष्य

माणत्वात्तदभावेनामानुपपत्तेः ॥ त्रिवृत्कर्तृत्वंचविष्णोरेवसेयंदेवतेमास्तिस्रोदेवताअनेनैवजीवेनात्मनानुप्र विश्यनामरूपेव्याकरोत्तासांत्रिवृतंत्रिवृतमेकैकामकरोदित्यादिश्रुतेः ॥ अतःसएवनामादिकर्तेतिभावः ॥ विरिंचत्वादियुक्तियुक्तेयमपिश्रुतिरित्यतस्तस्याःसावकाशत्वंस्मृत्यैवदर्शयति ॥ सर्वेति ॥ सर्वकर्तृत्वशक्ति

सर्वनाम्नांचरूपाणांव्यवहारेषुकेशवः ॥ एकएवयतःस्रष्टाब्रह्माद्यास्तदवांतराइतिच
पाद्मे ॥ त्रिवृत्क्रियायतोविष्णोरूपंचतदपेक्षया ॥ रूपापेक्षंतथानामव्यवहारस्तदा
त्मकः ॥ अतोनाम्नश्चरूपस्यव्यवहारस्यचैकराट् ॥ हरिरेवयतःकर्तापिताऽतोभगवा
न्प्रभुरितिचब्रह्मांडे ॥ २१ ॥ अ० १२ ॥

स्त्रिवृत्कर्तृत्वेनविष्णोरेवेतिसूत्रार्थेस्मृतिसंमतिंचाह ॥ त्रिवृदिति ॥ त्रिवृत्क्रियायतोविष्णोरतोनाम्नश्चेत्यन्व यः ॥ तदुपपादनंरूपमित्यादि॥हरिरेवकर्तायतश्चकर्ताऽतःपितेत्यर्थः॥अतःश्रुत्यविरोधेनशरीरस्यहरिकर्तृत्व सिद्धेर्युक्तंतस्यश्रुतिसमन्वयेनजगत्कारणत्वमितिसिद्धम् ॥ २१ ॥ अ० ॥१२॥

अत्रेश्वरेजगत्कारणेश्रुतिसमन्वयसिद्ध्यर्थंशरीरकारणविषयश्रुतिविरोधपरिहारादस्तिशास्त्रादिसंगतिः॥ जगत्कारणेहरावुक्तःश्रुतिसमन्वयोदेहकारणश्रुतीनांविरोधेनाप्रामाण्येऽनुपपन्नःप्राप्नोतीत्यवश्यमसौपरिहर्तव्यः॥प्रकृतोदेहएवात्रविषयः॥ किमाप्यःकिंवापार्थिवउततैजसोभूतत्रयात्मकोवेतिसंदेहः॥ लेशतःसंदेहबीजंदर्शयन्पूर्वपक्षंसूचयति॥ अद्भ्यइति॥ अद्भ्योहीदमितिप्रतिज्ञा॥आपइत्युपपादनम्॥आपएवेतिनिग

अद्भ्योहीदमुत्पद्यतेआपोवावमांसमस्थिचभवंत्यापःशरीरमापः॥ आपएवेदंसर्वमितिकौंडिन्यश्रुतिः॥ अम्मयंनुयतोमांसमतस्तृप्तिश्चमांसतइतिचभारते॥पृथिवींशरीरमप्येतिआकाशमात्मेतिच॥

मनम् श्रुतिराप्यत्वंशरीरस्यवक्तीतिशेषः॥ पृथिवींशरीरमप्येतीतिश्रुतिःशरीरस्यपार्थिवत्त्वमाह॥ कार्यस्यस्वकारणएवाप्ययनियमात्॥ आकाशंपरमात्मानम्॥तैजसत्वेपिश्रुतिःसोग्नेर्देवयोन्याआहुतिभ्यःसंभूयहिरण्यशरीरऊर्ध्वंस्वर्गलोकमेतीति॥भूतत्रयात्मकत्वंचश्रूयतेइमास्तिस्रोदेवताःपुरुषंप्राप्येत्यादौ॥आप्यमितितावत्प्राप्तम्॥ आपोवावमांसमितिश्रुतेः॥ नचश्रुत्यंतरविरोधः॥ मांसादौतृप्तिजनकत्वदर्शनेनाप्यत्वश्रुतेर्युक्तियुक्तत्वात्॥ अपांहितर्पकत्वंधर्मः॥पार्थिवमित्यपरःपक्षः पृथिवींशरीरमितिश्रुतेः॥ काठिन्यगं

धवत्वादियुक्तेश्च॥ तैजसमित्यन्यः॥ तथाश्रवणादौष्ण्यदर्शनाच्च ॥ सर्वथाश्रुतोपिनचतुर्थःपक्षोयुक्तः॥ शरीरेभूतानांमिश्रतायामभ्युपेतायामापःशरीरमित्यादिविशेषोक्त्ययोगान्मिश्रत्वादेव ॥ नहिबहुपुविद्यमानेषुकारणविशेषंविनाऽत्रदेवदत्तोऽपिविद्यतइतिविशेषोक्तिर्दृष्टा ॥ नचात्रकारणविशेषंपश्यामः॥ अतोविरोधेनकासांचिच्छ्रुतीनामप्रामाण्यान्नविष्णौजगत्कारणेश्रुतिसमन्वयोयुक्तइतिभावः ॥ सिद्धांतयत्सूत्रम

अतोब्रवीति ॥ यत्कठिनंसापृथिवीयद्द्रवंतदापोयदुष्णंतत्तेजइतिश्रुतेर्मां

॥ ॐ मांसादिभौमंयथाशब्दमितरयोश्च ॐ ॥ २२ ॥

साद्येवभौमंनसर्वशरीरम्॥ अप्तेजसोश्चकार्यंयथाशब्दमंगीकर्तव्यम्॥

वतार्यव्याचष्टे ॥ अतइति ॥ यच्छरीरेकठिनंमांसादितदेवपार्थिवंनसर्वशरीरंकिंतर्ह्यप्तेजसोश्चकार्यंशरीरेस्थिशोणितमज्जादीत्यंगीकार्यम्॥ यत्कठिनमितिश्रुतेः॥ एवमंगीकारस्यैवयथाशब्दत्वादितिभावः॥ अयंचैकपक्षप्रतिषेधः ॥ इतरावपिपक्षावेवंनिषेध्यौ ॥ ननुकथंमांसस्यपार्थिवत्वमुच्यते ॥ आपोवावमांसमितिश्रुतेर्युक्तेश्चेत्यतोवाऽऽह ॥ अप्तेजसोश्चेति ॥ नमांसादीनांकेवलपार्थिवादित्वंकिंनामतत्राप्तेजसोश्चकार्यमंगीक्रियते शब्दवशात्॥अतोमांसस्याऽऽप्यत्वोक्तिर्युक्तेतिभावः॥कोऽसौशब्दोयतोमांसादीनांनैकभूतका

र्यत्वमितितंदर्शयति॥यदिति॥ भूम्यादिभूतानांसतएवमिश्रत्वान्नैकभूतत्वंमांसादीनांसंभवतीतिविज्ञायते ॥ तस्मात्संभूतत्वान्मांसादीनामनेकभूतकार्यत्वात्तदपेक्षयाऽऽप्यत्वाद्युक्तिर्युक्तेत्युक्तार्थेस्मृतिसंमतिंचाह॥पंचेति॥२२॥यदिशरीरंनैकविधभूतप्रकृतिकंकथंतर्हिविशेषोक्तिरित्युक्तमाशंक्यतत्परिहारार्थंसूत्रमवतार्यव्या

यद्वावाथोविमिश्रमिश्राद्धोतद्भवतिमिश्राणिहिभूतानितस्मादेवैवमाचक्षतेभूतानीतिहिकाषायण

श्रुतिः ॥ पंचभूतात्मकंसर्वंतदप्येकविवक्षया ॥ एकभूतात्मकत्वेनव्यवहारस्तुवैदिके ॥ भौममि

त्येवकाठिन्याच्छौक्ल्यादौदकमित्यपि ॥ तेजिष्ठत्वात्तैजसंचयथास्थांवचनंश्रुताविविवायुप्रोक्ते

## ॥ ॐ वैशेष्यात्तुतद्वादस्तद्वादः ॐ ॥ २३ ॥

॥ २२ ॥ कथंतर्हिविशेषवचनमित्यतआह ॥ भूतानांतुविशेषसंयोगादेवविशेषव्यवहारः ॥ पा

र्थिवानांशरीराणमार्धेनपृथिवीस्मृता ॥ इतरेर्धेत्रिभागिन्यआपस्तेजस्तुभागतः ॥ इतिसामान्य

तोज्ञेयंभेदश्चप्रतिपूरुषम् ॥ स्वर्गस्थानांशरीराणामर्धंतेजउदाहृतमितिचब्रह्मसंहितायाम् ॥

चष्टे॥कथमिति॥ शरीरस्यानेकविधभूतप्रकृतित्वेऽपिनविशेषोक्तिविरोधः॥ तत्तद्भूतविशेषसंयोगापेक्षयात दुपपत्तेरितिभावः ॥ मांसादीनांविशेषोक्तेरप्ययमर्थोज्ञातव्यः ॥ शरीरेभूतानांविशेषसंयोगएवकुतस्तद्भावे चपुनर्विशेषोत्त्ययोगइत्यतआह ॥ पार्थिवानामिति ॥ पृथिवीस्थितानामित्यर्थः॥ अर्धंतेजइतरेर्धेत्रिभा

गिन्यआपःपृथिवीभागतः ॥ अन्येषामपोऽर्धंतइतरेऽर्धेत्रिभागिनीपृथिवीभागमात्रंतेजइतिद्रष्टव्यम् ॥ देहभेदेनविशेषस्योक्तत्वान्नोक्तदोषः ॥ द्विरुक्तेःप्रयोजनविशेषंप्रमाणविशेषेणदर्शयति ॥ सर्वेति ॥ अवधारणेअवधारणाथम् ॥ संपूर्णफलताशास्त्रस्योक्ताभवतीतिशेषः ॥ अतःश्रुत्यविरोधेनशरीरस्यपांचभौतिक

सर्वाध्यायार्थावधारणार्थाध्यायांतेद्विरुक्तिः ॥ गारुडेच ॥ अध्यायांतेद्विरुक्तिस्याद्वेदवावैदिकेपिवा ॥ विचारोयत्रसज्जेतपूर्वोक्तस्यावधारणे ॥ अनुक्तानांप्रमाणानांस्वीकारश्चकृतोभवेत् ॥ विनिंद्यचेतरान्मार्गान्संपूर्णफलतातथेतिच ॥ २२ ॥ अ० १२ ॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेद्वितीयाध्यायस्यचतुर्थःपादः ॥

त्वसिद्धेर्युक्तोजगत्कारणेनारायणेश्रुतिसमन्वयोनपुनस्तत्रविरोधगंधोऽपीतिसिद्धम् ॥२२ ॥ अ० १२ ॥
इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमद्ब्रह्मसूत्रभाष्यस्यटीकायांजयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायांद्वितीयाध्यायस्यचतुर्थःपादः ॥ ॥ श्रीकृष्णार्पणमस्तु ॥ ॥

इति श्रीमद्ब्रह्मसूत्रतद्भाष्यसहितायांतत्त्वप्रकाशिकायां

टीकायां द्वितीयाध्यायः समाप्तः

अथ श्रीमद्ब्रह्मसूत्रतद्भाष्यसहितायांतत्वप्रकाशिकायां

टीकायां तृतीयाध्यायः प्रारभ्यते.

श्रीवेदव्यासायनमः ॥ एतदध्यायप्रतिपाद्यंदर्शयति साधनेति ॥ अथातोब्रह्मजिज्ञासेतिसूत्रेसंक्षेपेणशा
स्त्रार्थेसूचितेकिंतद्ब्रह्मेतिशंकायांतत्स्वरूपंद्वितीयसूत्रेनिगदितंतदध्यायशेषेणसमर्थितम् तत्रविरोधाश्चद्वि
तीयेपरिहृताः एवंचेत्किमयाकार्यमित्याशंकायाम्अथब्रह्मजिज्ञासापदाभ्यांमोक्षसाधनानिविहितानि
तेषांसाधनानांअस्मिन्नध्यायेविचारोवर्तिष्यतइतिभावः ॥ प्रथमपादार्थंदर्शयति ॥ वैराग्येति ॥ भगवत्प्र
सादस्तावन्मोक्षसाधनम् सचतदपरोक्षज्ञानाद्भवति नचतदुभयंविधातुंशक्यम् पुरुषप्रयत्नागोचरत्वात्
अतोज्ञानसाधनंविधेयम् तच्चश्रवणमनननिदिध्यासनरूपाजिज्ञासैव जिज्ञासायांचभगवद्भक्तएवाधि

श्रीवेदव्यासायनमः ॥ साधनविचारोयमध्यायः ॥ वैराग्यार्थंगत्यादिनिरूपणाप्रथमपादे

भूतबंधोहिबंधः भूतबंधस्तुसंसारोमुक्तिस्तेभ्योविमोचनमितिवाराहे ॥

कारी अन्यस्यतदसंभवात् भगवद्भक्तिश्चमाहात्म्यश्रवणेनसंभवत्यपिवैराग्येणदृढाभवत्यतःसाधनेषुवै
राग्यमेवादावपेक्षितम् तदपिनपुरुषप्रयत्नविषयोतस्तदर्थंगत्यागतिस्वर्गनरकगर्भवासादिस्वरूपमत्रनिरू
प्यते गत्यादेःखलुदुःखस्वरूपतांश्रुत्वाभावयतोधिकारिणःस्वर्गादावपिरागोविच्छिद्यतइतिभावः अत्र
भगवत्प्राप्तिसाधनवैराग्यायजीवस्यभूतावियोगसमर्थनादस्तिशास्त्रादिसंगतिः यदाद्यसूत्रेमोक्षसाधनंभग
वत्प्रसादादिवैराग्यांतंसूचितम् तदयुक्तंस्यात्यदिजीवस्यभूतावियोगोनसाध्येतातःससाधनीयएव तत्सा

धनमेवविषयः मुमुक्षुणानुष्ठेयंनवेतिसंदेहः प्राचीनोक्तिरन्वयव्यतिरेकादर्शनंचसंदेहबीजम् पूर्वपक्षय ति ॥ भूतेति ॥ बंधनिवृत्त्यर्थंहिवैराग्यादिसाधनमिष्यते बंधोनामभूतसंबंधस्तद्विमोक्षएवबंधनिवृत्तिरि त्यर्थः कुतइत्यतआह ॥ भूतेति ॥ ततश्चकिमित्यतआह ॥ तच्चेति ॥ भूतविमोचनंमरणेभवतीत्येतत्कुत इत्यतआह ॥ भूतानामिति ॥ किंचातइत्यतआह ॥ अतइति ॥ यतोमरणमेवमोक्षः तच्चनियतत्वान्नसाध

तच्चमरणेभवति ॥ भूतानांविनिवृत्तिस्तुमरणंसमुदाहृतम् ॥ भूतानांसंप्रयोगश्चजनिरित्ये वपंडितैरितिभारते ॥ अतःकिंसाधनैरित्यतआह शरीरांतरप्रतिपत्तौभूतसपरिष्वक्तएवग

**॥ ॐ तदंतरप्रतिपत्तौरंहतिसंपरिष्वक्तःप्रश्ननिरूपणाभ्याम् ॐ ॥ १ ॥**

च्छति वेत्थयथापंचम्यामाहुतावापःपुरुषवचसोभवंति इतितुपंचम्यामाहुतावापःपुरुष वचसोभवंतीतिप्रश्नपरिहाराभ्याम् ॥ १ ॥

नसापेक्षम् अतोनवैराग्यादिसाधनेनकृत्यम् तथाचोक्तमप्ययुक्तंशास्त्रंचेदंव्यर्थमितिभावः सिद्धांतयत्सूत्र मवतार्यव्याचष्टे ॥ अतइति ॥ अपेक्षितमेवमोक्षार्थसाधनम् ॥ आत्मावाअरेद्रष्टव्यइत्यादौतद्विधानात् ॥ नचोक्तदोषः ॥ भूतविमोचनस्यमोक्षत्वेपिपूर्वशरीरंपरित्यज्यभूतसंपरिष्वक्तस्यैवगतेर्मरणेभूतवियोगस्यै वाभावात् ॥ नचवाच्यंभूतानांशरीरभोगान्प्रदायचरितार्थत्वाद्व्यर्थंजीवेनसहगमनमिति ॥ शरीरांतरप्रा

स्यर्थत्वादितिभावः ॥ कुतएतदित्यतआह वेत्थेति ॥ यथायेनक्रमेणयेनप्रकारेणचपंचम्यामाहुतौहु
तायामद्भिःसंपरिष्वक्तोजीवोलब्धदेहःपुरुषनामवान्भवतिकिंतक्रमंप्रकारंचवेत्थेतिश्वेतकेतुंप्रतिप्रवाहण
स्यप्रश्नात् तथाश्वेतकेतोःपरिहारासामर्थ्येतत्पित्रापृष्टस्यप्रवाहणस्यैवपरिहाराच्चजीवोभूतपरिष्वक्तएव
गच्छतीतिज्ञायतइतिभावः॥भूतयुक्तःपरंलोकमिमंलोकंचगच्छतीतिच ॥ अतोमरणमात्रेणमोक्षायोगाद
नुष्ठेयमेवसाधनमितिसार्थकमेवशास्त्रमितिसिद्धम् ॥ १ ॥ अत्रभगवत्प्राप्तिसाधनवैराग्यार्थंजीवस्यसमस्त

अप्शब्दस्तुत्र्यात्मकत्वात्तुयुज्यते ॥ भूयस्त्वाच्चापाम्

॥ ॐ त्र्यात्मकत्वात्तुभूयस्त्वात् ॐ ॥ २ ॥

तापापनोदोभूयस्त्वमंभसोवृत्तयस्त्विमाइतिभागवते ॥ २ ॥

भूतसंपरिष्वक्तस्यगतिसमर्थनादस्तिशास्त्रादिसंगतिः यदुक्तंनमरणमात्रेणमोक्षइति समस्तभूतानांजीवेन
सहगतावसाधितायांतदयुक्तंस्यादतःसासमर्थनीयैव प्रकृतभूतान्येवविषयः किंसर्वाणिजीवंपरिष्वज्यग
च्छंतिउतनेतिसंदेहः भूतसंपरिष्वक्तोरंहतीतिसाधारणवचनंसंदेहबीजम् आपएवगच्छंतिनसर्वाणीतिपूर्वः
पक्षः आपःपुरुषवचसोभवंतीतिप्रश्नव्याख्यानयोरपामेवगतिश्रवणात् अन्यथाभूतानीतिसामान्यप्रयो
गःस्यात् नत्वापइतिविशेषप्रयोगः अतोमृतस्यसमस्तभूतपरिष्वंगाभावादेकभूतस्यशरीरानारंभकत्वान्म

रणएवमोक्षसिद्धेर्व्यर्थंवैराग्यादीति एवंप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे त्र्यात्मकत्वादिति ॥ सर्वभूत
परिष्वक्तएवजीवोगच्छतिनाद्भिरेव ॥ नचैवंविशेषनामविरोधः अपांक्षितिसलिलानलात्मकत्वेनतद्ग्रहणे
नान्यभूतानामपिप्राप्तेः तासांत्रिवृतंत्रिवृतमेकैकामकरोत् मिश्राणिहिभूतानीतिश्रुतेरितिभावः ननुयद्या
पोभूतत्रयात्मिकाःकथंतर्हितत्रापूशब्दइत्यतआह ॥ भूयस्त्वादिति ॥ अप्शब्दोयुज्यतइतिसं[illegible]यः मिश्रत्वे
पितत्तद्भूतस्याधिक्येनतत्तद्व्यवहारइतिभावः ॥ नन्वपामिवभूतांतरस्यापिसर्वभूतात्मकत्वादपांग्रहणेकोवि

यत्रत्रावभूतानितत्रकरणानिनित्यानिहवाएतानिभूतानिचकरणानिचनैतानिकदाचि

## ॥ ॐ प्राणगतेश्च ॐ ॥ ३ ॥

द्वियुज्यंतेनचविलीयंतइतिभाल्लवेयश्रुतेः प्राणगतेर्भूतान्यपिसंतीतिसिद्धम् ॥ ३ ॥
शेषहेतुरित्यतोवाह ॥ भूयस्त्वादिति ॥ सर्वदेहेषुसंभूयभूतेजसोरप्यपांभूयस्त्वात्तद्ग्रहणंयुज्यतइतिभावः
अपांभूयस्त्वमेवकुतइत्यतआह ॥ तापेति ॥ यथाचसंभूयशरीरेष्वपांभूयस्त्वंतथोक्तमध्यायांते अतोस्ति
समस्तभूतानांजीवंपरिष्वज्यगमनमितिस्वाभाविकमरणेनमुक्त्यभावादनुष्ठेयंवैराग्यादीतिसिद्धम ॥ २ ॥
अत्रपुनःपरमात्मप्राप्तिसाधनवैराग्यसिद्ध्यर्थंजीवस्यभूतैःसहगतिसमर्थनादस्तिशास्त्रादिसंगतिः- भूतानां
जीवेनसहगत्यसमर्थनेमरणस्यैवमुक्तित्वप्राप्तेःसासमर्थनीया प्रकृतभूतान्येवविषयः किंजीवेनसहगच्छं

तिनवेतिसंदेहः उभयथासंभवःसंदेहबीजम् नगच्छंतीतिपूर्वःपक्षः भूतानिजीवेनसहगच्छंतीतिविशेषप्र
माणाभावात् नचप्रश्नव्याख्यानेविशेषप्रमाणम् तयोरपिभूतैःसहगमनस्यानुक्तत्वात् आर्थिककल्पना
याश्चविशेषप्रमाणमंतरेणासंभवात् एवंचस्वाभाविकमरणमेवमुक्तिरिति अतःकिंकृत्यंवैराग्यादिभिः
इतिप्राप्तेसिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ प्राणेति ॥ गच्छंत्येव भूतानिसहजीवेनविशेषप्रमाणस्यानु
मानस्यविद्यमानत्वात् अस्तितावद्भूतानांचेंद्रियाणांचाविनाभावः ॥ यत्रवावभूतानीतिश्रुतेः॥प्राणानांचा
स्तिजीवेनसहगतिः ॥ करणैर्वाविनवियुज्यतइतिश्रुतेः॥अतःप्राणगतेस्तदविनाभूतभूतानांचास्तिजीवेनसह
गतिरितिज्ञायतइतिभावः॥चशब्दोभूताविनाभावार्थः ॥ अत्रैवंप्रयोगोभवति भूतानिजीवेनसहगमनवंति
तत्सहगंतृप्राणाविनाभूतत्वात् यद्यनेनसहगंत्रविनाभूतंतत्तेनसहगच्छति यथाराज्ञासहगंत्रमात्याविनाभूत
भृत्यइति॥अतःसमस्तभूतानांजीवपरिष्वंगसिद्धेर्नमरणमात्रेणमोक्षोतोपेक्षितंवैराग्यादीतिसिद्धम् ॥ २ ॥
अत्रभगवत्प्राप्तिसाधनवैराग्यायप्राणानांजीवेनसहगतिसमर्थनादस्तिशास्त्रादिसंगतिः प्राणगत्यासमर्थि
ताभूतगतिःप्राणगत्यभावेनस्यादतःसासमर्थनीया प्रकृतप्राणाएवविषयः जीवेनसहगच्छंतिनवेतिसंदे
हः अनिर्णयःसंदेहबीजम् सूत्रएवपूर्वपक्षस्योक्तत्वात्तदुपन्यस्यपूर्वपक्षांशंतावद्व्याचष्टे ॥ अग्नीति॥ नप्रा ॥ ३ ॥
णाजीवेनसहगच्छंति यत्रास्यपुरुषस्यमृतस्याग्निंवागप्येतिवातंप्राणश्चक्षुरादित्यंमनश्चंद्रमसंदिशःश्रोत्र

मितिप्राणानामग्न्यादीन्प्रतिगतिश्रुतेः ॥ तथाचप्राणानांजीवेनसहगत्यभावेभूतानामपितद्भावान्मरणमेव मोक्षोऽतःसाधनवैयर्थ्यमितिभावः ॥ सिद्धांतांशंव्याचष्टे ॥ नेति ॥ नैतच्छ्रुतिबलेनप्राणानांजीवेनसहगतिर्व क्तव्या प्राणानांभागेनाग्न्यादीन्प्रतिगतेर्विद्यमानत्वेनश्रुतेस्तद्विषयत्वादितिभावः कुतोऽयंविशेषइत्यत आह॥पुरुषस्येति॥ एवंप्रतिमरणंभागापगमेकालतःसर्वापगमःस्यात्तथाचसर्वभूतापगमइत्यतआह ॥ पुन

यत्रास्यपुरुषस्यमृतस्याग्निंवागप्येतिवातंप्राणइतिश्रुतेर्नप्राणानांजीवेनसहगतिरितिचेन्न

भागतोऽग्न्यादिप्राप्तेः पुरुषस्यमृतौब्रह्मन्प्राणाभागतएवतु अधिदैवंप्रायुवंतिभागतोनुव्रजं

## ॥ ॐ अग्न्यादिगतिश्रुतेरितिचेन्नभाक्तत्वात् ॐ ॥ ४ ॥

तितम् पुनःशरीरसंप्राप्तौतमेवानुविशंतिचेतिब्राह्मे ॥ ब्रह्मांडेच मृतिकालेजहत्येनंप्राणा

भूतानिपंचच भागतोभागतस्त्वेनमनुगच्छंतिसर्वशइति ॥ ४ ॥

रिति ॥ ननुभागतोऽग्न्यादीन्प्रतिगच्छद्भिःप्राणैःसहभूतानांगतिरस्तिनवा अस्तिचेन्नजीवेनसहगतिः नचेदवि नाभावाभावइत्यतआह ॥ ब्रह्मांडेचेति ॥ अनेनभूतानांविनिवृत्तिरितिवाक्यंचव्याख्यातंभवति अतो स्तिप्राणानांजीवेनसहगतिस्ततोभूतानामपीतिनमरणमेवमोक्षोऽतोनुष्ठेयंसाधनमितिसिद्धम् ॥ ४ ॥ अ पुनर्भगवत्प्राप्तिसाधनवैराग्यायभूतानांजीवेनसहगतिसमर्थनादस्तिशास्त्रादिसंगतिः भूतानांजीवेनसहग

त्यभावेमरणस्योक्तोमोक्षत्वाभावोनस्यादतस्तत्समर्थनमावश्यकम् भूतान्येवविषयः किंजीवेनसहगच्छं
तिनवेतिसंदेहः उभयविधवस्तुदर्शनंसंदेहबीजम् पूर्वपक्षस्यसूत्रएवोक्तत्वात्तत्पठित्वापूर्वपक्षांशंतावद्व्याच
ष्टे ॥ प्रथमइति ॥ नजीवेनसहगतिर्भूतानांतस्मिन्नेतस्मिन्नग्नौदेवाःश्रद्धांजुह्वतीत्युक्तांतस्यश्रद्धयेष्टवतःश्र
द्धासहितस्यैवद्युव्याख्येप्रथमाग्नौहोमश्रवणात् भूतानामपिसहगतावुपक्रमेतथोक्तिप्रसंगात् अतोभूतानां
सहगत्यभावेनमरणस्यैवमोक्षत्वात्व्यर्थंवैराग्यादीतिभावः॥सिद्धांतांशंव्याचष्टे॥नेति॥प्रथमाग्नौभूतसहि
तस्मिन्नेतस्मिन्नग्नौदेवाःश्रद्धांजुह्वतीतिप्रथमाग्नौश्रूयतेनभूतानिजुह्वतीति अतोनेतिचेन्न ताएवप्र

## ॥ ॐ प्रथमेऽश्रवणादितिचेन्नताएवह्युपपत्तेः ॐ ॥५॥

स्तुताआपःश्रद्धारूपेणहूयंते इतितुपंचम्यामाहुतावापःपुरुषवचसोभवंतीत्युपसंहारोपपत्तेः॥५॥
तस्यहोमाश्रवणान्नभूतानामसहगतिःकल्पनीया यतःप्रथमाग्नावप्यापोहोम्यतयाश्रूयंतेश्रद्धाशब्दार्थरू
पतया अयंखलुशब्दोऽजहल्लक्षणयाश्रद्धयाद्भिश्चयुक्तंजीवमाह तत्कुतः उपसंहारेऽपांजीवेनसहगतिश्र
वणात् तदनुसारेणैवमुपक्रमार्थकल्पनेतदुपपत्तेःअन्यथाविरोधेनाप्रामाण्यप्रसंगादितिभावः॥ नचागमन
मात्रविषयत्वमुपसंहारस्यवाच्यम् भूतानित्यजंतीत्यनुक्त्वासोमोराजासंभवतीत्यादिवदापोभवंतीतिचानु
क्त्वापःपुरुषवचसइत्यनुवादात् तथाप्युपसंहारानुसारित्वमुपक्रमस्य कुतः उपसंहारस्योपक्रमव्याख्या

नरूपत्वेनप्राबल्यादुपक्रमप्रामाण्योपपत्त्यर्थमुपसंहारानुसारित्वस्यावश्यकत्वात् व्याख्यानानुसारिव्या
ख्येयस्यतदर्थैप्रामाण्यदर्शनात् नचवाच्यमुपक्रमपूर्वकत्वादुपसंहारस्यनप्राबल्यमिति स्वरूपेणोपसंहा
रस्योपक्रमसापेक्षत्वेप्यर्थप्रतीतौवैपरीत्यादिति अतोभूतानांजीवनसहगतिसद्भावान्मरणस्यमुक्तित्वाभा
वेनापेक्षितंवैराग्यादिसाधनमितिसिद्धम् ॥५॥ अत्रपुनर्भगवत्प्राप्तिसाधनंवैराग्यायजीवस्यभूतैःसहगति
समर्थनादस्तिशास्त्रादिसंगतिः मरणमात्रंनमुक्तिरित्युक्तंभूतानांजीवेनसहगत्यभावेऽयुक्तंस्यादतोसौसमर्थ

अग्न्यादिगतिःप्रत्यक्षतःश्रूयते अतःप्रत्यक्षश्रवणान्नयुक्तमितिचेन्न अथैनंयजमानंकिंनजहाति

## ॥ॐ अश्रुतत्वादितिचेन्नेष्टादिकारिणांप्रतीतेः ॐ॥ ६ ॥

भूतान्येवभूतैरेवगच्छतिभूतैर्भुंक्तेभूतैरुत्पद्यतेभूतैश्चरतिभूतैर्विचरतीतिकौऽरव्यश्रुतौप्रतीतेः ॥ ६॥
नीयः प्रकृतभूतान्येवविषयः जीवेनसहगच्छंतिनवेतिसंदेहः पूर्वोक्तमेवसंदेहबीजम् पृथक्पृथक्विचार
त्वात्संदेहानुत्पादोनमंतव्यः पूर्वपक्षस्यसूत्रएवोक्तत्वात्तदुपन्यस्यपूर्वपक्षाशंतांवद्याचष्टे॥अश्रुतत्वादिति ॥
नभूतानांजीवेनसहगमनंयुक्तम् तथाश्रुत्यभावात् नचवाच्यमपांप्राणानांचश्रूयतेसहगतिरतोऽर्थाद्भूतानाम
प्यस्तीति यथाखलुप्राणानामग्न्यादिगतिःसाक्षाच्छ्रूयेततथाश्रुत्यभावात् आर्थिकश्रवणादपिनियमेनप्र
त्यक्षश्रुत्यभावस्यबलवत्वात् सतिहिविशेषश्रवणेवैदिकार्थैयुक्त्योपिप्रवर्तंते अतोत्रप्राणानामग्न्यादिगति

वद्भूतानांजीवेनसहगतेःप्रत्यक्षाश्रवणादभावस्ततोमरणस्यैवमुक्तित्वान्नवैराग्यादिनाकृत्यमितिभावः॥ अ
तःशब्दस्तथार्थे तेनयथेत्यादौसिद्धांति हेत्वर्थेच अतःशब्दस्तुहेत्वर्थेतथेत्यर्थेचवर्तते ॥ उभयार्थेचभवति
यथाशब्दविदोविदुरितिवचनात् सिद्धांतांशंव्याचष्टे।नेति ॥ नप्रत्यक्षाश्रवणादसहगतिर्भूतानाम् आर्थिक
श्रवणस्याप्यश्रवणबाधकत्वात् नहिकदन्नभुजोऽनशित्वंभवति युक्तेरपिव्याप्तिलिंगग्राहकप्रमाणेनैवभ
वितव्यम् तच्चास्ति यदाचैवमार्थिकश्रवणमश्रवणबाधेनाभीष्टसिद्धौभवति तदासुतरामथेनमित्यादिविशेष
श्रवणमितिभावः॥ अतोऽस्त्येवभूतानांजीवेनसहगतिरितिमरणेमोक्षाभावादनुष्ठेयमेवतदर्थंवैराग्यादिसाध
नमितिसिद्धम् ॥६॥ अत्रभगवत्प्राप्त्यर्थंवैराग्यादेरेवावश्यकसाधनत्वसमर्थनादस्तिशास्त्रादिसंगतिः यदिवै
राग्यादेर्नावश्यानुष्ठेयत्वंतर्हिनास्यशास्त्रस्यावश्यकमारंभणीयत्वंस्यादतस्तत्साधनीयम् वैराग्यादिसाधन
मेवविषयः किंमुमुक्षुणावश्यमनुष्ठेयमुतनेतिसंदेहः उभयविधसाधनदर्शनंसंदेहबीजम् पूर्वपक्षयति ॥ अ
पामेति ॥ नमुमुक्षुणावश्यमनुष्ठेयंवैराग्यादि तद्विनापिकर्मणैवमोक्षसंभवात् अपामसोमममृताअभूम
त्यादिश्रुतेः ॥ अन्यथैतच्छ्रुतिविरोधात् अतोऽर्केचेन्मधुविंदेतकिमर्थंपर्वतंव्रजेदितिन्यायेनसुशकेनकर्मणा
मोक्षसिद्धौवैराग्यादिनाकृत्याभावाद्व्यर्थमिदंतदर्थंशास्त्रमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अ
तइति ॥ अवश्यानुष्ठेयमेवमुमुक्षुणावैराग्यादि तद्विनामोक्षासिद्धेः नचैवंश्रुतिविरोधः तस्याअन्यार्थत्वात्

तथाहि कर्मद्विविधम् काम्यमकाम्यंच तत्रयद्यस्यांश्रुतौसोमयागःकाम्योभवेत्तदातत्साध्यममृतत्वंना
मकिंचित्कालीनमितिगौणार्थतयाश्रुतिरुपपन्नेतिभावः॥मुख्यामृतत्वमेवश्रुत्यर्थःकिंनस्यादित्यतआह॥ना
न्यइति ॥ नकर्मणामुख्यामृतत्वंलभ्यंयेनतच्छ्रुत्यर्थःस्यात् काम्यकर्मिणामनात्मवित्त्वात् तमेवंविद्वा

अपामसोममममृताअभूमेत्यादिश्रुतिविरोधइति अतोवक्ति भागतस्तदमृतत्वम् नान्यःपंथाअय
नायविद्यतइतिश्रुतेरात्मविदएवमुख्यम् वाशब्दात्पारंपर्येणात्मविदपेक्षयावा ॥ तथाहिश्रुतिः॥
सएनमविदितोनभुनक्ति यथावेदोवाननूक्तोऽन्यद्वाकर्माकृतंयदिहवाअप्यनेवंविन्महत्पुण्यंकर्म

## ॥ ॐ भाक्तंवानात्मवित्वात्तथाहिदर्शयति ॐ ॥ ७ ॥

करोति तद्धास्यांततःक्षीयतएव आत्मानमेवलोकमुपासीत सयआत्मानमेवलोकमुपास्तेनहास्य
कर्मक्षीयतेऽस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजते अमृतोवावसोमपोभवति यावदिंद्रोयाव
न्मनुर्यावदादित्यःकर्मणाज्ञानमातनोति ज्ञानेनामृतीभवति अथामृतानिकर्माणियतएनममृत
त्वंनयंतीतिच ॥ ७ ॥

नितिश्रुत्यात्मविदोमुख्यामृतत्वस्यान्येषांतदभावस्यैवोक्तत्वादितिभावः ॥ काम्यकर्मणातत्फलस्यैवहिसि
द्धिः अथाकाम्यकर्मविवक्षितंतदप्युभयथा जिज्ञासूनांज्ञानिनांचेति द्विविधमपिनमोक्षसाधनंसाक्षादि

साक्षादित्याह वाशब्दादिति इतिसूचितमितिशेषः यद्यत्रजिज्ञासूनामकाम्यंकर्मविवक्षितंतदाऽमृतपदेन
मुख्यामृतत्वमेव किंनामतत्त्वकर्मणानसाक्षाद्भवति कर्मभिःशुद्धांतःकरणस्यवैराग्यादितद्धतोर्जिज्ञासात
स्यज्ञानंतस्यमोक्षइतिपारंपर्येणैव तथाहिवाक्यशेषोऽगन्मज्योतिरिति अथज्ञानिनोऽकाम्यंकर्मतर्थापिन
तेनमोक्षः किंत्वात्मविदमपेक्ष्यैव आत्मज्ञानलब्धेमोक्षेऽकाम्यकर्मणाअतिशयोभवति सर्वथानकर्मणा
संसारनिवृत्तिरितिभावः एवमस्याःश्रुतेरुक्तार्थत्रयसमर्थनायश्रुतीरुदाहरति ॥ तथाहीति॥ आत्मविदामेव
मुख्यामृतत्वंनानात्मविदामित्यर्थेसएनमितिश्रुतिःप्रमाणम् आत्मानमेवलोकमुपासीतेत्यादिश्रुत्यैवात्मवि
दपेक्षयेत्यर्थसिद्धेः नभुनक्तिनामृतत्वंभोजयति उपास्तेजानातिचसमुक्तोयद्यत्कामयतेतत्तत्परमात्मप्र
सादद्वाराकर्मसृजतीत्यर्थः भागतस्तदमृतत्वमित्यस्मिन्नित्यर्थेऽमृतइतिश्रुतिः ॥ पारंपर्येणेत्यत्रकर्मणोतिश्रु
तिः ॥ अतोवैराग्याद्यनुष्ठानमंतरेणमोक्षासिद्धेर्नतत्प्रतिपादकशास्त्रवैयर्थ्यमितिसिद्धम् ॥ ७ ॥ अत्रा
पिभगवत्प्राप्त्यर्थंवैराग्यादिसाधनस्यावश्यानुष्ठेयत्वसाधनादस्तिशास्त्रादिसंगतिः वैराग्यादेर्मुमुक्षूणामनपे
क्षितत्वेशास्त्रवैयर्थ्यापत्तेस्तस्यावश्यानुष्ठेयत्वंसाधनीयमेव वैराग्यादिकं विषयः मुमुक्षुणावश्यमनुष्ठेयं
नवेतिसंदेहः उक्तन्यायस्तदनपेक्षफलनिष्पत्तिदर्शनंसंदेहबीजम् पूर्वपक्षयति॥कृतस्येति ॥ कर्मनिबंधनो
हिबंधः कर्मणाबध्यतेजंतुरित्यादेः कर्मणश्चक्षयोभोगेनभवति नचभोगकालेकर्मांतरापादनेनासमाप्तिः

स्वर्गादिष्वेवकर्मणासहगतत्वेनक्षेमुंशक्यत्वात् तत्रकर्मांतरापादनस्याभावात् कर्मणांचक्षयेतन्मूलस्यसंसारस्योच्छेदःस्वयमेवभवतीतिकिंवैराग्यादिना अतोऽव्यर्थमिदंशास्त्रमितिभावः सिद्धांतयत्सूत्रमवतार्यव्याचष्टे अतइति ॥ कृतस्यकर्मणःसहगतत्वेनभोगेनक्षयःस्वतएवेतिनयुक्तम् ततःशेषेणेतिश्रुत्याभुक्तकृतस्यकर्मणोभोगेनक्षयान्मुक्तिरित्यतआह ततःशेषेणेमंलोकमायातिपुनःकर्मकुरुतेपुनर्गच्छतिपुनरागच्छतीतिश्रुतेः भुक्तशेषानुशयवानिमांप्राप्यभुवंपुनः कर्मकृत्वापुनर्गच्छेत्पुनरायाति

## ॥ ॐ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्याम् ॐ ॥ ८ ॥

नित्यशः आचतुर्दशमाद्वर्षात्कर्माणिनियमेनतु दशावराणांदेहानांकारणानिकरोत्ययम् अतः कर्मक्षयान्मुक्तिःकुतएवभविष्यतीत्यादिस्मृतेश्चशेषवानेवाति ॥ ८ ॥

शेषानुशयवानितिस्मृत्याचस्वर्गंगतस्ययथायोग्यंकर्मसहगतमपिकिंचिद्भुक्तवतःकर्मशेषयुक्ततयैवागमनस्योक्तत्वात् एवंद्विव्यावर्तनेष्वशेषकर्मसमाप्तिःस्यादितिचेन्न पुनःकर्मकुरुतइतिश्रुतौकर्मकृत्वेतिस्मृतौचागतस्यपुनःकर्मसंपादस्योक्तत्त्वादितिभावः ॥ अल्पापादनेकर्मसमाप्तिःस्यादितिशंकानिरासायाह आचतुर्दशमादिति ॥ चतुर्दशमवर्षमारभ्येत्यर्थः दशावरायेषुतेतथा अतोवैराग्यादिसाधनमंतरेणमोक्षाभावात्तदर्थंवैराग्यादिविधायकशास्त्रस्यनवैयर्थ्यमितिसिद्धम् ॥ ८ ॥

अत्रभगवत्प्राप्तिसाधनवैराग्यायस्वर्गादागतिप्रकारनिरूपणादस्तिशास्त्रादिसंगतिः ॥ यद्यागमनस्यक्लेशिष्ठतानप्रतिपाद्येततर्हिनस्वर्गेऽतिवैराग्यंस्यादितिसानिरूपणीया ॥ प्रकृतमागमनंविषयः ॥ तत्किंगतिप्रकारेणैवान्यथावेतिसंदेहः ॥ लौकिकागमनेषूभयथादर्शनंसंदेहबीजम् ॥ पूर्वपक्षयति ॥ यथेति ॥ गमनप्रकारेणैवागमनम् ॥ यथेतमागच्छतीतिश्रुतेः ॥ येनपथागतंतस्यस्मृतिविषयत्वेनमनसिसहभावाच्च ॥

यथेतमेवगच्छतियथेतमागच्छतिसभुंक्तेसकर्मकुरुतेसपरिवर्ततइतिगतिप्रकारेणाऽऽगतिः श्रूयते अतोब्रूतेधूमादभ्रमभ्रादाकाशमाकाशाच्चंद्रलोकंयथेतमाकाशमाकाशाद्वायुं

## ॥ ॐ यथेतमनेवंच ॐ ॥ ९ ॥

वायुर्भूत्वाधूमोभवतिधूमोभूत्वाऽभ्रंभवत्यभ्रंभूत्वामेघोभवतिमेघोभूत्वाप्रवर्षतीतिकाषायणश्रुतेर्यथागतमन्यथाच ॥ ९ ॥

नहिविज्ञातंपंथानंविहायाविज्ञातेनागमनेप्रयोजनमस्ति ॥ अतःस्वर्गफलस्यातिक्लेशानुषंगाभावान्नतत्रवैराग्यमापादनीयमितिभावः ॥ यथास्वर्गादिमंलोकंप्रतिस्वयमितंतथागच्छतियथास्माल्लोकात्स्वर्गमितंतथागच्छतीत्यर्थः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ गमनप्रकारादन्यथागमनम् ॥ नचैवंश्रुतिविरोधः ॥ क्वचिद्गमनप्रकारेणागमनस्यांगीकृतत्वेनश्रुतेस्तद्विषयत्वात् ॥ कुतएतत् ॥ धूमादभ्रमिति

विशेषश्रुतेरेव ॥ नचयुक्तिविरोधः ॥ आगमनेजीवस्यास्वातंत्र्येणतत्स्मरणस्यागमनानुपयोगित्वादिति भावः ॥ तस्मादागमनादावतिक्लेशयुक्तत्वेनस्वर्गफलेपिविरक्तेनभवितव्यमितिसिद्धम् ॥ १ ॥ अत्रेश्वरप्राप्तिसाधनवैराग्यार्थंगतागतस्यकर्मफलत्वसाधनादस्तिशास्त्रादिसंगतिः ॥ यदिगतागतक्लेशस्यनकर्मसाध्यत्वंनतर्हिकाम्येकर्मण्ययंविरज्येतातस्तत्समर्थनीयम् ॥ प्रकृतंगतागतंविषयः ॥ यज्ञादिकर्मफलंनवेतिसं

तद्यइहरमणीयचरणारमणीयांयोनिमापद्यंतेकपूयचरणाःकपूयांयोनिमितिचश्रुतेश्चरण फलमेवगमनागमनंनयज्ञादिकृतः ॥ आचारइतिसंप्रोक्तःकर्मांगत्वेनशुद्धिदः ॥ अशुद्धिद

## ॥ ॐ चरणादितिचेन्नतदुपलक्षणार्थेतिकार्ष्णाजिनिः ॐ ॥ १० ॥

स्त्वनाचारश्चरणंतूभयंस्मृतमितिस्मृतेरितिचेत् न यज्ञाद्युपलक्षणार्थाचरणादिश्रुतिरिति कार्ष्णाजिनिर्मन्यते ॥ १० ॥

देहः ॥ तन्निमित्तानिमित्तयोरुभयोरपिसहभावदर्शनंसंदेहबीजम् ॥ पूर्वपक्षस्यसूत्रएवोक्तत्वात्तदुपन्यस्यपूर्वपक्षांशंतावद्याचष्टे ॥ चरणादिति ॥ नयज्ञादिफलंगतागतम् ॥ किंनामचरणफलमेव ॥ तद्यइहरमणीयचरणाइतिश्रुतेः ॥ नचवाच्यंयज्ञादिकर्मणएवचरणत्वाच्छून्यमभिधानंचरणफलमेत्रगमनंनागमनंन यज्ञादिकृतइतीति ॥ सयथाकारीयथाचारीतथाभवतीतिश्रुतेराचारइतिसंप्रोक्तइतिस्मृतेश्चकर्मणोन्य

स्यचरणस्यप्रतीतेः ॥ अथापिस्यात् ॥ अथयइमेयामाइष्टापूर्तेदत्तमित्युपासतेतेधूममभिसंभवंतीत्यु
पक्रम्यतस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानंपुनरावर्तंतइतिश्रुतेर्गतागतस्ययज्ञादिफलत्वप्रतीतेरयुक्तंच
रणफलत्वकल्पनमिति ॥ मैवम् ॥ तत्रापिगतागतस्यचरणफलत्वेनैवांगीकारात् ॥ नचतत्रचरणशब्दोना
स्ति ॥ इष्टापूर्तेदत्तमित्युपासतइत्युपशब्दस्यैवतद्वाचकत्वात् ॥ सहिसमीपवर्तिनंवक्ति ॥ चरणमेवयज्ञा
दिसमीपवर्ति ॥ तत्रयेयंगतागतस्यकर्मफलत्वप्रतीतिरुपजायतेशब्दात् ॥ साचकरणचरणेसहैवोक्त्वास्व
र्गगतागतयोश्चसहोक्तिनिमित्ताभ्रांतिरेव ॥ नचमंतव्यंकुतएतत्कल्प्यतइति ॥ चरणश्रुतेर्विषयांतराभावे
नाप्रामाण्यभयात्सावकाशश्रुतेरर्थांतरकल्पनस्यन्यायप्राप्तत्वात् ॥ अतोगतागतस्यान्यफलत्वात्कर्मणा
पुनरावृत्तिशून्यस्वर्गसिद्धेर्नतत्रवैराग्यमापाद्यमितिभावः ॥ सिद्धांतांशंव्याचष्टे ॥ नेति ॥ नगतागतस्यक
र्मफलत्वाभावः॥ नान्यःपंथाइतिश्रुत्यागतागतशून्यफलस्यकर्मसाध्यतायानिषिद्धत्वात् ॥ इष्टापूर्तंमन्य
मानाइतिश्रुत्यात्रैविद्यामामित्यादिस्मृत्याचगतागतस्यकर्मफलत्वोक्तेश्च ॥ नचतद्यइहरमणीयचरणाइ
तिश्रुतिविरोधः ॥ तस्याउदात्तश्रुत्याद्यनुरोधेनाजहल्लक्षणयायज्ञाद्यर्थत्वोपपत्तेरितिकार्ष्णाजिनिराचा
र्योमन्यतइतिभावः ॥ एतेनयदेतच्छ्रुत्यवष्टंभेनादिवाक्यस्यार्थांतरपरिकल्पनंतदापिपरास्तंभवति ॥ अ
थयेयज्ञेनदानेनतपसालोकान्जयंतितेधूममभिसंभवंतीत्यादिसमाख्याविरुद्धंच ॥ १० ॥

उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंतावद्व्याचष्टे ॥ आनर्थक्यमिति॥ कथंयज्ञाद्युपलक्षणार्था
रमणीयचरणाइत्यादिश्रुतिः ॥ तथात्वेचरणशब्दस्यानर्थक्यप्रसंगात् ॥रमणीयकपूयपदाभ्यामेवतदुपल
क्षणस्यसंभवात् ॥ यज्ञादिकारिणांप्रकृतत्वेनयेयज्ञादिकारिणोरमणीयाःकपूयाश्चेति॥ नचानर्थक्यंयुक्त
मितिभावः ॥ परिहारांशंव्याचष्टे ॥ नेति ॥ किमत्रचरणशब्दानर्थक्यप्रसंगाद्यज्ञाद्युपलक्षणाभावसाधन
मुतोपलक्षणंपक्षमभ्युपेत्यचरणपदकृत्यविचारः ॥ नाद्यः ॥ तथात्वेश्रुत्यादिविरोधस्योक्तत्वात् ॥ द्वितीये

तर्हिरमणीयाःकपूयाइत्येवस्याच्चरणशब्दस्यानर्थक्यमितिचेत् न चरणापेक्षत्वाद्रमणी

## ॥ ॐ आनर्थक्यमितिचेन्नतदपेक्षत्वात् ॐ ॥ ११ ॥

यत्वादेस्तज्ज्ञापनार्थत्वेनोपपत्तेः ॥ ११ ॥

ब्रूमः ॥ सत्यम् ॥ रमणीयादिपदेनशक्यंयज्ञाद्युपलक्षणम् ॥ तथापितन्मात्रोक्तौयज्ञादिकर्तृत्वेसमानेकथ
मेकेषांरमणीयत्वमन्येषांकपूयत्वमितिशंकास्यात् ॥ तांनिराकर्तुंसाध्वसाधुयज्ञादिमत्वस्याचारइतिसंप्रो
क्तइतिस्मृतेराचाराद्यपेक्षत्वाद्रमणीयकपूयचरणाभ्यांयज्ञादिकारिणामपिरमणीयत्वादिज्ञापनायचरण
शब्दस्यसार्थक्योपपत्तेः ॥ एवंचसतिरमणीयचरणत्वेनयेसाधवोयज्ञादिकृतइत्यादिवाक्ययोजनास्यादि
तिभावः॥ ११ ॥

प्रकारांतरेणचरणश्रुतिंव्याकुर्वत्सूत्रंपठित्वाव्याचष्टे ॥ सुकृतेति ॥नचरणश्रुतिर्यज्ञाद्युपलक्षणत्वेनैवोक्ताऽविरोधिनी ॥ किंनामसाध्वसाधुतयाकृतयज्ञादिकर्मवाचिनीचभवति ॥ यथाखलुचरणशब्दस्यकर्मांगेप्रयोगस्तथाकर्मण्यपिप्रयोगात् ॥ प्रयुज्यतेहिधर्मंकुरुतेत्यर्थेचरतेति ॥ साधारणश्रुतेश्चात्रबाधकत्वशात्सां

धर्मंचरतमाधर्ममित्यादिप्रयोगात्सुकृतदुष्कृतेएवचरणशब्दोदितेइतिबादरिर्मन्यते ॥ तुशब्दात्स्व सिद्धांतोपिसएवेतिसूचयति ॥ तुशब्दस्तुविशेषेस्यात्स्वसिद्धांतेऽवधारणइतिनाममहोदधौ॥१२॥

॥ ॐ सुकृतदुष्कृतेएवेतितुबादरिः ॐ ॥ १२ ॥

॥ॐ अनिष्टादिकारिणामपिचश्रुतम् ॐ॥१३॥

अ० ॥ १० ॥ पुण्यकृतामेवगमनागमनेनेतरेषामितित्यतआह ॥ तद्यइहशुभकृतोयेचाशुभ कृतस्तेशुभमनुभूयावर्ततेपुनःकर्मकुर्वंतिपुनर्गच्छंतिपुनरागच्छंतीतिभाल्लवेयश्रुतौ ॥ १३ ॥

गकर्मार्थत्वस्यैवोपपत्तेरितिबादरिराचार्योमन्यतइतिभावः॥परमतमभिधायसूत्रकारःस्वमतंकुतोनवक्तीत्यतआह ॥ तुशब्दादिति ॥ तुशब्दस्यैतदर्थाभिधायकत्वंकुतइत्यतआह ॥ तुशब्दइति ॥ अतोगतागतस्यकर्मफलत्वात्क्लेशसाधनेतस्मिन्तत्साध्येचविरक्तेनभाव्यमितिसिद्धम् ॥ १२ ॥ अ० १० ॥
अत्रभगवत्प्राप्तिसाधनवैराग्यायानिष्टादिकारिणांगतागतादिदुःखसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अनि

ष्टादिकारिणांगतागतादिदुःखाभावेनतत्रविरक्तिःस्यादतस्तत्साधनीयम् ॥ प्रकृतंगतागतादिविषयः ॥ किमिष्टादिकारिणामेवोतसर्वाज्ञानिनामितिसंदेहः ॥ विशेषोक्तिरज्ञानित्वंचसंदेहबीजम् ॥ पूर्वपक्षयति ॥ पुण्येति ॥ इष्टादिपुण्यकृतामेवगतागतादिनत्वनिष्टादिकारिणामप्यज्ञानाम् ॥ इष्टादिकारिणांप्रत्यवायभयवत्त्वेनतदुपपत्तेरन्येषांचतदभावात् ॥ बिभ्यत्पततिपादपादितिन्यायात् ॥ फलकामित्वाच्चेष्टादिकारिणांतदुपपत्तिरनिष्टादिकारिणांनहिकामोस्ति ॥ कामान्यःकामयतेमन्यमानःसकामभिर्जायतेतत्रतत्र ॥ पर्याप्तकामस्यकृतात्मनश्चइहैवसर्वेप्रतिमुच्यंतिकामाइतिश्रुतेः ॥ इष्टादिकारिणस्तुस्वयमेवात्मानंविधिप्रतिषेधाभ्यांबध्नंतिनेतरे ॥ अतःपुण्यकृतामेवगमनागमनादीतरेषांतुतद्रहितोमोक्षएवेतिपुण्येतत्फलेचविरक्त्याभाव्यंनान्यत्रेतिभावः ॥ सिद्धांतयत्सूत्रमवतार्यतदुपात्तश्रुतिमेवोदाहरति ॥ अतइति ॥ नकेवलमिष्टादिकारिणामेवगतागतंकिनामानिष्टादिकारिणामपि ॥ तद्यइहेतिश्रुतौश्रुतत्वादित्यर्थः ॥ अनिष्टादिकारिणइतितदकारिणस्तद्विरुद्धकारिणश्चोच्यंते ॥ चशब्दोदुःखांतरसमुच्चयार्थः ॥ तदेवोत्तरसूत्रेऽनूद्यते ॥ १३ ॥

नकेवलमनिष्टादिकारिणांगतागतमात्रमतिदुःखंचान्यदस्तीत्येतदर्थंप्रतिपादकंसूत्रमुपन्यस्यव्याचष्टे ॥ संयमनेत्वेति ॥ अस्तितावत्सर्वैषामनिष्टादिकारिणामज्ञानांयमशासनम् ॥ तदनुभवावसानेकेषांचिदनिष्टादिकारिणतितोऽभ्युत्थानंभवति ॥ केषांचित्ततोपिनीचस्थलेनित्यनरकेपातोभवति ॥ कुतः ॥ ते

संयमनमनुभूयकेषांचिदारोहःकेषांचिदवरोहः ॥ तुशब्दोवधारणे ॥ सर्वैवाएतेऽशुभकृतःसंयमने प्रपतंति ॥ तत्रहयेपरद्विषोगुरुद्विषःश्रुतिद्विषस्तदवमंतारःशठामूर्खाइतितेवैततोवरुद्धतमसिप्रपतं

## ॥ ॐ संयमनेत्वनुभूयेतरेषामारोहावरोहौतद्गतिदर्शनात् ॐ ॥ १४ ॥

तिनैवैतउत्तिष्ठंतेऽपिकर्हिचिद्ब्रंवाएतदित्याहुरथयेन्येब्रह्मद्विषस्तेनाःसुरापाइतितेवैतदनुभूयेमंलोकमनुव्रजंतीतिकौठरव्यश्रुतेः ॥ १४ ॥

षामनिष्टादिकारिणामेवंविधगतेःश्रुतिसिद्धत्वादितिभावः ॥ यथानित्यनरकपातेविकल्पस्तथासंयमनेप्यस्तीतिनाशंक्यमितिभावेनाह ॥ तुशब्दइति ॥ अशुभकृतइतिनशुभकृतइतिचार्थः ॥ द्वेषःप्रतीपबुद्धिः ॥ अवमतिर्नीचतयाविज्ञानम् ॥ शाठ्यंगूढद्वेषः ॥ मौर्ख्यंतत्त्वज्ञानराहित्यम् ॥ नैवैतउत्तिष्ठंतइत्यस्योपपादनंवब्रमिति ॥ स्वस्थितान्वारयति ॥ गंतुंनमुंचतीत्यर्थः ॥ १४ ॥

उक्तार्थंस्मृत्याचसमर्थयत्सूत्रंपठित्वातांस्मृतिमुदाहरंति ॥ स्मरंतिचेति ॥ रौरवादिपंचभ्योतिकष्टेनित्यन
रकेदुःखमेवसदेत्यर्थः ॥ सूत्रेबहुवचनश्रवणादित्यादिस्मरंतीत्युक्तम् ॥ तेनतानहंद्विषतइत्यादेःसंग्रहः ॥ न

गच्छंतिपापिनःसर्वेनरकंनात्रसंशयः ॥ तत्रभुक्त्वापतंत्येवयेद्विषंतिजनार्दनम् ॥ महातमसिमग्ना
नांनतेषामुत्थितिःक्वचित् ॥ इतरेषांतुपापानांव्युत्थानंविद्यतेपिच ॥ सुखस्यानंतरंदुःखंदुःख
स्यानंतरंसुखम् ॥ इतिसर्वत्रनियमःपंचकष्टेतुतत्सदेत्यादि ॥ १५ ॥ अ० ॥ ११ ॥ रौरवोथमहां

## ॥ ॐ स्मरंतिच ॐ ॥ १५ ॥

## ॥ ॐ अपिसप्त ॐ ॥ १६ ॥

श्चैववह्निर्वैतरणीतथा ॥ कुंभीपाकइतिप्रोक्तान्यनित्यनरकाणितु ॥ तामिस्रश्चांधमिस्रोद्वौनित्यौ
संप्रकीर्तितौ ॥ इतिसप्तप्रधानानिबलीयोस्युत्तरोत्तरम् ॥ एतानिक्रमशोगत्वैवारोहोथावरोहणमि
तिचभारते ॥ १६ ॥ अ० १२ ॥

चभयकामनाद्यभावविरोधः ॥ अबिभ्यताफलकामनाशून्येनाप्युपभुक्तविषस्यमरणहेतुत्वदर्शनात् ॥
अतोऽनिष्टादिकारिणामपिमहानर्थवत्वेनमोक्षाशायादूरोत्सारित्वाद्भवितव्यंतत्रापिविरक्तेनेतिसिद्धम् ॥
॥ १५ ॥ अ० ११ ॥ अत्रपरमात्मप्राप्तिसाधनवैराग्यार्थंनित्यनरकसमर्थनादस्तिशास्त्रादिसंगतिः ॥ य

दिभगवद्द्वेषादिफलस्यननित्यदुःखात्मकत्वंसमर्थ्यंतेननर्हिब्रह्महननादिभ्योतिशयेनवैराग्यंभवतीत्यतस्तत्स
मर्थनीयम् ॥ प्रकृतंनरकमेवविषयः ॥ नित्यफलप्रदमुतनेतिसंदेहः ॥ पूर्वोक्तिर्लौकदृष्टिश्चसंदेहबीजम् ॥
पुनरावृत्तिमदेवनतुनित्यफलप्रदमितिपूर्वःपक्षः ॥ यावदिंद्राश्चतुर्दशेत्यादौनरकभोगस्यानित्यत्वोक्तेः ॥ न
चोभयंयुक्तम् ॥ विरोधात् ॥ नचैकस्यैवपुरुषभेदेनव्यवस्थाचकारनरकंशून्यमित्यादेः ॥ अतोयदुक्तंसंय
मनेत्विति सोक्तिर्विरुद्धा ॥ एवंचफलसाम्यान्नभगवद्द्वेषादावितरपापेभ्योतिशयेनवैराग्यंप्रयोजकमिति
सिद्धांतयत्सूत्रंपठति ॥ अपीति ॥ अपिपदेनस्मरंतीत्यनुकृष्यते ॥ तांस्मृतिंचोदाहरति ॥ रौरवइति ॥
नरकभोगोभवत्येवनित्यः ॥ नैवैतदुत्तिष्ठतेऽपिकर्हिचिदित्यादिश्रुतेरनित्यत्वोक्तिविरोधइतिचेन्न ॥ भवे
दयंविरोधोयदिनरकैक्यंस्यात् ॥ नैतदस्ति ॥ किंतर्हिसप्तापिसंतितेषुचनित्यानित्यत्वस्यविभागेनोपपत्तेः ॥
कुतोनरकाणांसप्तत्वम् ॥ तथात्वेपिकुतोनित्यानित्यतयाविभागइतिचेत् ॥ रौरवइतिस्मृतेरित्यर्थः ॥ म
हान्महारौरवः ॥ एतानिपंच ॥ सप्तप्रधानानीत्यनेनबहुनरकाभिधायकपुराणविरोधोपिपरिहृतः ॥
अतोभगवद्द्वेषादिफलस्यनरकस्यनित्यत्वादितरपापेभ्योतिशयेनतत्रवैराग्येणभवितव्यमितिसिद्धम् ॥१६॥
॥ अ० १२ ॥

अत्रेश्वरप्राप्तिसाधनवैराग्यायनरकस्यसदुःखत्वसाधनादस्तिशास्त्रादिसंगतिः ॥ नरकस्यनिर्दुःखत्वेनतत्र
तत्साधनेचवैराग्यंस्यादतःसदुःखत्वंसाधनीयम् ॥ प्रकृतंनरकमेवविषयः ॥ किंसदुःखंनवेतिसंदेहः ॥ उभ

ईश्वरस्यनरकायुक्तेः ॥ सर्वंसृजतिसर्वंविलापयतिसर्वंरमयतिसर्वंनरमयतिसर्वंप्रवर्तयत्यंतरस्मिन्नि
विष्टइतिकौषारवश्रुतिविरोधइति ॥ अतोवक्ति॥चशब्दाददुःखानुभवेनसस्वर्गेसभूमौसनरकेसोंध

## ॥ ॐ तत्रापिचतद्व्यापारादविरोधः ॐ ॥ १७॥

तमसिप्रवृत्तिकृदेकएवानुविष्टोनासौदुःखभुगीश्वरःप्रभुत्वात्सर्वंपश्यतिसर्वंकारयतिनासौदुःखभु
ग्यएवंवेदेतिपौत्रायणश्रुतेरविरोधः ॥ नरकेपिवसन्नीशोनासौदुःखभुगुच्यते ॥ नीचोच्चतैवदुःखा
देर्भोगइत्यभिधीयते॥ नासौनीचोच्चतांयातिपश्यत्येवप्रभुत्वतइतिभागवततंत्रे ॥१७॥अ० १२॥

यविधस्थानदर्शनंसंदेहबीजम् ॥ननरकेदुःखमस्तीतिपूर्वःपक्षः॥ तथाहि॥यदिनरकेऽस्तिदुःखंतत्रपृच्छामः॥
किंतत्रेश्वरःप्रेरकोनवेति ॥ आद्यंदूषयति ॥ ईश्वरस्येति ॥ यदिनरकस्यसदुःखतामंगीकृत्यतत्रस्थानांप्रेर

कतयेश्वरोवर्ततइत्यभ्युपगम्यतेतर्हितस्यदुःखिसहावस्थानान्नरकभोगप्राप्तिः ॥ ईश्वरस्यचनरकदुःखायु क्तेर्नतत्रदुःखमितिभावः ॥ नचवैशेष्ययुक्त्यैतत्परिहर्तामितिवाच्यम् ॥ दुःखाननुभवेसार्वज्ञ्याभावप्रसंगा त् ॥ द्वितीयंनिराचष्टे ॥ सर्वमिति ॥ यदिनरकेदुःखासिद्ध्यर्थंतत्रेश्वरोनप्रेरकइत्युच्यतेतर्हिश्रुतिविरोधः ॥ अतःप्रकारद्वयेनापिनरकस्यसदुःखत्वानुपपत्तेर्नतत्रतत्साधनेचवृथावैराग्यमापाद्यमितिभावः॥योग्यंसर्वं सिद्धांतयत्सूत्रमवतारयति ॥ अतइति ॥ भवत्येवनरकंसदुःखम् ॥ नचोक्तदोषः ॥ नरकेपितस्येश्वरस्यप्रेर णरूपव्यापाराभ्युपगमेनश्रुतिविरोधाभावादितिसूत्रार्थः॥सदुःखत्वेनरकस्यअस्मिन्नपिपक्षेकथितविरोध परिहारोवाच्यः॥सकुतोनसूत्रितइत्यतआह ॥ चशब्दादिति ॥ तत्राप्यदुःखानुभवेनतद्व्यापारादुभयत्रविरो धाभावइत्यर्थः॥इतिसमुच्चिनोतीतिशेषः ॥ अस्यार्थस्यप्रामाणिकत्वेभवेदविरोधस्तत्कुतइत्यतआह॥सह ति॥ सहभावयुक्तिपरिहारःप्रभुत्वादिति ॥ असार्वज्ञ्यमाशंक्यसर्वंपश्यतीत्युक्तम् ॥ अत्रस्मृतिचाह ॥ नर केपीति ॥ सर्वज्ञस्यकथंदुःखानुभवाभावइत्यतआह ॥ नीचेति ॥ अतोनरकस्यसदुःखत्वाद्भवितव्यंतत्रवै राग्येणेतिसिद्धम् ॥ १७ ॥ अ० १३ ॥

अत्रभगवत्प्राप्तिसाधनवैराग्यार्थंभूतानांगतिस्वातंत्र्यनिरासादस्तिशास्त्रादिसंगतिः ॥यदिगतिस्वातंत्र्यंभूता
नांस्यात्तदावैराग्यवैयर्थ्यप्रसंगात्तन्निरसनीयम् ॥ प्रकृतःपितृयानस्तत्प्रकृतिसन्निधापितोदेवयानश्चविष

अथैतयोःपथोर्नैकतरेणचगच्छंतितानीमानिक्षुद्रमिश्राण्यसकृदावर्तीनिभूतानिभवंतिजायस्वम्रि
यस्वेत्येतत्तृतीयंस्थानमितिगतिस्वातंत्र्यंभूतानांप्रतीयतइति ॥ अतआह ॥ विद्याकर्मापेक्षयैतद्वच

## ॥ ॐ विद्याकर्मणोरितितुप्रकृतत्वात् ॐ ॥ १८ ॥

नम् ॥ तयोरपिप्रकृतत्वात् ॥ विद्यापथःकर्मपथोद्वौपंथानौप्रकीर्तितौ॥ तद्वर्जितस्त्रिधायातितिर्य
ग्वानरकंतमइतिचभारते ॥ १८ ॥ अ० ॥ १४ ॥

यः॥किंभूतैःस्वातंत्र्येणगम्योनवेतिसंदेहः ॥ लौकिकमार्गदर्शनमलौकिकत्वंचसंदेहबीजम् ॥पूर्वपक्षयति॥
अथेति ॥ अस्त्येवभूतानांगतिस्वातंत्र्यम् ॥ तेऽर्चिषमभिसंभवंतितेधूममभिसंभवंतीत्युक्त्वाऽथैतयोरिति
श्रुतौतदुक्तेः ॥ नहिपुरुषप्रयत्नाविषयेनगच्छंतिचेतिप्रयोगोयुज्यते ॥ नचवाच्यंजीवस्यास्वातंत्र्यंप्रतिपा

दितमतःकथंगतिस्वातंत्र्यमिति ॥ तदधीनस्वातंत्र्यस्यविवक्षितत्वात्साधनवत् ॥ तादृशस्याप्यभावेवैराग्या
दिसाधनमपिनोत्पादयितुंशक्यंस्यात् ॥ नचफलस्वातंत्र्येसर्वेषांतत्प्राप्तिःस्यादितिवाच्यम् ॥ साधनेपिसा
स्यात् ॥ अतोमूलेलब्धफलोनैवशाखायांगंतुमिच्छतीतिन्यायात्फलएवस्वातंत्र्यात्किंवैराग्यादिसाधने
नेतिभावः ॥ उक्तयोःपथोर्मध्येयान्येकतरेणापिपथानगच्छंतितानीमान्यल्पानिसुखदुःखमिश्राणिसदा
गत्यादिमंतिपुनःपुनर्जायंतेम्रियंतेच ॥ एतत्स्वर्गापवर्गयोरन्यत्तृतीयंभूतानामवस्थानमित्यर्थः ॥ सि
द्धांयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ नैतच्छ्रुतिबलेनभूतानांगतिस्वातंत्र्यंमंतव्यम् ॥ तस्यामार्ग
द्वयसाधनविद्याकर्मविषयत्वोपपत्तेः ॥ नचमंतव्यंदेवयानपितृयानयोःप्रकृतत्वादेतच्छशब्देनतत्परामर्शो
पपत्तिरिति ॥ तद्यइत्थंविदुर्येचेमेऽरण्येश्रद्धातपइत्युपासतेतेऽर्चिषमभिसंभवंति ॥ अथयइमेग्रामाइष्टा
पूर्तेदत्तमित्युपासतेतेधूममभिसंभवंतीतिविद्याकर्ममार्गयोरपिप्रकृतत्वादेतच्छब्देनतत्परामर्शोपपत्तेरिति
भावः ॥ एवमर्थद्वयस्यापिसतिसंभवेकिंसाधनार्थत्वग्रहणेकारणमितिस्मृतिसमाख्येतिभावेनाह ॥ विद्ये
ति ॥ नचसाधनेस्वातंत्र्याभ्युपगमेफलेपितत्स्यादितियुक्तम् ॥ साधनेविधिसद्भावात् फलेतदभावाच्च ॥
विद्यादिशास्त्रावैयर्थ्यायैवतत्रेश्वरःस्वातंत्र्यंददातीतिप्रागुक्तम् ॥ अतःफलेस्वातंत्र्याभावादपेक्षितंवैराग्या ॥ १३ ॥
दिसाधनमितिसिद्धम् ॥ १८ ॥ अ० १४ ॥

अत्रभगवत्प्राप्तिसाधनवैराग्यायांधतमसोदुःखमात्रतासाधनादस्तिशास्त्रादिसंगतिः ॥ अंधेतमस्यपिसुख सद्भावेनतत्रातिशयेनवैराग्यमुत्पद्यतेऽतस्तन्निषेध्यम् ॥ प्रकृतमंधंतमोविषयः॥ सुखयुक्तंनवेतिसंदेहः ॥लौकिकदृष्टिरलौकिकत्वंचसंदेहबीजम्॥पूर्वपक्षयति ॥ यत्रेति ॥ अंधंतमोपिसुखयुक्तमेव ॥ दुःखयुक्तत्वा

यत्रदुःखंसुखंतत्रसर्वत्रापिप्रतीयते ॥ अपिनीचगतौकिंचित्किमुमानुषदेहिनइतिवचनान्महातमस्यपिसुखप्राप्तिरित्यतआह ॥ अथाविद्वानकर्मावाग्गच्छतित्रिधाहवावाग्गतिस्तिर्यग्यातनातम

॥ ॐ नतृतीयेतथोपलब्धेः ॐ ॥ १९ ॥

इतिद्वेवावसुखानुवृत्तेनतमःसुखानुवृत्तंकेवलंह्येवात्रदुःखंभवतीतिश्रुतेर्नतृतीयावाग्गतौसुखम् ॥
॥ १९ ॥

त् ॥ सुखेनचदुःखस्यव्याप्तत्वात् ॥ नचवक्तव्यंसर्वसुखदुःखयोरप्रत्यक्षत्वाद्व्याप्तिग्रहणानुपपत्तिरिति ॥ यत्रदुःखमित्यागमेनतद्ग्रहणोपपत्तेः ॥ अतोंऽधतमस्यपिसुखसद्भावान्नतत्रवैराग्यमपेक्षितमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ अधोगतिषुतृतीयेतमसिनसुखमस्तीतिमंतव्यम् ॥ अथाविद्वानितितथाभिधायकश्रुतेरित्यर्थः ॥ १९ ॥

एतमेवार्थंस्मृत्यनुमानाभ्यांचसाधयत्सूत्रमुपन्यस्यतांस्मृतिमुदाहृत्यानुमानस्वरूपंचसूचयति ॥ स्मर्यंते पीति ॥ एतदंधेतमसिसुखराहित्यंलोकसिद्धंलौकिकदृष्टांतयुक्तानुमानसिद्धमित्यर्थः ॥ अयमभिसंधिः ॥ विप्रतिपन्नानसुखवंतः ॥ तथात्वेनेश्वरानिष्टत्वात् ॥ यद्यथेश्वरानिष्टंतत्तथानभवति ॥ यथाशशोविषा

तिर्यक्षुनरकेचैवसुखलेशोविधीयते ॥ नांधेतमसिमग्नानांसुखलेशोपिकश्चनेतिभविष्यत्पर्वणि ॥

॥ ॐ स्मर्यंतेपिचलोके ॐ ॥ २० ॥

लोकसिद्धंचैतत् ॥ चशब्दाल्लोकसिद्धिरपिस्मार्तेत्याह अतिप्रियेयथाराजानदुःखंसहतेक्कचित् ॥ अत्यप्रियेसुखमपितथैवपरमेश्वरइतिब्राह्मे ॥ २० ॥

णित्वेन ॥ नैतेसुखित्वेनेश्वरेष्टाः॥अप्रियत्वात् ॥ योयस्याप्रियःससुखित्वेननतदिष्टः॥ यथाराजविरोधीरा ज्ञइति ॥ एतच्चानुमानंस्मृतिसिद्धत्वेनातिप्रबलमितिभावेनाह ॥ चशब्दादिति ॥ लोकसिद्धिर्लौकदृष्टां तवदनुमानेनतमसःसुखराहित्यसिद्धिः ॥ कासौस्मृतिरित्यतआह ॥ अतीति ॥ अनेनव्यतिरेकान्वयौदर्शि तौ ॥ सदसज्जनानांवाप्रकृतिः ॥ २० ॥

प्रत्यक्षेणाप्येतमर्थंसाधयत्सूत्रमुपन्यस्यव्याचष्टे ॥ दर्शनाच्चेति ॥ तमसिस्थितानांसुखलेशराहित्यंहिर
ण्यगर्भप्रत्यक्षदर्शनाच्चसिध्यति ॥ नचवाच्यंपरप्रत्यक्षस्यास्माकमसिद्धिः ॥ तस्यापिपरसुखाभावदर्शना
नुपपत्तिरितिभगवत्प्रसादसमृद्धज्ञानदृष्ट्यातद्दर्शनस्यस्मृतिसिद्धत्वादितिभावः ॥ २१ ॥ अर्थापत्त्याचै
तमर्थंसाधयत्सूत्रंपठित्वाव्याचष्टे ॥ तृतीयइति ॥ तमोपित्रिविधंतत्रतृतीयविषयेयःशब्दस्तेनावरोधःप्रा

नारायणप्रसादेनसमिद्धज्ञानचक्षुषा ॥ अत्यंतदुःखसंलीनान्निःशेषसुखवर्जितान् ॥ नित्यमेवत
थाभूतान्विमिश्रांश्चगणान्बहून् ॥ निरस्ताशेषदुःखांश्चनित्यानंदैकभागिनः ॥ अपश्यत्त्रिविधान्

## ॥ ॐ दर्शनाच्च ॐ ॥ २१ ॥ ॐ तृतीयेशब्दावरोधःसंशोकजस्य ॐ ॥ २२ ॥

ब्रह्मासाक्षादेवचतुर्मुखइतिदर्शनवचनाच्चपाद्मे ॥ २१ ॥ तृतीयेतृतीयतमसःश्रवणादेवशब्दानुसा
रेणसंशोकजमोहप्राप्तिः ॥ २२ ॥

प्तिर्भवति ॥ कस्य॥मोहस्यमूर्छायाः॥कथं तच्छ्रवणेनशोकःशोकान्मूर्छेति॥ एवंतत्स्वरूपश्रोतॄणामपिमो
हान्यथानुपपत्तेर्नतत्रसुखलेशइतिभावः ॥ अधोगतौतृतीयत्वस्यप्रथमसूत्रएवोक्तत्वादत्रपुनस्तृतीयग्रह
णवैयर्थ्यापत्तेस्तृतीयेपितृतीयग्रहणम् ॥ एतच्चातिद्वेषिणामधिकदुःखसूचनायैव ॥ शब्दानुसारेणेतिस
म्यग्व्याख्यानेतिमूर्छेत्यादि ॥ २२ ॥

तृतीयतमसःस्वरूपश्रवणेश्रोतॄणांमोहप्राप्तिरित्येतत्कुतः यदन्यथानुपपत्त्यातत्रसुखाभावइत्याशंकांस्मृ
त्यापरिहरत्सूत्रंपठित्वातांस्मृतिमुदाहरति ॥स्मरणाच्चेति॥अतोंऽधतमसिसुखलेशाभावाद्भवितव्यंतत्रतत्सा
धनेचविरक्तेनेतिसिद्धम् ॥ २३ ॥अ०॥ १५॥ अत्रभगवत्प्राप्तिसाधनवैराग्यसिद्ध्यर्थंकर्मिणांधूमादिभा

महातमस्त्रिधाप्रोक्तमूर्ध्वंमध्यंतथाधरम् ॥ श्रवणेनैवमूर्छादिरधरस्ययतोभवेत् ॥ तस्मा
न्नविस्तरेणैतत्कथ्यतेराजसत्तमेतिकौर्मे ॥ २३ ॥ अ० ॥ १५ ॥ धूमोभूत्वाभ्रंभवती
त्याद्यन्यथाभावःश्रूयतेसकथमिति ॥ अतोब्रवीति ॥ धूमादिषुप्रविश्यतद्गतौगतिस्तत्स्थि

**॥ ॐ स्मरणाच्च ॐ ॥२३॥ ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ ॥२४॥**

तौस्थितिरित्यादिरेवतद्भावापत्तिः ॥ नह्यन्यस्यान्यभावोयुज्यते ॥ नचतत्पदप्राप्तिः ॥गा
रुडेच ॥ धूमादिभावप्राप्तिश्चतद्गतौगतिरेवतु ॥स्थितौस्थितिप्रवेशश्चलघुत्वादिस्तथैवच॥
नह्यन्यस्यान्यथाभावोनचतत्पदमिष्यते ॥ विद्यागम्यंपदंयस्मान्नतत्प्राप्यंहिकर्मणा ॥ए
कदेशस्वभावेनवागभेदापियुज्यते ॥ यथाजीवःपरंब्रह्मब्रह्मेदंजगदित्यपीति ॥२४॥अ०॥१६॥
वनिवारणाद्दस्तिशास्त्रादिसंगतिः॥ कर्ममात्रेणमहासुखेधूमादिभावेलभ्यमानेनायंतत्रविरज्येतअतोसौनि
वारणीयः ॥ तत्रविषयंदर्शयति ॥ धूमइति ॥ कर्मिणःस्वर्गादवतीर्णायथागतमन्यथाचागच्छंतीत्युक्तम् ॥

तेषामागतौधूमादिदेवताभावःश्रूयतेधूमोभूत्वेति ॥ सधूमादिभावोऽत्रविपयइत्यर्थः॥संदेहप्रकारंदर्शयति॥ सइति ॥ सधूमादिभावोधूमादिदैवतैक्यंवाकर्मिणस्तत्पदप्राप्तिर्वाप्रकारांतरंवेत्यर्थः ॥ शब्दस्यानेकत्वसयः संदेहबीजम ॥ ऐक्यंतत्पदप्राप्तिर्वेतिपूर्वःपक्षः ॥ सामानाधिकरण्यश्रुतेः ॥ साप्युभयथोक्तरीत्यायुज्यते ॥ अन्यथातद्विरोधः ॥ नचश्रुतेरन्यार्थत्वंकल्पनीयम् ॥ बाधकमंतरेणमुख्यार्थत्यागायोगात् ॥ नचकर्मिणोदेवतापदप्राप्तिरसंभाविता ॥ धूमादिदेवताभिःसहावस्थानात् ॥ स्नेहादिवशेनताभिरेवस्वपदस्यदातुमपिशक्यत्वात् ॥ अतःप्रकारद्वयेपिसकृदनुष्ठितयज्ञानामाकल्पसमाप्तिपरमसुखसंभवाद्यर्थंकर्मणितत्फले चवैराग्यमिति ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ अत्रधूमादिभावप्राप्तिर्नामकर्मिणस्तत्स्वभावत्वप्राप्तिरेव ॥ नचैतावतापदप्राप्तिपर्यायत्वम् ॥ तद्गतौगतिरित्याद्येकदेशस्वभावत्वात् ॥ सादृश्येच सामानाधिकरण्यदर्शनात् ॥ तत्प्रवेशेनस्थानैक्याभिप्रायंवैतद्वाक्यंतथाप्रयोगदर्शनादितिभावः ॥ कुतोर्थोऽयंस्यादित्यतआह ॥ नहीति ॥ प्रागन्यस्यकर्मिणोधूमादिदैवतैक्यंतावदनुपपन्नम् ॥ अन्यस्यान्यभावादर्शनात् ॥ नापितत्पदप्राप्तिर्युक्ता ॥ तस्यानियताधिकारिभिर्विद्ययैवगम्यत्वात् ॥ युगपदनेककर्मिसमवायेऽनेकेषामेकपदप्राप्त्ययोगाच्च ॥ अतोमुख्यतःप्रतीयमानार्थासंभवेनोक्तार्थस्यैवोपपत्तेरयमेवश्रुत्यर्थ इतिभावः ॥ एवंन्यायप्राप्तेऽर्थेस्मृतिंचाह ॥ गारुडेचेति ॥ अभेदाऽभेदवादिनी॥अतोधूमाद्यैक्याद्यभावायुक्तमेवकर्मतत्फलयोर्वैराग्यमितिसिद्धम् ॥ २४ ॥ अ० ॥ १६ ॥

अत्रेश्वरप्राप्तिसाधनवैराग्यायस्वर्गादवरूढस्यकर्मिणोचिरेणगर्भवासादिप्राप्तिसमर्थनादस्तिशास्त्रादिसंगतिः ॥ यदिचिरेणगर्भप्राप्तिस्तर्हिबहुकालंमध्येमार्गमतिसुखस्यलाभान्नकर्मणिविरज्येतातःसाप्रतिषेद्धव्या ॥ प्रकृताःकर्मिणोविषयः ॥ स्वर्गान्निर्गत्यकिंचिरेणगर्भवासंप्राप्नुवंत्युताचिरेणेतिसंदेहः ॥ द्विविधपांथदर्शनंसंदेहबीजम् ॥ पूर्वपक्षयति ॥ बहुस्थानेति ॥ कर्मीस्वर्गान्निर्गतश्चिरेणैवदेहंप्राप्नोति॥ यथेतमाकाशमाकाशाद्वायुंवायुर्भूत्वाधूमोभवतिधूमोभूत्वाभ्रंभवतिअभ्रंभूत्वामेघोभवतीत्यादौबहुस्थानप्राप्तिश्चव

बहुस्थानगमनात्कल्पांतमप्येवंस्यादिति ॥ अतआह ॥ तद्यइहरमणीयचरणाअभ्याशो

## ॥ ॐ नातिचिरेणविशेषात् ॐ ॥ २५ ॥

हयत्तेरमणीयांयोनिमापद्यंतइतिविशेषान्नातिचिरेण ॥ स्वर्गाल्लोकादवाक्प्राप्तोवत्सरा

त्पूर्वंमेवतु ॥ मातुःशरीरमाप्नोतिपर्यटन्यत्रतत्रचेतिनारदीये ॥ २५ ॥ अ० ॥ १७ ॥

णात् ॥ बहुस्थानगमनंचनाचिरेणसंभवतितत्रतत्रतत्तत्स्वाभाव्येनातिसुखेसंभवतितद्विहायागमनेप्रयोजनाभावात् ॥ एवंचसकृदनुष्ठितयज्ञस्यस्वर्गभोगावसानेमध्येमार्गकल्पांतमपितत्तद्देवतास्वाभाव्यंस्यात् ॥ कल्पावसानेदेवानांपदपर्यवसानादतःकिंकर्मणितत्फलेचवैराग्येणेतिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ कर्मिणोनचिरेणागमनंकिंत्वचिरेणैव ॥ तद्यइहरमणीयचरणाइतिविशेषश्रुतेः ॥ नच

बहुस्थानगमनविरोधः ॥ अतिचिरेणागमनस्यैवनिषेधादितिभावः ॥ तत्रकर्मिषुयेरमणीयचरणास्तइह भूमौरमणीयांब्राह्मणादियोनिमापद्यंते ॥ आपद्यंतइतियत्तच्चाभ्याशःकालसामीप्येनेत्यर्थः ॥ कल्पांत कालस्यापेक्षिकसामीप्यान्नेयंश्रुतिर्बाधिकेत्यतआह ॥ स्वर्गादिति ॥ नचेष्टत्वविरोधः ॥ इष्टत्वेपिकृप्त कालाधिककालावस्थानेकारणाभावात् ॥ अन्यथादुःखाभावप्रसंगात्सर्वेषाम् ॥ अतःकर्मिणोऽचिरेणैव गर्भवासादिदुःखप्राप्तिसद्भावाद्भवितव्यंकर्मादौविरक्तेनेतिसिद्धम् ॥ २५ ॥ अ० ॥ १७ ॥ अत्रभगवत्पा

तइहव्रीहियवाओषधिवनस्पतयस्तिलमाषाइतिजायंतइतिश्रवणादनर्थफलत्वंयज्ञादेरि

ति ॥ अतोवक्ति ॥अन्याधिष्ठितेव्रीह्यादिशरीरेप्रवेशोनतुभोगोऽस्यधूमोभूत्वाभ्रंभवतीत्या

## ॥ ॐ अन्याधिष्ठितेपूर्ववदभिलापात् ॐ ॥ २६ ॥

दिपूर्वोक्तिवत् ॥ सोवाग्गतःस्थावरान्प्रविशत्यभोगेनैवव्रजन्स्थूलंशरीरमेतिस्थूलाच्छ

रीराद्भोगाननुभुङ्क्तइत्यभिलापात्कौषारवश्रुतौ ॥ स्वर्गादवाग्गतोदेहीव्रीह्यादीतरदेहगः॥

अभुंजंस्तुक्रमेणैवदेहमाप्नोतिकालतइतिवाराहे ॥ २६ ॥

प्तिसाधनवैराग्यायकर्मिणोव्रीह्यादिभावनिरासादस्तिशास्त्रादिसंगतिः ॥सुखसाधनतयावेदोपदिष्टकर्मिणां व्रीह्यादिभावेनदुःखित्वेवेदविहितवैराग्यादावपितच्छंकास्यादतस्तन्निराकरणीयम् ॥ कर्मिणोविषयः॥कि मागमनेदुःखवंतोनवेतिसंदेहः ॥ लौकिकदृष्टिःपुरुषार्थत्वंचसंदेहबीजम् ॥ पूर्वपक्षयति ॥ तइति ॥ अ

स्यैवकर्मिणामागमनेदुःखंतइहव्रीहियवाइतिश्रुतेस्तेषांव्रीह्यादिभावदर्शनात् ॥ तद्भावेछेदादिनादुःखनियमात् ॥ नचेयंश्रुतिर्धूमादिभावश्रुतिवद्व्याख्येया ॥ तद्वदिहबाधकाभावात् ॥ नहिबाधकंविनाऽमुख्यार्थकल्पनायुक्ताअनुपयुक्ताच ॥ दुःखप्राप्त्यनिवारकत्वात् ॥ व्रीह्यादिर्जीवैःसहावस्थानेपिदुःखनियमात् ॥ नहिदुःखिनासहावस्थानेपिदुःखाप्राप्तावीश्वरवत्स्वातंत्र्यमस्ति ॥ तच्चदुःखंयज्ञादिकर्मफलमेवागमनादेर्यज्ञादिफलत्वस्यप्रतिपादितत्वात् ॥ अतःसुखसाधनतयावेदोदितस्यापिकर्मणोदुःखसाधनत्वेमोक्षहेतुत्वेनोपदिष्टवैराग्याद्यावपिविश्वासाभावादननुष्ठेयत्वंतस्येतिभावः ॥ इतिशब्दोऽन्यार्थोपलक्षणार्थः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ नागतौकर्मिणांव्रीह्यादिभावेनदुःखंमंतव्यम् ॥ तत्रैवमानाभावात् ॥ नचोक्तश्रुतिर्मानम् ॥ यतोस्यांश्रुतौकर्मिणांव्रीह्यादिशरीरप्रवेशएवोच्यते नतुतच्छरीराभिमानित्वम् ॥ नचतस्यतच्छरीराभिमानाभावेव्रह्माद्ययोगस्तदन्येनाधिष्ठितत्वात् ॥ यतश्चास्यनव्रीह्यादिभावोऽतोनैवछेदादिजातदुःखभोगइतिभावः ॥ व्रीह्यादिर्जीवैःसहावस्थानेपिदुःखंस्यादित्यतआह ॥ नत्विति ॥ सहावस्थानेपिदुःखकारणपापफलानुभवस्यानवसरप्राप्तत्वान्नदुःखभोगोस्येतिभावः ॥ यदिकर्मिणोव्रीह्यादिदेहप्रवेशएवनतद्भावस्तर्हिकथंसामानाधिकरण्यमित्यतआह ॥ धूमइति ॥ कर्मिणोव्रीह्यादिदेहप्रवेशएवनतुतद्भावः ॥ प्रवेशेपिनभोगइत्येतत्कुतः ॥ येनश्रुतेरर्थांतरकल्पनेत्यतआह ॥ सइति ॥ अभोगेनव्रजन्नित्यस्यसहावस्थानेपिदुःखाननुभवेनवर्तमानइत्यर्थः ॥ २६ ॥

उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याक्षेपांशंतावद्व्याचष्टे ॥ अशुद्धमिति ॥ यदुक्तंव्रीह्यादिभावेनतत्प्रवेशे नवाकर्मिणोदुःखंनमंतव्यंकारणाभावादिति ॥ नतद्युक्तम् ॥ यज्ञानांहिंसायुक्तत्वेनततःपापस्यसंभवात् ॥ दुःखकारणाभावस्यासंप्रतिपत्तेः ॥ दृष्टंहिहिंसात्वेनब्रह्महिंसायाःपापहेतुत्वमतोदुःखहेतुभावादन्यतरप्र कारेणास्तिकर्मिणोदुःखमितिभावः॥परिहारांशंव्याचष्टे ॥ नेति ॥ भवेदनर्थफलंयज्ञानांयदिपापहेतुत्वंभ

हिंसारूपत्वात्पापस्यापिसंभवात्दुःखंचभवत्वितिचेत् न॥ शब्दविहितत्वात् ॥ हिंसात्वैव

॥ ॐ अशुद्धमितिचेन्नशब्दात् ॐ ॥ २७॥

दिकीयातुतयाऽनर्थोध्रुवंभवेत् ॥ वेदोक्तयाहिंसयातुनैवानर्थःकथंचनेतिवाराहे ॥२७॥

अ० ॥ १८ ॥

वेत् नैतदस्ति ॥ नहिब्रह्महिंसायाःपापहेतुत्वेहिंसात्वंप्रयोजकम् ॥ येनयागीयांहिंसायास्तत्स्यात् ॥ कि न्नामनिषिद्धत्वमेव ॥ नतद्यागीयहिंसायामस्तिप्रत्युतशब्दविहितत्वात्वायव्यंश्वेतमालभेतेत्यादाविति भावः ॥ सोपाधिकत्वेनदूषितानुमानस्यस्मृतिविरोधंदर्शयति ॥ हिंसेति ॥ अतोयज्ञादेःसुखसाधनतयोप दिष्टस्यदुःखकारणत्वाभावाद्युक्तंवैराग्याद्यनुष्ठानंमुमुक्षूणामितिसिद्धम् ॥ २७ ॥ अ० ॥ १८॥

अत्रभगवत्प्राप्तिसाधनवैराग्यायस्वर्गादवतीर्णस्यपितृप्रवेशसमर्थनादस्तिशास्त्रादिसंगतिः ॥ यदिनकर्मि
णःपितृप्राप्तिस्तदानातिविरक्तिःस्यादतःसासाधनीया ॥ कर्मीव्रीह्यादिशरीरंप्रविशतीत्युक्तम् ॥ तस्यैव
पितृप्रवेशःश्रुत्योच्यतेयएवगृहीभवतीति ॥ सकर्म्यत्रविषयः ॥ किंपितरंप्रविशतिनवेतिसंदेहः ॥ श्रुतिःप्र
योजनादर्शनंचसंदेहबीजम्॥पूर्वपक्षयति ॥ स्वर्गादिति ॥ नजीवस्यपितृप्रवेशोस्ति॥ स्वर्गादवागतश्चेतिव
चनात् ॥ नचास्यवचनस्यपितृप्रवेशश्रुतिविरोधः ॥ युक्तिसाहित्येनबलवत्वात् ॥ नहिपितृशरीरगमनेकिं

स्वर्गादवागतश्चापिमातुरेवोदरंव्रजेदितिवचनाद्यएवगृहीभवतियोवारेतःसिचतितमेवानुविशती

## ॥ ॐ रेतःसिग्योगोथ ॐ ॥ २८ ॥

तिश्रुतिः कथमिति॥अतआह ततोरेतःसिचमेवानुप्रविशत्यथमातरम्॥अथप्रसूयतेसकर्मकुरुतइति

कौठरव्यश्रुतेःपितरमेवप्रथमतोविशति ॥ मातृप्राप्तेःपश्चादपिभाव्यत्वात् ॥ २८ ॥ अ० ॥ ११॥

चित्प्रयोजनंपश्यामः ॥ अतःश्रुतिरेववचनविरुद्धानप्रतीतार्थेप्रमाणम् ॥ नचनिरर्थतायुक्ता ॥ प्रामाण्य
स्यसिद्धत्वात् ॥ अतःप्रतीतार्थायोगादर्थांतरस्यावश्यंभावात्साकथंकिमर्थेतिवक्तव्यम् ॥ एवंचमहाया
साभावेननातिवैराग्यंकर्मादात्रपेक्षितमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ अस्ये
वपितृप्रवेशःप्रथमंजीवस्यततोरेतःसिचमेवेतिश्रुतेः ॥नचपितृप्रवेशस्यव्यर्थत्वाच्छ्रुतेर्दौर्बल्यम्॥किमुत्पत्तौ

पितुरेवानुपयोगात्तत्प्रवेशस्यवैयर्थ्यमुच्यते उतप्रवेशमात्रस्य ॥ नाद्यः ॥ शरीरपरिणामायरेतसोपेक्षितत्वे नरेतःसेचकस्योपयोगित्वात् ॥ नद्वितीयः ॥ तत्प्रवेशस्येश्वरकल्पितत्वात् ॥ ईशकृत्यैवपितरंप्रविश्यायाति मातरमित्यादेरितिभावः ॥ एवंचेन्मातुरेवोदरंव्रजेदितिवचनमप्रमाणंप्राप्तमित्यतआह ॥ मातृप्राप्तेरिति ॥ मातृप्राप्तेःप्रथममेवाभावेपिरेतःसिग्योगानंतरमपिविद्यमानत्वान्नवचनस्याप्रामाण्यम् ॥ एवकारस्त्वयोग व्यावर्तकइतिभावः॥अतःपितृप्राप्तेर्विद्यमानत्वाद्भवितव्यंकर्मादावतिवैराग्येणेतिसिद्धम् ॥२८॥अ०॥१९

देहंगर्भस्थितंक्वापिप्रविशेत्स्वर्गतोगतइतिवचनात्पश्चादेवविशतीति ॥

अत्रभगवत्प्राप्तिसाधनवैराग्यायजीवस्यपितृद्वारायोनिंप्रविश्यशरीरप्राप्तेःसमर्थनादस्तिशास्त्रादिसंगतिः ॥ यदिसिद्धदेहप्रवेशाद्येवभवेन्नतर्हीतिविरज्येतातस्तत्प्रतिषेद्धव्यम् ॥ जीवएवविषयः ॥ किंपितृद्वारामातृ योनिमनुप्रविश्याथशरीरंप्राप्नोतिउतनेतिसंदेहः ॥ पक्षद्वयेप्यनुपपत्त्यदर्शनंसंदेहबीजम्॥पूर्वपक्षयति ॥ देह मिति ॥ पितृशरीरान्मातृयोनिमनुप्रविश्यशरीरप्राप्तिरितिनियमोनास्ति ॥ योनिप्रवेशस्तावन्नविद्यते ॥ दे हंगर्भस्थितमितिवचनात् ॥ नह्यत्रयोनिप्रवेशउच्यते ॥ नचविशेषप्रमाणमस्तियेनकल्पयामः ॥ व्यर्थश्च

योनिप्रवेशः ॥ पितुःसकाशादेवतस्मिन्नन्नहिरेवोत्पत्तिसंभवात् ॥ मातृप्राप्तेरपेक्षितत्वेत्रापितुःसकाशात्संस्प
र्शद्वारेणमातृप्राप्त्युपपत्तेः॥ पितृप्रवेशोप्ययुक्तउक्तवचनादेव॥ नचेशङ्कमिवचनविरोधः ॥ वैपरीत्यस्यापि

अतआह॥पितृशरीरान्मातृयोनिमनुप्रविश्यततएवशरीरंप्राप्नोतिदिवःस्थास्नुंगच्छतिस्था
स्नुभ्यःपितरंपितुर्मातरंमातुःशरीरंशरीरेणजायतइतिसंमितम् ॥ अथासंमितंस्थास्नुभ्यो
जायतेपितुर्मातुरंतरेवागर्भेवाबहिर्वेतिपौष्यायणश्रुतेः ॥ स्थावराणिदिवःप्राप्तःस्थावरे

## ॥ ॐ योनेःशरीरम् ॐ ॥ २१ ॥

भ्यश्चपौरुषम् ॥ पुरुषात्स्त्रियमापन्नस्ततोदेहंयथाक्रमम् ॥ देहेनजायतेजंतुरितिसामान्य
तोजनिः ॥ विशेषजननंचापिप्रोच्यमानंनिबोधमे ॥ स्थास्नुष्वथापिपुरुषेप्रमदायामथा
पिवा ॥ गर्भेवाबहिरेवाथक्कचित्स्थानांतरेषुचेतिब्राह्मे ॥ २१ ॥ अ० ॥ २० ॥ ॥
इतिश्रीमद्ब्रह्मसूत्रभाष्येतृतीयाध्यायस्यप्रथमःपादः ॥ ७ ॥

वक्तुंशक्यत्वात् ॥ नचपितृप्राप्तिमंतरेणमातृप्रवेशानुपपत्तिः ॥ अन्यतोन्नादेरेवमातृप्रवेशोपपत्तेः ॥ मा
तृस्थरेतसैवशरीरपरिणामोपपत्तेःपितुरेवानुपयोगः ॥ शरीरप्राप्तिरप्यनुपपन्ना ॥ पूर्वसिद्धतत्प्रवेशस्योक्त

त्वात् ॥ सचमातुरुदरस्थगर्भस्थितेवाबहिर्निर्गतेवोपपद्यते॥ क्वापीत्युक्तत्वात् ॥ अतोत्यायासाभावान्नाति
वैराग्येणकृत्यमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ अस्येवजीवस्यपितृशरीरप्रवे
शः ॥ ततोयोनिद्वारैवमातृशरीरप्रवेशः ॥ तत्रैवप्रागसिद्धशरीरप्राप्तिरित्यर्थः ॥ नैतद्युक्तम् ॥अप्रामाणिक
त्वादित्यतआह ॥ दिवइति ॥ संमितंविशेषकारणमंतरेणसाधारणंजन्म ॥ असाधारणजन्मविषयंप्रागु
क्तमितिभावः॥ स्थाण्वृपुशुकादयः॥ पुरुषेमांधातृमुख्याः॥ प्रमदायामास्तिकप्रभृतयोजरत्कार्वाद्यनुग्रहा
त् ॥ गर्भेपूर्वसिद्धमेवशरीरंकेचित् ॥ बहिर्द्रुपदादयःपितृसापेक्षाः ॥ स्थानांतरेधृष्टद्युम्नादयःपित्रादिनिरपे
क्षाः॥ एतदेवांतरइतिश्रुत्युक्तम् ॥ मातापित्रोर्मध्येअन्योन्यदर्शनमात्रेणवा ॥ अतःसामान्यजन्मनिपित्रा
दिप्रवेशस्यनियमेनापवर्गादितरत्रसर्वत्रापिमहादुःखाविनाभावात्तत्रविरक्तेनभगवान्भजनीयइतिसिद्ध
म् ॥ २१ ॥ अ० २० ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यब्रह्मसूत्रभाष्यस्यटीका
यांश्रीमज्जयतीर्थमुनिविरचितायांतत्त्वप्रकाशिकायांतृतीयाध्यायस्यप्रथमःपादः ॥ ७ ॥ ॥ ७ ॥

श्रीवेदव्यासायनमः ॥ हरिःॐ ॥ एतत्पादप्रतिपाद्यंदर्शयति ॥ भक्तिरिति ॥ यद्वाढर्यार्थंवैराग्यंनिरूपितं पूर्वपादे ॥ याचोपासनस्यांगंसाभक्तिरवसरप्राप्ताऽस्मिन्पादेनिरूप्यतइत्यर्थः ॥ ननुभक्तिरुच्यतइतिको र्थः ॥ किंतत्स्वरूपंनिरूप्यते ॥ कर्तव्येतिविधीयतेवा ॥ नाद्यः ॥ अभावात् ॥ नद्वितीयः ॥ पुरुषप्रयत्ना विषयत्वेनविधेरयोगादित्यतआह ॥ भक्त्यर्थमिति ॥ नात्रभक्तिस्वरूपनिरूपणंतद्विधानंवाक्रियते ॥ किं

भक्तिरस्मिन्पादउच्यते ॥ भक्त्यर्थंभगवन्महिमोक्तिः ॥ नस्वमोपितंविनाप्रतीयते ॥ नतत्ररथान

॥ ॐ श्रीगुरुभ्योनमः॥ हरिः ॐ ॥ ॥ ॐसंध्येसृष्टिराहहि ॐ ॥ १ ॥

रथयोगानपंथानोभवंत्यथरथान्रथयोगान्पथःसृजतइत्यादिश्रुतेः ॥ १ ॥

नामभक्त्युत्पादनार्थंभगवन्महिमोच्यते ॥ माहात्म्यज्ञानपूर्वकस्नेहोहिभक्तिः ॥ नहिमाहात्म्यानुक्तौतज्ज्ञा नंभवतिस्नेहोवा ॥ एवंसाधनवचनस्यापिफलएवतात्पर्यात्भक्तिरुच्यतइत्युक्तमितिभावः ॥ स्यादेतत् ॥ नस्नेहार्थंमहिमोक्तिर्युक्ता॥ तदभावेपिपुत्रादौस्नेहदर्शनात्क्वचित्तदुक्तावप्यदर्शनादिति॥ मैवम् ॥कारणांत रेणफलसिद्धावप्यन्यस्यकारणत्वाविरोधात्॥ नहिविनापिकारीर्यांवृष्टिर्दृष्टेतितदनुष्ठानंवृष्टावकारणंभव

ति॥ श्रुतमाहात्म्येपिस्नेहानुत्पत्तिर्मत्सरादिनिरुद्धानमाहात्म्यश्रवणस्याकारणत्वमाक्षिपति॥नहिभर्जितंबी
जमंकुरंनोत्पादयतीत्येतावताबीजस्यांकुरकारणत्वंनास्ति॥सर्वस्यापिमाहात्म्यस्यप्रथमाध्यायएवोक्तत्वा
त्किमत्रोच्यतइति ॥ सत्यम् ॥ तदेवक्वचिद्विविच्योच्यतेक्वचित्समर्थ्यतइत्यदोषः॥अत्रादौभगवत्प्राप्तिसाधन
भक्त्यर्थंस्वमविषयतत्प्रतीत्योर्भगवदधीनत्वमहिम्नोवर्णनादस्तिशास्त्रादिसंगतिः ॥ सर्वंभगवदधीनमिति
प्रागुक्तम्॥स्वमतत्प्रतीत्योरीश्वरानधीनत्वेतदयुक्तंस्यादितितद्वर्णनीयम॥स्वमोत्रविषयः॥भगवदधीनोनवेति
संदेहः ॥विप्रतिपत्तिःसंदेहबीजम ॥नस्वमोभगवदधीनइतिपूर्वःपक्षः ॥तस्यासत्वात् ॥सत्वेचवक्तव्यंकिस्वा
मविषयोनित्योऽनित्योवेति॥ उभयथापिपूर्वोत्तरकालंदर्शनप्रसंगः॥ नचतदादृश्यते ॥ अतःप्रातीतिकत्वाद
सन्नेवशुक्तिकारजतादिवत् ॥नचवक्तव्यम् ॥ प्रतीतिकालएवसृष्टिनिरोधावतोनदोषइति ॥ प्रमाणाभावा
त्कर्तृपादाननिमित्तानामभावाच्च॥ किंचस्वमविषयंकिमयंशरीरेस्थित्वैवपश्यतिनिर्गत्यवा॥ नाद्यः॥मेरुमं
दरादिदर्शनायोगात् ॥ नद्वितीयः ॥ कुरुषुसुप्तस्यपांचालान्पश्यतस्तत्रैवप्रबोधेशरीरप्रवेशोस्यपश्चाद्देवेति
प्राप्तेः ॥ किंचहेमंतेसुप्तस्यवसंतप्रतीतिस्तावदस्ति ॥नचवसंतसत्तातदास्ति॥नचप्रतीतिकारणंवास्ति ॥ इं
द्रियवृत्तीनामुपरतत्वान्मनसोबाह्यार्थेष्वस्वातंत्र्यात् ॥ यदिचैतेविषयाद्रष्टुर्भिन्नास्तदासमीपस्थैर्दृश्येर
न् ॥ बाह्यार्थत्वात् ॥ अथनततोतिरिक्तास्तर्ह्यागतंकल्पितत्वमेव ॥ परमार्थतोस्यकर्तुरगादिभावाभा

वात् ॥ तत्कालएवस्वष्टिनिरोधपक्षेचप्रागुत्तरकालंमृत्पिंडकपालादीनिदृश्येरन् ॥ नचदृश्यंतेतःप्रातीति
कत्वान्मरुमरीचिकाजलादिवन्नस्वप्नविषयस्येश्वराधीनत्वमितिनतस्यमहामहिमत्वमिति ॥ सिद्धांतयत्सू
त्रंपठित्वाधिकरणतात्पर्यंतावदाह ॥ संध्यइति ॥ तंविनापरमेश्वरंविना ॥ तदधीनइत्यर्थः ॥ अत्रोक्तदो
षपरिहारायसूत्रत्रयंयदुक्तंस्वप्नस्यपश्चाददृष्टेरसत्वाद्भगवदधीनत्वायोगइति ॥ तदनुपपन्नम् ॥ यतोजाग्र
त्सुषुप्तिसंधौभवतीतिसंध्येस्वप्नेप्रागसतामर्थानांसृष्टिः ॥ अनंतरमेवविरोधश्चांगीक्रियतइति॥ ननूक्तमत्रप्र

यएषसुप्तेषुजागर्तिकामंकामंपुरुषोनिर्ममाणइतिच ॥ एतस्माद्ध्येवपुत्रोजायतएतस्माद्भ्रातेतस्मा

## ॥ ॐ निर्मातारंचैकेपुत्रादयश्च ॐ ॥ २ ॥

द्भार्यायदेनंपुरुषमेषस्वप्नेनाभिहंतीतिगौपवनश्रुतिश्च ॥ २ ॥

माणंनास्तीतितत्राह ॥ नेति ॥१॥ कर्तुरभावान्नसृष्टिरुपपन्ना ॥ नहिजीवस्तत्कर्ता ॥ तस्यसुप्तत्वात् ॥ ना
पीश्वरः॥तत्प्रमाणाभावात्॥नचपक्षद्वयेसृष्टिरुपपन्ना॥तत्कालएवसृष्टिनाशकर्तुरदर्शनादित्याशंकांपरिहर
त्सूत्रमुपन्यस्यतत्सूचितश्रुतीउदाहरति ॥ निर्मातारमिति ॥नस्वप्नसृष्टौकर्तुरभावः ॥ जीवानांसुप्तत्वेपिपर
मात्मनःकर्तृत्वात् ॥ नचतत्रप्रमाणाभावः॥यतोयएषुसुप्तेष्वितीश्वरंनिर्मातारमाहुरेकेशाखिनः॥ अतएवत

स्यान्याशक्यकरणशक्तिमत्वेनतात्कालिकीसृष्टिरुपपन्नेतिभावः॥एकेतुमन्यंतेजीवपरैवेयंश्रुतिः ॥ ईश्वर
लिंगाभावात् ॥ जीवस्यकुलालवत्कर्तृत्वायोगात्कल्पकत्वमेव ॥ अस्तुवेश्वरपरता ॥ तथापिनात्रतस्यस्व
मकर्तृत्वंश्रूयतेनिर्मातृत्वमात्रस्यैवश्रवणादिति ॥ तन्नयुक्तम् ॥ सुप्तेषुजागर्तीतिईश्वरलिंगश्रवणात्तदेव
शुक्रंतद्ब्रह्मतदेवामृतमुच्यतइतिवाक्यशेषाच्च ॥ नचब्रह्मैक्यंतस्योच्यते ॥ तस्यदूषितत्वात् ॥ तस्मिन्लोकाः

केनसाधनेन ॥ अनादिमनोगतांश्चसंस्कारान्स्वेच्छामात्रेणप्रदर्शयतिनान्येनसाधनेन ॥ सम्यगन
भिव्यक्तत्वात् ॥ ब्रह्मांडेच ॥ मनोगतांश्चसंस्कारान्स्वेच्छयापरमेश्वरः ॥प्रदर्शयतिजीवायसस्वम

## ॥ ॐ मायामात्रंतुकार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ ॥ ३ ॥

इतिगीयते ॥ यदन्यथात्वजाग्रत्त्वंसाभ्रांतिस्तत्रतत्कृता ॥ अनभिव्यक्तरूपत्वान्नान्यसाधनजं
भवेदिति ॥ ३ ॥

श्रिताःसर्वेइत्युक्तविशिष्टैक्यानंगीकाराच्च॥लक्षणाचागतिकागतिः॥ नचेश्वरस्यस्वमकर्तृत्वंनप्रतीयते॥भुं
जानोनोत्सृजेद्वाचमित्यादाविवेश्वरप्रकरणप्राप्तत्वात्॥एतस्मादितिस्पष्टम् ॥ पुत्रादयश्चस्वामाहरेरेवजायं
तइत्येकेशाखिनआहुरितिसूत्रार्थः ॥२॥ उपादाननिमित्ताभावान्नस्वमेसृष्टिरुपपन्नेत्याक्षिपति ॥केनेति॥

तत्परिहारायसूत्रमुपन्यस्यव्याचष्टे ॥ मायेति ॥ नस्वप्नस्योपादानाद्यभावेनस्रष्टृयभावः ॥ यतःसं ध्यंमायामात्रम् ॥ मनोगतान्पूर्वानुभूतवस्तुसंस्कारानुपादानीकृत्यनिमित्तभूतयास्वेच्छयैवेश्वरेणनिर्मि तमित्यर्थः ॥ स्वशिरश्छेदादीनामसत्वनिरासायानादिमनोपहणम् ॥ कुतोस्यवासनामयत्वमितिवदन्प्रष्ट व्योजायते ॥ किमस्यकल्पितत्वमभिप्रेयतेनित्यत्वंवाउतबाह्यमेवकारणम् ॥ नप्रथमद्वितीयौ ॥ सृष्टिवा क्यैनैवनिरासात् ॥ द्वितीयेस्वप्नमयुक्तैवादृष्टपिशाचीस्वात्मानमभिधावति ॥ तृतीयंप्रतिषेधति ॥ नेति ॥ अनेनावधारणार्थस्तुशब्दोव्याख्यातः ॥ तत्रहेतुमाह ॥ सम्यगिति ॥ यदिबाह्यकारणकाःस्वप्नविषयास्त दासम्यगभिव्यज्येरन् ॥ नचैवम् ॥ अतःसंस्कारोपादानकाएवेतिभावः ॥ एतेनोक्तकंठकोलाहलाःप्रत्यु क्ताः ॥ वासनामयानांमेरुमंदरवसंतादीनांशरीरादनिर्गत्यैवमनसादर्शनसंभवात् ॥ बाह्यकारणाभावान्म त्पिडादिप्रतीतेरप्रसंगात् ॥ सूत्रार्थेस्मृतिसंमतिंचदर्शयति ॥ ब्रह्मांडेचेति ॥ नन्वविद्यमानानेवकरितुरगादी नपश्यमित्युत्तरकालिकानुभवात्कथमुत्पत्तिःस्वाप्नस्योच्यतइत्यतआह ॥ यदिति ॥ प्रतीतंस्वाप्नविषया णांजायत्पदार्थत्वमेवबाध्यतइतितत्प्रतीतिर्भ्रांतिरस्तुनस्वप्नप्रतीतिरितिभावः ॥ तत्कृताअन्यथात्वहेतुकृता ईश्वरकृतेतिवा ॥ ३ ॥ 

ननुयदिबाह्यार्थजन्याःस्वाप्नविषयानभवंतितर्हितेषांसत्वंनैवप्राप्नोतिशुक्तिरजतादिवदित्याशंकांपरिहरन्सू त्रंपठित्वाव्याचष्टे ॥ सूचकश्चेति ॥ स्वप्नविषयाणांबाह्यसाधनजन्यत्वाभावेपिनसत्वहानिः ॥ शुभाशु भसूचकत्वेनसत्वस्यैवनिश्चितत्वात् ॥ नह्यविद्यमानंशाकुनंकस्यचित्सूचकमितिभावः ॥ स्वाप्नार्थानांभा वाभावसूचकत्वमेवकुतइत्यतआह ॥ यदेति ॥ काम्येषुकर्मसुक्रियमाणेषुयदायदिस्त्रियंपश्यतितत्रतर्हितं स्मिन्स्वप्नाख्येनिदर्शनेजातेसमृद्धिंजानीयादित्यर्थः ॥ एवंपुरुषंकृष्णंकृष्णदंतंपश्यतिसएनंहंतीत्यादिश्रु साधनांतराभावेपिभावाभावसूचकत्वेनेश्वरोदर्शयति ॥ यदाकर्मसुकाम्येषुस्त्रियंस्वप्नेभिपश्यति ॥

॥ ॐ सूचकश्चहिश्रुतेराचक्षतेचतद्विदः ॐ ॥ ४ ॥

समृद्धिंतत्रजानीयात्तस्मिन्स्वप्ननिदर्शनइत्यादिश्रुतेः ॥ हिशब्दाद्दर्शनाच्च ॥ यद्वापिब्राह्मणोब्रूयाद्देव ताऋषभोपिवा॥स्वप्नस्थमथवाराजातत्तथैवभविष्यतीत्याचक्षतेचस्वप्नविदोव्यासादयः॥४॥अ० १॥ तिश्चउदाहर्तव्या इतिसूचितमितिशेषः ॥ नचवक्तव्यंचंद्रमाइवादित्योदृश्यतेइतिभ्रांतार्थस्यापिसूचकत्वं श्रूयतइति ॥ अन्यथाज्ञातस्याधिष्ठानस्यैवसूचकत्वाभिधानात् ॥ नचैवमत्रोक्तिरस्ति ॥ नचात्राधिष्ठा नमस्ति ॥ आत्मनःपृथक्प्रतीतेः ॥ अतःस्वप्नस्यभगवदधीनत्वसिद्धेर्महामाहात्म्यंतस्येतियुक्तातत्रभक्ति रितिसिद्धम् ॥ ४ ॥ अ० ॥ १ ॥

अत्रभगवत्प्राप्तिसाधनभक्त्यर्थंतस्यस्वमतिरोधायकत्वमहिम्नोवर्णनादस्तिशास्त्रादिसंगतिः ॥ यदिनतस्या
यंमहिमानिरूप्यतेनतर्हितत्रनिरतिशयाभक्तिर्जायतइतिवर्णनीयः ॥ प्रकृतस्वमस्यातिरोभावोविषयः ॥
भगवदधीनोनवेतिसंदेहः ॥ सर्वस्यतदधीनत्वोक्तिर्विशेषानुक्तिश्चसंदेहबीजम् ॥ नभगवदधीनःस्वमति
रोभावइतिपूर्वःपक्षः ॥ बाह्याज्ञानादेवस्वमःप्रतीयते ॥ अतस्तद्विज्ञानादेवतत्तिरोभावोप्युपपद्यते ॥ श
क्तिर्हेषाज्ञानस्ययत्समानविषयाज्ञानंनाशयतीत्यतआलोकेनतमोवज्ज्ञानेनैवाज्ञानस्यनिवृत्त्यातन्निमित्त
स्वमप्रतीत्युपरमेकिर्मीश्वरेणेतिनतस्यातिमाहात्म्यमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ परेति ॥
बंधमोक्षप्रदत्वात्सएवस्वमतिरस्कर्ता॥ स्वमादिबुद्धिकर्ताचतिरस्कर्तासएवतु॥ तदिच्छयायतोह्यस्यबं

## ॥ ॐपराभिध्यानात्तुतिरोहितंततोह्यस्यबंधविपर्ययौॐ ॥५॥

धमोक्षौप्रतिष्ठितावितिचकौर्मे ॥ ५ ॥ अ० ॥ २ ॥

परमेश्वरेच्छयैवस्वमतिरोधानंनज्ञानेन ॥ नचाज्ञाननिमित्तत्वात्स्वमप्रतीतेस्तत्तिरोधानंज्ञानेनयुक्तमिति
वाच्यम् ॥ अज्ञाननिमित्तोहिबंधोज्ञाननिमित्तश्चमोक्षःसुप्रसिद्धः ॥ नचतथापिबंधमोक्षौज्ञानाद्यधीनौ ॥
ज्ञानाज्ञानयोरचेतनत्वेनास्वातंत्र्यात्॥ अतोबंधकोभवपाशेनभवपाशाच्चमोचकइत्यादेर्भगवदधीनावेव॥
तथाज्ञानाज्ञाननिमित्ततयाप्रतीतयोरपिस्वमाविर्भावतिरोधानयोःपरमात्माधीनत्वमेव ॥ ज्ञानाज्ञानयोर

स्वातंत्र्यात्तेतुनिमित्तमात्रमितिभावः॥नेदंदृष्टांतमात्रमितिभावेनात्रस्मृतिंचोदाहरति॥ स्वमादीति॥अतः स्वमतिरोधानस्यापिभगवदधीनत्वसिद्धेस्तस्यमहामहिमत्वाद्युक्तातत्रभक्तिरितिसिद्धम् ॥ ५॥ अ० ॥२॥ अत्रईश्वरप्राप्तिसाधनभक्त्यर्थंजाग्रत्प्रवर्तकत्वमहिम्नोनिरूपणादस्तिशास्त्रादिसंगतिः॥ अस्यचमहिम्नो ऽवर्णनेननिरतिशयभक्तिरुत्पद्यतइतिवर्णनीयः ॥ स्वमनिरूपणसंगताजाग्रदवस्थात्रविषयः ॥ किमीश्वरा धीनानवेतिसंदेहः ॥ पूर्वोक्तमेवसंदेहबीजम् ॥ नजागरणमीश्वराधीनमितिपूर्वःपक्षः ॥ तस्यकालाधीनत्व दर्शनात्॥ नचकालस्यास्वातंत्र्यादयुक्तम्॥तदधीनत्वस्यप्रत्यक्षसिद्धत्वात् ॥नचास्यप्रत्यक्षस्यबाधकमस्ति

देहयोगेनवासोजाग्रदपिततएव ॥ सएवजागरितस्थापर्यातसस्वमेसप्रभुस्तुराषाट्सएको

## ॥ ॐ देहयोगाद्वासोपि ॐ ॥ ६ ॥

बहुधाभवतीतिकौठरव्यश्रुतेः ॥ ६ ॥ अ० ॥ ३ ॥

येनमन्यामहेभ्रांतमिति॥ अतोजाग्रदवस्थायाभगवदधीनत्वाभावेननमाहात्म्यंतस्येति॥ सिद्धांतयत्सूत्रंप ठित्वाव्याचष्टे ॥ देहेति॥ देहाभिमानेनयास्थितिर्जीवस्यजाग्रदवस्थासापिपराभिध्यानादेवनकालतः॥ त स्याअचेतनत्वेनास्वातंत्र्यादितिभावः ॥ जाग्रदवस्थायाःकालाधीनत्वप्रतीतेःकथमीश्वराधीनत्वमित्यत आह ॥ सएवेति ॥ कालस्यैवतत्प्रवर्तकत्वेश्रुतिविरोधान्निमित्तमात्रविषयंप्रत्यक्षमितिभावः ॥ तुराषाट्वै रिवेगसहः ॥ अतोहरेर्जाग्रत्प्रवर्तकत्वेनमहामहिमत्वाद्युक्तातत्रभक्तिरितिसिद्धम् ॥ ६ ॥ अ० ॥ ३ ॥

अत्रईश्वरप्राप्तिसाधनभक्त्यर्थंसुप्तप्राप्यत्वमहिम्नोवर्णनादस्तिशास्त्रादिसंगतिः ॥ एतदवर्णनेननिरतिशय
भक्तिःस्यादतोसौवर्णनीयः॥ स्वप्नजाग्रद्विचारेऽवशिष्टासुषुप्तिर्विषयः ॥ भगवदधीनत्वेविवादाभावात्किं
परमात्मनिनाडीषुवेतिसंदेहः ॥ सतासोम्यतदासंपन्नोभवतीति ॥ यत्रैतत्सुप्तःसमस्तःसंप्रसन्नःस्वप्नंनविजा
नात्यासुतदानाडीषुसुप्तोभवतीतिश्रुतिःसंदेहबीजम् ॥ परमात्मन्येवसुप्तिर्ननाडीष्वितिपूर्वःपक्षः ॥ पर
मात्मनोन्यत्रावस्थानेसुप्तस्यदुःखित्वप्रसंगात्जाग्रत्स्वप्नयोरिव ॥ नचमुक्तवत्सुप्तस्यदुःखमस्ति ॥ तदा
जाग्रत्स्वप्नाभावःसुप्तिर्नाडीस्थेपरमात्मनि ॥ आसुतदानाडीषुसुप्तोभवतिसतासौम्यतदा

॥ ॐतदभावोनाडीषुतच्छ्रुतेरात्मनिहॐ ॥ ७ ॥

संपन्नोभवतीतिश्रुतेः ॥ ७ ॥ अ० ॥ ४ ॥

सुखमात्रानुभवात् ॥नचतत्रप्रमाणाभावः ॥सुखमहमस्वाप्समित्युत्तरकालीनस्मृतेः॥नचाननुभूतंस्मर्यते ॥
नचवाच्यंदुःखाभावःस्मर्यतेनसुखमिति ॥ तदनुभवाभ्युपगमेकिमपराद्धंसुखेन ॥ दुःखाभावोऽनुमीय
तेनचस्मर्यतइतिचेन्न ॥ पक्षभूतावस्थास्मरणाभावेनतदनुदयात् ॥ आत्मपक्षीकारेपिप्रतिज्ञाविशेषणत
यावस्थास्मरणस्यावश्यंभावित्वादतःसुषुप्तौसुखैकानुभवात्परमात्मन्येवसुप्तिर्ननाडीष्वित्यतस्तच्छ्रुतेरप्रा
माण्यमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ तदिति ॥ सुषुप्तिर्जीवस्यनाडीषुभवति ॥ नचैवंदुःखप्रा

प्तिः ॥परमात्मनिसुप्त्यंगीकारात् ॥ नचैकस्योभयत्रसुप्तिर्विरुद्धा ॥ नाडीस्थपरमात्मनिसुप्त्यंगीकारेणो पपत्तेः ॥ परमात्मन्येवंकिनस्यात्सुप्तिःकिंनाडीस्थविशेषणेनेतिचेत् ॥ उभयविधश्रुतेरन्यथानुपपत्तेः ॥ एवंचसतितदुपपत्तेः ॥ एवंचाभ्युपगमेनोपपन्नेनप्रमाणभूतश्रुतिव्यवस्थोपपत्तौतदनभ्युपगमेसर्वत्राप्य व्यवस्थैवेत्यतिप्रसंगइतिभावः ॥ सुप्तःप्राप्तः ॥ अतःपरमात्मनोनाडीस्थस्यसुप्तप्राप्यत्वमाहात्म्यवत्त्वाद्यु क्तातत्रभक्तिरितिसिद्धम् ॥ ७ ॥ अ० ४ ॥ अत्रेश्वरप्राप्तिसाधनभक्त्यर्थंतस्यसुप्तप्रबोधकत्वमहिम्नो

यतस्तस्मिन्सुप्तिः ॥ एषएवसुप्तंप्रबोधयतिएतस्माज्जीवउत्तिष्ठत्ये

## ॥ ॐ अतःप्रबोधोऽस्मात् ॐ ॥ ८ ॥

षप्नमातैषपरमइतिकौंडिन्यश्रुतिः ॥ ८ ॥ अ० ५ ॥

वर्णनादस्तिशास्त्रादिसंगतिः ॥ भगवतःसुप्तप्रबोधकत्वमहिमाभावेनतस्मिन्निरतिशयभक्तिरुत्पद्येतातोऽ सौवर्णनीयः ॥ प्रकृतसुप्तप्रबोधोविषयः ॥ भगवदधीनोनवेतिसंदेहः ॥ सर्वस्यतदधीनत्वोक्तिर्विशेषानु क्तिश्चसंदेहबीजम् ॥ नेश्वरैकाधीनःप्रबोधइतिपूर्वःपक्षः ॥ प्रबोधकारणानांभेरीताडनादीनामपिदर्शना त् ॥नचतेषामकारणत्वेहेतुरस्तियेनजानीमस्तत्प्रतीतिर्भ्रांतिरिति ॥ अतःपरमात्मनःसुप्तप्रबोधकत्वाभावा न्नमहैश्वर्यमिति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ अतइति ॥ सुप्तप्रबोधोप्यस्मात्परमात्मनएवभवति

जीवस्यतस्मिन्नेवसुप्तत्वस्यप्रागुक्तत्वात् ॥ नहीश्वरेणस्वांतर्निवेशितस्तत्प्रेरणमंतरेणोद्बोद्धुंशक्नोतीतिभा
वः ॥ दृश्यतेभेरीताडनादेरपिप्रबोधहेतुत्वंतदनंतरंप्रबोधदर्शनात् ॥ अतःकथंभगवदेकाधीनइत्यतआह ॥
एषइति ॥ सावधारणश्रुतिविरोधादन्यन्निमित्तमात्रविषयंप्रत्यक्षमितिभावः ॥ अतःसुप्तप्रबोधकत्वेनाति
माहात्म्यवतोहरेर्भक्तिर्युक्तेतिसिद्धम् ॥८॥ अ० ५॥ अत्रभगवत्प्राप्तिसाधनभक्त्यर्थंसर्वावस्थानांतदधीन

नचकेषांचित्स्वमादिकर्तानतुसर्वेषामिति॥एषह्येवसाधुकर्मकारयतीतिकर्मण्यवधारणात्॥
प्रदर्शकस्तुसर्वेषांस्वमादेरेकएवतु॥ परमःपुरुषोविष्णुस्ततोऽन्योनास्तिकश्चनेत्यनुसारिस्मृ

## ॥ ॐसएवचकर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥ ९ ॥

तेश्च ॥ एषस्वमानूदर्शयतिएषप्रबोधयति ॥ एषएवपरमानंदइतिश्रुतेः ॥ आत्मानमेवलो
कमुपासीतेतिचविधिः ॥ ९ ॥ अ० ६ ॥

त्वमहिम्नोनिरूपणादस्तिशास्त्रादिसंगतिः ॥ सर्वावस्थानांभगवदनधीनत्वेनतस्मिन्निरतिशयाभक्तिर्भवेद
तस्तन्निरूपणीयम् ॥ प्रकृतावस्थाएवात्रविषयः ॥ किंसर्वजीवानांसर्वकालीनाभगवदधीनावाउतकेषां
चित्किंचित्कालीनाइतिसंदेहः ॥ अवस्थाभगवदधीनाइत्युक्तस्योभयार्थसंभवस्संदेहबीजम् ॥ नसर्वेषां
सर्वकालीनाऽवस्थाभगवदधीनाकिंनामकेषांचित्किंचित्कालीनेतिपूर्वःपक्षः ॥ राजादीनांखंडशत्वदर्शना

त् ॥ नचलोकविलक्षणमीश्वरस्यसर्वप्रेरकत्वमभ्युपगंतुंशक्यते ॥ अतिप्रसंगात् ॥ नचात्रप्रमाणमस्तिये
नादृष्टमपिकल्पयामः ॥ अतःसर्वावस्थाप्रेरकत्वाभावेननसर्वैश्वर्यंहरेरिति ॥सिद्धांतयत्सूत्रमुपन्यस्यव्या
चष्टे ॥ सएवेति ॥ सपरमात्मैवसर्वावस्थाप्रेरकोनतुकेषांचित्कादाचित्कावस्थाप्रेरकः ॥ एषह्येवेतिसर्व
कर्मणांभगवदधीनत्वस्यश्रुतत्वात् ॥ स्वमादिप्राप्तेश्चतदंतर्भावात्प्रदर्शकइतिस्मृतेश्च ॥ एषस्वमानितिश्रुते
श्च ॥ अवधारणस्यसर्वत्रान्वयेनविवक्षितसिद्धेः ॥ आत्मानमेवेतिपरमात्मनएवोपास्यत्वविधानाच्च ॥
अन्यस्यापिप्रेरकस्यसद्भावेऽवधारणानुपपत्तेरितिभावः ॥ चशब्दःपक्षांतरनिषेधार्थः ॥स्फुटमभिमतार्था
भिधायकत्वमनुसारित्वम् ॥ अतःसर्वावस्थाप्रेरकेमहामहिम्निईश्वरेभक्तिर्युक्तेतिसिद्धम् ॥१॥अ० ६ ॥स
र्वावस्थानांतद्बोधानांचेश्वराधीनत्वेसिद्धेअत्रभगवत्प्राप्तिसाधनभक्त्यर्थंतस्यावांतरावस्थासंस्थितजीवप्रा
प्यत्वनिरूपणादस्तिशास्त्रादिसंगतिः ॥ अन्यथानिरतिशयैश्वर्याभावेननतत्रभक्तिरुत्पद्यतइतिनिरूपणीय
म् ॥ अवस्थाविचारप्रसक्तोमोहोऽत्रविषयः ॥ किंजीवस्यईश्वरेतदन्यत्रवाभवतीतिसंदेहः ॥ द्विविधाव
स्थादर्शनंचसंदेहबीजम् ॥ नमोहोभगवदितरत्रजीवस्येतिपूर्वःपक्षः ॥ जाग्रत्स्वप्नयोःपृथगवस्थात्वात् ॥
अन्यथातत्संकीर्णतापातात् ॥ नचैवंसुप्तिसंकरप्रसंगोदोषः ॥ समानधर्मतयातत्संकरस्यगुणत्वात् ॥ अतः

परमात्मन्येवमोहोजीवस्येतिसिद्धांतयत्सूत्रमुपन्यस्यप्रतिज्ञांशंतावद्व्याचष्टे ॥मुग्धेइति॥ हेत्वंशंव्याख्या
तुंसमस्तसूत्रार्थेस्मृतिमुदाहरति ॥ हृदयस्थादिति॥ मोहेतावत्परमात्मविदूरत्वसामीप्यप्रवेशार्धप्रवेशाःप्रस
क्ताः ॥ नचत्रयःकल्पामोहेसंभवंति ॥ जाग्रदाद्यन्यावस्थाधर्मत्वात् ॥ एवंचप्रसक्तप्रतिषेधेऽन्यस्याप्रसं
गात्परिशिष्टोऽर्धप्रवेशएवमोहेजीवस्यज्ञायतइतिभावः॥ मोहस्यावस्थात्रयातिरेकित्वेभवेदेतत् ॥ तदेवकु
तइत्यतआह ॥ दुःखेति ॥ नतावत्सुप्त्यंतर्भावोमोहस्यदुःखानुसंधानान्नापिजाग्रत्स्वप्नांतर्भावः ॥ दुःखा

मोहावस्थायांपरमेश्वरेऽर्धप्राप्तिर्जीवस्य॥ हृदयस्थात्पराज्जीवोदूरस्थोजाग्रदेष्यति ॥ समीपस्थ

## ॥ॐमुग्धेऽर्धसंपत्तिःपरिशेषात्ॐ॥१०॥

स्तथास्वप्नंस्वपित्यस्मिन्लयंव्रजन् ॥ यतएवंत्रयोवस्थामोहस्तुपरिशेषतः ॥ अर्धप्राप्तिरितिज्ञेयो
दुःखमात्रप्रतिस्मृतेरितिवाराहे ॥

त्मकालातिरिक्तविषयादर्शनादितिभावः॥ नापिदूरसामीप्यंचिरंनास्तीत्यप्रसंगः ॥ मोहेऽर्धप्राप्तिसमर्थना
यपरिशेषेप्रकारांतरप्रदर्शनंचैतत् ॥ नमोहेसमग्रप्राप्तिः ॥ दुःखानुसंधानात् ॥ नाप्यप्राप्तिरेव ॥ अन्यार्था
दर्शनात् ॥ अतःपरिशेषादर्धप्राप्तिरिति॥ दूरस्थःअक्षिस्थः॥समीपस्थःकंठदेशस्थः॥ दक्षिणाक्षिमुखेविश्वो
मनस्यंतस्तुतैजसइत्यादेःसर्वत्रसामीप्यमेवेत्यतउक्तंहृदयस्थादिति ॥ त्रयःतिस्रः॥ दूरस्थत्वादित्रयःप्रका
राः॥यतएवमवस्थात्रयेविनियुक्ताअतोमोहोऽवस्थेतिवा॥मोहेऽवस्थानमेवाचिंत्यते॥तस्येश्वराधीनताकुतो

नचिंत्यते ॥ मोहकारणानांपृथगपिदर्शनादित्यतआह ॥ सोपीति॥ कर्मानुस्मृत्यादिनैवमोहस्यापिभगवद
धीनत्वंसिद्धमित्यतोनचिंत्यतइत्यर्थः ॥ बाह्यकारणदर्शनंनिमित्तविषयमन्यथाविशेषस्मृतिविरोधादिति
भावेनतामुदाहरति॥मूर्छेति॥अतएवसार्थकोयंविचारः॥ अनिश्चितस्वरूपस्येश्वराधीनतायादुर्ज्ञानत्वात्॥
अतोमोहावस्थायाअपिभगवदधीनत्वान्मुग्धप्राप्यत्वाच्चमहामाहात्म्येतत्रभक्तिरुपपन्नेतिसिद्धम्॥१०॥
अ० ७॥अत्रेश्वरप्राप्तिसाधनभक्त्यर्थंतस्यसर्वत्रनिर्दोषाशेषसद्गुणत्वसमर्थनादस्तिशास्त्रादिसंगतिः॥ स्वगत
तारतम्येनतत्रनिरतिशयाभक्तिर्जायतइतितत्प्रतिषेद्धव्यम्॥ सर्वावस्थाप्रेरकत्वेनप्रकृतःपरमात्माविषयः॥
प्रतिशरीरंजाग्रदादिस्थानेषुस्थितःकिमन्योन्यंभिन्नउताभिन्नइतिसंदेहः॥ घटादीनांभिन्नत्वदर्शनमाका

सोपिततएवेतिचसिद्धम् ॥ मूर्छाप्रबोधनंचैवयतएवप्रवर्तते ॥

सईशःपरमोज्ञेयःपरमानंदलक्षणइतिचकौर्मे ॥ १० ॥ अ० ७ ॥

शादीनामभिन्नत्वदर्शनंचसंदेहबीजम्॥ पूर्वपक्षयति॥ स्थानेति ॥ सर्वशरीरेषुजाग्रदादिस्थानेषुचस्थितो
विश्वादिरूपोहरिरन्योन्यंभिन्नएव॥भिन्नस्थानत्वात्घटादिवत् ॥ नचाकाशादिवदुपपत्तिरितिवाच्यम् ॥
किमीश्वरोवयवीपाणिपादाद्यवयवैरनेकस्थानउतसमग्ररूपेणवा॥ नाद्यः॥ विश्वादीनांसप्तांगएकोनविंश
तिमुखइत्यादिनाप्रत्येकंरूपश्रवणात्॥द्वितीयेऽसंगतोदृष्टांतः ॥ अतोस्त्येवविश्वादीनांभेदः॥ तथाचभिन्ना
नांगुणादितारतम्यादनुग्राह्यानुग्राहकभावदर्शनाच्चतत्प्रसंगः॥ एवंचनिरतिशयैश्वर्याभावान्नतत्रभक्तिर्युक्ते

तिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ नतत्रतत्रास्थितोहरिर्मिथोभिन्नः ॥ नचभि
न्नस्थानताऽनुमानविरोधः॥ सर्वेषुभूतेष्वितिश्रुतिविरोधेनबाधितविषयत्वादितिभावः॥ सर्वेषुभूतेषुचक्षुरा
दिस्थानेषुएतमेकमेवपूर्णगुणमाचक्षतइत्यर्थः ॥ एकैकदेशतोऽनेकस्थानगतत्वंपरस्यासिद्धंश्रुतिविरुद्धंचे
तिभावेनोभयत्वमित्यनुक्त्वाउभयलिंगमित्युक्तम् ॥ तद्व्याख्यानंभिन्नंरूपमिति ॥ लिंगंस्वरूपमुद्दिष्टंलिंगं

स्थानापेक्षयापरमात्मनोभेदादनुग्राह्यानुग्राहकभावइत्यतआह ॥ स्थानापेक्षयापिपरमा
त्मनोनभिन्नंरूपम् ॥ सर्वेषुभूतेष्वेतमेवब्रह्मेत्याचक्षतइतिहिश्रुतिः ॥ एकरूपःपरोविष्णुः

## ॥ ॐ नस्थानतोपिपरस्योभयलिंगंसर्वत्रहि ॐ ॥ ११ ॥

सर्वत्रापिनसंशयः ॥ ऐश्वर्याद्रूपमेकंचसूर्यवद्बहुधेयतइतिमात्स्ये ॥ प्रतिदृशमिवनैक
धार्कमेकंसमधिगतोस्मिविधूतभेदमोहइतिचभागवते ॥ ११ ॥

ज्ञापकमेवचेतिवचनात् ॥ समग्ररूपेणानेकस्थानगतत्वंकथमुपपद्यतेहरेरन्यत्रादृष्टत्वादित्यतआह॥ एके
ति ॥ सूर्यदृष्टांतंस्पष्टयन्नुक्तार्थेस्मृत्यंतरंचाह ॥ प्रतिदृशमिति॥ प्रतिदृशंप्रेरकत्वेनैश्वर्यवशान्नैकधास्थित
मर्कंयथैकमेवसमधिगच्छंति ॥ तथाभूतानांप्रतिहृदयंसामर्थ्येनैश्वर्यबलादनेकधास्थितमीश्वरमेकंसम ॥२७॥
धिगतोस्मीत्यर्थः ॥ मांप्रतिमांप्रतीतिबहुधास्थितमितिवा ॥ ११ ॥

उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंतावद्याचष्टे ॥ नेति ॥ नविश्वादीनामभेदोवाच्यः ॥ विश्व तैजसयोर्द्विविधबंधवत्वेनप्राज्ञस्यैकबंधवत्वेनतुरीयस्याबद्धत्वेनभेदव्यपदेशात्॥तथाचानुग्राह्यादिभावइ तिभावः ॥ कार्यभ्रमरूपजाग्रद्बद्धोविश्वः॥ तत्कारणभ्रमरूपस्वप्नबद्धस्तैजसः ॥ तत्कारणाज्ञानरूपसुप्तिब द्धःप्राज्ञः॥ कार्यकारणाकारणद्वावपिबंधौतुरीयेनस्तइत्यर्थः॥ परिहारांशंव्याचष्टे॥ नेति ॥ नैतच्छ्रुतिबले

कार्यकारणबद्धौताविष्येतेविश्वतैजसौ॥ प्राज्ञःकारणबद्धस्तुद्वौतुतुर्येनसिद्ध्यतइतिभेदवचनान्नेति चेन्न॥एषतआत्मांतर्याम्यमृतः॥अयमेवसः॥ योयमात्मेदममृतमिदंब्रह्मेदंसर्वम्॥ अयंवैहरयोयंवै

## ॥ ॐ नभेदादितिचेन्नप्रत्येकमतद्वचनात् ॐ ॥ १२ ॥

दशचसहस्राणिबहूनिचानंतानिचतदेतद्ब्रह्मापूर्वमनपरमनंतरमबाह्यमयमात्माब्रह्मसर्वानुभूरित्यनु शासनमितिप्रत्येकमभेदवचनात् ॥ १२ ॥

नेश्वररूपाणांभेदोवक्तव्यः॥ पृथिव्यंतर्म्यामिवतवांतर्यामीत्यादिनायश्चायमस्यांपृथिव्यांपुरुषोयश्चायम ध्यात्ममयमेवसइत्यादिनाचायंमूलरूप्येव ॥ बहवोहरयइतिचभगवद्रूपाणांप्रत्येकंपरस्परमूलरूपेणचा भेदवचनादित्यर्थः ॥ अपूर्वमनपरमाद्यंतशून्यम् ॥ नांतर्बहिरन्यद्यस्यतदनंतरमबाह्यम ॥ ब्रह्मेत्यनुवादः सर्वानुभूःसर्वज्ञः ॥ प्रत्येकमित्यादरंसूचयति ॥ तेनचैतच्छ्रुतीनांबलवत्वम ॥ १२ ॥

नैतच्छ्रुतिबाधोभेदश्रुतेः ॥ तासांकतिपयरूपविषयत्वस्यापिसंभवात् ॥ अंतिमश्रुतौस्फुटमभेदाप्रतीतेः ॥
अतोभेदश्रुतिबलाद्विश्वादीनांभेदएवेत्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ अपीति ॥ विश्वाद्यनंतरू
पाणामभेदेनपठितत्वान्नभेदश्रुतिमालंब्यतद्भेदोग्राह्यइत्यर्थः॥चशब्दात्समुच्चितमितिशेषः॥अमात्रोभिन्नां
शशून्यःपुनरनंतांशः॥ द्वैतस्योपशमोमिथ्याज्ञानोपशमकर्ता ॥ ॐमित्याक्रियमाणॐकारः॥ अभेदेनस
हैवेश्वररूपाणांबहुत्वस्यपठितत्वाच्चनभेदश्रुतिरभेदविरोधिनीतिवा ॥ तर्हिकागतिर्भेदव्यपदेशस्येत्यतआ

एवमभेदेनैव ॥ चशब्दादनंतरूपत्वंचैकेशाखिनःपठंति ॥ अमात्रोऽनंतमात्रश्चद्वैतस्यो
पशमःशिवः ॥ ॐकारोविदितोयेनसमुनिर्नेतरोजनइत्यभेदेपिभेदव्यपदेशःस्था

## ॥ ॐ अपिचैवमेके ॐ ॥ १३ ॥

नभेदादैश्वर्ययोगाच्चयुज्यते ॥ ब्रह्मतर्केच ॥ बद्धोबंधादिसाक्षित्वाद्भिन्नोभिन्नेषुसंस्थि
तेः ॥ निर्दोषाद्वयरूपोपिकथ्यतेपरमेश्वरइति ॥ १३ ॥ अ० ८ ॥

ह ॥ अभेदेपीति॥अक्ष्यादिस्थितोबद्धोन्यत्राबद्धउच्यतइतिभावः॥अभिन्नेपिभेदव्यपदेशोऽचिंत्यैश्वर्या
दित्युक्तम् ॥ अनन्योप्यन्यशब्देनेति ॥ अभिन्नस्यस्थानभेदोपिकुतइत्यतआह ॥ऐश्वर्येति॥ निर्दोषस्यह
रेर्बंधःकथमित्याशंकांपरिहर्तुमुक्तार्थेस्मृतिसंमतिमाह ॥ ब्रह्मतर्केचेति॥ निर्दोषोपिबद्धोऽद्वयरूपोपिभिन्नः

कथ्यतइत्यर्थः॥ अतोहरेःस्वगतभेदशून्यस्यसर्वत्रगुणपूर्णत्वाद्युक्तातत्रभक्तिरितिसिद्धम्॥१३॥अ० ८ ॥
अत्रेश्वरप्राप्तिसाधनभक्त्यर्थंतस्याप्राकृतरूपसमर्थनादस्तिशास्त्रादिसंगतिः॥ अन्यथाऽनित्यत्वादिप्राप्त्या
नतत्रभक्तिरुत्पद्यतइतितत्समर्थनीयमेव॥ यदर्थंमहिमानिरूपितःसाभक्तिरेवात्रविषयः॥ विष्णौयुक्तान
वेतिसंदेहः॥ साधनतयोक्तेषुयुक्तायुक्तदर्शनंसंदेहबीजम् ॥ पूर्वपक्षयति ॥ रूपवत्त्वादिति ॥ नयुक्तैव

रूपवत्त्वादनित्यत्वमित्यतोवक्ति॥प्रकृत्यादिप्रवर्तकत्वेनतदुत्तमत्वान्नैवरूपवद्ब्रह्म ॥ हिश

## ॥ ॐ अरूपवदेवहितत्प्रधानत्वात् ॐ ॥ १४ ॥

ब्दादस्थूलमनण्वित्यादिश्रुतेश्च॥ भौतिकानिहिरूपाणिभूतेभ्योऽसौपरोयतः॥ अरूपवा
नतःप्रोक्तःक्तदव्यक्ततःपरइतिचमात्स्ये ॥ १४ ॥

भगवद्भक्तिः॥ तथाहि ॥ किमसौरूपवान्नवा ॥ नाद्यः॥ रूपवत्त्वादनित्यत्वप्रसंगात् ॥ यज्ञदत्तादिव
त्॥ अनित्यशरीरेचनभक्तिरुत्पद्यते ॥ अरूपमव्ययं तदरूपमनामयमित्यादिश्रुत्यप्रामाण्यंचस्यात्॥
नद्वितीयः ॥ रुग्मवर्णंकर्तारं आदित्यवर्णमित्यादिश्रुतेर्वैयर्थ्यापातात् ॥ सौंदर्यसौलक्षण्याद्यभावापा
ताच्च॥ सौंदर्यादिशून्येचभक्त्ययोगात्॥ तदेवमुभयथापिभक्तेरनुपपन्नत्वाद्यथोयंपादइतिभावः ॥ सि

द्धांतयत्सूत्रमवतार्यव्याचष्टे अतइति ॥ कर्तव्यैवपरमात्मनिभक्तिः ॥ ब्रह्मणोरूपवत्त्वाभावेनानित्यत्वा
भावादरूपत्वश्रुत्यवैयर्थ्याच्च ॥ अरूपत्वंकुतः॥रूपंहिभवत्प्राकृतंभौतिकंवाभवेत्॥ नचतद्ब्रह्मणिसंभवति॥
तस्यप्रकृत्यादिप्रवर्तकत्वात् ॥ नहिस्वाधीनंस्वात्मानंबध्नातीतिभावः ॥ प्रधानत्वादित्यस्योत्तमत्वादितिव्या
ख्यानम् ॥ उत्तमत्वप्रकारप्रदर्शनंप्रवर्तकत्वेनेति ॥ ननुब्रह्मणःप्रकृत्यादिसामर्थ्येनबंधाभावेपिस्वेच्छादि
निमित्तेनरूपंकिंनस्यादित्यतआह ॥ हिशब्दादिति ॥ सूचितायाइतिशेषः ॥ सूत्रार्थेस्मृतिंचाह ॥ भौति
यदापश्यःपश्यतेरुग्मवर्णंश्यामाच्छबलंप्रपद्येसुवर्णज्योतिरित्यादिश्रुतीनांचनवैयर्थ्यम् ॥ विलक्ष

## ॥ ॐ प्रकाशवच्चावैयर्थ्यम् ॐ ॥ १५ ॥

णरूपत्वात् ॥ यथाचक्षुरादिप्रकाशेविद्यमानेपिवैलक्षण्यादप्रकाशादिव्यवहारः ॥ १५ ॥
कानीति ॥ परःप्रवर्तकत्वेनोत्तमः ॥ अव्यक्ततःपरेतत्आव्यक्तिकंचरूपंकेत्यर्थः ॥ कैमुत्यंवा ॥ १४ ॥
ब्रह्मणोरूपाभावेरूपित्वश्रुतिवैयर्थ्यंसौंदर्याद्यभावश्चेत्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ प्रकाश
वच्चेति ॥ नारूपित्वेपिब्रह्मणोरुग्मवर्णादिश्रुतिवैयर्थ्यंसौंदर्याद्यभावश्च ॥ रूपवत्त्वाद्ब्रह्मणः ॥ नचतर्हित
स्यानित्यत्वमरूपश्रुतिवैयर्थ्यंचेतिवाच्यम् ॥ तद्रूपस्यानित्यत्वव्याप्तप्राकृतभौतिकरूपविलक्षणत्वेनानि
त्यत्वाद्यप्रसंगादितिभावः ॥ ननुविलक्षणरूपत्वेकथमरूपित्वश्रुत्यवैयर्थ्यमित्यतआह ॥ यथेति ॥ यथा

गृहांतर्नयनादिप्रकाशेविद्यमानेपिनास्तिप्रकाश्यइतिव्यवहारोभवति ॥ चक्षुरादिप्रकाशस्यलौकिकप्र
काशवैलक्षण्यात् ॥ तथारूपित्वेपिब्रह्मणोविलक्षणरूपित्वादरूपित्वश्रुत्यवैयर्थ्यमितिभावः ॥ नचैवंरू
पशब्दस्यप्राकृतादावेवव्युत्पन्नेत्वनरूपित्वश्रुतिवैयर्थ्यम् ॥ अप्रसिद्धप्रकाशेपिपरमात्मन्यात्मैवास्यज्यो
तिरितिप्रकाशशब्दप्रवृत्तेः॥ १५॥ कथंब्रह्मणोविलक्षणरूपत्वंयेनानित्यत्वादिदोषाभावः ॥ सर्वरूपाणांप्र

वैलक्षण्यंचोच्यतेरूपस्यविज्ञानानंदमात्रत्वम् ॥ ऐकात्म्यप्रत्ययसारमिति ॥ आनंदमात्र

## ॥ ॐआहचतन्मात्रम् ॐ ॥ १६ ॥

मजरंपुराणंएकंसंतंबहुधादृश्यमानम् ॥ तमात्मस्थंयेऽनुपश्यंतिधीरास्तेषांसुखंशाश्वतंने
तरेषामितिचतुर्वेदशिखायाम् ॥ १६ ॥

कृत्याद्यात्मकत्वनियमादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ आहचेति ॥ नवैलक्षण्यानिरुक्तिर्ब्र
ह्मरूपस्यज्ञानानंदाद्यात्मकत्ववैलक्षण्यस्यैकात्म्येत्यादिश्रुतिसिद्धत्वादितिभावः ॥ प्रधानात्मभावएवस्व
रूपंयस्यतदैकात्म्यंप्रत्ययसारंज्ञानरूपम् ॥ तद्गुणसारत्वादितिप्रकृतौज्ञानानंदौतद्ग्रहणेनगृह्येते ॥ १६ ॥

नन्वेतच्छ्रुत्योर्ज्ञानानंदाद्यात्मकत्वमेवब्रह्मणःश्रूयते नत्वानंदादेर्ब्रह्मरूपत्वम् ॥ अतोरूपित्वश्रुतेर्वैयर्थ्यंसौंदर्याद्यभावश्चापरिहृतइत्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ दर्शयतिचेति ॥ नज्ञानानंदयोर्ब्रह्मरूपत्वा

दर्शयतिचानंदस्यरूपत्वंतद्विज्ञानेनपरिपश्यंतिधीराः ॥ आनंदरूपममृतंयद्विभातीति ॥

## ॥ ॐ दर्शयतिचाथोअपिस्मर्यते ॐ ॥ १७ ॥

शुद्धस्फटिकसंकाशंवासुदेवंनिरंजनम् ॥ चिंतयीतयतिर्नान्यंज्ञानरूपादृतेहरेरितिचमा
त्स्ये ॥ १७ ॥ अ० १ ॥

श्रवणंयेनश्रुतिवैयर्थ्यादिदोषः ॥ यतस्तद्विज्ञानेनेतिश्रुतिरानंदस्यब्रह्मरूपत्वंचदर्शयति ॥ अथज्ञानस्यापि ब्रह्मरूपत्वंशुद्धस्फटिकसंकाशमितिस्मर्यतइतिभावः ॥ अतोज्ञानानंदादिसुंदरतराविग्रहेहरौभक्तिर्युक्तेति युक्तंतन्महिमवर्णनमितिसिद्धम् ॥ १७ ॥ अ० १ ॥

अत्रब्रह्मप्राप्तिसाधनभक्त्यर्थंजीवाभेदनिरासादस्तिशास्त्रादिसंगतिः ॥ जीवाभेदेस्वस्मिन्निवपरमात्मन्यपि भक्त्ययोगात्सनिराकार्यः॥ प्रकृताभक्तिरेवविषयः॥ परमात्मनियुक्तानवेतिसंदेहः ॥ युक्तायुक्तसाधनोपदेशःसंदेहबीजम् ॥ नयुक्तेतिपूर्वःपक्षः ॥ जीवस्यपरमात्माभिन्नत्वात् ॥ नहिस्वस्मिन्नेवभक्तिरुपपद्यते ॥ न चाभेदेविवदितव्यम् ॥ जीवःपरमात्मनोनभिद्यते चेतनत्वात्तदंशत्वान्मत्स्यादिवदित्यनुमानसिद्धत्वात् ॥

यस्मादेवंपरमेश्वररूपाणांमिथोनकश्चिद्भेदः ॥ अतएवसादृश्याज्जीवस्यापितथास्यादिति ॥ तस्यप्रतिबिंबत्वमुक्त्वाचशब्देनभेदंदर्शयति ॥ रूपंरूपंप्रतिरूपोबभूव ॥ बहवःसूर्यकायद्वत्सूर्यस्य

## ॥ ॐ अतएवचोपमासूर्यकादिवत् ॐ॥ १८ ॥

सदृशाजले ॥ एवमेवात्मकालोकेपरात्मसदृशामताइति ॥ अतएवभिन्नत्वतदधीनत्वतत्सादृश्यैरेवसूर्यकाद्युपमा नोपाध्यधीनत्वादिना ॥ १८ ॥ अ० १० ॥

मत्स्यादीनांपरमात्मनश्चमिथोनभेदइतिप्रागेवसिद्धम् ॥ नचवाच्यंभेदस्यसमर्थितत्वान्नाभेदोयुक्तइति ॥ सर्वचेतनसमुदायस्येशांशत्वेनैकैकजीवस्यपरमात्मनाभेदाभेदादभेदेपिभेदाविरोधात् ॥ अतःपरमात्मभक्तेरयुक्तत्वाद्यर्थंतन्महिमवर्णनमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यपूर्वपक्षंतावदनुवदति ॥ अतएवेति ॥

यस्मादेवंनस्थाननतोपीत्युक्तप्रकारेणेश्वररूपाणामीश्वरस्यचमिथोऽभेदःसिद्धः ॥ अतस्तत्सादृश्याच्चेतन
त्वादेर्जीवस्यापिपरमात्माभेदःस्यादितिपूर्वःपक्षइत्यर्थः ॥ तत्परिहारायसूर्यकादिवच्चेतिपदंव्याचष्टे ॥ त
स्येति ॥ एवंप्राप्तेसूत्रकारोजीवस्येशप्रतिबिंबत्वहेतुंसूर्यकादिवदित्यनेनदृष्टांतकथनेनैवोक्त्वाचशब्देनसा
ध्यंभेदंसमुच्चिनोतीत्यर्थः॥ इदमुक्तंभवति ॥ जीवोब्रह्माभिन्नोनभवतितत्प्रतिबिंबत्वात् ॥योयत्प्रतिबिंबःस
तस्मात्भिन्नोयथासूर्यकःसूर्यादिति ॥ जीवस्येश्वरप्रतिबिंबत्वमेवकुतइत्यतआह ॥ रूपमिति ॥इत्या
दिप्रतिबिंबत्वंदर्शयतीत्यनुषज्यते ॥ अथवायस्मादेवमित्यादिसिद्धांतएव ॥ तथाहि ॥ यस्मादुक्तरीत्याप
रमेश्वररूपांशानांज्ञानैश्वर्यादौनकश्चिद्विशेषः ॥ अतोजीवस्यापिपरमेश्वररूपांशत्वेमत्स्यादिसाम्यात्तद्व
ज्ज्ञानैश्वर्याद्यविशेषःस्यात् ॥नचैवम्॥ अतोंऽशत्वेपिजीवोब्रह्मप्रतिबिंबएवेतितस्यप्रतिबिंबत्वमतएवोपमे
तिपदेनोक्त्वातद्धेतुनासूर्यकादिदृष्टांतेनभेदंचशब्देनसमुच्चिनोतीति ॥ अनेनप्राचीनानुमानस्याप्रतिबिंबत्वो
पाधिश्चसूचितोभवति ॥ अभेदांशएवविवादात्तन्निरासः ॥ भेदस्यापिसद्भावेननैश्वर्यादीतिचेन्न ॥ ब्रह्मस्व
रूपानुगतेरावश्यकत्वात् ॥ ऐश्वर्यादेश्वस्वरूपत्वान्मत्स्यादिवच्चेति युक्तिदृष्टार्थएवश्रुतिः॥ यदुक्तंसूर्यका
दिवज्जीवोब्रह्मप्रतिबिंबइतितदयुक्तम् ॥ तथाहि ॥किमसौसूर्यकादिवदुपाध्यायत्तत्वादिधर्मवान्नवा॥ आ
द्येअनित्यत्वादिदोषः ॥ द्वितीयेनसूर्यकाद्युपमासंभवति ॥ अतःप्रतिबिंबत्वाभावादुक्तंतदवस्थमेवेत्यतआ

ह ॥ अतएवेति ॥ नसूर्यकाद्युपमासंभवोनाप्यनित्यत्वाद्यापत्तिःपृथगुपदेशात् ॥ संध्येसृष्टिराहहि ॥ त

द्गुणसारत्वादित्युक्तैर्भिन्नत्वादिभिःसूर्यकाद्युपमोपपत्तेः॥ उपाध्यायत्तत्वादिसर्वप्रतिबिंबधर्मानभ्युपगमेना

नित्यत्वप्रसंगाभावात् ॥ यौहिसाध्यसाधनधर्मौविवक्षितौतत्सद्भावेनैवदृष्टांतदार्ष्टांतिकयोःसाम्यमन्यथा

सर्वानुमानलोपात् ॥ अत्रचभिन्नत्वंसाध्यंतदधीनत्वंतत्सादृश्यंचप्रतिबिंबपदोक्तंसाधनंदृष्टांतदार्ष्टांतिकयो

नित्यसिद्धत्वात्सादृश्यस्यनित्यानंदज्ञानादेर्नभक्तिज्ञानादिनाप्रयोजनमित्यतोब्रवीति॥ अं

बुवत्स्नेहेनग्रहणंज्ञानम् ॥ भक्तिविनानतत्सादृश्यंसम्यगभिव्यज्यते ॥ यमेवैषवृणुतेतेन

## ॥ ॐ अंबुवद्ग्रहणात्तुनतथात्वम् ॐ ॥ १९ ॥

लभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वामितिश्रुतिः ॥ महत्वबुद्धिर्भक्तिस्तुस्नेहपूर्वाभिधीयते ॥

तयैवव्यज्यतेसम्यग्जीवरूपंसुखादिकमितिपाद्मे ॥ १९ ॥ अ० ॥ ११ ॥

रस्तीतिनकश्चिद्दोषइतिभावः ॥ अतोजीवस्यभिन्नत्वाद्युक्ताभगवतिभक्तिरितियुक्तंतन्महिमवर्णनमिति

सिद्धम् ॥ १८॥अ०॥१०॥ अत्रभगवत्प्राप्तिसाधनभक्त्यर्थंतत्फलनिरूपणादस्तिशास्त्रादिसंगतिः॥तस्याश्चवि

फलत्वेअकर्तव्यत्वप्रसंगात्फलंसाध्यमेव॥ प्रकृताभक्तिरेवविषयः॥ कर्तव्यानवेतिसंदेहः॥ द्विविधार्थदर्शनं

चसंदेहबीजम् ॥ पूर्वपक्षयति॥ नित्येति ॥ नभगवद्भक्तिःकर्तव्याप्रयोजनाभावात् ॥ नचभगवज्ज्ञानंप्रयोजनम् ॥ तेनापिप्रयोजनाभावात् ॥ नचतत्प्रसादःप्रयोजनम् ॥ तेनापिप्रयोजनाभावात् ॥नचमोक्षःप्रयोजनम् ॥नित्यज्ञानानंदादिमत्त्वंहिमोक्षस्तस्यचनित्यसिद्धत्वात् ॥कुतः भगवत्सादृश्यस्यजीवेनित्यसिद्धत्वान्नित्यंविद्यमानस्याभिव्यक्त्यर्थंभक्त्यादीत्युक्तमितिचेन्न ॥ विद्यमानस्यकदाचित्स्वयमेवाभिव्यक्तिसंभवात् ॥ सुप्ताविवेतिनिष्फलत्वान्नभक्तिःकर्तव्या ॥ अतोव्यर्थंमाहात्म्यवर्णनमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यअंबुवदितिपदतात्पर्यमाह ॥ अतइति ॥ ग्रहणपदंव्याचष्टे ॥ ग्रहणमिति ॥ सूत्रार्थमाह ॥ भक्तिमिति ॥ कर्तव्यैवभगवद्भक्तिः भगवत्सादृश्यस्यनित्यसिद्धत्वेपितदभिव्यक्त्यर्थत्वात् ॥ नचसुप्तौभक्तिविनापिसुखाद्यभिव्यक्तिदर्शनात्तद्वैयर्थ्यम् ॥ भक्तिविनासम्यगभिव्यक्त्यभावात् ॥ नचसापिस्वयमेवभवति ॥ तथासत्यनादिसंसारप्रवाहानुपपत्तेरितिभावः ॥ ननुसादृश्याभिव्यक्तिर्भक्त्याभवतीत्येतत्कुतइत्यतआह ॥ यमिति ॥ स्वांतनुंतत्स्वरूपमित्यर्थः ॥ यदुक्तंस्नेहेनज्ञानंभक्तिस्तयाजीवस्वरूपस्यसम्यगभिव्यक्तिरितितत्स्फुटमत्रनप्रतीयतइत्यतःस्मृतिंचाह ॥ महत्त्वेति ॥ अतःप्रयोजनवतीभक्तिःकार्यैवेतियुक्तंमाहात्म्यवर्णनमितिसिद्धम् ॥ १९ ॥ अ० ११ ॥ अत्रभगवत्प्राप्तिसाधनभक्त्यर्थंतस्यभक्त्यनुसारिफलदानसमर्थनादस्तिशास्त्रादिसंगतिः ॥ भक्त्यनुसारिफलाभावेतत्करणानुपपत्तेस्तदर्थतोनिरूप्य

ते ॥ प्रकृताभक्तिरेवविषयः ॥ किंभक्तेष्वेकप्रकाराद्वृद्धिह्रासवतीवेतिसंदेहः ॥ उभयविधधर्मदर्शनंसंदेह
बीजम् ॥ एकप्रकारैवेतिपूर्वःपक्षः ॥ तत्फलस्यमुक्तत्वानंदित्वादेःसर्वेषुसाम्यात् ॥ अन्यथाफलसाम्येपि
साधनातिशयस्यवैयर्थ्यंकेषांचिदसम्यङ्मुक्तिर्वास्यात् ॥ नचैवंअतोभक्तिरेकप्रकारैवेति॥सिद्धांतयत्सूत्र
मुपन्यस्यव्याचष्टे ॥ वृद्धीति ॥ अस्यैवभक्त्यादेःसाधनस्यसाधकेषुवृद्धिह्रासवत्त्वम् ॥ ब्रह्मादीनामपिभ
क्तत्वात्तेषांचोत्तमफलत्वादन्येषामल्पफलत्वादितिभावः ॥ महदल्पफलत्वेपिब्रह्मादीनामन्येषांचकुतोभ

तस्यचभक्तिज्ञानादेर्वृद्धिह्रासभाक्त्वंविद्यते॥ ब्रह्मादीनामुत्तमानांसर्वेषांभक्तत्वेऽतर्भावात् ॥ एवं

## ॥ ॐ वृद्धिह्रासभाक्त्वमंतर्भावादुभयसामंजस्यादेवम् ॐ ॥ २० ॥

भक्त्यादिविशेषांगीकारादेवेश्वरस्यब्रह्मादीनन्यान्प्रतिचसामंजस्यंभवति ॥ साधनस्योत्तमत्वेन
साध्यंचोत्तममाप्नुयुः ॥ ब्रह्मादयःक्रमेणैवयथानंदश्रुतौश्रुताइतिचब्राह्मे ॥ २० ॥

क्तितारतम्यमित्यतआह ॥ एवमिति ॥ यदिविषमफलानांब्रह्मादीनामितरेषांचभक्तितारतम्यंस्यात् ॥ त
र्ह्येवविषमफलदातुर्भगवतोवैषम्यादिदोषाभावःस्यान्नतुसमभक्तीनांफलवैषम्ये ॥ अतःफलवैषम्यान्य
थाऽनुपपत्त्याभक्तेरपिवैषम्यमितिभावः॥ फलसाधनवैरूप्येयुक्तिविरोधमुक्त्वास्मृतिविरोधंचदर्शयति ॥
साधनस्येति ॥ आनंदश्रुतिर्वक्ष्यमाणा ॥ २० ॥

ननुभवेदेतद्यदिब्रह्मादीनांफलतारतम्यंस्यात् ॥ तदेतत्कुतइत्याक्षिपति ॥ कुतइति ॥ एतत्परिहारायसूत्रं पठित्वाव्याचष्टे ॥ दर्शनाच्चेति ॥ अस्तुफलतारतम्यंतथापिभक्तिसाम्यंकिंनस्यात् ॥ फलतारतम्यस्य भक्तीतरसाधनतारतम्येनापिसंभवादतआह ॥ चशब्दादिति ॥ समुच्चिनतिशेषः ॥ अतोभक्तेःफलानुसा रित्वाद्युक्तासेतिसिद्धम् ॥ २१ ॥ अ० १२ ॥ अत्रब्रह्मप्राप्तिसाधनभक्त्यर्थंतस्यविश्वपालकत्वसमर्थ नाद्स्तिशास्त्रादिसंगतिः ॥ पालकत्वगुणाभावेतत्रनिरतिशयभक्त्यनुदयात्तत्समर्थनीयमेवसृष्ट्यादिकंज

कुतः॥ अथातआनंदस्यमीमांसाभवतीत्यारभ्यब्रह्मपर्यंतपुरुषेविशेषदर्शनात् ॥ चशब्दात्स्मृतिः॥

## ॥ॐ दर्शनाच्च ॐ॥ २१ ॥

यथाभक्तिविशेषोत्रऽदृश्यतेपुरुषोत्तमे।तथामुक्तिविशेषोपिज्ञानिनांलिंगभेदतइति॥२१॥अ०१२॥ गतोहरिःकरोतीत्युक्तम् ॥ तत्रजगत्पालनमेवविषयः ॥ विष्णोर्युक्तमयुक्तंवेतिसंदेहः ॥ गुणानामपि युक्तायुक्तत्वदर्शनंसंदेहबीजम् ॥ पूर्वपक्षयति ॥ सृष्टीति ॥ नपालकत्वंभगवतोस्ति ॥ सृष्टिसंहारकर्तृ त्वात् ॥ सत्यांचसृष्टौयावत्संहारंजगत्स्थितेः स्वतएवसिद्धेः ॥ संहर्तुरसंहारव्यतिरिक्तव्यापारस्यरक्षारू पस्यैवायोगात् ॥ अन्यस्यतुसृष्ट्यादिकर्तृत्वेसंभवतिनिवारणादिव्यापारः ॥ एतेनावांतरोपद्रवनिवारणं ॥३३॥ चप्रत्युक्तम् ॥ तत्रापिस्वयंकर्तृत्वात् ॥ अतःपालकत्वाभावेनमहामहिमत्वाभावादयुक्तातत्रनिरतिशया

भक्तिरितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ अस्त्येवहरेःपालकत्वम् ॥ यतोनैताव देनेतिश्रुतिः प्रकृतस्यसृष्ट्यादिकर्तृत्वस्यतावन्मात्रत्वंनिषिध्यततोधिकंपालनमपिब्रवीति ॥ तेनज्ञायते सृष्टिसंहारकर्तुरपिपालकत्वमितिभावः ॥ अनेनेश्वरेणभवत्कार्यमेतावत्प्रागुक्तंसृष्टिसंहारमात्रंनभवति

सृष्टिसंहारकर्तृत्वमेवास्यनपालकत्वंस्वतःसिद्धेरिति॥ अतआह॥ उक्तंसृष्टिसंहारकर्तृत्व मात्रंप्रतिषिध्यततोधिकंब्रवीति ॥ नैतावदेनापरोन्यदस्त्युक्षासद्यावापृथिवीविभर्तीति ॥

## ॥ ॐप्रकृतैतावत्त्वंहिप्रतिषेधतिततोब्रवीतिचभूयःॐ ॥ २२ ॥

चशब्दात्स्मृतिश्च ॥ सृष्टिंचपालनंचैवसंहारंनियमंतथा ॥ एकएवकरोतीशःसर्वस्यजग तोहरिरितिब्रह्मांडे ॥ २२ ॥ अ० १३ ॥

किंत्वन्यदस्ति ॥ किंतत् ॥ सपरोभक्ताभिलषितसेचकोद्यावापृथिव्यौधत्तेपुष्णातिचेत्यर्थः ॥ सृष्टिसं हारकर्तुरपिपालकत्वेस्पष्टस्मृतिंचाह ॥ चशब्दादिति ॥ समुच्चितेतिशेषः ॥ अनेनस्थितेःस्वतःसिद्धत्वंचप रिहृतम् ॥ धारणपोषणादेरुक्तत्वादिति ॥ अतःपालनादिमहामहिम्निहरौभक्तियुक्तेतिसिद्धम ॥ २२॥ अ० ॥ १३ ॥

अत्रभगवत्प्राप्तिसाधनभक्त्यर्थंतस्योपलब्ध्ययोग्यत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ उपलब्ध्ययोग्य त्वेभक्तिवैयर्थ्यप्रसंगात्तदभावःसमर्थनीयः ॥ प्रकृताभक्तिरेवविषयः ॥ कर्तव्यानवेतिसंदेहः ॥ कर्तव्या कर्तव्यव्यापारदर्शनंसंदेहबीजम् ॥ नकार्यैतिपूर्वःपक्षः ॥ प्रयोजनाभावात् ॥ भगवदापरोक्ष्यंप्रयोजन मितिचेन्नतद्भक्तिप्रयोजनंस्तंभादिवत्पुरुषप्रयत्नेनैवतदापरोक्ष्यसंभवात् ॥ तस्याव्यक्तत्वंचेद्व्यर्थैवतद्भ क्तिः ॥ अव्यक्तस्वभावस्यसाधनशतेनापिदर्शनायोगात् ॥ तदभ्युपगमेचेश्वरोनप्रतीयतेऽव्यक्तस्य

परमात्मापरोक्ष्यंचतत्प्रसादादेवनजीवशक्त्येतिवक्तुमुच्यते ॥ अव्यक्तमेवतन्नब्रह्मस्वतः ॥ अरूपम

## ॥ ॐतदव्यक्तमाहहिॐ ॥ २३ ॥

क्षरंब्रह्मसदाऽव्यक्तंचनिष्कलम् ॥यज्ज्ञात्वामुच्यतेजंतुरानंदश्चाक्षयोभवेदितिकौठरव्यश्रुतिः॥२३॥

भावत्वाददृष्टादिवदितियुक्तिविरोधः ॥ अतोभक्तेर्व्यर्थत्वादयुक्तंतदर्थंमहामाहात्म्यवर्णनमिति ॥ सिद्धां तयत्सूत्रमवतारयति ॥ परमात्मेति ॥ तत्प्रसादाद्भक्तिसाध्यादितिशेषः ॥ वक्तुमतोऽनंतेनेत्यादौउच्यतेऽव्य क्तत्वमितिशेषः ॥ सूत्रंव्याचष्टे ॥ अव्यक्तमिति ॥ कर्तव्यैवभगवद्भक्तिः ॥ तस्याव्यक्तस्वभावत्वेनपुरुष प्रयत्नेनद्रष्टुमशक्यत्वात् ॥ अव्यक्तत्वंचतस्यश्रुतिराहेतिभावः ॥ २३ ॥

अस्तुब्रह्मस्वतोऽव्यक्तंतथाप्याराधनेनपुरुषप्रयत्नेनव्यक्तीभविष्यति ॥ समाराधनेनाव्यक्तयक्षादिसा
क्षात्कारदर्शनात् ॥ एवंचकिंभक्त्येत्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ अपीति ॥ नभक्तिरहिताऽऽराध
नेनापिब्रह्मव्यक्तीकर्तुंशक्यते ॥ आराधनेप्यव्यक्तत्वस्यज्ञानिप्रत्यक्षसिद्धत्वादतिसूक्ष्मत्वहेतुकानुमानसि

आराधनेप्यव्यक्तमेवज्ञानिप्रत्यक्षेण ॥ इतरेषामतिसूक्ष्मत्वलिंगादनुमानेन ॥ नतमाराधयित्वापि

॥ ॐ अपिसंराधनेप्रत्यक्षानुमानाभ्याम् ॐ ॥ २४ ॥

कश्चिद्व्यक्तीकरिष्यति ॥ नित्याव्यक्तोयतोदेवःपरमात्मासनातनइतिचब्रह्मवैवर्ते ॥ २४ ॥

द्धत्वाच्चेत्यर्थः ॥ अव्यक्तत्वंप्रत्यक्षसिद्धमितिव्याहतिरुत्तरत्रगर्भस्रावेणैवनंक्ष्यति ॥ प्रत्यक्षसिद्धार्थेऽनु
मानापेक्षाभावादेवेतरेषामित्युक्तम् ॥ परप्रत्यक्षस्यासिद्धत्वात्कथमत्रज्ञानिप्रत्यक्षंप्रमाणीक्रियते ॥ ज्ञानि
नांतदुक्त्यन्यथानुपपत्त्यातत्प्रत्यक्षसिद्धिरितिभावेनाह ॥ नेति ॥ नित्याव्यक्तइत्यनेनयक्षादिप्रतिबंदीपरि
हृताभवति ॥ २४ ॥

आक्षिपति ॥ नित्येति ॥ अस्तुब्रह्ममूलरूपेणाव्यक्तंतस्योत्पत्त्यादिरहितत्वात् ॥ तथापिगृहीतरूपैर्व्य क्तोभवत्येवतेषामुत्पत्तिमत्त्वात् ॥ दृष्टंह्यनलजलभुवांभूतानांतन्मात्रालक्षणानुत्पन्नमूलरूपेणाव्यक्ता नामप्युत्पन्नरूपेणव्यक्तत्वम् ॥ अतोभक्तिमंतरेणापिज्ञानलाभाद्व्यर्थाभक्तिः ॥ नहिस्वगतविशेषशून्ये

नित्याव्यक्तस्वरूपेणनथैवतिष्ठतिव्यक्तंकिंचिद्रूपंगृहीत्वादृश्यते ॥ यथाग्न्यादयस्तन्मात्रारूपेणा दृश्याअपिस्थूलरूपेणदृश्यंतेएवमितिचेन्न ॥ अग्न्यादिवत्स्थूलसूक्ष्मत्वविशेषाभावात् ॥ नासौ

## ॥ ॐप्रकाशवच्चावैशेष्यम्ॐ ॥ २५ ॥

सूक्ष्मोनस्थूलःपरएवसभवतितस्मादाहुःपरमइतिमांडव्यश्रुतेः ॥ स्थूलसूक्ष्मविशेषोऽत्रनकश्चि त्परमेश्वरे ॥ सर्वश्चैकप्रकारोऽसौसर्वरूपेष्वजोयतइतिचगारुडे ॥ अव्यक्तव्यक्तभावौचनकश्चित्प रमेश्वरे ॥ सर्वत्राव्यक्तरूपोयंयतएवजनार्दनइतिचकौर्मे ॥ २५ ॥

ब्रह्मणिनियमोस्तिमूलरूपाऽऽपरोक्ष्यमेवपुरुषार्थहेतुरितिभावः ॥ एतत्प्रतिषेधति ॥ नेति ॥ एतेनागामिसू त्रगतश्चशब्दःशंकाव्यावृत्त्यर्थमित्युक्तंभवति ॥ हेत्वाकांक्षायांसूत्रमुपन्यस्यव्याचष्टे ॥ प्रकाशवदिति ॥ ॥ २५ ॥ भवेदग्न्यादीनांकेनचिद्रूपेणव्यक्तत्वंकेनचिदव्यक्तत्वंस्थूलसूक्ष्मविशेषवत्त्वात् ॥स्थौल्यादिनिमित्तोहिव्य

क्तत्वादिभावः ॥ नचैवंब्रह्मणिकेनचिद्रूपेणस्थूलत्वंकेनचित्सूक्ष्मत्वमितिविशेषोस्तियेनव्यक्तत्वमव्यक्तत्वं चस्यादितिभावः ॥ ब्रह्मणिस्थूलसूक्ष्मविशेषोनास्तीत्येतत्कुतःयेनव्यक्ताव्यक्तताभावइत्यतआह ॥ नासाविति॥ केनचिद्रूपेणसूक्ष्मःकेनचिद्रूपेणस्थूलइतिनकिंतुसर्वत्रपरमसूक्ष्मएवेत्यर्थः ॥ उत्पन्नानुत्पन्नमूलरूपावताररूपाणांकथंस्थूलसूक्ष्मविशेषाभावइत्यतआह ॥ स्थूलेति ॥ एवंव्यापकानुपलब्ध्याव्यक्ताव्यक्तत्वाभावोब्रह्मणीत्युक्तम् ॥ स्मृत्यापितदभावंसाधयति ॥ अव्यक्तेति॥जनमर्दयतीतिजनार्दनः ॥२५॥

तर्हिकिंयत्नेनेत्यतआह ॥ विषयभूतेतस्मिन्नेवश्रवणाद्यभ्यासात्प्रकाशश्च भवति ॥

## ॥ ॐप्रकाशश्चकर्मण्यभ्यासात्ॐ ॥ २६ ॥

आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइतिश्रुतेः ॥ २६ ॥

नन्वेवंब्रह्मणःसर्वथाऽव्यक्तत्वेकिंभक्त्यादिनाप्रयोजनमित्याशंकापरिहारायसूत्रमवतार्यव्याचष्टे ॥ तर्हीति ॥ अव्यक्तत्वेपिब्रह्मणोनज्ञानार्थंप्रयत्नवैयर्थ्यम् ॥ तद्विषयेश्रवणाद्यभ्यासेनभक्तिपूर्वकेणतदापरोक्ष्यभावात् ॥ **अवाच्यस्यशास्त्रविषयत्वाभावान्नश्रवणादीतिनवाच्यम्** ॥ विषयत्वस्येक्षत्यधिकरणेसाधितत्वादितिभावः ॥ श्रवणाद्यभ्यासेनब्रह्मदर्शनंभवतीत्येतत्कुतइत्यतआह ॥ आत्मेति ॥ २६ ॥

ननुकथंनित्याव्यक्तस्यब्रह्मणःप्रकाशःश्रवणादिनापिभवति ॥ युक्तिविरोधात् ॥ नहिसाधनशतेनादृष्टंदृष्टं भवतीत्याशंक्यतत्परिहारायसूत्रमवतार्यव्याचष्टे ॥ नित्येति ॥ अव्यक्तस्याप्यापरोक्ष्यंब्रह्मणोभवत्येव साधनसामर्थ्येनतदभावेपितत्प्रसादादेव ॥ कुतएतत् ॥ अव्यक्तत्वेप्रत्यक्षत्वेचप्रमाणसद्भावात्तदन्यथानुपप त्त्यापुरुषप्रयत्नेनाप्रत्यक्षत्वंस्वप्रसादात्प्रत्यक्षत्वंचज्ञायतइतिभावः॥ बलवद्युक्त्याचैतत्साधयति॥ तस्येति ॥

नित्याव्यक्तस्यकथंप्रकाशइत्यतउच्यते ॥ उभयत्रप्रमाणभावात्तत्प्रसादादेवप्रकाशोभव ति ॥तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चांतेविश्वमायानिवृत्तिरितिलिंगात् ॥ युज्य

## ॥ ॐ अतोऽनंतेनतथाहिलिंगम् ॐ ॥ २७॥

तेचतस्यानंतशक्तित्वात् ॥ नित्याव्यक्तोपिभगवानीक्ष्यतेनिजशक्तितः ॥ तमृतेपरमात्मा नंकःपश्येतामितंप्रभुमितिचनारायणाध्यात्मे ॥ २७ ॥ अ० १४ ॥

तस्याभिध्यानात् ॥ इच्छयाप्रसादेनसंसारोनिवर्ततइत्युच्यते ॥ एतच्चमोक्षस्यप्रसादसाध्यत्वंलिंगंभगवत्प्र सादेनतद्दर्शनभावंचज्ञापयति ॥ दृष्ट्वैवतंमुच्यतइतिमोक्षस्यतद्दर्शनसाध्यत्वश्रवणात् ॥ प्रसादाद्दर्शनंदर्श नान्मोक्षइत्यवश्यमंगीकार्यत्वादितिभावः॥नन्वव्यक्तस्वभावस्यप्रसादेनापिप्रत्यक्षतानयुज्यते॥नहिप्रसन्नो पिनरोवानरोभवितुमीष्टइत्यतआह ॥ युज्यतेचेति ॥ सूत्रार्थेस्मृतिंचाह ॥ नित्येति ॥ अतोदर्शनार्थंभक्तेः कर्तव्यत्वाद्युक्तंमाहात्म्यवर्णनमितिसिद्धम् ॥ २७॥ अ० १४ ॥

अत्रब्रह्मप्राप्तिसाधनभक्त्यर्थंतस्यगुणित्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ गुणित्वाभावेतत्रभक्त्यनुदयात्त त्समर्थनीयम् ॥ प्रकृताभक्तिरेवात्रविषयः ॥ कर्तव्यानवेतिसंदेहः॥ पूर्वोक्तमेवसंदेहबीजम् ॥ पूर्वपक्षय ति ॥ स्वरूपेणेति ॥ नभगवद्भक्तिःकर्तव्या ॥ तस्यानंदित्वाद्यभावात् ॥ नह्यगुणिनिभक्तिरुपपन्ना ॥ नचा नंदित्वादिकमंगीकर्तुंशक्यंब्रह्मणः ॥ आनंदादीनांतत्स्वरूपत्वाभ्युपगमात् ॥ अन्यथासमवायनिराकरणा

स्वरूपेणानंदादिनाकथमानंदित्वादि ॥ अत्रोच्यते॥ आनंदंब्रह्मणोविद्वान् ॥ अथैषएवपरमआनं

## ॥ ॐउभयव्यपदेशात्त्वहिकुंडलवत्ॐ ॥ २८॥

दइत्युभयव्यपदेशादहिकुंडलवदेवयुज्यते ॥ यथाहिःकुंडलीकुंडलंच ॥ तुशब्दात्केवलश्रुतिगम्य त्वंदर्शयति ॥ २८ ॥

नुपपत्तेः ॥ स्वरूपेणचानंदादिनाआनंदित्वादेर्युक्तिविरुद्धत्वात् ॥ अथापिगुणित्वांगीकारेगुणानांतत्स्वरूप त्वंत्याज्यम् ॥ गुणानांगुणिस्वरूपत्वस्ययुक्तिविरुद्धत्वात् ॥ नचानंदादिभोक्तृत्वंविनातत्स्वरूपत्वंमहिमा ॥ द्रविणवत्त्वेहिपारिवढ्यंनतुद्रविणत्वे ॥ अतोगुणित्वाभावेनभक्त्ययोगाद्यर्थमाहात्म्यवर्णनमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥अत्रेति॥ कर्तव्यैवभगवद्भक्तिः॥श्रुतिषुगुणात्मकत्वेनगुणित्वेनचव्यपदेशा

त् ॥ गुणस्वरूपस्याप्यानंदित्वाद्युपपत्तेरितिभावः ॥ ननुश्रौतमपिगुणात्मकस्यगुणित्वंकथंयुज्यते अदर्श
नादित्यतआह ॥ अहीति॥ तदेवविवृणोति ॥ यथेति ॥ यथाकुंडलात्मकस्याप्यहेर्विशेषादेवकुंडलित्वमेव
मानंदाद्यात्मकस्यापिब्रह्मणोविशेषादेवानंदित्वादिकंयुज्यतइतिभावः ॥ नेश्वरोगुणवान्गुणात्मकत्वाद्यथा
नस्वःस्ववान्दंडोदंडवान्वा ॥ आनंदाद्यानब्रह्मणोगुणास्तत्स्वरूपत्वाद्ब्रह्मवदित्यतआह ॥ तुशब्दादिति ॥

यथादित्यस्यप्रकाशत्वंप्रकाशित्वंचएवंवादृष्टांतः ॥ तेजो

## ॥ ॐ प्रकाशाश्रयवद्वातेजस्त्वात् ॐ ॥ २९ ॥

रूपत्वाद्ब्रह्मणः ॥ २९ ॥

भवेदत्रयुक्तिविरोधोयदिब्रह्मस्वरूपादियुक्तिगम्यंस्यात् ॥ नैतदस्ति ॥ केवलश्रुतिगम्यत्वादितिभावः ॥
॥ २८ ॥ दृष्टांतांतरेणैतदेवसाधयत्सूत्रमुपन्यस्यव्याचष्टे ॥ प्रकाशेति ॥ यथाप्रकाशात्मकस्याप्यादित्य
स्यप्रकाशित्वंविशेषबलादेवंगुणात्मकस्यापिब्रह्मणोगुणित्वंविशेषबलाद्युज्यतइतिभावः ॥ नन्वत्रघटादी
नामपिदृष्टांतयितुंयुक्तत्वाद्विशिष्यादित्यग्रहणेकाविवक्षेत्यतआह ॥ तेजोरूपत्वादिति ॥ २९ ॥

दृष्टांतांतरेणैतत्साधयत्सूत्रमुपन्यस्यव्याचष्टे ॥ पूर्ववद्वेति ॥ यथाकालस्यपूर्वेणाभेदेपिकालइतिविशेष्यो भवति ॥ पूर्वइतिविशेषकोविशेषादेव ॥ तथागुणात्मकस्यापिब्रह्मणोविशेषादेवगुणिब्रह्मेतिविशेषणविशेष्यभावोयुज्यतइतिभावः ॥ व्यर्थोक्तेरपर्यवसानात्किमर्थोयंदृष्टांतइत्यतआह ॥ अतीति ॥ ब्रह्मणइति

यथैकएवकालःपूर्वइतिव्यवच्छेदकोव्यवच्छेद्यश्चभवति ॥ अतिसूक्ष्मत्वापेक्षयैषदृष्टांतः ॥ स्थूलमतीनांचप्रदर्शनार्थमहिकुंडलदृष्टांतः ॥ प्रकाशवत्कालवद्वायथांगशयनादि

## ॥ ॐपूर्ववद्वाॐ ॥ ३० ॥

कम् ॥ ब्रह्मणश्चैवमुक्तानामानंदोभिन्नएवत्वितिनारायणाध्यात्मे ॥ आनंदेनत्वभिन्नेनव्यवहारःप्रकाशवत् ॥ कालवद्वायथाकालःस्वावच्छेदकतांव्रजेदितिब्राह्मे ॥ ३० ॥

शेषः ॥ अलमनेनभेदाभेदविषयेणकिमाद्यदृष्टांतेनेत्यतआह ॥ स्थूलेति ॥ एकस्मिन्नेवविशेषणविशेष्यभावस्येतिशेषः ॥ अस्मिन्नेवार्थेस्मृतीपठति ॥ प्रकाशवदिति ॥ शयनमवस्थाविशेषः ॥ अंगादभिन्नोप्यंगेशयनमित्यंगविशेषणंभवतीत्यर्थः ॥ आदिपदेनशेतेइतिकर्मकर्तृभावः ॥ अभिन्नएवब्रह्मणःमुक्तानामित्युच्यतइत्यर्थः ॥ व्यवहारोविशेषणविशेष्यभावेन ॥ ३० ॥

किमनेनगुणगुणिनोरभेदमभ्युपेत्यगुणित्वप्रतिपादनेन भेदएवतयोःकिन्नस्यादित्याशंकांपरिहरत्सूत्रमुपन्य
स्यव्याचष्टे ॥ प्रतिषेधाच्चेति ॥ भाष्यस्यसूत्रेणान्वयः ॥ घटादिवत्स्वावयवैकत्वनिषेधायैवकारः॥समाधि

एकमेवाद्वितीयंनेहनानास्तिकिंचनेति

॥ ॐप्रतिषेधाच्चॐ ॥ ३१ ॥

भेदस्य ॥ ३१ ॥ अ० ॥ १५ ॥

कनिषेधोऽद्वितीयमिति ॥ किंचननानागुणगुण्यादि ॥ अतोगुणिनिहरौभक्तिसंभवाद्युक्तंतन्महिमवर्णन
मितिसिद्धम् ॥ ३१ ॥ अ० ॥ १५ ॥

अत्रेश्वरप्राप्तिसाधनभक्त्यर्थंतद्गुणानांलोकविलक्षणत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ लौकिकत्वेनतत्र निरतिशयभक्तिःस्यात् ॥ अतस्तत्समर्थनीयम् ॥ प्रकृतंभगवद्गुणजातंविषयः ॥ लौकिकमलौकिकंवेति संदेहः ॥ उभयथापिसंभावनासंदेहबीजम् ॥ लोकसदृशमितिपूर्वःपक्षः ॥ आनंदादिशब्दवाच्यत्वात् ॥

नचानंदादित्वाल्लोकानंदादिवत् ॥ एषसेतुर्विधृतिर्यएषआनंदःपरस्यैषनित्योमहिमाब्राह्मण स्येतिसेतुत्वंह्युच्यते ॥ यतोवाचोनिवर्ततइत्युन्मानत्वम् ॥ एतस्यैवानंदस्यान्यानिभूतानि

## ॥ ॐ परमतःसेतून्मानसंबंधभेदव्यपदेशेभ्यः ॐ ॥ ३२ ॥

मात्रामुपजीवंतीतिसंबंधः ॥ अन्यज्ज्ञानंतुजीवानामन्यज्ज्ञानंपरस्यच ॥ नित्यानंदाव्ययं पूर्णंपरज्ञानंविधीयतइतिभेदः ॥ अतोलौकिकत्वात्परमेवब्रह्मानंदादिकम ॥ ३२ ॥

अन्यथाआनंदंब्रह्मणोविद्वानित्यादिप्रयोगस्तत्रनस्यात् ॥ नहिघटविलक्षणार्थेघटपदंप्रयुज्यते ॥ अस्ति चप्रयोगः ॥ अतोलोकानंदादिवदीश्वरानंदादीतिनतत्रातिशयेनभक्तिर्युक्तेति ॥ सिद्धांतयत्सूत्रमुपन्यस्य व्याचष्टे ॥ परमिति ॥ नब्रह्मानंदादिकंतच्छब्दवाच्यत्वाल्लौकिकंकित्वतोलौकिकानंदादेःपरंविलक्षण

मेव ॥ कस्माल्लोकानंदादावसंभावितसेतून्मानत्वादेर्वैलक्षण्यस्यव्यपदेशादितिभावः ॥ उन्मानत्वंपूर्णत्व
म् ॥ मात्रांतत्प्रतिबिंबांशम् ॥ संबंधोबिंबप्रतिबिंबभावः ॥ अन्यद्विलक्षणम् ॥ अलौकिकत्वात्परमितिप्र
कारिप्रकारदर्शनेनव्याख्यातमेव ॥ अलौकिकत्वावगमादितिवा ॥ अथवानचेतिपूर्वपक्षंप्रतिषिध्यएष
इतिसौत्रहेतून्व्याख्यायातःपरमितिप्रतिज्ञाव्याख्यायते ॥ तत्रातइत्यनुवादेनलौकिकत्वादितिव्याख्या

दर्शनादेवचान्यानंदादीनाम् ॥ अदृष्टमव्यवहार्यमव्यपदेश्यंसुखंज्ञानमोजोबलमितिब्रह्म

## ॥ॐ दर्शनात् ॐ॥ ३३ ॥

णस्तस्माद्ब्रह्मेत्याचक्षतेतस्माद्ब्रह्मेत्याचक्षतेइतिकौंडिन्यश्रुतिः ॥ ३३ ॥

नं ॥ लौकिकत्वात्परमितिअलौकिकमित्यर्थः ॥ ३२ ॥ हेत्वंतरेणानंदादेरलौकिकत्वंसमर्थयत्सूत्रमुपन्य
स्यव्याचष्टे ॥ दर्शनादिति ॥ मनोवाग्गोचरत्वादित्यर्थः ॥ तथापिकथमलौकिकत्वंब्रह्मानंदादेरित्यतआ
ह ॥ अदृष्टमिति ॥ व्यवहारोवाचाव्यपदेशोविविक्ततयानिरूपणम् ॥ ३३ ॥

नन्वेवमानंदादेरलौकिकत्वात्कथंश्रुतिपुराणादिष्वानंदादिप्रयोगइत्याशंक्यतत्परिहारायसूत्रमवतार्यव्या
चष्टे ॥ अप्रसिद्धस्येति ॥ यथाखलुप्रसिद्धचरणविलक्षणेमूर्तित्रयविलक्षणेचभूतपादेपादोस्यविश्वाभूता
नीतिपादपदंप्रयुज्यते ॥ यथापुरुषपादस्यतदंशत्वंतथाभूतानामितिजीवेशयोरंशांशित्वसंबंधज्ञापनार्थ
म् ॥ ज्ञातांशभावस्तुभेदश्रुतिपर्यालोचनयाभिन्नांशत्वंप्रत्येति ॥ तथालोकविलक्षणेप्यानंदादौतत्पदप्रयो

अप्रसिद्धस्यकथमानंदइत्यादिव्यपदेशइत्यतोवक्ति ॥ जीवेश्वरसंबंधज्ञापनार्थमप्रसिद्धोपिपादो
यथापादशब्देनव्यपदिश्यतेपादोस्यविश्वाभूतानीति तथा अलौकिकोपिज्ञानादिस्तच्छब्देनैवभ

## ॥ ॐ बुद्ध्यर्थःपादवत् ॐ ॥ ३४ ॥

ण्यते ॥ ज्ञापनार्थायलोकस्ययथाराजेवदेवराडितिचपाद्मे ॥ ३४ ॥ अ० ॥ १६ ॥

गोयुज्यते ॥ तस्यानुकूलवेद्यत्वादिज्ञापनार्थत्वात् ॥ अन्यथातत्प्रत्यायनोपायाभावात् ॥ ज्ञाततावन्मा
त्रस्यश्रुत्यंतरबलेनालौकिकत्वबुद्धिश्चभवतीतिभावः ॥ अत्रस्मृतिंचाह ॥ अलौकिकोपीति ॥ उक्तंचान्य
त्र ॥ आनंदोनेदृशानंदइत्युक्तेर्लौकतःपरम् ॥ प्रतिभातिनचाभातियथावद्दर्शनंविनेति ॥ व्युत्पत्तिश्चसौवर्ण
घटेघटशब्दस्यैवकिंचित्सादृश्येनैवोपपद्यते ॥ अतोऽलौकिकगुणेहरौकर्तव्याभक्तिरितिसिद्धम् ॥ ३४ ॥
अ० ॥ १६ ॥

अत्रभगवत्प्राप्तिसाधनभक्त्यर्थंब्रह्माद्यानंदादीनांभगवदानंदादिप्रतिबिंबत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ तदभावेप्रागुक्तालौकिकत्वासंभवेनभक्त्यतिशयायोगात्तत्समर्थनीयम् ॥ ब्रह्माद्यानंदादीनांब्रह्मानंदादिप्रतिबिंबत्वमुक्तम् ॥ तद्ब्रह्माद्यानंदादिविषयः । भगवदानंदादिप्रतिबिंबंनवेतिसंदेहः ॥ उक्तेद्वैविध्यदर्शनंसंदेहबीजम् ॥ पूर्वपक्षयति ॥ परेति ॥ नान्यानंदादयोभगवदानंदादिप्रतिबिंबभूताः ॥ तथात्वेमिथोवैचित्र्या

परानंदमात्रत्वेकथंब्रह्माद्यानंदादीनांविशेषइत्यतउच्यते ॥ यथादित्यस्यदर्पणादिस्थान

## ॥ ॐस्थानविशेषात्प्रकाशादिवत्ॐ ॥ ३५ ॥

विशेषात्प्रतिबिंबेविशेषएवमानंदादेरपि ॥ ब्रह्मादिगुणवैशेष्यादानंदादिपरस्यच ॥ प्रतिबिंबत्वमायातिमध्योच्चादिविशेषतइतिचवाराहे ॥ ३५ ॥

योगात् ॥ मिथोविचित्राणामपितत्प्रतिबिंबत्वेभगवदानंदादौवैचित्र्यंस्यात् ॥ तथाचभगवद्रूपेषुगुणतारतम्यंस्यादितिनतत्रभक्तिर्युक्ता॥ नचादृष्टादिनियमेनवैचित्र्यम्॥ स्वाभाविकानंदादेरादिमत्कारणानुपपत्तेः॥ अतोलौकिकाभावान्नभगवतिनिरतिशयभक्तिर्युक्तेतिभावः॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ भवत्यन्यानंदादीश्वरानंदादिप्रतिबिंबभूतंनतावतावैचित्र्यानुपपत्तिः॥ नापिबिंबवैचित्र्यापत्तिः ॥ य

थाखलुबिंबवैचित्र्याभावेपिजलसूर्यकांतादिस्थानगुणात्सूर्यादिप्रतिबिंबेष्वग्निजनकत्वादिवैचित्र्यमेवंब्र

ह्मादिस्थानगुणवैचित्र्येणाविचित्रभगवदानंदादिप्रतिबिंबानांवैचित्र्योपपत्तेरितिभावः ॥ अत्रस्मृतिंचा

ह ॥ ब्रह्मादीति ॥ प्रतिबिंबत्वमायातिप्रतिफलितोभवतीत्यर्थः ॥ ३५ ॥ युक्त्यंतरेणबिंबानंदाद्यवैचित्र्ये

पिप्रतिबिंबवैचित्र्यमुपपादयत्सूत्रंपठित्वास्मृत्यैवव्याचष्टे ॥ उपपत्तेश्चेति ॥ नकेवलंप्रतिबिंबानंदादिवैचि

त्र्यंब्रह्मादिस्थानगतभक्त्यादिगुणेनोपपन्नंकिन्नामबिंबभूतभगवदैश्वर्यवशाच्चेतिभावः ॥ पुरुषापाद्यानां

ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादितः ॥ ब्रह्मादीनांसूपपन्नाह्यानंदा

## ॥ ॐ उपपत्तेश्च ॐ ॥ ३६ ॥

देर्वैचित्र्यतेतिपाद्मे ॥ ३६ ॥ अ० ॥ १७ ॥

भक्त्यादिस्थानगुणानांकथंस्वाभाविकानंदादिवैचित्र्यहेतुत्वमितिपरिहर्तुमनादित्वोक्तिः ॥ स्यादेतत् ॥

स्थानगुणेनैवोपपद्यमानेवैचित्र्येनबिंबसामर्थ्यमुपयुज्यतइति॥मैवम्॥सूर्यकांतादिगतसूर्यकादिवैचित्र्येपि

बिंबसामर्थ्यस्याप्युपयोगदर्शनात्॥ स्थानगुणस्यैवनिमित्तत्वेमुखप्रतिबिंबस्यापितद्गतस्याग्निजनकत्वप्रसं

गात् ॥ नचतर्हिबिंबसामर्थ्यमेवोपयोगीतिवाच्यम् ॥ तस्यसर्वत्रापिसाम्यात् ॥ अतोयुक्तंसूत्रद्वयमपि ॥

अतोब्रह्मादिगुणबिंबालौकिकगुणेहरौयुक्तैवभक्तिरितिसिद्धम् ॥ ३६ ॥ अ० ॥ १७ ॥

अत्रभगवत्प्राप्तिसाधनभक्त्यर्थंपुनस्तस्याव्यक्तत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ व्यक्तत्वेतस्यभक्तिवैय र्थ्यापातात्तत्समर्थनीयम् ॥ प्रकृतंब्रह्मैवात्रविषयः ॥ व्यक्तमव्यक्तंवेतिसंदेहः ॥ पदार्थद्वैविध्यदर्शनंसंदेह बीजम् ॥ पूर्वपक्षयति ॥ ध्यानेति॥नब्रह्माव्यक्तंतस्यध्यानकालेचित्तेप्रतीयमानत्वात् ॥ ध्यानकालेप्रती

ध्यानकालेयच्चित्तेप्रदृश्यतेतदेवब्रह्मरूपमतःकथमव्यक्तमित्यतआह ॥ यथाजीवानंदादे रन्यद्ब्रह्मतथोपासाकृतादपि ॥ यन्मनसानमनुतेयेनाहुर्मनोमतम् ॥ तदेवब्रह्मत्वंविद्धिनेदं यदिदमुपासतइतिप्रतिषेधात्॥ पश्यंतिपरमंब्रह्मचित्तेयत्प्रतिबिंबितम् ॥ ब्रह्मैवप्रतिबिंबेयद

॥ ॐतथान्यप्रतिषेधात्ॐ ॥ ३७ ॥

तत्तेषांफलप्रदम् ॥ तदुपासनंचभवतिप्रतिमोपासनंयथा ॥ दृश्यतेत्वापरोक्ष्येणज्ञानेनैव परंपदम् ॥ उपासनात्वापरोक्ष्यंगमयेत्तत्प्रसादतइतिचब्रह्मतर्के ॥ ३७ ॥ अ० ॥ १८ ॥

तंनब्रह्म तस्यध्यातृबहुत्वेनबहुत्वापत्तेरितिचेन्न ॥ स्वरूपभेदाभावेपिब्रह्मरूपाणांनानात्वेनतदुपपत्तेः॥ अ न्यथाध्यानवैयर्थ्यात् ॥ नहियत्किंचिद्ध्यानेनब्रह्मफलंददातीतियुक्तम् ॥ अतोध्यानकालेपुरुषप्रयत्नेनप्र तीतस्यब्रह्मरूपत्वेनाव्यक्तत्वाभावाद्यथार्थतद्भक्तिरितिभावः॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति॥

नध्यानकालेप्रतीतत्वेनब्रह्मणोव्यक्तत्वंमंतव्यम् ॥ ध्यानप्रतीतस्याब्रह्मत्वात् ॥ तत्कुतः॥ यथाखलुजीवानं दादीनामल्पत्वादिकारणेनब्रह्मानंदादितद्विलक्षणमेवतथोपासाकृतस्यदुर्लक्षणत्वादिनाकारणेनब्रह्मणस्त तोवैलक्षण्यात् ॥ निर्दोषदोषिणोर्ब्रह्मोपासाकृतयोरैक्यानुपपत्तेरेवहियन्मनसेतिश्रुतिस्तस्यब्रह्मत्वंप्रति षेधतीतिभावः ॥ पुरुषोयद्वस्तुनमनुते ॥ ध्यानकालेप्रतीतस्याब्रह्मत्वेकथंब्रह्मफलदंस्यादित्याह ॥ पश्यं तीति ॥ स्थितिमात्रेणकथंफलदमनुपासितत्वादित्यतआह ॥ तदिति ॥ प्रतिबिंबोपासनमितिसंबध्यते ॥ ब्रह्मैवतत्कुतोनेत्यतआह ॥ दृश्यतइति ॥ तर्हिज्ञानायैवप्रयतितव्यंकिमुपासनयेत्यतआह ॥ उपासनेति ॥ अतोध्यानप्रतीतस्याब्रह्मत्वेनतस्याव्यक्तत्वात्कर्तव्यैवतत्रभक्तिरितिसिद्धम्॥२७॥ अ० १८ ॥ अत्रभगव त्प्राप्तिसाधनभक्त्यर्थंतस्यैवजगत्कर्तृत्वादिसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथातत्रनिरतिशयभक्त्य योगात्समर्थनीयमेव ॥ प्रकृतःपरमेश्वरोविषयः॥ किंसर्वदेशकालीनसृष्ट्यादिकर्तानवेतिसंदेहः ॥ प्राचीनो क्तरुभयथासंभवःसंदेहबीजम् ॥ पूर्वपक्षयति ॥ देशेति ॥ नसर्वसृष्ट्यादिब्रह्मणएवकिंतुदेशकालांतरेऽन्य तोपि ॥ राजादीनांतथादर्शनात् ॥ नचविष्णोरन्यस्यस्वातंत्र्याभावेनततःसृष्ट्यादिक्रियायुक्तेतियुक्तम् ॥ भगवतैवान्येभ्यःस्वस्वातंत्र्यदानेनोपपत्तेः ॥ नचैतदसंभावितम् ॥ तस्यावतारेषुविविधासंभावितलीलाद र्शनात् ॥ अतोन्येषामपिस्वातंत्र्यान्नविष्णावेवनिरतिशयभक्तिर्युक्तेतिभावः ॥ सिद्धांतयत्सूत्रमवतार्य

व्याचष्टे ॥ अतइति ॥ भगवतैवसर्वदेशकालीनंसृष्ट्यादिनतुदेशकालांतरेअन्यस्यकल्पनीयम् ॥ तथाहिः किंविष्णोःसर्वकर्तृत्वादौप्रमाणाभावादेतत्कल्प्यते अन्यत्रप्रमाणसद्भावाद्वा उत्तसंभावनामात्रात् ॥नाद्यः॥ श्रुतिसद्भावात्॥नद्वितीयः॥तदभावात् ॥ नांत्यः॥ अप्रामाणिककल्पनस्यकाप्यनुपयोगित्वात् ॥ नचावतरेषुविविधलीलादर्शनादेतत्कल्प्यम् ॥ स्वातंत्र्यात्क्रीडतेविष्णुर्नहिस्वातंत्र्यमन्यगम ॥ करोतिक्वापीत्यादे॥

देशकालांतरेन्यतोपिसृष्ट्यादिर्युक्तेत्यतोब्रूते ॥ सर्वदेशकालवस्तुष्वनेनैवसृष्ट्यादिकंप्रवर्तते ॥ एषसर्वएषसर्वगतएषसर्वेश्वरएषोचिंत्यएषपरमइतिभाल्लवेयश्रुतिः ॥ सर्वत्रसर्वमेतस्मात्सर्वदासर्ववस्तुषु ॥ स्वरूपभूतयानित्यशक्त्यामायाख्ययायतः॥ अ

॥ ॐ अनेनसर्वगतत्वमायामयशब्दादिभ्यः ॐ ॥ ३८ ॥

तोमायामयंविष्णुंप्रवदंतिसनातनमितिचतुर्वेदशिखायाम् ॥ आदिशब्दादन्यत्रप्रमाणाभावाच्च ॥ ३८ ॥ अ० ॥ ११ ॥

त्युक्तस्वातंत्र्यस्यैवक्रीडावगमादितिभावः ॥ सर्वगतत्वंचब्रह्मणःसर्वसृष्ट्याद्यर्थमेव ॥ अनुप्रविश्यनामरूपेव्याकरोदित्यादेः ॥ मायामयशब्दोमायामयशब्दंव्याकुर्वतीश्रुतिः ॥ सर्ववस्तुषुसर्वसर्ववस्तुविषयंसृष्ट्यादीत्यर्थः॥ इतिसंगृहीतमितिशेषः॥अतोब्रह्मणिसर्वजगज्जन्मादिकर्तरिभक्तिःकार्येतिसिद्धम् ॥३८॥अ॥११॥

अत्रभगवत्प्राप्तिसाधनभक्त्यर्थंतस्यकर्मफलदातृत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ तदभावेनिरतिशयैश्वर्यायोगेनतत्रनिरतिशयभक्त्यनुदयात्तत्समर्थनीयम् ॥ प्रकृतोहरिरेवविषयः ॥ किंकर्मफलदातानवेतिसंदेहः॥ विप्रतिपत्तिःसंदेहबीजम् ॥ पूर्वपक्षयति ॥ कर्मेति ॥ कर्मैवफलदातृनेश्वरः॥ यैःफलदातृत्वमीश्वरस्योच्यतेतैरपितस्यकर्मापेक्षयाफलदातृत्वस्यावश्यमंगीकार्यत्वात् ॥ अन्यथाकर्मवैयर्थ्यापातात् ॥ ततश्चे

कर्मापेक्षत्वात्फलदानस्यतदेवददातीतिनवाच्यम् ॥ कुतः ॥ अतएवेश्वरात्फलंभवति ॥

## ॥ ॐफलमतउपपत्तेःॐ ॥ ३९ ॥

नह्यचेतनस्यस्वतःप्रवृत्तिर्युज्यते ॥ ३९ ॥

द्राप्रामाण्यप्रसंगाद्वैषम्यादिदोषानुषंगादकृतकर्मणःफलादर्शनाच्च ॥ एवंसतिफलस्यकर्मान्वयव्यतिरेकित्वात्तदेवफलप्रदंनेश्वरः ॥ अतोनतद्भक्तिःकार्येतिभावः ॥ सिद्धांतयन्नेतत्प्रतिषेधति ॥ इतिनवाच्यमिति ॥ हेतुंपृच्छति ॥ कुतइति ॥ तदुत्तरत्वेनसूत्रमुपन्यस्यव्याचष्टे ॥ फलमिति ॥ ईश्वरएवफलदातानकर्म ॥ तस्यचेतनत्वेनफलदानोपपत्तेः ॥ इतरस्याचेतनत्वेनानुपपत्तेः ॥ यतएवमतोनवाच्यमितिभावः ॥ ३९ ॥

नन्वीश्वरस्यचेतनत्वेनफलदातृत्वसंभावनैवभवेन्नतुनिश्चयः ॥ अतःकुतोसावित्याशंकांपरिहरन्सूत्रंपठि त्वातदुपात्तश्रुतिमुदाहरति ॥ श्रुतत्वाच्चेति ॥ दातुर्यजमानस्यतिष्ठमानस्यतस्मिन्मनसावर्तमानस्य रातिः फलप्रदमित्यर्थः ॥ ४० ॥ उक्तमाक्षिपत्सूत्रमुपन्यस्यव्याचष्टे ॥ धर्ममिति ॥ यदुक्तमीश्वरएवफलदाता नकर्मेतितदयुक्तम् ॥ फलस्यकर्मान्वयव्यतिरेकित्वात् ॥ इदंतुन्याय्यंकर्मैवफलप्रदम् ॥ तच्चकर्मेश्वराद्भव

विज्ञानमानंदंब्रह्मरातिर्दातुःपरायणमिति ॥ ४० ॥

## ॥ ॐश्रुतत्वाच्च ॐ ॥ ४० ॥

## ॥ ॐधर्मंजैमिनिरतएव ॐ ॥ ४१ ॥

यतःफलंतदेवकर्मेश्वराद्भवति ॥ एषह्येवसाधुकर्मकारयतीतिश्रुतेरितिजैमिनिः ॥ ४१ ॥

तीतीश्वरोपिफलदातृतयोपचर्यतेरातिर्दातुरित्यादिश्रुताविति ॥ कर्मकारणत्वंचेश्वरस्योपचारबीजमेषह्येवे तिश्रुतिसिद्धम् ॥ नकेवलंकर्मणःफलदातृत्वंन्यायप्राप्तंकिंनामजैमिनिराचार्योपिमन्यतइतिभावः ॥ धर्म पदमधर्मस्याप्युपलक्षणम् ॥ अत्रातएवेतिद्विधाव्याख्यातंज्ञेयम् ॥ ४१ ॥

एतत्परिहारायसूत्रमुपन्यस्यव्याचष्टे ॥ पूर्वंत्विति ॥ कर्मैवफलप्रदमीश्वरेतूपचारइत्युक्तमयुक्तम ॥ किंतु
कर्मान्वयव्यतिरेकित्वात्फलस्यश्रुतिबलादेवेश्वरकर्मणोरुभयोरपितत्कारणत्वम्॥तत्रापिनोभयोःसमप्रधा
नभावःकिंतुफलदानक्रियायामेकंकर्त्रन्यत्कारणम् ॥ तत्रापिनकर्मकर्तृसत्कारणमीश्वरंप्रयोजयतिकिं
नामफलदानेपूर्वोक्तब्रह्मैवकर्तृकरणभूतंकर्मप्रवर्तयति ॥ करणत्वेपिकर्मणोन्वयव्यतिरेकाविरोधात् ॥ कु

परस्यकर्मणश्चोभयोःफलकारणत्वेपिनकर्मपरप्रवर्तकम् ॥ परएवकर्मणःप्रवर्तकः ॥ पु
ण्येनपुण्यंलोकंनयतिपापेनपापमितिहेतुव्यपदेशात् ॥ द्रव्यंकर्मचकालश्चेतिच ॥४२ ॥

॥ ॐपूर्वंतुबादरायणोहेतुव्यपदेशात्ॐ ॥ ४२ ॥

अ० ॥ २० ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचा
र्यविरचिततृतीयाध्यायस्यद्वितीयःपादः ॥ २ ॥

तएतत् ॥ चेतनस्यकर्तृत्वमचेतनस्यकरणत्वमितिलोकदर्शनात्पुण्येनेतिश्रुतौब्रह्मणःकर्तृत्वव्यपदेशात्कर्म
णःकरणत्वव्यपदेशाच्चेतिभगवान्बादरायणोमन्यतइतिभावः ॥ सामान्यतःकर्मणःकारणत्वंजैमिनेरभिप्रे
तम् ॥ तच्चाभ्युपगतमितिनविरोधः ॥ नकेवलंफलदानक्रियायांकर्मपरप्रेरितंकिंतुतत्सत्तापीश्वराधीनेति
नतत्कर्त्रितिभावेनाह ॥ द्रव्यमिति ॥ अतःपरमेश्वरस्यैवकर्मफलदातृत्वान्निरतिशयमहिम्नितस्मिन्भ
क्तिःकर्तव्येतिसिद्धम् ॥ ४२ ॥ अ० ॥ २० ॥ तृतीयाध्यायस्यद्वितीयःपादः ॥

श्रीवेदव्यासायनमः॥ ॐ ॥ एतत्पादार्थंदर्शयति ॥ उपासनेति॥ उपासनानामब्रह्मजिज्ञासा ॥ साचभक्ति
साध्यत्वात्ज्ञानसाधनत्वात्भक्त्यनंतरंज्ञानात्पूर्वमेवोच्यतइतिभावः॥ आद्याधिकरणतात्पर्यमाह॥सर्वेति॥
उपासनाद्विविधा॥ समस्तसच्छास्त्राभ्यासरूपायामाद्यःश्रवणमननेइति ॥ध्यानरूपापराचेति॥ तत्राद्याया
ध्यानांगत्वात्सैवप्रथमाधिकरणेविधीयते ॥ समस्तसच्छास्त्रश्रवणमननाभ्यांदूरोत्सारिताज्ञानसंशयविपर्य
यस्यैवध्यानाधिकारित्वादितिभावः ॥ अतएवात्रास्तिशास्त्रादिसंगतिः ॥ आद्यसूत्रेश्रवणमननेकर्तव्येइ

श्रीवेदव्यासायनमः ॥ ॐहरिःॐ ॥ उपासनास्मिन्पादउच्यतेसर्वपरिज्ञानंप्रथमतउच्यते ॥

त्युक्तम् ॥ तयोश्चसर्वशाखाविषयत्वेऽस्यशास्त्रस्यसर्वोपादेयताभावप्रसंगात्सर्वशाखाविषयत्वंसमर्थना
यम् ॥ वेदोदितब्रह्मविषयः ॥ किमेकैकेनैवसर्वशाखोक्तंश्रवणमननाभ्यांज्ञातव्यमुतस्वस्वशाखोक्तमिति
संदेहः ॥ सामान्योक्तिःसंदेहबीजम् ॥ स्वस्वशाखोक्तमेवब्रह्मज्ञातव्यमितिपूर्वःपक्षः ॥ प्रतिशाखमुच्यमा
नानामर्थानांपृथक्त्वेनदर्शनात् ॥ अन्यथासर्वशाखास्वप्येकप्रकारोक्तिःस्यात् ॥ सर्वज्ञानमंतरेणचध्या
नानधिकारित्वेमंदानांतदभावःस्यात् ॥अतःस्वस्वशाखागतार्थस्यैवज्ञेयत्वान्नास्यशास्त्रस्यसर्वश्रुतिनिर्णा

यकस्यसर्वोपादेयतेति ॥ सिद्धांतयत्सूत्रंपठति ॥ सर्वेति ॥ उपनिषदोवेदांतपदेनोच्यंतेऽत्रेतिव्याख्यानं पूर्वोत्तरविरुद्धमितिमन्वानोंऽतशब्दंसप्रमाणकंव्याचष्टे ॥ अंतइति ॥ समस्तसूत्रंव्याचष्टे ॥ सर्वेति ॥ पूर्व सूत्रेपूर्वपदोदितंब्रह्मसर्ववेदनिर्णयेनोत्पाद्यज्ञानविषयः ॥ किमुक्तंभवति ॥ ध्यानार्थिनाश्रवणमननाभ्यां सर्ववेदान्निर्णीयज्ञातव्यमिति ॥ कुतः ॥ एवंकाण्वैर्ज्ञातव्यमेवंमाध्यंदिनैरेवेतिकाण्वादिशाखास्वधिकारि विशेषनिर्देशाभावात् ॥ सहिभवन्विधिसमीपेस्यात् ॥ विधयश्चात्मेत्येवोपासीतेत्यादिसर्वाधिकारिसा

अंतोनिर्णयः॥ उभयोरपिदृष्टोंऽतइतिवचनात् ॥ सर्ववेदनिर्णयोत्पाद्यज्ञानंब्रह्म ॥ आत्मे

## ॥ ॐ सर्ववेदांतप्रत्ययंचोदनाद्यविशेषात् ॐ ॥ १ ॥

त्येवोपासीतेत्यादिविधीनांतदुक्तयुक्तीनांचाविशिष्टत्वात् ॥ १ ॥

धारणाएवपठ्यंते ॥ नचवाच्यंयथाकर्मविद्यायामधिकारीगृहीकल्प्यतेतथात्राप्यधिकारिविशेषःकल्प्य तामिति ॥ तत्रस्वर्गकामत्वादिकल्पकसद्भाववदत्रतदभावात्॥ कल्पकत्वंचज्ञानविध्यर्थंग ॥ तत्रोक्तयुक्ती नामत्रह्येतेसर्वएकीभवंतीत्यादीनांसंभवति ॥ इतरांशस्यज्ञेयादिप्रतिपादकत्वाद्युक्तयश्चसर्वाधिकारिसाधा रणाएवातःसर्वसर्वैर्ज्ञातव्यमितिभावः ॥ १ ॥

उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याक्षेपांशंतावद्व्याचष्टे ॥ भेदादिति ॥ यदुक्तंसर्वशाखोक्तमेकेनैवज्ञा
तव्यमितिनतद्युक्तम् ॥ एकंहिवस्तुअनेनज्ञातव्यम् ॥ नहिसर्वशाखोक्तंवस्त्वेकम् ॥ कस्यांचिच्छाखायां
हिविज्ञानानंदरूपंवस्तूच्यते॥ क्वचिच्चसत्यज्ञानानंतंक्वचिच्छ्रोतृमंत्रादिरूपमपहतपाप्मत्वादिरूपंचान्यत्र
त्येवमादि ॥ अतःसर्वशाखोक्तानांपृथक्त्वादेकस्यैवज्ञातव्यत्वात्स्वस्वशाखोक्तमेवज्ञातव्यमितिभावः ॥

विज्ञानमानंदंब्रह्मसत्यंज्ञानमनंतंब्रह्मेत्यादिप्रतिशाखमुक्तिभेदान्नैकाधिकारिविषयाःसर्वशा

## ॥ ॐ भेदान्नेतिचेदेकस्यामपि ॐ ॥ २ ॥

खाइतिचेन्न ॥ एकस्यामपिशाखायामात्मेत्येवोपासीतकंब्रह्मेत्यादिभेददर्शनात् ॥ २ ॥

परिहारांशंव्याचष्टे ॥ नेति ॥ नतत्तच्छाखोक्तार्थानांपृथक्त्वात्सर्वशाखोक्तंनैकेनज्ञातव्यमितिवाच्यम् ॥
तथासत्येकशाखोक्तार्थस्याप्येकेनाज्ञातव्यत्वप्रसंगात् ॥ तत्रोक्तार्थानामपिपृथक्त्वदर्शनात्॥ अथोच्येत
तत्रधर्म्यनुवादेनान्योन्यधर्मविधानादेकमेवोच्यतइति ॥ हंततर्हिसर्वत्रापितथाकिंनस्यात् ॥ नचसर्वशाखा
नामेकविषयत्वेऽशेपौनरुक्त्यमिति ॥ एकस्यामपिसाम्यात्॥ अथतत्रयदिप्रसंगभेदादनुवादादिपरिहारः ॥
सचसमःप्रकृतेऽपीतिभावः॥ २ ॥

हेत्वंतरेणैतमर्थंसाधयत्सूत्रंपठित्वाव्याचष्टे ॥ स्वाध्यायस्येति ॥ अस्तिखलुसर्वशाखाएकैकेनाध्येतव्या इति ॥ स्वाध्यायोऽध्येतव्यइतिस्वाध्यायाध्ययनविधेःसर्वाधिकारिसाधारणत्वात् ॥ अन्यथाऽनेनायं स्वाध्यायोध्येतव्यइतिविधिप्रसंगात् ॥ अध्ययनंचतदुक्तज्ञानार्थमेवेतिवक्ष्यामइतिभावः ॥ ननुलोके शाखाभेदस्यप्रसिद्धत्वाद्विधेरपिविशेषनिष्ठत्वमिति॥ मैवम् ॥ विशेषस्मृतिर्विरोधादितिभावेनाह ॥ हीति॥

स्वाध्यायोध्येतव्यइतिसामान्यविधेःहिशब्दाद्वेदःकृत्स्नोधिगंतव्यःसरहस्योद्विजन्मनेतिस्मृतेःसर्ववेदो क्तमार्गेणकर्मकुर्वीतनित्यशः ॥ आनंदोहिफलंयस्माच्छाखाभेदोह्यशक्तिजः ॥ सर्वकर्मकर्तोयस्मा

## ॥ॐ स्वाध्यायस्यतथात्वेनहिसमाचारेधिकाराच्च ॐ॥ ३॥

दशक्ताःसर्वजंतवः ॥ शाखाभेदंकर्मभेदंव्यासस्तस्मादचीक्लृपदितिसमाचारेसर्वेषामधिकाराच्च ॥३ ॥ सूचितायाइतिशेषः॥अनेनसर्वेषांसर्वशाखाध्ययनाभावात्सर्वज्ञानमयुक्तमितिचपरास्तम्॥किंच सर्ववेदो क्तकर्मसमाचारेसर्वेषामधिकारसद्भावात्तदुक्तब्रह्मज्ञानेसुतरामधिकारइतिसप्रमाणकमाह॥ सर्वेति॥यदिस र्वेषांसर्वशाखाध्ययनादितर्हिकथमेषशाखाभेदःकर्मभेदश्चेत्यतआह ॥ शाखेति ॥ कर्मभेदश्चेतिज्ञातव्य म् ॥ तद्विवृणोति ॥ सर्वेति ॥ सर्वशाखाऽध्ययनेचेतिद्रष्टव्यम् ॥ यानिचेमानिविरुद्धकर्माणिसामगोबह्वृचो ऽन्यःशिखीत्यादीनितानिचैकशाखागतविरुद्धकर्मवद्विकल्पेनभवंति ॥ ३ ॥

यदिसर्वशाखोक्तप्रकारेणैवजानतोध्यानाधिकारःप्राप्तस्तर्हिमंदानांध्यानाभावइत्याशंकांपरिहरत्सूत्रंपठि
त्वाव्याचष्टे ॥ सलिलवदिति ॥ नोक्तभंग्यामंदानांध्यानाभावप्राप्तिः ॥ यथाखलुसर्वासामपांसमुद्रएवै
कायनमितिनियमःप्रतिबंधाभावमपेक्ष्यैवनत्वतिदृढःएवंसर्ववेदोक्तप्रकारेणध्यानेच्छूनांब्रह्मज्ञातव्यमिति

यथासर्वंसलिलंसमुद्रंगच्छत्येवंसर्वाणिवचनानिब्रह्मज्ञानार्थानीतिनियमः॥आग्नेयेच ॥ यथानदी
नांसलिलंशक्येसागरगंभवेत् ॥ एवंसर्वाणिवाक्यानिपुंशक्त्याब्रह्मवित्तयइति ॥ ४ ॥

## ॥ ॐ सलिलवच्चतन्नियमः ॐ ॥ ४॥ ॐ दर्शयतिच ॐ ॥ ५॥

सर्वैश्चवेदैःपरमोहिदेवोजिज्ञास्योसौनाल्पवेदैःप्रसिध्येत् ॥ तस्मादेनंसर्ववेदानधीत्यविचार्यचज्ञातु
मिच्छेन्मुमुक्षुरितिचतुर्वेदशिखायाम् ॥ सर्वान्वेदान्सेतिहासान्सपुराणान्सयुक्तिकान् ॥ सपंचरा
त्रान्विज्ञायविष्णुर्ज्ञेयोनचान्यथेतिब्रह्मतर्के ॥ ५ ॥ अ० ॥ १ ॥

नियमस्यापिपुरुषशक्त्यपेक्षत्वादितिभावः ॥ अत्रैवस्मृतिमाह ॥ आग्नेयेचेति ॥ ४ ॥ युक्तिसमर्थितार्थे
श्रुतिस्मृतिभ्यांचसमर्थयत्सूत्रंपठित्वातेउदाहरति ॥ दर्शयतिचेति ॥ अतोभगवज्ज्ञानार्थंसर्ववेदोक्तंविज्ञे
यमितिसर्वोपादेयंशास्त्रमितिसिद्धम् ॥ ५ ॥ अ० ॥ १ ॥

अत्रभगवज्ज्ञानसाधनोपासनायसार्वत्रिकगुणोपसंहारसमर्थनादस्तिशास्त्रादिसंगतिः ॥ तदभावेसर्वज्ञान
स्यवैयर्थ्यप्रसंगात्समर्थनीयएव ॥ यद्ध्यानांगत्वेनसर्वज्ञानमुक्तंसपरमात्मैवविषयः ॥ किंसर्ववेदोक्तगुणा

सर्वैर्वेदैर्ज्ञेयोनोपास्योऽशक्यत्वादित्यतआह ॥ सर्ववेदोक्तान्गुणान्दोषाभावांश्चोपसंहृत्यैवपरमा
त्मोपास्यः ॥उपास्यएकःपरतःपरोयोवेदैश्चसर्वैःसहचेतिहासैः ॥सपंचरात्रैःसपुराणैश्चदेवःसर्वैर्गुणै
स्तत्रतत्रप्रतीतैरितिभाल्लवेयश्रुतिः ॥ आग्नेयेच ॥ विधिशेषाणिकर्माणिसर्ववेदोदितान्यपि ॥ य

## ॥ ॐ उपसंहारोर्थाभेदाद्विधिशेषवत्समानेच ॐ ॥ ६ ॥

थाकार्याणिसर्वैश्चसर्वाण्येवाविशेषतः ॥ एवंसर्वगुणान्सर्वदोषाभावांश्चयत्नतः ॥ योजयित्वैव
भगवानुपास्योनान्यथाक्वचिदिति॥समानविषयेचोपसंहारोनतुसोरोदित्यादीदिनाम् ॥ गुणैरेवसतू
पास्योनैवदोषैःकथंचन ॥ गुणैरपिनतूपास्योयेपूर्णत्वविरोधिनइतिबृहत्तंत्रे ॥ ६ ॥

नुपसंहृत्यध्यातव्योऽन्यथावेतिसंदेहः ॥ ध्यानविधेरुभयथापिपर्यवसानंसंदेहबीजम् ॥ पूर्वपक्षयति ॥
सर्वैरिति ॥ ईश्वरःसर्ववेदोक्तप्रकारेणज्ञातव्यएवनतुसर्वगुणानुपसंहृत्यध्यातव्यः ॥ तथाविधध्यानस्य

कर्तुमशक्यत्वात् ॥ ज्ञानंतुक्रमभावित्वाच्छक्यमेव ॥ अतःसर्ववेदोक्तप्रकारेणध्यानायोगात्तदर्थमुक्तंसर्व
ज्ञानंव्यर्थमितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ सर्ववेदार्थभूतानामानंदादिगुणा
नामपहतपाप्मत्वादिदोषाभावानांचाभेदादविभागेनैवोपसंहारःकर्तव्यः ॥ तथोपसंहृत्यैवपरमात्माध्यात
व्यः कुतः ॥ यथाविधिप्राप्तत्वात्संध्यावंदनादिकर्तव्यमेव ॥ अन्यथाप्रत्यवायात् ॥ तथासर्वगुणोपसंहा
रेणपरमात्मध्यानस्योपास्यएकइतिश्रुतौविहितत्वात्तत्कर्तव्यमेव ॥ अन्यथाविहितक्रियालोपेनानर्थप्राप्ते
रितिभावः ॥ तथाचश्रुतिः ॥ सर्वेगुणाःसर्वदैवह्युपास्यास्तैर्नैवविद्वान्विधिकृन्नान्यथास्यादिति ॥ अत्रगु
णाइतिविधिमुखवेद्यावेदोक्तधर्माः ॥ दोषाभावाइतिनिषेधमुखवेद्याः ॥ वेदैरित्यस्यविवरणंसर्वैरिति॥ अ
त्रैवस्मृतिमाह ॥ आग्नेयेचेति॥ सर्ववेदोक्तगुणोपसंहारमुक्त्वातदपवादमाह॥ समानेति ॥ यद्यपिसामान्य
तउक्तंसर्वैर्विधिमुखवेद्यावेदोक्तधर्माउपसंहर्तव्याइति॥ तथापियेसमानाभगवतियोग्याःपूर्णत्वाविरोधिन
स्तएवोपसंहर्तव्यानत्वयोग्यारोदनादयः ॥ अयोग्योपासनस्यानर्थफलत्वादितिभावः ॥ अत्रस्मृतिमाह॥
गुणैरिति ॥ तथाचसांकर्षणसूत्रम् ॥ अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्यामिति॥६ ॥

उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याक्षेपांशंतावद्व्याचष्टे ॥ अन्यथात्वमिति ॥ यदुक्तंसर्वगुणोपसंहार स्यकर्तव्यत्वंतदयुक्तम् ॥ आत्मेत्येवोपासीतेत्युपसंहारवदनुपसंहारस्यापिविहितत्वात् ॥ अतःसर्वगुणोप संहारेविहितक्रियालोपप्रसंगात्तस्याकर्तव्यत्वमितिभावः ॥ परिहारांशंव्याचष्टे॥नेति ॥ नसर्वगुणोपसंहा

आत्मेत्येवोपासीतेतिशब्दादुपसंहारस्यान्यथात्वमितिचन्न ॥ एतेगुणानोपास्याइतिविशेषवच

## ॥ ॐ अन्यथात्वंचशब्दादितिचेन्नाविशेषात् ॐ ॥ ७ ॥

नाभावात् ॥ सर्वैर्गुणैरेकएवेशितासावुपासितव्योनैवदोषैःकदाचिदितिविशेषवचनाच्च ॥ आत्मेत्ये वेत्यवधारणमनात्मत्वनिवृत्त्यर्थम् ॥ ७ ॥

राभावः॥तथाहि ॥किमसौप्रामाणिकत्वादंगीक्रियतेसर्वगुणोपसंहारेप्रमाणाभावाद्वा ॥ नाद्यः ॥ एतेगुणा नोपसंहर्तव्याइतिविशेषप्रमाणाभावात् ॥ नापिद्वितीयः ॥ सर्वैर्गुणैरितिश्रुतेर्विद्यमानत्वादितिभावः ॥ नन्वात्मत्वावधारणादेवैतदन्येगुणानोपास्याइतिसिध्यतीत्यतआह ॥ आत्मेति ॥ निरवकाशश्रुतिविरो धात्सावकाशावधारणस्यनान्ययोगव्यवच्छेदकत्वमितिभावः ॥ ७ ॥

नायंसर्वगुणोपसंहारोयुक्तोअशक्यत्वादित्याशंकामभ्युपगमेनपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ नवेति ॥ एवमुपसंहारःकर्तव्यतयोक्तःनचासौकर्तव्यः ॥ परोवरियोवैश्वानरादिप्रकरणभेदात् ॥ यद्येकैकस्यसर्वगुणोपासनंस्यात् ॥ नतर्हिप्रकरणानिभिद्येरन्नकारणाभावादितिभावःनन्वेकैकस्मिन्नेवप्रकरणेसर्वगुणोक्तिसंभवात्प्रकरणभेदेपिसर्वगुणोपासनोपपत्तिरित्यतआह ॥ परोवरीयस्त्वादिष्विति ॥ सएषपरोवरीयानुद्गीथःसएषोनंतइत्यादिप्रकरणेषुपरोवरीयस्त्वाद्येवोपास्यमुक्तंनसर्वगुणाइत्यर्थः ॥ ८ ॥ उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याक्षेपांशंतावद्व्याचष्टे ॥ संज्ञातइति ॥ कर्तव्यएवसर्ववेदोक्तगुणोपसंहारः ॥ सर्वविद्यानांब्रह्मनामत्वेनतद्गुणाभिधायकत्वात् ॥ गुणाभिधानस्यचोपसंहारार्थत्वात्सर्वविद्यानांब्रह्मनामत्वं ॥ ऋग्वेदंभगवोध्येमियजुर्वेदंसामवेदमाथर्वणंचतुर्थमितिहासपुराणंपंचमंवेदानांवेदमितिनारदेनात्मनः सर्वविद्यावे

प्रकरणभेदान्नवोपसंहारःकर्तव्यः ॥ परोवरीयस्त्वादिषुतावदेतद्युक्तम् ॥ ८ ॥

## ॥ ॐ नवाप्रकरणभेदात्परोवरीयस्त्वादिवत् ॐ ॥ ८ ॥

## ॥ ॐ संज्ञातश्चेत्तदुक्तमस्तितुतदपि ॥ ॐ ॥ ९ ॥

सर्वविद्याउक्तासोहंनामविदेवास्मिनात्मविदितिवचनात्सर्वस्यब्रह्मनामत्वात्तदुपसंहारः कार्यः ॥

दित्वमुक्त्वासोहंसर्वविद्यावेत्ताऽऽत्मनामविदेवतन्निर्णयाज्ञानान्नात्मविदित्युक्तत्वादवगम्यतइतिभावः ॥यद्वै किंचिदध्यगीष्टनामैवैतदित्युत्तरवाक्यानुगुण्यान्मंत्रविदित्यस्याप्ययमेवार्थः ॥ श्रुत्यंतरमेववैतत् ॥ अभ्यु पगमरूपंसमाधानांशंव्याचष्टे ॥ सत्यमिति ॥ सर्वविद्यानांभगवन्नामत्वेनतद्गुणाभिधायकत्वाद्गुणाभिधा नस्योपसंहारार्थत्वात्कर्तव्यःसर्वगुणोपसंहारइतियत्तत्सत्यंयुक्तमेवनास्माकंविरोधि ॥ कथमस्माभिरप्यु

नामत्वात्सर्वविद्यानांगुणानामुपसंहृतिः ॥ कार्यैवब्रह्मणिपरेनात्रकार्याविचारणेति
ब्रह्मतर्कइतिचेत्सत्यम्॥उक्तोप्युपसंहारः॥ तत्प्रमाणमप्यस्त्येव ॥ नामवाएताब्रह्मणः
सर्वविद्यास्तस्मादेकःसर्वगुणैर्विचिंत्यइतिकौंडिन्यश्रुतौ ॥ १ ॥ अ० २ ॥

पसंहारस्यकर्तव्यत्वेनोक्तत्वादस्यास्मदिष्टत्वादितिभावः ॥नकेवलंगुणाभिधानस्योपसंहारार्थत्वयुक्त्याना मत्वाद्विद्यानांसर्वगुणोपसंहारसिद्धिःकिंतुश्रुत्यापीत्याह ॥ तदिति ॥ अतःसर्वगुणोपसंहारस्यकर्तव्यत्वात्सा र्थकमेवसर्वपरिज्ञानमितिसिद्धम् ॥ १ ॥ अ० २ ॥

अत्रब्रह्मज्ञानसाधनोपासनेगुणोपसंहारानुपसंहारयोःकर्तव्यतासमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथो क्तबाधप्रसंगात्तौसमर्थनीयौ ॥ प्रकृतौगुणोपसंहारानुपसंहारौविषयः ॥ युज्येतेनवेतिसंदेहः ॥ प्रतिपादनं विरोधश्चसंदेहबीजम् ॥ नयुज्येतेतावितिपूर्वःपक्षः ॥ तथाहि ॥ किंतौद्वावप्येकस्यैवपुरुषस्योतपुरुषभेदे न ॥ नाद्यः ॥ विरोधात् ॥ नापिद्वितीयः ॥ अनेनोपसंहारःकर्तव्योनानेनेतिनिर्णयाभावात् ॥ अतःप्रकार द्वयेपितदनुपपत्तेरुक्तमनुपपन्नमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ प्राप्तेश्चेति ॥ युक्तावुपसंहारा

युज्यतेचोपसंहारोनुपसंहारश्च ॥ योग्यताविशेषात् ॥ गुणैस्सर्वैरुपास्योऽसौब्रह्मणापरमे

## ॥ ॐप्राप्तेश्चसमंजसम्ॐ ॥ १० ॥

श्वरः ॥ अन्यैर्यथाक्रमंचैवमानुषैःकैश्चिदेवत्वितिभविष्यत्पर्वणि ॥ १० ॥ अ० ३ ॥

नुपसंहारौपुरुषभेदेन ॥ नचनिर्णयाभावः ॥ यस्ययावद्गुणाःस्पष्टंप्रतिभासंत्युपासने ॥ युगपत्स्वभुजौयद्व ध्यायेत्तावतएवसइतिश्रुतेर्युगपत्प्रतीत्यादियोग्यताविशेषेणनिर्णयोपपत्तेरितिभावः ॥ एतदेवशृंगग्राहि कयास्मृत्यादर्शयति॥गुणैरिति॥ कैश्चिदानंदादिगुणैरित्यर्थः॥ युगपत्सर्वगुणप्रतीतिर्ब्रह्मणइत्यादिज्ञातव्यम्॥ अतोगुणोपसंहारानुपसंहारयोः सामंजस्याद्युक्तंपूर्वोक्तमितिसिद्धम् ॥ १० ॥ अ० ३ ॥

अत्रेश्वरदर्शनसाधनोपासनेबहुगुणोपसंहारस्यकर्तव्यतासमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथोक्तानुपपत्तेःसमर्थनीयएव ॥ प्रकृतोबहुगुणोपसंहारोविषयः॥ कर्तव्योनवेतिसंदेहः ॥ उभयविधक्रियादर्शनंसंदेहबीजम् ॥ नकर्तव्यइतिपूर्वःपक्षः ॥ तथाहि ॥ अल्पगुणोपसंहारकेभ्योबहुगुणोपसंहर्तॄणांफलातिशयोस्तिनवा॥ नाद्यः ॥ प्रमाणाभावेनफलातिशयनिर्णयाभावात् ॥ नद्वितीयः ॥ व्यर्थाऽऽयासस्यबुद्धिमदुपादित्साऽगोचरत्वात् ॥ अतःफलानिर्णीतेरुपसंहारस्याकर्तव्यत्वादुक्तमयुक्तमिति ॥ सिद्धांतयत्सूत्रंपठित्वा

सर्वगुणयुक्तत्वेनोपासनादन्यत्रैवफलेब्रह्मादयोभवंति ॥ संपूर्णोपासनाद्ब्रह्मासंपूर्णानंदभा

## ॥ ॐसर्वभेदादन्यत्रेमेॐ ॥ ११ ॥

ग्भवेत् ॥ इतरेतुयथायोगंसम्यङ्मुक्तौभवंतिहीतिपाद्मे ॥ ११ ॥ अ० ४ ॥

व्याचष्टे॥सर्वेति ॥ युक्तएवब्रह्मादीनांबहुगुणोपसंहारः॥ बहुगुणोपसंहारेणतेषामनुपसंहर्तृभ्योविलक्षणफलसद्भावात् ॥ नचफलानिर्णयः ॥ तेषांसर्वगुणोपसंहारेणोपासकानांमहत्त्वादेवमहत्फलमितिनिर्णयोपपत्तेः ॥ नहिवेदोक्तमहोपासनावतामतिशयितफलाभावःसंभवतीतिभावः॥ स्मृत्याचायंनिर्णयइतितामुदाहरति ॥ संपूर्णेति ॥ सम्यग्भवंत्यतिशयवंतोभवंतीत्यर्थः ॥ अतोबहुगुणोपसंहर्तॄणांफलविशेषभावादुपसंहारोयुक्तएवेतिसिद्धम् ॥ ११ ॥ अ० ४ ॥

अत्रभगवज्ज्ञानसाधनाशेषमुमुक्षुसाधारणगुणोपासनस्यनिर्णीयमानत्वादस्तिशास्त्रादिसंगतिः॥ अनिर्णये तूपासनामात्रोच्छेदप्रसंगात्तन्निर्णेतव्यम् ॥ प्रकृतभगवद्गुणाएवविषयः ॥ किंसर्वमुमुक्षूपास्याः संख्यानिर्देशाभ्यांक्लृप्ताःपृथक्संतिनवेतिसंदेहः ॥ विशेषानुक्तिःसंदेहबीजम् ॥ पूर्वपक्षयति ॥ सर्वेषामिति ॥ नसर्वमुमुक्षूपास्याःसंख्यानिर्देशाभ्यांक्लृप्तागुणाःपृथक्संति ॥ यदिभवेयुस्तर्हितेकेकियंतश्चेतिवक्तव्याः ॥

सर्वेषांमुमुक्षूणांकियन्नियमेनोपास्यमित्यतआह ॥ प्रधान

## ॥ॐआनंदादयःप्रधानस्यॐ॥ १२ ॥

फलस्यमोक्षस्यार्थेआनंदोज्ञानंसदात्मेत्युपास्याएव ॥

यदिचतुष्पंचषाआनंदादयइत्युच्यंते तर्हिकेषांचित्समुच्चयेन्येऽषामपिसमुच्चयप्रसंगेननियमासंभवात् ॥ एवंचननिर्देशक्लृप्तिः ॥ नैतेऽन्यएवेत्यपिवक्तुंशक्यत्वात् ॥ अतःसर्वैर्मुमुक्षुभिर्नियमेनोपास्यगुणानिर्णयान्नकस्याप्युपासनोपपत्तिरितिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतआहेति ॥ संतिसंख्यानिर्देशाभ्यांक्लृप्ताःसर्वमुमुक्षुभिःसर्वथोपास्यागुणाआनंदादयश्चत्वारोनत्वधिकाः ॥ सर्वमुमुक्षूणांतदधिकोपासनेऽसमर्थत्वात् ॥ नचनिर्देशविपर्ययः ॥ उपासनस्यानंदादिरूपमोक्षार्थत्वात् ॥ अपेक्षि

तफलानुसारेणैवेश्वरस्योपास्यत्वात् ॥ तंयथायथोपासतेतदेव भवतीतिश्रुतेरितिभावः ॥ अत्रस्मृतिंचाह॥
सच्चिदिति ॥ सत्त्वंनिर्दोषत्वम् ॥ तच्चज्ञानानंदौचसर्वापेक्षितंफलम् ॥ आत्मपदोदितस्वामित्वंतुस्वसंबंधा
नुस्मरणस्यभगवत्प्रीतिसाधनत्वादुपास्यम् ॥ तच्चतुर्थेवक्ष्यतइति ॥ अतःसर्वोपास्यगुणनिर्णयाद्युक्तमुपा
सनमितिसिद्धम् ॥ १२ ॥ अ० ॥ ५ ॥ अत्रब्रह्मज्ञानसाधनोपासनेप्रियशिरस्त्वादिगुणानांसाधारण्यनि

सच्चिदानंदआत्मेतिब्रह्मोपासाविनिश्चिता ॥ सर्वेषांचमुमुक्षूणां
फलसाम्यादपेक्षितेतिब्रह्मतर्के ॥ १२ ॥ अ० ५ ॥

रासादस्तिशास्त्रादिसंगतिः ॥ साधारण्येतूक्तबाधप्रसंगान्निरसनीयमेतत् ॥ भगवद्गुणांतर्गताःप्रियशिरस्त्वा
दिगुणाःश्रूयंतेतस्यप्रियमेवशिरइत्यादौतएवात्रविषयः॥किंसर्वमुमुक्षूपास्यानवेतिसंदेहः ॥ द्विविधगुणप्रती
तिःसंदेहबीजम् ॥ सर्वोपास्याइति पूर्वःपक्षः ॥ प्रियशिरस्त्वादीनामानंदादिविशेषत्वादानंदादीनांचसर्वोपा
स्यत्वात् ॥ अन्यथाऽऽनंदादेःसम्यगनुमासनेनामुक्तिप्रसंगात् ॥ अतःप्रियशिरस्त्वादीनांसर्वोपास्यत्वान्नच

त्वारएवेतिनियमइति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ प्रियेति ॥ नानंदादिविशेषत्वेन सर्वेषां प्रिय
शिरस्त्वादिगुणोपासनयोग्यतावक्तव्या ॥ विशेषावलंबनेनोपासनेसर्वेषांसर्वगुणोपास्तिप्रसंगात् ॥ सर्वगु
णानामपिगुणचतुष्टयविशेषत्वस्यवक्तुंशक्यत्वात् ॥ नचसर्वेषांसर्वगुणोपास्तिरस्त्वितिवाच्यम् ॥ आनं
दश्रुतिसिद्धफलभेदसिद्ध्यर्थंगुणोपासनेपितारतम्यस्यापेक्षितत्वादितिभावः ॥ अत्रैवस्मृतिमाह ॥ नैवे
ति ॥ नचाप्रियशिरस्त्वाद्यनुपासनेमोक्षाभावः ॥ यथायोग्यंगुणपूगानुपास्यफलंभवेन्मुक्तिगंनैवचान्य
फलभेदार्थमुपचयापचययोर्भावान्नसर्वेषांप्रियशिरस्त्वादिगुणोपासाप्राप्तिः ॥ नैवसर्वगुणाःसर्वै
॥ ॐप्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौहिभेदे ॐ॥१३॥
रुपास्यामुक्तिभेदतः ॥ विरिंचस्यैवयन्मुक्तावानंदस्यसुपूर्णतेतिवाराहे ॥ १३ ॥ अ० ६ ॥
त ॥ नित्यैकाग्र्यव्यंगताहेतुतश्चसाक्षाद्दर्शिनौतद्विशेषैःस्मृतैश्चेतिश्रुतेर्विशेषानुपासनेऽपियोग्यगुणोपास
नेनैवफलप्राप्तेः ॥ अतःप्रियशिरस्त्वादीनामसाधारण्याच्चत्वारएवसर्वोपास्याइतिसिद्धम् ॥ १३ ॥
अ० ६ ॥ अत्रेश्वरसाक्षात्कारसाधनोपासनेदेवादीनांबहुगुणोपासनसमर्थनादस्तिशास्त्रादिसंगतिः ॥
अन्यथोपसंहारोक्त्यनुपपत्तिप्रसंगात्समर्थनीयम् ॥ प्रकृतभगवद्गुणेषुचतुर्गुणाधिकाविषयः ॥ देवादि
भिरुपास्यानवेतिसंदेहः ॥ फलाधिक्यंविशेषहेत्वदर्शनंचसंदेहबीजम् ॥ चत्वारएवविरिंचेतरंदेवादिभि

रुपास्यानाधिकाइतिपूर्वःपक्षः ॥ योग्याएवखलुगुणाउपास्याः ॥ अयोग्योपासनस्यानर्थफलत्वात् ॥ तच्चयुज्यतेचतुर्मुखस्यसर्वगुणोपासनम् ॥ सर्वमुमुक्षूणांचचतुर्गुणोपासनयोग्यतायाएवनिर्णीतत्वात् ॥ नचतथामध्यमगुणेष्वस्यैतावंतोस्यैतावंतइतियोग्यतानियमःशक्यतेज्ञातुंयेनोपासनंस्यात् ॥ नचोपासनाभ्यासेसतियस्ययावंतोगुणायुगपत्प्रतीयंतेतस्यतावंतइतियोग्यतानियमोज्ञातुंशक्यतइतिवाच्यम् ॥ प्रागेवयोग्यतानियमाज्ञानेऽयोग्योपासनप्रयत्नप्रसंगेनानर्थप्राप्तेः ॥ अतोमध्यमगुणानामनुपास्यत्वात्तदुपसंहारविधानानुपपत्तिरिति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ इतरेत्विति ॥ चतुर्भ्यःसर्वेभ्यश्चेतरेमध्यम

इतरेगुणाःफलसाम्यापेक्षयोपसंहर्तव्याः ॥ १४॥ अ० ७॥

## ॥ ॐइतरेत्वर्थसामान्यात्ॐ ॥ १४॥

गुणादेवादिभिरुपसंहर्तव्याएव ॥ नचयोग्यताऽनिर्णीतिः ॥ तत्तत्प्राप्यफलमपेक्ष्योपासनेयोग्यतानिर्णयोपपत्तेः ॥ फलोपासनयोःसाम्यात्॥नचवाच्यंभविष्यत्फलानिर्णयेनोपास्तियोग्यतानिर्णयः॥ तेषांभाव्युत्कर्षंज्ञात्वाब्रह्मणोन्यस्यवासर्वज्ञस्यगुरोस्तदनुसारिगुणनियमोपदेशोपपत्तेरितिभावः॥तथाचश्रुतिः ॥ योयोभावोदेवतानांविमुक्तौतत्तत्प्राप्तौसद्गुणानीशितुश्च ॥ ब्रह्मादिशत्यथतांस्तेविचिंत्यतत्तद्भावंप्राप्नुवंत्यात्मशक्त्येति॥अतोमध्यमगुणानामपिदेवाद्युपास्यत्वाद्युक्तंतदुपसंहाराभिधानमितिसिद्धम्॥१४॥अ० ७॥

अत्रपरमात्मज्ञानसाधनोपासनेगुणोपसंहारानुपसंहारसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथोक्तमयुक्तंस्यादितिसमर्थनीयौ ॥ प्रागुक्तौसर्वगुणोपसंहारानुपसंहारौविषयः ॥ कर्तव्यौनवेतिसंदेहः ॥ क्रियाद्वैविध्यदर्शनंसंदेहबीजम् ॥ नकर्तव्यावितिपूर्वःपक्षः ॥ प्रमाणाभावात् ॥ नचसर्वगुणोपसंहारेविधिरस्तीत्युक्तमिति ॥ अनुपसंहारेपिमोक्षप्राप्तेरुक्तत्वात् ॥ फलांतरस्यानपेक्षितत्वाद्यर्थविधेश्चानवधेयत्वा

उपसंहारानुपसंहारप्रमाणमाह ॥ आध्यानार्थंहिसर्वेगुणाउच्यंते ॥

## ॐआध्यानायप्रयोजनाभावात्॥ ॐ॥ १५॥

त् ॥ यदप्युक्तंसर्वविद्यानांभगवद्गुणाभिधायकत्वात्तदुपसंहारःकर्तव्यइति ॥ तन्न ॥ गुणानांनानास्थानेषूक्तत्वेनतदभिधानस्योपसंहारार्थत्वाभावात् ॥ गुणाभिधानस्योपसंहारार्थत्वेवासर्वेप्येकत्रैवोच्येरन् ॥ उक्तंचवैफल्यम् ॥ यदपिप्रकरणभेदादनुपसंहारइतितदप्ययुक्तम् ॥ प्रकरणेष्वेतावदेवोपास्यमित्युक्त्यभावात् ॥ अतःसर्वगुणोपसंहारानुपसंहारयोरयोगान्नोपासनंयुक्तमिति॥ सिद्धांतयन्नधिकरणतात्पर्यमाह ॥ उपसंहारेति ॥ सर्वगुणोपसंहारानुपसंहारयोःकर्तव्यत्वेप्रमाणमाहास्मिन्नधिकरणेसूत्रकृदित्यर्थः ॥

अत्रोपसंहारप्रमाणदर्शनार्थंसूत्रंपठित्वाव्याचष्टे ॥ आध्यानायेति॥कर्तव्यस्तावदुपसंहारः ॥ सर्वविद्या
नांभगवन्नामत्वेनतद्गुणाभिधायकत्वाद्गुणाभिधानस्यचाशेषगुणोपसंहारपूर्वकध्यानार्थत्वादितिभावः ॥
गुणाभिधानस्यध्यानार्थत्वंकुतइत्यतआह ॥ प्रयोजनेति ॥ नचगुणोपसंहारोनिष्फलः ॥ विप्रकीर्णगुणा
नुपसंहृत्योपासकस्यतदनुसारिमुक्त्यानंदातिशयलक्षणफलसद्भावात् ॥ यावत्सेवापरेतत्त्वेतावत्सुखविशेष

प्रयोजनांतराभावात् ॥ ज्ञानार्थमथध्यानार्थंगुणानांसमुदीरणा ॥ ज्ञातव्याश्चैवध्या
तव्यागुणास्सर्वेप्यतोहरेः ॥ नान्यत्प्रयोजनंज्ञानाद्ध्यानात्कर्मकृतेरपि ॥ श्रवणाच्चापपा
ठाद्वाविद्याभिःकिंचिदिष्यतइतिपरमसंहितायाम ॥ गुणाःसर्वेपिवेत्तव्याध्यातव्याश्चन
संशयः ॥ नान्यत्प्रयोजनंमुख्यंगुणानांकथनेभवेत् ॥ ज्ञानध्यानसमायोगाद्गुणानांसर्व
शःफलम् ॥ मुख्यंभवेन्नचान्येनफलंमुख्यंकचिद्भवेदितिबृहत्तंत्रे ॥ १५ ॥

तेतिस्मृतेः ॥ अतएवविशेषफलस्यदौर्लभ्यायनानास्थानेषूक्तिरप्युपपन्नेति ॥ गुणाभिधानस्यध्यानार्थ
त्वेस्मृतिंचाह ॥ ज्ञानार्थमिति ॥ विद्याभिर्ब्रह्मकर्मविद्याभिः ॥ एवंचगुणाभिधानस्यश्रवणपाठावपिप्र
योजनंनध्यानमेवेत्यतआह ॥ गुणाइति ॥ श्रवणादेर्ज्ञानाद्यर्थत्वेननतद्गुणकथनस्यमुख्यंप्रयोजनमिति

भावः ॥ तथापिज्ञानस्यप्रयोजनत्वान्नध्यानमेवेत्यतआह ॥ ज्ञानेति ॥ ज्ञानमपिध्यानोपयोगितयाप्रयोजनंनमुख्यमितिभावः॥अन्येनज्ञानमात्रेण ॥ यद्यपिश्रवणादेर्जनलोकादिफलस्यप्रयोजनत्वसंभवस्तथापिमहाफलज्ञानसाधनत्वेनविहितस्यनतत्फलमिति ॥ १५ ॥ एवंसर्वगुणोपसंहारंप्रमाणेनसमर्थ्यानुपसंहारंचसमर्थयत्सूत्रंपठित्वाव्याचष्टे ॥ आत्मेति ॥ गुणांतरव्यावृत्तिपूर्वकात्मत्वस्योपासनाविधानादनुपसं

आत्मेत्येवोपासीतेत्यनुपसंहा

## ॥ ॐआत्मशब्दाच्चॐ ॥ १६ ॥

रेप्रमाणम् ॥ १६ ॥ अ० ८ ॥

हारोपिसिध्यतीतिभावः ॥ नन्ववधारणस्यायोगव्यवच्छेदकत्वेनोक्तत्वात्कथमन्ययोगव्यवच्छेदकत्वमिति ॥ प्राप्तेश्चसमंजसमितिन्यायेनाविरोधात् ॥ अतोयुक्तत्वादुपसंहारानुपसंहारयोरुपपन्नमुपासनमितिसिद्धम् ॥ १६ ॥ अ० ८ ॥

अत्रेश्वरापरोक्षज्ञानसाधनोपासनायामानंदादिनियतिसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथोक्तानुपपत्तिप्रसंगात्समर्थनीया ॥ प्रकृतभगवद्गुणाविषयः ॥ किमानंदादयश्चत्वारोपिसर्वमुमुक्षूपास्याउतात्मत्वमेवेतिसंदेहः ॥ उभयथोक्तिःसंदेहबीजम् ॥ आत्मत्वमेवसर्वोपास्यमितिपूर्वःपक्षः ॥ आत्मेत्येवोपासीतेतिसावधारणश्रुतेः ॥ आनंदादित्रयलोपेनात्मत्वमात्रोपासनस्यसुशक्यत्वात् ॥ आश्वात्मापरोक्ष्यसिद्धिगुण

नचानंदादयःप्रधानस्येत्युक्तिविरोधः ॥ यतःसत्यंज्ञा

## ॥ ॐआत्मगृहीतिरितरवदुत्तरात्ॐ ॥ १७ ॥

नमनंतंब्रह्मदंब्रह्मेतिवदेवात्मशब्दविज्ञानमानंगृहीतिः

लाभाच्च ॥ अतआत्मत्वस्यैवसर्वोपास्यत्वादानंदादयःप्रधानस्येत्युक्तंश्रुत्यादिविरोधादयुक्तमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ आत्मेति ॥ आत्मेत्येवोपासीतेतिसावधारणश्रुतिबलेनात्मत्वस्यैवावश्योपास्यत्वमभ्युपेत्यानंदादयःप्रधानस्येत्युक्तेःश्रुतिविरोधाभिधानंनयुक्तम् ॥ किंनामानंदादयश्चत्वारोप्युपास्याएव ॥ कुतः ॥ भवेदेतद्यदिश्रौतोयमात्मशब्दःस्वामित्वमात्रंवक्ति ॥ नैतदस्ति ॥ तेनानंदादीनामपिगृहीतत्वात्सत्यज्ञानादिवाक्यवदेवेत्यर्थः ॥ कुतोयमात्मशब्दआनंदाद्यभिधायकोनस्वामित्वमात्रवचन

इत्यतआह ॥ अत्रेति ॥ अत्रात्मत्वेसर्वेप्यानंदादयोगुणाअंतर्भवंतीत्यर्थः ॥ आत्मशब्दस्यस्वामित्वमात्रा नभिधायकत्वेस्त्वतिचाह॥आनंदेति॥ अतोयुक्तत्वाच्चतुर्गुणोपासनस्योक्तंयुक्तमितिसिद्धम्॥१७॥अ०१॥ अत्रभगवद्दर्शनसाधनात्मशब्दोक्तगुणोपासनस्यसर्वैःकर्तव्यत्वसाधनादस्तिशास्त्रादिसंगतिः ॥ अन्यथा ऽनुपसंहारप्रमाणोक्तिर्व्याहन्यतइतिसाधनीयम् ॥ प्रकृतात्मशब्दोक्तगुणाएवविषयः ॥ सर्वोपास्यानेव

अत्रैतेसर्वएकीभवंतीत्युत्तरात् ॥ आनंदानुभवत्वाच्चनिर्दोषत्वाच्चभण्यते ॥

नित्यत्वाच्चतथात्मेतिवेदवादिभिरीश्वरइतिबृहत्तंत्रे ॥ १७॥ अ० १॥

## ॥ॐ अन्वयादितिचेत्स्यादवधारणात्ॐ॥ १८॥

सर्वगुणानामन्वयआत्मशब्देभवति ॥ आप्तव्याप्तेरात्मशब्दःपरमस्यप्रयुज्यते

तिसंदेहः ॥ गुणद्वैविध्यदर्शनंसंदेहबीजम् ॥ पूर्वपक्षस्यसूत्रएवोक्तत्वात्तदुपन्यस्यपूर्वपक्षांशंतावद्व्याचष्टे॥ अन्वयादिति ॥ आत्मशब्दोक्तगुणानसर्वोपास्याः ॥ आप्तव्याप्तेरितितस्यसर्वगुणाभिधायकत्वोक्तेः ॥ त थाचायंश्रुतचतुर्गुणोपासनस्यपुंसोविभ्रमकरोभवतिनत्वेवमुपासनंकार्यमितिनिश्चायकः॥नह्युभयथाश्रुत वतोन्यतरस्मिन्नर्थेनिश्चयोभवति ॥ नचवाच्यंतस्यसर्वगुणाभिधायकत्वेपिस्वयोग्यंतदुक्तमुपास्यमिति॥

नित्यविक्रांत्यादिसामान्यक्रियास्वंतर्भावएवेति ॥ नचवाच्यंत्रिविक्रमादिक्रियाणांलोकविलक्षणत्वेना
त्याश्चर्यत्वात्कथंतदुपासनंब्रह्माणीहास्यतीतितासामपूर्वत्वेपियोग्यस्यैवोपास्यत्वात् ॥ ब्रह्माण्याश्चनि
त्यंतदुपास्तियोग्यताऽभावादितिभावः ॥ २० ॥ भवेदेतद्ब्रह्माणीब्रह्मणोःसमविषमोपासनंयदिब्रह्मणःस
दात्रिविक्रमत्वादिक्रियोपसंहारोभवेत् ॥ नचासौयुज्यते ॥ तासामनित्यत्वेनध्यानकालेऽभावात् ॥ अ
विद्यमानध्यानस्यचायोगादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ संबंधादिति ॥ युज्यतेत्रिविक्रम

परमात्मसंबंधित्वेननित्यत्वात्त्रिविक्रमत्वादिष्वप्युपसंहार्यत्वंयुज्यते ॥ गुणास्त्रैविक्रमाद्याश्चसं

## ॥ ॐ संबंधादेवमन्यत्रापि ॐ ॥ २१ ॥

हर्तव्यानसंशयः ॥ विरिंचस्यैवनान्येषांसहिसर्वगुणाधिकइतिबृहत्तंत्रे ॥ २१ ॥ अ० १२ ॥

त्वादिविषयेऽप्युपसंहारोहिरण्यगर्भस्यसर्वदा ॥ गुणक्रियादयोविष्णोःस्वरूपंनान्यदिष्यतइत्यादेस्त्रिविक्र
मत्वादीनांपरमात्मैक्येननित्यत्वादितिभावः ॥ संबंधस्तादात्म्यम् ॥ अत्रस्मृतिंचाह ॥ गुणाइति ॥ अतो
यथोपासनंमुक्तौफलमित्यस्याविरुद्धत्वादुक्तंयुक्तमितिसिद्धम् ॥ २१ ॥ अ० १२ ॥

अत्रभगवद्दर्शनसाधनोपासनस्यस्वसदृशफलप्रदत्वसमर्थनादस्तिशास्त्रादिसंगतिः॥अन्यथार्थसामान्यादित्युक्तोपासनानुपपत्तेस्तत्समर्थनीयम् ॥ प्रकृतगुणोपासनंविषयः ॥ किंस्वानुसारिफलप्रदंनवेतिसंदेहः ॥ कृष्यादिक्रियासूभयथादृष्टिःसंदेहबीजम् ॥ नोपासनंस्वानुसारिफलप्रदमितिपूर्वःपक्षः ॥ ब्रह्माणीब्रह्मणोरुपासनस्यतदभावात् ॥ तयोर्हिसमंविषमंवानोपासनंभवति ॥ नचफलंतादृशम् ॥ स्थानैक्यस्यगुणतारतम्यस्यचसद्भावेनफलस्यसमविषमत्वात् ॥ नचोपासनमपितादृगस्त्वितिवाच्यम् ॥ समविषमोपासनस्य

अपूर्वत्वेऽपिसमानानामेवोपसंहारः॥ नतुत्रिविक्रमत्वादीनांकादाचित्का

## ॥ ॐ समानएवंचाभेदात् ॐ ॥ २० ॥

नांपृथक्त्वेन ॥ नित्यविक्रांत्यादिष्वंतर्भावात् ॥ २० ॥

विरुद्धत्वेनाऽयुक्तत्वात् ॥ अतोयथोपासनंफलाभावादितरेत्वर्थसामान्यादित्युक्तमयुक्तमिति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ समानइति ॥ नोक्तलिंगेनोपासनस्यस्वानुसारिफलप्रदत्वाभावोब्रह्माणीब्रह्मणोःफलवदुपासनस्यापिसमविषमत्वात् ॥ब्रह्माण्याहिसर्वगुणोपसंहारःक्रियासुचसामान्यक्रियोपसंहारोस्तिहिरण्यगर्भवत् ॥ नतुतद्वत्त्रिविक्रमत्वादि ॥ कदाचिदभिव्यक्तक्रियोपसंहारःसदापृथक्त्वेनास्ति ॥किंतु

अत्रब्रह्मदर्शनसाधनोपासनायामलौकिकगुणोपसंहारसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथोक्तालौकिकत्वासिद्धेःसमर्थनीयः ॥ प्रकृतभगवद्गुणाएवविषयः ॥ किमलौकिकाध्येयालौकिकावेतिसंदेहः॥ पूर्वोक्तिलौकदृष्टिश्चसंदेहबीजम् ॥ लौकिकाएवध्यातव्याइतिपूर्वःपक्षः ॥ लौकिकानामध्यानेध्यानाभावप्रसक्तेः ॥ अलौकिकानामननुभूतत्वेनध्यानकालेऽप्रतीतेः ॥ कर्तव्यंचेदंध्यानम् ॥ अतोलौकिकाएव

अलौकिकास्तस्यगुणाह्युपास्याअलौकिकंमुक्तिकार्यंयतोस्येति

## ॥ ॐकार्याख्यानादपूर्वम् ॐ ॥ १९ ॥

कार्याख्यानादन्यत्रादृष्टाएवगुणाउपास्याः ॥ १९ ॥ अ० ११ ॥

ध्यातव्याः ॥ नचाविद्यमानंयुक्तंध्यातुमितिलौकिकाएवतेध्यानान्यथानुपपत्तेरिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ कार्येति ॥ अलौकिकाएवगुणाध्यातव्याः॥ तथाध्यानेनैवमोक्षसंभवात् ॥ ध्यानकार्यस्यमोक्षस्यालौकिकत्वव्याख्यानात् ॥ फलानुसारिध्यानस्यकर्तव्यतानियमादितिभावः ॥ नचालौकिकगुणाप्रतीतिदोषः ॥ इंद्रादाविवोपदेशोपपत्तेः ॥ अतोलौकिकत्वेनैवध्यातव्याइतियुक्तंपूर्वोक्तमितिसिद्धम्

॥ १९ ॥ अ० ११ ॥

तथासत्यवधारणश्रुतिविरोधात् ॥ अतआत्मशब्दोक्तगुणानांसर्वोपास्यत्वाभावादनुपसंहारप्रमाणत्वानुपपत्तिरितिभावः ॥ सिद्धांतांशंव्याचष्टे ॥ सत्यमिति ॥ कथंपरेणोक्तमभ्युपगम्यतइत्यतआह ॥ स्यादिति ॥ सर्वगुणाभिधायकत्वमात्मशब्दस्ययत्परेणोक्तंतत्तथास्यादेवातोनाभ्युपगमोदोषाय ॥ इयांस्तुविशेषः॥ सर्वगुणांश्चात्मशब्दोवदन्ब्रह्मादीन्प्रत्येववदतिनान्यान्प्रति॥ तथाऽनुभवात् ॥ अतस्तस्याविभ्रमकरत्वात्तदुक्तोपासनंसर्वेषांयुक्तमितिभावः ॥ ननुब्रह्मादीनामात्मशब्दःसर्वगुणान्ज्ञापयतीतिकुतोन्यान्प्रतीवब्रह्मा

इतिवचनादितिचेत्सत्यम् ॥ स्याच्चैवम् ॥ आत्मेत्येवेत्यवधारणात् ॥
अन्यथासर्वोपसंहारवचनविरोधात् ॥ १८ ॥ अ० १० ॥

दीन्प्रत्यल्पगुणाभिधायकःकिंनस्यादित्यतआह ॥ आत्मेति ॥ अवधारणेपिकिमायातमित्यतआह ॥ अन्यथेति ॥ अन्ययोगव्यवच्छेदकावधारणयुक्तात्मशब्दोब्रह्मादीनधिकरोतिततस्तैरपितदुक्तमेवोपास्यम् ॥ तथाचयद्यसौनतान्प्रतिसर्वगुणानभिधत्तेतर्हिसर्वैर्गुणैरुपास्योऽसौब्रह्मणापरमेश्वरइत्यादिसर्वोपसंहारवचनविरोधःस्यात् ॥ अतोसौतेषांसर्वगुणाभिधायकइतिभावः ॥ तस्मादात्मशब्दोक्तगुणोपासनंसर्वेषामस्तीत्युक्तमुपपन्नमितिसिद्धम् ॥ १८ ॥ अ० १० ॥

अत्रेश्वरदर्शनसाधनात्मशब्दोक्तगुणोपासनस्यसर्वैःकर्तव्यतासमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथोक्तमयुक्तंस्यादतःसमर्थनीया ॥प्रकृतात्मशब्दोक्तगुणाएवविषयः ॥ सर्वोपास्यानवेतिसंदेहः॥ गुणद्वैविध्यदर्शनंसंदेहबीजम्॥नात्मशब्दोक्तगुणाःसर्वोपास्याइतिपूर्वःपक्षः॥ आत्मशब्दस्यसर्वगुणाभिधायकत्वात् ॥ उक्तमत्रोत्तमाधिकारिणःप्रत्येवसर्वगुणाभिधायकोनसर्वान्प्रतीति॥सत्यम् ॥ तथाप्यस्यैतावंतएवोच्यंतइतिप्रातिस्विकनियमाभावेनोपासनासंभवात् ॥ नचसंभवतिहिकदाचिद्बहुगुणान्कदाचिदल्पानपिबोधयती

॥ नवात्मशब्देनसर्वगुणगृहीतिः ॥ अधिकारिविशेषात् ॥२२॥

## ॥ ॐनवाविशेषात् ॐ ॥ २२ ॥

ति॥अतआत्मशब्दोक्तगुणानांसर्वोपास्यत्वाभावादनुपसंहारप्रमाणत्वोक्तिरयुक्तेति॥सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ नवेति ॥ युक्तमेवसर्वेषामात्मशब्दोक्तगुणोपासनम् ॥ तस्यसर्वान्प्रतिसर्वगुणाभिधायकत्वाभावात् ॥कुतः॥तस्यसर्वगुणाभिधानशक्तावप्यधिकारिसामर्थ्यविशेषात्तत्तद्योग्याभिधायकत्वात्॥न्यूनाधिकोक्तिसंभवेनप्रातिस्विकनियमाभावादुपासनानुपपत्तिरितिनवाच्यम ॥यस्ययावंतोगुणाआत्मशब्देनयुगपत्प्रतीयंतेतेनतावंतोध्यातव्याइतिव्यवस्थोपपत्तेः ॥ आत्मशब्देनगुणप्रतीतिरियमेवाभिसंहितेत्ययोग्यप्रतीतिर्नप्रतीतिरितिभावः ॥२२ ॥

युक्तिसिद्धार्थंश्रुत्यापिसमर्थयत्सूत्रंपठित्वातांश्रुतिमुदाहरति ॥ दर्शयतिचेति ॥सर्वान्स्वयोग्यान्बहून्ब्रवीतीत्यस्ययुगपत्प्रकाशयतीत्यर्थः ॥ तस्मादात्मशब्दोक्तगुणानांसर्वोपास्यत्वादुक्तंयुक्तमितिसिद्धम् ॥२२॥ अ० १२॥ अत्रब्रह्मदर्शनसाधनोपासनेसर्वेषांसंभृत्यादिगुणोपासननिवारणाद्दस्तिशास्त्रादिसंगतिः॥ अन्यथाचतुर्गुणनियमभंगप्रसंगान्निवारणीयंतत् ॥उक्षासंद्यावापृथिवीबिभर्तिएषहिसर्वेषुलोकेषुभातीत्यादौप्रतीतेप्रकृतभगवद्गुणांतर्गतेसंभृतिद्युव्याप्तीविषयः॥किंसर्वमुमुक्षूपास्येउतनेतिसंदेहः॥द्विविधगुणप्रतीतिरेवसं

सर्वान्गुणानात्मशब्दोब्रवीतिब्रह्मादीनामितरेषांनचैवेतिभाल्लवेयश्रुतिः ॥ २२ ॥ अ० १२ ॥

**॥ ॐ दर्शयतिच ॐ ॥ २३ ॥ ॐ संभृतिद्युव्याप्त्यपिचातः ॐ ॥ २४ ॥**

संभृतिद्युव्याप्तीअपिदेवादीनामुपसंहर्तव्येनान्येषाम् ॥ अतएवयोग्यताविशेषात् ॥

देहबीजम् ॥ सर्वोपास्येइतिपूर्वःपक्षः॥ सर्वेषांमुमुक्षुत्वसाम्यान्मोक्षेचस्वाधमभरणस्यप्रकाशव्याप्त्योश्चसर्वापेक्षितत्वात् ॥ फलंचोपासनानुसार्येवभवति ॥ यादृशोभावितस्त्वीशस्तादृशोजीवआभवेदित्यादेः ॥ नचैवंसर्वगुणोपास्तिः सर्वेषांसर्वगुणापेक्षाभावात् ॥ अतःसंभृतिद्युव्याप्त्योःसर्वोपास्यत्वाच्चतुर्गुणोपास्तिनियमोनयुक्तइति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ संभृतीति ॥ अपिपदान्नञःसमाकर्षः ॥ चशब्दएवार्थः ॥ संभृतिद्युव्याप्तीनसर्वोपास्येकिंतुदेवाद्युपास्येएव ॥ अधिकारियोग्यतायांविशेषसद्भावात् ॥ दे

वादीनामेवतदुपास्तियोग्यतानान्येषामितियोग्यतैवोपास्तिनियमप्रयोजिकानफलापेक्षेतिभावः ॥ यच्च प्रकाशादिमात्रमपेक्षितंतच्चभगवद्रूपप्रतीत्यविनाभूतप्रकाशादिनैवलभ्यते ॥ ननुसंभृत्यादिगुणोपास्तिर्दे वादीनामेवयोग्येतिकुतोऽन्येषामयोग्यतायामप्युपासनेकोविरोधःफलसिद्धेरित्यतआह ॥ देवादीनामि ति ॥ अतःसर्वेषांसंभृत्यादिगुणोपासाभावान्नोक्तनियमभंगइतिसिद्धम् ॥ २४ ॥ अ० ॥ १४ ॥

देवादीनामुपास्यास्तुभृतिव्याप्त्यादयोगुणाः ॥ आनंदाद्यास्तुसर्वेषाम
न्यथाऽनर्थकृद्भवेदितिचब्रह्मतर्के ॥ २४ ॥ अ० १४ ॥

यस्यांविद्यायांमहागुणाउच्यंतेसोत्तमानामितराऽन्येषामितिचेत्

अत्रेश्वरसाक्षात्कारसाधनोपासनेसर्वतोगुणोपसंहारसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अनुपसंहारेसर्वज्ञान वैयर्थ्यप्रसंगात्समर्थनीयोऽसौ ॥ प्रकृतसार्वत्रिकगुणोपसंहारोविषयः ॥ कर्तव्योनवेतिसंदेहः ॥ क्रियाद्वि विध्यदर्शनंसंदेहबीजम् ॥ पूर्वपक्षयति ॥ यस्यामिति ॥ नसर्वतोगुणोपसंहारःकर्तव्यः ॥ व्यर्थत्वात् ॥ नचस्वस्वयोग्यगुणोपासनायसर्वतउपसंहारइतिवाच्यम् ॥ सार्वत्रिकगुणोपसंहारमंतरेणापितत्संभवात् ॥ येहिबहुगुणोपासनयोग्यास्तेषांबहुगुणाभिधायैकैकविद्ययोपास्तिःसंभवति ॥ येचाल्पगुणोपास्तियो

ग्यास्तेषांतादृग्विद्याभिरुपास्तिरुपपद्यते ॥ अतउपसंहारवैयर्थ्यान्नसर्वज्ञानोपयोगइतिभावः ॥ पूर्वपक्षं प्रतिषेधति ॥ नेति ॥ हेतुतयासूत्रंपठित्वाव्याचष्टे ॥ पुरुषेति ॥ कर्तव्यएवसर्वतोगुणोपसंहारः ॥ सर्वगुणोपास्तियोग्यानामप्यधिकारिणांभावात् ॥ एकस्यामेवविद्यायांसर्वगुणानामनुक्तत्वात्सर्वविद्योत्तमायामपिपुरुषसूक्तमित्युक्तविद्यायांकेषांचिदेवगुणानांपठितत्वात्केषांचिदपठितत्वादितिभावः ॥ भवेदुपसं

न ॥ पुरुषसूक्तोक्तविद्यायामपिकेषांचिद्गुणानामनाम्नानात् ॥ सर्वतः

## ॥ ॐ पुरुषविद्यायामपिचेतरेषामनाम्नानात् ॐ ॥ २५ ॥

पौरुषेसूक्तेगुणाविष्णोरुदीरिताः ॥ अत्रापिनैवसर्वेपितस्मात्कार्योपसं

हृतिरितिब्रह्मतर्के ॥ २५ ॥ अ० १५ ॥

हारस्यकर्तव्यता यदिस्यात्पुरुषसूक्तस्यसर्वविद्योत्तमत्वम् ॥ तत्रापिकेषांचिद्गुणानामनुक्तत्वम् ॥ तदेव कुतइत्यतआह ॥ सर्वतइति ॥ नचवाच्यमेकस्यामेवविद्यायांसर्वगुणानुक्तेरस्तुचतुर्मुखस्यसर्वगुणोपसंहारः ॥ अन्येषांतुमहदल्पगुणाभिधायकविद्याभिरेवोपास्तिसंभवादुपसंहारोव्यर्थइति ॥ संख्यासाम्यसंभवेप्येकस्यामेवविद्यायांस्वापेक्षितगुणोक्तिनियमाभावात् ॥ अतःसर्वतोगुणोपसंहारस्यकर्तव्यत्वादुक्तमुपपन्नमितिसिद्धम् ॥ २५ ॥ अ० १५ ॥

अत्रेश्वरसाक्षात्कारसाधनोपासनेभेदनादिगुणानांसर्वोपसंहार्यत्वनिरासादस्तिशास्त्रादिसंगतिः ॥ तेषांसर्वोपसंहार्यत्वेप्रागुक्तनियमभंगप्रसंगान्निरसनीयमेव ॥ अग्नेत्वचंयातुधानस्यभिधितंप्रत्यंचमर्चिषाविध्य मर्मन् ॥ पराश्रृणीहितमसायातुधानानित्यादौश्रुताभेदनादयोगुणाविषयः ॥ सर्वोपास्यानवेतिसंदेहः ॥ गुणद्वैविध्यदर्शनंसंदेहबीजम् ॥ वेधादिसर्वोपास्यमितिपूर्वःपक्षः ॥ दुष्टजननिग्रहफलत्वात् ॥ तस्यचसर्वसज्जनापेक्षितत्वात् ॥ प्राणस्त्वावंशोहास्यतीत्येनंब्रूयात् ॥ अततायिनमायांतंहन्यादेवाविचारयन्निति भिधिविद्धिश्रृणीहीतिफलभेदेनसर्वशः ॥ यत्यादीनांतेष्वयोगान्नाधिकारैकताभवेत् ॥

## ॥ ॐ वेधाद्यर्थभेदात् ॐ ॥ २६ ॥

अयोग्योपासनादीयुरनर्थंचार्थनाशनमितिबृहत्तंत्रे ॥ २६ ॥ अ० १६ ॥

श्रुतिस्मृत्योर्विधानाच्च॥अतोवेधादीनांसर्वोपास्यत्वान्नचतुर्गुणोपासननियमइति ॥ सिद्धांतयत्सूत्रंपठति॥ वेधादीति॥नवेधादीनांसर्वोपास्यत्वंयत्याद्युपास्यत्वाभावात्॥ वेधाद्युपासनफलस्यहिंसायायत्यादियोग्यफलाद्विलक्षणत्वात् ॥ अयोग्योपासनस्यचानर्थफलत्वादितिसूत्रार्थः ॥ अत्रस्मृतिंचाह ॥ भिधीति ॥ श्रृणीहिजहि॥भिधिविद्धिश्रृणीहीत्येवंरूपेषूपासनेषुसर्वशोनाधिकारसाम्यंभवेत्॥एतदुपासनंसर्वाधिकारि

समंनभवेदित्यर्थः ॥ कुतः ॥यत्यादीनांतेषूपासनेष्वयोग्यत्वात् ॥कस्मात् ॥एतदुपासनफलानांयत्यादिफला द्विलक्षणत्वात् ॥ अयोग्योपासनाच्चानर्थादिप्राप्तेरित्यर्थः ॥ प्राणस्त्वेत्यादिवचनान्यन्याधिकारिविषया णीतिज्ञातव्यम् ॥ अतोवैधादीनांसर्वोपास्यत्वाभावान्नाभिहितनियमोभज्यतइतिसिद्धम् ॥२६॥अ० १६॥

अत्रब्रह्मज्ञानसाधनोपासनस्यमुक्तावप्यनुवृत्तिसमर्थनादस्तिशास्त्रादिसंगतिः ॥ मुक्तावुपासनासिद्धांतस्य प्रागतिशयेनकर्तव्यताऽसिद्धेस्तत्समर्थनीयम् ॥ तत्रविषयसंशयौदर्शयति ॥ मुक्तस्येति ॥ प्रकृतोपासना

मुक्तस्योपासनाकर्तव्यानवेत्यतोब्रवीति ॥ नियतस्वाध्याया

नंतरंस्वेच्छयाकुशाग्रहणस्तुत्युपगानवदेवमोक्षउपासनादि ॥

विषयः ॥ मुक्तेनक्रियतेनवेतिसंदेहः ॥प्राप्तफलत्वंक्रियांतरश्रुतिश्चसंदेहबीजमितिभावः ॥ मुक्तस्येत्यनेनै वपूर्वपक्षोपिसूच्यते ॥ नमुक्तेनोपासनाक्रियते ॥ तथाहि ॥ किंमुक्तस्योपासनाकर्तव्यानवा ॥ नोभावपि कल्पौ ॥ फलप्राप्तिप्रसंगात् ॥ तथाचापूर्णताप्रसक्तेः ॥ आद्येविधिबद्धत्वेनमुक्तेःसंसारसमानधर्मतापत्ते श्च ॥ द्वितीयेअविहितत्वादेवकरणंचनोपपद्यते ॥ अतःसोपाधिकमेवोपासनमितिभक्तिर्व्यर्थेतिभावः ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ अस्त्येवमोक्षेभगवदुपासना ॥ नचविधिबद्धत्वेनसंसारसमा नधर्मत्वंमुक्तेः ॥ विनापिविधिंस्वेच्छयोपासनाभ्युपगमात् ॥नचैवंतत्करणस्यानुपपत्तिः॥नियतब्रह्मयज्ञानं

तरमपिकुशैराच्छंदेनस्वेच्छयैवद्विजन्मनांमंत्रसामाध्ययनादिदर्शनादितिभावः ।। अस्तिचैदुपासनंमुक्ताना म्।।तत्कुतःस्वेच्छयाविधितएवंकिनस्यादित्यतआह ।।ब्रह्मेति ।। नमुक्तस्योपासनंविधिनिबंधनम ।। सर्वोपा सनाविधीनांमोक्षवाक्यशेषत्वात् ।। ब्रह्मज्ञानेनमोक्षइत्युक्तेतत्कथंभवेदित्यपेक्षायांतादर्थ्येनह्युपासनावि

ब्रह्मविदाप्नोतिपरमितिमोक्षवाक्यशेषत्वादितरेषाम् ।। तच्चोक्तमेतत्सामागायन्नास्तइत्या

## ।। ॐ हानौतूपायनशब्दशेषत्वात्कुशाच्छंदस्तुत्युपगानवत्तदुक्तम् ॐ ।। २७ ।।

दि ।। ब्रह्मतर्केच ।। मुक्ताअपिहिकुर्वंतिस्वेच्छयोपासनंहरेः ।। नियमानंतरंविप्राःकुशाद्यै रप्यधीयतइति ।। कृष्णोमुक्तैरिज्यतेवीतमोहैरितिभारते ।। २७ ।।

धयःप्रवृत्ताः ।। मोक्षसिद्ध्यर्थंप्रवृत्ताविधयःकथंमुक्तविषयाभवेयुरितिभावः ।। भवेदियंचिंतायदिमुक्तस्यो पासनमेवस्यात्तदेवकुतइत्यतआह ।। तच्चेति ।। तच्चोपासनंस्वेच्छयेत्यत्रस्मृतिमाह ।। ब्रह्मतर्केचेति ।। किंचमुक्तानांयज्ञादिकर्माप्यस्तिकिमुतोपासनमितिभावेनाह ।। कृष्णइति ।। २७ ।।

मास्तुमुक्तस्यविधिनिबंधनोपासनंतथापिनस्वेच्छयामोक्षेतदातदाप्राप्तानिष्टपरिहारार्थत्वोपपत्तेः ॥ नहि निष्फलांस्वेच्छयैवप्रवृत्तिंपश्यामः ॥ किंचोपासनाविधीनांमोक्षार्थत्वंमुक्तावनिष्टपरिहारार्थत्वंचकिंन स्यादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ सांपराइति ॥ मुक्तस्योपासनंस्वेच्छयैवेत्यंगीकार्यं न

स्वेच्छयैवेत्यंगीकार्यम् ॥ मुक्तस्यतीर्णत्वात् ॥ तीर्णोहितदासर्वान्शोकान्हृदयस्यभव तीतिह्यन्येपठंति ॥ वायुप्रोक्तेच ॥ स्थितप्रज्ञत्वमाप्नायेज्ञानेनपरमात्मनः ॥ ब्रह्मलोकंग

## ॥ ॐ सांपरायेतर्तव्याभावात्तथाह्यन्ये ॐ ॥ २८ ॥

ताःसर्वेब्रह्मणाचपरंगताः ॥ तीर्णतर्तव्यभागाश्चस्वेच्छयोपासतेपरमिति॥२८॥अ०१७॥

त्वनिष्टपरिहारार्थम् ॥ तीर्णोहीतिश्रुतेस्तस्यतर्तव्यानिष्टस्यैवाभावात् ॥ फलाभावेपिक्रियेश्वरक्रियावदु पपद्यतइतिभावः ॥ सर्वत्वद्गतस्यविष्णोःशेषभूतोभवतीत्यर्थः ॥ अत्रस्मृतिंचाह ॥ वायुप्रोक्तेचेति ॥ स्थि तप्रज्ञत्वमपरोक्षज्ञानित्वंज्ञानेनपरोक्षेण ॥ अतोमुक्तावप्युपासनानुवृत्तेर्निरुपाधिकंतत्संसारेकर्तव्यमेवेति सिद्धम् ॥ २८ ॥ अ० १७॥

अत्रमुक्तानांभगवत्कर्मणिनियमाभावसाधनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाकर्मोपासनयोर्नियमेनो पासनस्यप्रागाधिक्यंसिद्ध्येदतोसौनिरसनीयः॥प्रासंगिकत्वान्नाध्यायादिसंगतिः ॥ विषयसंशयौदर्शयति॥ कर्मेति ॥ प्रकृतमुक्ताएवविषयः॥किमुपासनवन्नियमेनकर्मकुर्वंतिनवेतिसंदेहः ॥ उभयथापिविरोधादर्श नंसंदेहबीजमितिभावः ॥ नियमेनकर्मकुर्वंतीतिपूर्वःपक्षः ॥ कर्मणोपिभगवत्पूजारूपत्वात् ॥ तेषांचकर्म

कर्मापिकुर्वंतिनवेत्याह ॥ स्वेच्छयाकुर्वंतिनवा ॥

॥ ॐ छंदतउभयाविरोधात् ॐ ॥ २१ ॥

बंधप्रत्यवाययोरभावात् ॥ २१ ॥

करणशक्तेःसद्भावात् ॥ शक्तिसद्भावेपिभगवत्पूजात्मककर्मनियमाभावश्चेदुपासनेप्यनियमःस्यादविशे षात् ॥ अतोमुक्तानांकर्मोपासनयोःसाम्यात्प्रागपिनकर्मणोऽतिशयेनोपासनंकार्यमिति ॥ सिद्धांतयत्सू त्रमवतार्यव्याचष्टे ॥ आहेति ॥ नमुक्तानांकर्मणिनियमः ॥ कर्मकरणशक्तावपिस्वेच्छानुसारेणकदाचि त्कर्मकुर्वंतिकदाचिन्नकुर्वंति ॥ कुतः ॥ अवश्यकरणेविधिबंधाभावात् ॥ अकरणेचप्रत्यवायाभावाद तिभावः ॥ २१ ॥

ननुमुक्तानांविधिबंधप्रत्यवायाभावएवकुतोयेनकर्मानियमःस्यादित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ गतेरिति ॥ नमुक्तानांविधिबंधप्रत्यवायौविद्येते ॥ विधिबंधप्रत्यवायाभावेनैवमुक्तेःपुरुषार्थत्वात् ॥ अन्यथासंसारसमानधर्मत्वेनमोक्षत्वविरोधादितिभावः ॥ नचवैलक्षण्यांतरेणमोक्षत्वोपपत्तिः ॥ संसारस

बंधप्रत्यवायाभावेहिमोक्षस्यार्थवत्त्वम् ॥ अन्यथामोक्षत्वमेवनस्यात् ॥ कदाचित्कर्मकु

## ॥ ॐगतेरर्थवत्त्वमुभयथान्यथाहिविरोधः ॐ ॥ ३० ॥

र्वंतिकदाचिन्नैवकुर्वते ॥नित्यज्ञानस्वरूपत्वान्नित्यंध्यायंतिकेशवम् ॥तीर्णतर्तव्यभागाये प्राप्तानंदाःपरात्मनः ॥ प्रत्यवायस्यबंधस्याप्यभावात्स्वेच्छयाभवेदितिब्रह्मांडे ॥ ३० ॥

द्भावेतद्वैलक्षण्यस्यव्याहतत्वात् ॥ मुक्तानांकर्मण्यनियमश्चेदुपासनेपितथास्यादविशेषादित्याशंकांपरिहर्तुमुक्तेऽर्थैस्तीतिचाह ॥ कदाचिदिति ॥ विध्याद्यभावेप्यनिष्टनिवृत्त्यर्थमानंदप्राप्त्यर्थंवाकर्मनियमःकिन स्यादित्यतआह ॥ तीर्णेति ॥ ३० ॥

ननुविध्याद्यभावोमुक्तानांकर्मनियमसंभावनायैवभवतिनोपपादनाय ॥ ईश्वरकर्मणिव्यभिचारात् ॥
अतस्तदुपपादकाभावादनुपपन्नोऽसावित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ उपपन्नइति ॥ कदाचि
त्कुर्वंतिनवेत्ययंभावोमुक्तानामुपपन्नश्च ॥ परंपरयाकर्मफलमोक्षस्यप्राप्तत्वात्॥फलस्यचस्वप्राप्त्यनंतरंस्व
साधननियमनिवारणलक्षणत्वात् ॥ यथायागविधिपूर्तिफलसाधनविष्णुक्रमणादिनियमोनपूर्त्यनंतरमपी
तिभावः ॥ इदमुक्तंभवति ॥ मुक्तानकर्मनियमवंतः ॥ विशेषहेत्वभावेसतिप्राप्ततत्फलत्वाद्यजमानवदिति॥
उपपन्नश्चैवंभावः ॥ प्राप्तत्वात्तल्लक्षणस्यफलस्य ॥ यथालोकेविध्यर्थत्वेनविष्णुक्र

## ॥ ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॐ ॥ ३१ ॥

मणादिकंकृत्वासमाप्तकर्मेच्छयाकरोतिनकरोतिच ॥ ३१ ॥ अ० १८ ॥
अतोमुक्तस्यकर्मनियमाभावात्संसारेप्युपासनमाधिक्येनकर्तव्यमितिसिद्धम् ॥३१॥अ० १८ ॥ अत्रेश्व
रदर्शनसाधनोपास्तिमतामुत्पन्नज्ञानानांमोक्षेऽनियमसाधनादस्तिशास्त्रादिसंगतिः ॥ अन्यथोपासनेनिःशं
कप्रवृत्त्यभावप्रसंगात्समर्थनीयः ॥ प्रकृतोमोक्षएवविषयः ॥ किंनियमेनसर्वज्ञानिप्राप्यउतकेषांचिदास्ते
केषांचिन्नेतिसंदेहः॥फलद्वैविध्यदर्शनंसंदेहबीजम् ॥ नियमइतिपूर्वःपक्षः ॥ ज्ञानिष्वपिकेषांचिन्मुक्त्ययो
ग्यत्वसंभवात् ॥ अयोग्यानांतत्प्राप्त्ययोगात् ॥ यथाखलूपासकेष्वपियोग्यानामेवसर्वगुणोपसंहारोना

योग्यानामितिनियमः ॥ अतःसर्वेषांज्ञानिनांमोक्षाभावान्निःशंकोपासनंकर्तव्यमिति ॥ सिद्धांतयत्सूत्र मुपन्यस्यव्याचष्टे ॥ अनियमइति ॥ प्राप्तज्ञानानामपिकेषांचिन्मोक्षःकेषांचिन्नेत्युपासनवन्नियमोना स्तिकिंतुसर्वेषामपिप्राप्तज्ञानानामस्तिमोक्षः ॥ उपसंहारेनिषेधेननियमोपपत्तेरत्रपुनस्तदभावेननियमायो गादितिभावः ॥ निषेधाभावेपिसाधकाभावान्नियमएवेत्यतआह ॥ नेति ॥ विप्रतिपन्नाज्ञानिनोनियत

प्राप्तज्ञानानामपिकेषांचिन्मुक्तिःकेषांचिन्नयथोपसंहारनियमइतिनमंतव्यम् ॥ सर्वेगुणाब्रह्मणो वद्युपास्यानान्यैर्देवैःकिमुसर्वैर्मनुष्यैरित्युपसंहारेविरोधादन्यत्राविरोधात् ॥ नकश्चिद्ब्रह्मविदस्तीति

॥ ॐ अनियमःसर्वेषामविरोधाच्छब्दानुमानाभ्याम् ॐ ॥ ३२ ॥

मनुभवतिमुक्तोह्येवभवतितस्मादाहुःस्तुतिर्हेतीतिकौंडिन्यश्श्रुतेश्च ॥ यथाकेषांचिन्मोक्षएवमन्ये षामित्यनुमानाच्च ॥ ३२ ॥ अ० ११ ॥

मोक्षाःज्ञानित्वात् ॥ संप्रतिपन्नवदितिभावः ॥ नचैतदुपसंहारानुमानसमानयोगक्षेममितिवाच्यम ॥ बा धकशून्यत्वाच्छ्रुतिमूलत्वाच्च ॥ नचकेषांचिन्मुक्त्ययोग्यत्वसंभवान्नियमइतियुक्तम् ॥ साधकबाधक भावाभावाभ्यांज्ञानिनांकस्यापिमोक्षायोग्यताभावावगमात् ॥ अतोज्ञानिनांमोक्षस्यनियतत्वान्निःशं कमुपासनंकर्तव्यमितिसिद्धम् ॥ ३२ ॥ अ० ११ ॥

अत्रभगवज्ज्ञानसाधनोपासनाधिकारिणामुपासनेऽधिकारनियमसाधनादस्तिशास्त्रादिसंगतिः ॥ अन्यथा प्राप्तेश्चेत्यादेरनुपपत्तेरसौसमर्थनीयः ॥प्रकृतोपास्तिमंतोविषयः॥उपासनाधिकारनियतिमंतोनवेतिसंदेहः॥ पूर्वोक्तिलौकिकक्रियायामदृष्टिश्चसंदेहबीजम् ॥ नोपासनावंतोऽधिकारनियतिमंतइतिपूर्वःपक्षः॥ उपास नाऽधिकारनियमेप्रमाणाभावात् ॥ नचमुक्तावानंदतारतम्यमुपासनाऽधिकारनियमेप्रमाणमितिवाच्यम् ॥ उपासनादिप्रयत्नतारतम्येनैवतस्योपपत्तेरुपासनाऽधिकारनियमाप्रयोजकत्वात् ॥ अभ्युपगम्यचेदमुच्य

यथायथाधिकारोविशिष्यतेएवंमुक्तावानंदोपिविशिष्यते ॥ मनुष्येभ्योगंधर्वाणांगंधर्वेभ्यश्च

॥ ॐयावदधिकारमवस्थितिरधिकारिकाणाम् ॐ ॥ ३३ ॥

षीणामृषिभ्योदेवानांदेवेभ्यइंद्रस्येंद्राद्रुद्रस्यरुद्राद्ब्रह्मणएषएवशतानंदइतिश्रुतेर्वैदशिरस्तामाम् ॥

ते ॥ मुक्तावानंदतारतम्यमेवानुपपन्नम् ॥ तथात्वेमुक्तानांद्वेषेर्ष्यादिदोषप्रसंगात् ॥ नचात्रप्रमाणमस्ति ॥ आनंदश्रुतिस्तुसंसारविषयतयोपपद्यते ॥ अतउपास्त्यधिकारनियमाभावात्प्राप्तेश्चसमंजसमित्याद्ययुक्त मिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे॥यावदिति ॥अस्त्येवोपासनाधिकारनियमोमुक्तावानंदतारतम्य स्यभावात् ॥ मुक्तावानंदतारतम्यस्यचोपासनाधिकारनियमानुसारित्वादितिभावः॥ ननुमुक्तावानंदतारत म्यमेवकुतोयेनोपासनाऽधिकारनियमइत्यतआह॥ मनुष्येभ्यइति॥ मुक्तानामानंदतारतम्यमुपासनादिप्रय

तेनसंभवत्यतोनोपासनाऽधिकारनियमंप्रयोजयतीत्यतआह॥ अध्यात्मेचेति ॥ अधिकारनियमेनैवमुक्ता
वानंदतारतम्यंनोपासनादिप्रयत्नेनैवतस्याप्युपासनाधिकारनियमानुसारित्वादितिभावः ॥ कथंचिदधिका
राधिकप्रयत्नेविघ्नोभवति॥स्वाधिकाराधिकोयत्नःप्रायशोनोपपद्यते॥ कथंचिदधिकेयत्नेदोषःकश्चित्समाप
तेदितिवचनात्॥३३॥ननुमुक्तावानंदतारतम्यमेवनोपपद्यते ॥असमत्वेमुक्तानांपरस्परविरोधप्राप्तेः॥लोकत

अध्यात्मेच ॥ ज्ञानंचोपासनंचैवमुक्तावानंदएवच ॥ यथाधिकारंदेवानांभवत्ये
वोत्तरोत्तरमिति ॥ ३३ ॥ नचासमत्वेनविरोधोभवति ॥ ब्रह्मधीत्वाद्दोषाभा
वसाम्याद्उत्तमेभ्योऽन्येषांभावाच्च ॥ औपसदवच्छिष्यवत् ॥

## ॥ ॐ अक्षरधियांत्ववरोधः सामान्यतद्भावाभ्या मौपसदवत्तदुक्तम् ॐ ॥ ३४ ॥

थादर्शनात्॥श्रुतयस्तुसंसारविषयाइत्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे॥ अक्षरेति ॥नमुक्तानामसमत्वेपि
विरोधः ॥ विरोधेविषयलंपटत्वमत्सरादिदोषित्वानुपकारित्वानांप्रयोजकत्वात् ॥ नचैतानिमुक्तेषुविद्यं
ते ॥ तेषांब्रह्मधीत्वान्निर्दोषत्वात्परस्परोपकारित्वाच्चेतिभावः ॥ ननुविरोधिष्वसाम्यंविषयालंपटत्वादिचदृ
श्यतेतत्कथंनिश्चिनुमोदोषनिबंधनएवविरोधोनत्वसाम्यनिमित्तइतितत्राह ॥ औपसदवदिति ॥ दोषास

मत्वयोःक्वचिद्विरोधिषुसमावेशेपिदोषाणामेवविरोधप्रयोजकत्वनिश्चयोयुज्यते ॥ असमयोरपिगुरुशिष्ययोर्दोषाभावेनविरोधाभावदर्शनात् ॥ अन्यथातत्रव्यभिचारइतिभावः ॥ अत्रश्रुतिंचाह ॥ उक्तंचे

उक्तंचतुरश्रुतौ ॥ नानाविधाजीवसंघाविमुक्तौनचैवतेषांब्रह्मधियांविरोधः ॥ दोषाभावाद्गुरुशिष्यादिभावाल्लोकेपिनासौकिमुतेषांविमुक्तेरिति ॥ ३४ ॥ अ० २० ॥

ति ॥ अतएवानंदश्रुतेरमुक्तविषयत्ववर्णनंप्रत्युक्तम् ॥ तथाचस्मृतिः ॥ नरादिब्रह्मपर्यंतंविमुक्तानांशतोच्छ्रयः ॥ अप्यानंदेमिथोप्युक्तस्त्वध्वर्यूणांश्रुतौपृथगिति ॥ तस्माद्रुपासनाधिकारेनियमादुक्तमुपपन्नमितिसिद्धम् ॥ ३४ ॥ अ० २० ॥

अत्रब्रह्मज्ञानसाधनोपासनाधिकारिणांप्राणावधित्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ निरवधिकत्वेब्रह्मण
एवसर्वगुणोपास्तियोग्यत्वंनस्यादतस्तत्समर्थनीयम् ॥येभगवदुपासकाःभक्तास्तएवच्छंदोगश्रुतौनामादि
प्राणपर्यंतंतारतम्येनोक्ताःप्राणादुत्तमोनोक्तः॥ तएवोपासनाधिकारिणोविषयः ॥ किंप्राणावसानानवेति
संदेहः ॥ अनुक्तेरुभयथापिदर्शनंसंदेहबीजम् ॥नाधिकारिणःप्राणावसाना इतिपूर्वःपक्षः॥ नामादीनांसो
त्तरत्वदर्शनात्प्राणादप्युत्तमाधिकारिसाधनसौलभ्यात्प्राणःस्योत्तमाधिकारीयुक्तः॥अधिकारित्वान्नामा
नामाद्यारभ्यप्राणांतमुत्तरोत्तरमुत्तमत्वमुक्तम् ॥ नप्राणात्किंचिद्भूयउक्तम् ॥ तथापिपूर्व

॥ ॐ इयदामननात् ॥ ३५ ॥

वत्स्यादितिनवाच्यम् ॥ प्राणोवावसर्वेभ्योभूयान्नहिप्राणाद्भूयान्प्राणोह्येवभूयांस्तस्माद्भू
यान्नामेतिकौठरव्यश्रुतेः ॥ ३५ ॥

द्विवदिति॥यद्यपिछंदोगश्रुतौनामाद्यारभ्यप्राणांतमुत्तरोत्तरमाधिक्यमुक्त्वाप्राणादप्युत्तमोनोक्तः॥ तथाप्य
नुमानेनप्राणादप्युत्तमांगीकारेनदोषः॥प्रमाणादनुक्तेर्दुर्बलत्वात् ॥ अतोऽधिकारिणांप्राणावसानत्वाभावा
द्धिरण्यगर्भएवसर्वगुणोपास्तियोग्यइत्ययुक्तमिति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे॥इयदिति ॥ नामादि
वत्प्राणादधिकोधिकारीनसाध्यःकिंत्वियदेवाधिकारिणांप्राणावसानत्वमेव ॥ प्राणोवावसर्वेभ्योभूयानि ॥ ६४॥
तिश्रुतेरितिभावः ॥ ३५ ॥

उक्तमाक्षिप्यसमादधत्सूत्रंपठित्वाऽऽक्षेपांशंतावद्व्याचष्टे ॥ अंतरेति॥नप्राणस्यसर्वाधिकार्य्युत्तमत्वंयुक्तम्॥
भूतसमूहेनामादावेकस्मादेकोविशिष्टोदृष्टएवेतितद्दृष्टांतेनप्राणादप्युत्तमस्यसाधयितुंशक्यत्वात् ॥ नचवि
ष्णोरुत्तमत्वेनसिद्धसाधनं॥परमात्मानंश्रियंचविनोत्तमस्यसाध्यत्वात्॥यद्येवमपिनप्राणादुत्तमस्तर्हिनामा

यथाभूतग्रामेएकस्मादेकउत्तमोस्त्येवैवंप्राणादपिपरमात्मानमंतराविद्यतइतिचे

॥ ॐ अंतराभूतग्रामवदितिचेत्तदुक्तम् ॐ॥ ३६॥

न्न ॥ प्राणादुत्तमाभावेप्रमाणमुक्तम् ॥ अन्यत्रोत्तमाभावेनप्रमाणम् ॥ दृश्यते
चान्यत्रोत्तमत्वम् ॥ ३६ ॥

दिभ्योप्युत्तमोनस्यादितिभावः ॥ परिहारांशंव्याचष्टे ॥ नेति ॥ नानुमानेनप्राणादुत्तमःसाध्यः॥प्राणोवा
वसर्वेभ्योभूयानितिप्राणादुत्तमाभावेप्रमाणस्योक्तत्वेनानुमानस्यबाधितविषयत्वादितिभावः ॥ प्राणादुत्त
माभावेनामादेरप्युत्तमोनस्यादधिकारित्वाविशेषादित्यतआह ॥ अन्यत्रेति ॥ नकेवलमन्यत्रोत्तमाभावे
प्रमाणाभावःकिंतुवाग्वावनाम्नोभूयसीत्याद्युत्तमसद्भावेप्रमाणंचास्तीत्याह ॥ दृश्यतेचेति ॥ ३६ ॥

उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याक्षेपांशंतावद्व्याचष्टे ॥ अन्यथेति ॥ यदुक्तंप्राणोवावसर्वेभ्योभूयानि
तिश्रुतेःप्राणादुत्तमोऽधिकारीनास्तीतितदयुक्तम् ॥ तथाहि ॥ किमयंसर्वशब्दोनिरुपचरितसर्वार्थउतसंकु
चितार्थः ॥ नाद्यः ॥ तथासतिप्राणस्यनिरुपचरितसर्वोत्तमत्वप्राप्तेः ॥ तथाचसतिसर्वोत्तमद्वयायोगाद्यः
प्राणपरमात्मनोःश्रुत्यादिसिद्धोभेदःसोऽनुपपन्नःस्यात् ॥ नापिद्वितीयः ॥ सर्वशब्दस्यसंकुचितार्थत्वेकति
पयाधिकारिव्यतिरिक्तसर्वार्थस्यापिवक्तुंशक्यत्वात् ॥ अतोनैतच्छ्रुत्याप्राणादुत्तमाधिकारिणोभावःसि

प्राणस्यसर्वोत्तमत्वेपरमात्मनाभेदानुपपत्तिरितिचेन्न॥श्रुत्युपदिष्टवदुपपत्तेः ॥ अन्येभ्यः

## ॥ ॐ अन्यथाभेदानुपपत्तिरितिचेन्नोपदेशवत् ॐ ॥ ३७ ॥

प्राणस्योत्तमत्वंतस्मात्परमात्मनोह्युपदिष्टम् ॥ ३७ ॥ अ० २१ ॥

ध्यतीतिभावः ॥ परिहारांशंव्याचष्टेनेति ॥ युक्तमेवैतच्छ्रुत्याप्राणादुत्तमाधिकार्यभावसाधनम् ॥ सर्वश
ब्दस्यसंकुचितार्थत्वात् ॥ नचोक्तदोषप्राप्तिः ॥ श्रुत्युक्तप्रकारेणैवसंकोचोपपत्तेरितिभावः ॥ किंतच्छ्रुत्यु
पदिष्टमित्यतआह ॥ अन्येभ्यइति ॥ सर्वेभ्यःप्राणस्यतस्माच्चविष्णोरुत्तमत्वंछंदोगश्रुतावुक्तमतोविष्णुव्य
तिरिक्तसर्वार्थत्वंश्रुतेःस्यान्नान्यथेतिभावः ॥ अतोऽधिकारिणांप्राणावसानत्वात्सएवसर्वगुणोपास्तियोग्य
इतिसिद्धम् ॥ ३७ ॥ अ० २१ ॥

अत्रभगवज्ज्ञानसाधनोपासनाधिकारिणःप्राणात्परमेश्वरस्योत्तमत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अ
न्यथोपासनायोगात्तत्समर्थनीयम् ॥ प्रकृतोविष्णुरेवात्रविषयः ॥ प्राणादुत्तमोनवेतिसंदेहः ॥ प्राणस्यहिर
ण्यगर्भत्वाद्विप्रतिपत्तिःसंदेहबीजम् ॥ पूर्वपक्षयति ॥ नेति ॥ नविष्णोःप्राणादुत्तमत्वम् ॥ छंदोगश्रुतौप्रा
णस्यैवसर्वोत्तमत्वेनोक्तत्वात् ॥ अथोच्येत ॥ प्राणानंतरमपिएषतुवाअतिवदतियःसत्येनातिवदतीतिसत्य

नेतिचेन्न ॥ उक्तंप्राणात्परमात्मनउत्तमत्वंपूर्वोक्ताध्या

## ॥ ॐव्यतिहारोविशिंषंतिहीतरवत् ॐ ॥ ३८ ॥

हारेण ॥ एषतुवाअतिवदतीतिविशिंषंतिहि ॥

पदेनोदितस्यविष्णोराधिक्यमुच्यतइति।मैवम् ॥ अस्तिभगवःप्राणाद्भूयइतिप्राणाद्वावभूयोस्तीतितन्मेभग
वान्ब्रवीत्वितिसत्यंवावप्राणाद्भूयइतिप्रकरणांतरवत्प्रश्नप्रतिवचनाभावात् ॥ कारणविशेषमंतरेणप्रकरण
भेदकल्पनायोगात् ॥ सत्यपदेनप्राणएवोच्यते ॥ अतःप्राणादुत्तमत्वाभावाद्विष्णोर्नतदुपासनंसर्वैःकार्यमि
तिभावः ॥ पूर्वपक्षंप्रतिषेधति ॥ नेति ॥ कुतोनेत्यतःसूत्रंपठित्वाव्याचष्टे ॥ व्यतिहारइति ॥ श्रुतौप्राण
स्यैवसर्वोत्तमत्वोक्तेर्नविष्णोस्तदुत्तमत्वमितिनयुक्तम् ॥एषतुवाअतिवदतियःसत्येनातिवदतीतिसत्यपदोदि

तस्यविष्णोःप्राणादुत्तमत्वस्योक्तत्वात्॥प्रश्नाद्यभावात्प्राणविशेषणमेवतदितिनवाच्यम् ॥ प्रश्नाद्यध्याहा
रस्यकर्तुंशक्यत्वात् ॥ नचाध्याहारकारणाभावादेकप्रकरणत्वमेवयुक्तमितिवाच्यम् ॥ सवाएषएवं
पश्यन्नेवंमन्वानएवंविजानन्नतिवादीभवतीतिप्राणवादिनोऽतिशयितवस्तुवादित्वेनातिवादित्वमुक्तम्॥तत
श्चैषतुवाअतिवदतियःसत्येनातिवदतीति सत्याख्यवस्तुवदतोप्यतिवादित्वमुच्यते ॥ तत्रप्राणातिवादिनःस
त्यातिवादीतुशब्देनविशिष्यते ॥ तेनज्ञायतेऽन्योयमन्योसाविति ॥ अतःप्रकरणभेदकसद्भावाद्युक्तंप्रश्ना

यथेतरेषुविशेषणम् ॥ उत्तमत्वंहिदेवानांमुक्तावपिहिमानवात् ॥ तेभ्यःप्रा
णस्यतस्माच्चनित्यमुक्तस्यैवहेरेरितिचबृहत्तंत्रे ॥ ३८ ॥ अ० २२ ॥

द्यध्याहारेणसत्यस्यप्राणादुत्तमत्वेनव्याख्यानमितिभावः ॥ ननुकथमेतद्विशेषणंप्रकरणभेदकंयेनप्रश्ना
द्यध्याहारंप्रतिपद्येमहीत्यतआह ॥ यथेति ॥ यथाखलुवाग्वावनाम्नोभूयसीत्यादिविशेषणंप्रकरणभे
दकंवाचोनामाधिक्यवाचकत्वात्तथैतदपिभेदकंभवत्येव ॥ यःसत्यंवदतिसतुप्राणातिवादिनोपिविशेषेणा
तिशयितंवस्तुवक्तीतिप्राणात्सत्यस्याधिक्यवाचकत्वादितिभावः ॥ अत्रस्मृतिंचाह ॥ उत्तमत्वमिति ॥
अतोविष्णोःप्राणादुत्तमत्वाद्युक्तंतदुपासनमितिसिद्धम् ॥ ३८ ॥ अ० २२ ॥

अत्रभगवदापरोक्ष्यसाधनोपासनाधिकारिणःप्राणाद्विष्णोरेवोत्तमत्वसाधनादस्तिशास्त्रादिसंगतिः ॥ अ
नेकेषामुत्तमत्वेप्रागुक्तमयुक्तंस्यादित्येकस्यैवोत्तमत्वंसमर्थनीयम् ॥ प्रकृतप्राणएवविषयः ॥ किमस्मात्स
त्यपदोदितविष्णुरेवोत्तमःकिमन्योप्यस्तीतिसंदेहः ॥ विष्णुरुत्तमइत्युक्तेरुभयथासंभवःसंदेहबीजम् ॥ पू
र्वपक्षयति ॥ कृतिरिति ॥ नकेवलंप्राणात्सत्यपदोक्तोविष्णुरेवोत्तमोऽपितुबहवोप्युत्तमाःसंति ॥ सत्या
दप्युपरिविज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाहंकारात्मनामुक्तत्वात् ॥ नचविज्ञानादीनांसत्येनाभेदान्नब
कृतिर्निष्ठाज्ञानमित्यादीनांभेदाद्बहवउत्तमाइतिचेन्न ॥

॥ ॐसैवहिसत्यादयःॐ ॥ ३१ ॥

सत्यादिगुणास्तस्याएवपरदेवतायाःस्वरूपभूताः ॥

हूनामुत्तमत्वंप्राणादितिवाच्यम् ॥ तेषामभेदोक्त्यादिकारणविशेषंविनाप्राणंविहायाभेदग्रहणस्यान्या
य्यत्वात् ॥ अतःप्राणादपिबहूनामुत्तमत्वात्तस्यविष्णुंविनासर्वोत्तमत्वंविष्णोर्निरुपचरितसर्वोत्तमत्वंचन
युक्तमितिभावः ॥ पूर्वपक्षंप्रतिषेधति ॥ नेति ॥ तत्रहेत्वाकांक्षायांसूत्रमुपन्यस्यव्याचष्टे ॥ सैवेति ॥
नप्राणादधिकाबहवइतियुक्तम् ॥ यस्मात्सत्यादयोहंकारात्मांतासाईश्वराख्यापरदेवतैवनतुततोभिन्नाः ॥
नचवाच्यमभेदानुक्तेर्भेदएवतेषामिति ॥ सत्यंभगवोविजिज्ञासइतिसत्याख्यस्यभगवतोगुणजिज्ञासायां

तद्गुणत्वेनतदविनाभूतस्यविज्ञानस्योक्तत्वात् ॥ तथोत्तरत्रापिविज्ञानगुणजिज्ञासायामविनाभूतसत्यादी नामुक्तत्वादभेदसिद्धेः ॥ अन्यथासत्यादिजिज्ञासायांविज्ञानादिकथनस्यासंगतत्वादितिभावः ॥ अत्रकृ तिनिष्ठाद्यनुसारेणस्त्रीलिंगप्रयोगः ॥ अतएवशंकाभाष्येविज्ञानस्यादित्वेपिकृतिर्निष्ठेत्युक्तम् ॥ अत्रैवहि शब्दसूचितांस्मृतिंचाह ॥ ब्रह्मतर्केचेति ॥ नन्वस्तुभूमांतानांभगवद्गुणत्वोक्त्याऽभेदोनत्वहंकारात्मनोस्त योरभेदानुक्तेरित्यतआह ॥ सत्याद्याइति ॥ पूर्ववदभेदानुक्तावप्यहंकारात्मनोरस्त्येवभगवत्स्वरूपत्वमि

ब्रह्मतर्केच ॥ नामादिप्राणपर्यंताद्योहिसत्यादिरूपवान् ॥ तस्मैनमोभग

वतेविष्णवेसर्वजिष्णवइति ॥सत्याद्याअहमात्मांतायद्गुणाःसमुदीरिताः॥

तस्मैनमोभगवतेयस्मादेवविमुच्यतइत्यध्यात्मे ॥ ३१ ॥ अ० २३ ॥

त्यत्रहेतुर्यस्मादिति ॥ सवाएषएवंपश्यन्नेवंमन्वानएवंविजानन्नात्मरतिरात्मक्रीडआत्ममिथुनआत्मानंदः स्वराड्भवतीत्यहंकारात्मज्ञानान्मोक्षःश्रूयते ॥ मोक्षश्चभगवज्ज्ञानादेव ॥ अतस्तयोस्तत्स्वरूपत्वमिति भावः ॥ किंचसएवाधस्तादित्यादिनोदितंयद्ब्रह्मणःपूर्णत्वंतदेवाहंकारात्मनोरुच्यते ॥ अहमेवाधस्तादात्मै वाधस्तादिति ॥ तथाश्रुत्यंतरेसर्वेषामपिपूर्णत्वमुच्यतेसत्यंपूर्णमित्यादिना ॥ अतःसत्यादीनामात्मांतानां भगवत्स्वरूपत्वेनसएवप्राणादुत्तमइत्युक्तमुपपन्नमितिसिद्धम् ॥ ३१ ॥ अ० २३ ॥

अत्रभगवद्दर्शनसाधनोपासनेश्रियोऽनधिकारित्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाऽधिकारिणांप्रा
णावसानत्वासिद्धेस्तत्साधनीयम् ॥ प्राणपरमात्मप्रसंगसन्निधापितश्रीरत्रविषयः ॥ अधिकारिणीनवेतिसं
देहः ॥ चेतनद्वैविध्यदर्शनंसंदेहबीजम् ॥ पूर्वपक्षयति ॥ प्रकृतेरिति ॥ भवत्येवप्रकृतिरधिकारिणीसाधुत्वे
सतिसंसारित्वात् ॥ नचतस्याःसंसारित्वाभावः ॥ सीतारुक्मिण्यादिरूपायास्तस्याजन्ममरणादिदर्शनात्सं

प्रकृतेरपिजन्मादेःसंसारप्राप्तेःकिमितिनामादिष्वपाठइत्यत्रोच्यते ॥

## ॥ ॐ कामादितरत्रतत्रचायतनादिभ्यः ॐ ॥ ४० ॥

सारप्राप्तेः ॥ किंचसाकृतार्थानवा ॥ आद्येभगवदुपासनंनस्यात् ॥ द्वितीयेकथमसंसारित्वंतस्याः ॥ अतः
संसारित्वेनप्रकृतेरप्यधिकारोस्त्येव॥ अधिकारित्वेचतस्याःकिमितिनामादिष्वपाठः ॥किंतुतत्पाठोऽध्याहर्त
व्यएव॥सचभवन्प्राणाद्युपर्येवभवेत् ॥ तथाचनाधिकारिणांप्राणावसानत्वमितिभावः ॥ सिद्धांतयत्सूत्रम
वतार्यव्याचष्टे ॥ अत्रेति ॥ नप्रकृतेरधिकारित्वम्॥ तस्याबद्धत्वाभावात् ॥ नचजन्मादेःसंसारित्वप्राप्तिः॥
जननादेरवतारादित्वेनसंसारहेतुत्वाभावात् ॥ नचजन्माद्येवकिंनस्यादितिवाच्यम् ॥ जननेपिमूलरूपेणभ

गवत्समीपेस्थितत्वात् ॥ नार्पीद्राादिवत् ॥ स्वेच्छयैवजननेकर्मनिमित्तत्वाभावात् ॥ नचस्वेच्छानुसारित्वे स्वातंत्र्यम् ॥ ईश्वरेच्छानुसारित्वात् ॥ मूलरूपेणभगवत्समीपेस्थितास्वेच्छयाऽवतारान्करोतीत्येतत्कुतः॥ सर्वगतत्वाद्यभिधायकश्रुतेरितिभावः ॥ सर्वमिच्छाधीनंयस्याःसासर्वेच्छा ॥ अविकृतिरित्यचेतनप्रकृतिव्यावर्तयति ॥ नन्वेवमसंसारित्वेनानधिकारित्वेपिप्रकृतेःकुतोनामादिष्वपाठः ॥ भगवदुक्तिवत्तारतम्य

स्वेच्छयैवमूलस्थानेस्थिताअन्यत्रावतारान्करोतीश्वरेच्छानुसारेण॥ स
र्वायतनासर्वकालासर्वेच्छासर्वज्ञानाऽबद्धाबंधिकासैषाप्रकृतिरविकृति
रितिवत्सश्रुतेः ॥ नामादयस्तुबद्धत्वान्मोचकत्वात्परोपिच ॥ उभयोरप्य
भावेनयथाव्यक्तंनतूदितम् ॥ श्रुतौतथाजीवपरावुच्येतेकिंचनेतरत् ॥
नोच्यतेचतदातत्त्वद्वयंवैसमुदाहृतमितिब्रह्मतर्के ॥ ४० ॥

कथनावसरेतदुक्तेरावश्यकत्वात् ॥ अन्यथातदभावप्रसंगइत्यतआह ॥ नामादयस्त्विति ॥ यथाबद्धमोचकत्वविवक्षयैवनामादीनांपरमात्मनश्चोक्तिस्तदुभयाभावेनप्रकृतेरनुक्तिर्नत्वभावात् ॥ तथाबद्धमोचकात्वाभिप्रायेणैवद्वासुपर्णेत्यादिश्रुतौजीवेश्वरावुच्येतेनतुजडम् ॥ तदातत्त्वद्वयमेवोक्तंज्ञातव्यं ननुजडाभावइत्यर्थः ॥ ४० ॥

ननुरमायाअसंसारित्वेकृतकृत्यत्वेनभगवदुपासनाभावःस्यात् ॥ नचासौयुक्तः ॥ यदर्चितंब्रह्मभवादिभिः सुरैःश्रियाचदेव्यामुनिभिश्चसात्वतैरित्यादिप्रमाणसिद्धत्वादित्याशंकांपरिहरन्सूत्रंपठित्वाव्याचष्टे ॥ आद

अबद्धत्वेपिभक्तिविशेषादेवोपासनाद्यलोपस्तस्याभवति ॥ यथाश्रीर्नि

॥ ॐ आदरादलोपः ॐ ॥ ४१ ॥

त्यमुक्तापिप्राप्तकामापिसर्वदा ॥ उपास्तेनित्यशोविष्णुमेवंभक्तोहरेर्भवे
दितिबृहत्तंत्रे ॥ ४१ ॥

रादिति ॥ प्रकृतेरसंसारित्वेनकृतकृत्यत्वेपिभगवदुपासनाभावोनप्रसज्यतेनिरुपाधिकभक्त्यतिशयेनोपास नोपपत्तेरितिभावः ॥ आदरोभजनंभक्तिर्बहुमानंचसेवनमित्यभिधानम् ॥ अत्रैवस्मृतिंचाह ॥ यथेति ॥ अन्योपिहरेर्भक्तः ॥ एवंनिरुपाधिकभक्त्याउपासकोभवेदित्यर्थः ॥ ४१ ॥

नरमायानित्यमुक्तत्वंयुक्तंकारणाभावात् ॥ नचस्वतएवाऽस्वातंत्र्यादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्या
चष्टे ॥ उपस्थितेरिति ॥ युज्यतेनित्यमुक्तत्वंप्रकृतेः ॥ द्वावेताविति श्रुतेः॥अनादिकालेभगवत्संबंधित्वेनाति
शयिततत्प्रसादाख्यकारणसद्भावादितिभावः ॥ कृतौपूर्णौ॥ अतःप्रकृतेरधिकाराभावाद्युक्तंप्राणावसानत्व
मधिकारिणामितिसिद्धम् ॥ ४२ ॥ अ०२४ ॥ अत्रभगवज्ज्ञानसाधनोपासनस्यसमस्तस्यापिकर्तव्यता

अनादिकालेभगवत्संबंधित्वाद्युज्यतेचनित्यमुक्तत्वंतस्याः ॥द्वावेतावना
दिनित्यावनादियुक्तौनित्यमुक्तावनादिकृतौनित्यकृतौयोयंपरमोयाचप्र

## ॥ ॐ उपस्थितेस्तद्वचनात् ॐ ॥ ४२ ॥

कृतीरमतेह्यस्यांपरमोरमतेह्यस्मिन्प्रकृतिःस्वस्मिन्नहिपरमोरमतेनस्वस्मिन्
प्रकृतिरतएनमाहुःपरमइतीतिगौपवनश्रुतिवचनात् ॥ ४२ ॥ अ० २४ ॥
दर्शनार्थंह्युपासनंतच्चश्रवणादेवभवति ॥ अतःकिमर्थमिति ॥

साधनादस्तिशास्त्रादिसंगतिः ॥ अन्यथासमस्तोपास्तिविधानवैयर्थ्यापत्तेःसासमर्थनीया॥ प्रकृतोपासनमे
वविषयः ॥ किंसमस्तंकर्तव्यंव्यस्तंवेतिसंदेहः॥ विधेःपक्षद्वयसाधारण्यंसंदेहबीजम् ॥ पूर्वपक्षयति ॥ दर्श
नार्थमिति॥ व्यस्तमेवोपासनंकर्तव्यम्॥ तथाहि ॥उपासनंतावद्भगवद्दर्शनार्थंनचप्रयोजनांतरंदृष्टमिष्टंवा॥

तत्त्वदर्शनंश्रवणमननाभ्यांभविष्यतिकिंध्यानेन ॥ अथोच्येतज्ञानप्रतिबंधकस्यदृढत्वाद्ध्यानादेवदर्शनमिति ॥ तथासतिध्यानेनैवदर्शनसंभवादलंश्रवणादिना ॥ नचोभयसमुच्चयेनैवदर्शनमितिमानमस्ति ॥ नचोभयोरपिकृत्यंपश्यामः ॥ अतःसमस्तोपासनस्याकर्तव्यत्वाद्यर्थंतद्विधानमितिभावः ॥ सिद्धांतयत्सू

अत्रोच्यते ॥ तत्त्वनिश्चयोवेदार्थनियमश्चब्रह्मदृष्टेःपृथगेव ॥ हिशब्देनआ

॥ ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबंधः फलम् ॐ ॥ ४३ ॥

त्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइतिश्रुतिंसूचयति ॥

त्रमवतार्यव्याचष्टे ॥ अत्रेति ॥ कर्तव्यमेवसमस्तोपासनंनश्रवणमननमात्रम् ॥ श्रवणादिमात्रेणदर्शनाभावात् ॥ तत्त्वज्ञानंहिश्रवणफलम् ॥ अयमेववेदार्थोनान्यइतिनिर्णयस्तुमननफलम् ॥ तदुभयंचब्रह्मदर्शनात्पृथगेव ॥ अतोध्यानंदर्शनार्थंकर्तव्यमितिभावः ॥ ननुध्यानादेवचेद्ब्रह्मदर्शनंकिंतर्हिश्रवणमननाभ्यामित्यतआह ॥ हिशब्देनेति ॥ ज्ञानार्थंत्रयस्यापिविहितत्वात्सर्वमुपासनंकर्तव्यमितिभावः ॥ ननुश्रौतोपिसमु

श्चयःकथमंगीकर्तुंशक्यते ॥ ध्यानादेवदर्शनसंभवात् ॥ नचज्ञानोदयोपयोगित्वाच्छ्रवणादेःकर्तव्यता ॥ श्रवणादेःफलांतरस्यैवोक्तत्वादित्यतआह ॥ श्रवणादीति ॥ कर्तव्यमेवसमस्तोपासनंश्रवणादेरपिध्यान फलदर्शनोपयोगित्वात् ॥ तथाहि ॥ भगवद्दर्शनस्यतावदज्ञानसंशयविपर्ययाःप्रतिबंधकाः ॥ तत्रश्रवणं

श्रवणादिफलंचाज्ञानविपर्ययादिदर्शनप्रतिबंधनिवृत्तिः ॥ ब्रह्मतर्केच ॥
श्रुत्वामत्वातथाध्यात्वातदज्ञानविपर्ययौ ॥ संशयंचपराणुद्यलभतेब्रह्म
दर्शनमिति ॥ ४३ ॥ अ० २५ ॥

तत्त्वज्ञानमुत्पाद्याज्ञानंनिवर्तयति ॥ मननंचवेदार्थनिर्णयंकुर्वत्संशयविपर्ययौनिवर्तयति ॥ अतःप्रतिबंध कनिवर्तकतयाज्ञानोपयोगित्वात्समस्तोपासनमपेक्षितमितिभावः ॥ अत्रस्मृतिंचाह ॥ ब्रह्मतर्केचेति ॥ अतःसर्वोपासनस्यकर्तव्यत्वादुक्तंयुक्तमितिसिद्धम ॥ ४३ ॥ अ०२५ ॥

अत्रभगवज्ज्ञानसाधनोपासनेतिकर्तव्यतासाधनादस्तिशास्त्रादिसंगतिः॥ अन्यथाइतरेत्वर्थसामान्यादित्यु
क्तमयुक्तंस्यादतस्तत्समर्थनीयम् ॥ प्रकृतंश्रवणाद्येवविषयः॥ किंयथाकथंचिदनुष्ठितंज्ञानसाधनमुतगुरु
प्रसादपूर्वकप्रदानयुक्तमितिसंदेहः॥ कर्तव्यताविधेरुभयथापिपर्यवसानंसंदेहबीजम् ॥ यथाकथंचिदनुष्ठि
तंश्रवणादिज्ञानसाधनमितिपूर्वःपक्षः॥ आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइतिश्रवणा
दिमात्रस्यैवज्ञानहेतुत्वावगमात् ॥ ज्ञानस्यचगुरुप्रसादाधीनत्वेज्ञानिनोऽपिमोक्षस्यतदधीनत्वप्रसंगश्च ॥ नेद

नचश्रवणादिमात्रेणदृष्टिर्भवतिकिंतुसेतिकर्तव्येन ॥ यथागुरुदत्तंतथैवभवति ॥ आचार्यवानुपु

## ॥ ॐप्रदानवदेवहितदुक्तम् ॐ ॥ ४४ ॥

रुषोवेदेतिश्रुक्तम् ॥ ४४ ॥ अ० २६ ॥

मनिष्टमितिचेन्न ॥ कदाचिद्गुरुकोपेनतदभावप्रसंगात् ॥ अन्यथागुरुकोपवत्तद्गुरस्यापिनिरर्थकतास्यात्॥
अभ्युपगमेचानियमइत्युक्तविरोधःस्यात् ॥ अतोज्ञानेगुर्वपेक्षाभावात्तदुक्तप्रकारेणोपासनमित्युक्तमयुक्त
मिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ प्रदानवदिति ॥ नश्रवणादिमात्रंज्ञानसाधनंकिंतुप्रसादपूर्वक
गुरुप्रदानयुक्तमेव ॥ गुरुप्रदानानुसारित्वात्फलस्य॥ नचैवमुक्तवचनविरोधः ॥ गुरुप्रदानंज्ञानसाधनस्यश्र
वणादेरितिकर्तव्यतेत्यभ्युपगमात् ॥ नहिदृढमुष्टिनिपीडनादिपृथक्साधनमुच्यतइतिभावः ॥ गुरुप्रदाना
धीनत्वंज्ञानस्यकुतइत्यतआह ॥ आचार्येति ॥ नचैवमुक्तरीत्याज्ञानाद्यभावः॥ तज्ज्ञानमोक्षयोरीश्वरक

ल्पितत्वात् ॥ नचैवंगुरुशापोविफलः ॥ज्ञानादिह्रासहेतुत्वात्॥उक्तंच॥ज्ञानिनोगुरुशापेपिनामुक्तिःसंसृतेर्भ
वेत् ॥आनंदह्रासदोषेणसैवमुक्तिर्विदुष्यतीति॥ तथा येज्ञानिविषयाःशापामुक्तिगाश्चाधिकारिणाम्॥का
दाचित्कास्तेभवंतिनैवतेसार्वकालिकाः ॥ तेषांज्ञानस्यमुक्तेश्चतारतम्यस्यचैवहि॥भगवन्नियतत्वात्तुशापा
दिर्नात्रकारणमिति ॥ अतोगुरुप्रदानस्यावश्यकत्वादुक्तंयुक्तमितिसिद्धम् ॥ ४४ ॥ अ० २६ ॥ अत्रभगव
द्दर्शनसाधनोपासनेतिकर्तव्यतारूपगुरुप्रसादस्यबलीयस्त्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाक्वचि
गुरुप्रसादःस्वप्रयत्नोवाबलवानितिनिगद्यते ॥ ऋषभादिभ्योविद्यांज्ञात्वापिसत्यकामेनभगवांस्त्वे

॥ ॐलिंगभूयस्त्वात्तद्धिबलीयस्तदपिॐ ॥ ४५ ॥

वमेकोमेब्रूयाच्छ्रुतंह्येवमेभगवद्दृशेभ्यआचार्याद्धैवविद्याविदितासाधिष्ठंप्रापयतीतिवचनात् ॥
दनपेक्षितत्वप्रसंगेनोक्तायुक्तेस्तत्समर्थनीयम् ॥ प्रकृतंगुरुप्रसादपूर्वकंश्रवणादिविषयः ॥ संशयप्रकारंदर्श
यति ॥ गुर्विति ॥ किंतन्मध्येगुरुप्रसादोबलवानुतश्रवणादिरूपःशिष्यप्रयत्नोवा ॥ अथद्वयंसमंवा ॥ सा
धनेपुत्रैविध्यदर्शनंसंदेहबीजमितिभावः ॥ शिष्यप्रयत्नएवबलवानितिपूर्वःपक्षः ॥ गुरुप्रसादस्येतिकर्तव्य
तामात्रत्वात् ॥ नहिसाधनादपीतिकर्तव्यतायाःप्राबल्यंदृष्टम् ॥ मास्तुवाधिक्यंशिष्यप्रयत्नस्यतथापिसा
म्यंस्यात्ननुप्रयत्नस्यदौर्बल्यम् ॥ गुरुशिष्ययोःपुरुषत्वसाम्यात् ॥ अतोगुरुप्रसादस्याप्रबलत्वान्नावश्य
कत्वमिति ॥ सिद्धांयत्सूत्रमवतार्यव्याचष्टे ॥ निगद्यतइति॥गुरुप्रसादपूर्वकप्रदानमेवज्ञानसाधनेबलवत् ॥

नन्वधर्मेनापिसमम् ॥ तस्यप्राबल्येलिंगबाहुल्यदर्शनात् ॥ तथाहि ॥ ऋषभादिभ्योब्रह्मविद्यांश्रुतवता पिसत्यकामेनभगवानितिगुरुःप्रार्थ्यते ॥ यदिश्रवणाद्येवबलवत्तर्हितेनगुरुप्रसादपूर्वकप्रदानप्रार्थनंनक्रियेत ॥ तथागुरुणागौतमेनात्रेत्यनुज्ञाक्रियते ॥ स्वप्रदानस्याप्राबल्येऽनुज्ञावैयर्थ्यात् ॥ तथोपकोसलेनाग्निभ्यःश्रुतविद्येनापिगुरुःप्रार्थ्यते ॥ गुरुणाचसत्यकामेनतंप्रतिविद्योच्यते ॥ श्रवणादेरेवप्राबल्येनतेनगुरुःप्रार्थ्येतगुरुणापिनोच्येत॥ एवंलिंगभूयस्त्वाद्गुरुप्रसादपूर्वकप्रदानमेवबलवदितिज्ञायतइतिभावः ॥सत्यका

अत्रहनकिंचनवीयायेत्यनुज्ञानात् ॥ उपकोसलवचनाच्चलिंगभूयस्त्वाद्गुरुप्रदानमेबलवत् ॥तर्हि तावतालमितिनमंतव्यम॥श्रोतव्योमंतव्यइत्यादेस्तदपिकर्तव्यम ॥ वाराहेच ॥ गुरुप्रसादोबलवान्नतस्माद्बलवत्तरम् ॥ तथापिश्रवणादिश्चकर्तव्योमोक्षसिद्धयइति ॥ ४५ ॥ अ० २७ ॥

मेनवचनादितितेनोक्तत्वादित्यर्थः ॥यद्यपिदेवेभ्यःश्रुतंतथापिभगवानेवमेशुभार्थंब्रवीतु॥कुतः॥आचार्यादेवविदिताविद्यासाधुत्वंप्राप्नोतीतिभगवद्दृशेभ्यःश्रुतत्वात्तेषांचाचार्यतयामयाऽस्वीकृतत्वादित्यर्थः॥अत्रदेवेभ्यःश्रवणेनकिंचनापगतम्॥नकाचिद्धानिरभूदित्यर्थः॥नचेतिकर्तव्यत्वेनदौर्बल्यम्॥यागीयहिंसायामितिकर्तव्यतायाएवप्राबल्यदर्शनात्॥नचगुरुशिष्ययोःपुरुषत्वसाम्यात्तत्क्रिययोःसाम्यंगुरुशिष्यत्ववदेवोपपत्तेः॥नन्वेवंगुरुप्रसादस्यप्राबल्येतावतालम् ॥नश्रवणादिनाकृत्यमित्याशंकांपरिहरति॥तर्हीति॥अत्रस्मृतिचाह॥वाराहेचेति॥अतोगुरुप्रसादपूर्वकप्रदानस्यप्राबल्यात्तदवश्यापेक्षितमितिसिद्धम्॥४५॥अ० २ ७॥

अत्रब्रह्मज्ञानसाधनोपासनेतिकर्तव्यतायत्प्रसादस्तद्विचारादस्तिशास्त्रादिसंगतिः ॥उत्तमगुरोरस्वीकारेसार्व
ज्ञ्याभावेनभाविफलानुसारेणोपासनानुपपत्तिप्रसंगाद्विचारणीयमेवतत् ॥ प्रकृतोगुरुरेवविषयः॥ किंपूर्व
प्राप्तएवेतिनियमउतपूर्वतनंत्यक्त्वाअन्योपिग्राह्यइतिसंदेहः ॥ उभयथादर्शनंसंदेहबीजम् ॥ प्रथमप्राप्तए
वेतिपूर्वःपक्षः ॥ प्रथमप्राप्तत्यागेकारणाभावात् ॥ गुरुपरिग्रहमात्रेणशुभलाभोपपत्तेः ॥ विनैवकारणं
प्रथमप्राप्तसंत्यागेदोषप्राप्तेश्च ॥ गुरुमंत्रपरित्यागीरौरवंनरकंव्रजेदित्यादिवचनात् ॥अतःपूर्वप्राप्तएवगुरुरि

नचपूर्वप्राप्तएवगुरुरितिनियमः॥समग्रानुग्रहंचेत्पश्चात्तनःकरोतिस्वयमेव॥ तदाविकल्पःस्यात् ॥

## ॥ ॐपूर्वविकल्पःप्रकरणात्स्यात्क्रियामानसवत्ॐ ॥ ४६ ॥

तिनियमात्कश्चित्सर्वज्ञगुरोःप्रथमप्राप्तत्वाभावेप्रागुक्तंनयुज्यतइति॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ पूर्वे
ति॥नपूर्वप्राप्तएवगुरुरितिनियमः॥पश्चात्तनोपिस्वीकार्योभवति ॥ नचवैयर्थ्यम् ॥ गुरुपरिग्रहस्यचसमग्रा
नुग्रहार्थत्वात् ॥ सचपूर्वतनेनसमोऽधिकोवासमग्रानुग्रहंकरोतिचेत्स्वीकार्योनाधमः ॥ समग्रानुग्रहस्याक
र्तोत्तमोपिनस्वीकार्यः ॥ समस्यचसमग्रानुग्रहकर्तुःस्वीकारेविकल्पःस्यात्॥ पूर्वानुज्ञयास्वीकार्योनवा ॥
नतुस्वीकार्यएवेतिविधिः ॥ विकल्पश्चयदृच्छयाप्राप्तौनतुतदर्थंप्रयतितव्यम् ॥ समग्रानुग्रहकर्तोत्तमश्चे

त्तदानविकल्पःस्यात् ॥ पूर्वानुज्ञांविनैवासंशयंस्वीकार्यःस्यादितिभावः ॥ साम्येविकल्पइत्यत्रोक्तंदृष्टांतं व्याचष्टे ॥ मानसेति ॥ तदेवव्यनक्ति ॥ यथेति ॥ विकल्पःस्यादितिसंबंधः ॥ अत्रस्मृतिंचाह ॥ पूर्वस्मादिति ॥ यदिपूर्वस्मादुत्तमोऽविचारेणस्वीकार्यस्तर्हिकथमृषभादयःसत्यकामेननगृहीताः ॥ पूर्वतनएवप्राप्तोऽतोनैतद्युक्तमित्यतआह ॥ समग्रेति ॥ नास्माभिरुत्तममात्रपरिग्रहउच्यते किंतुसमग्रानुग्रहक

मानसक्रियावत् ॥ यथोभयोर्ध्यानयोःसमयोः ॥ पूर्वस्मादुत्तमोलब्धःस्वयमेवगुरुर्यदि॥

गृह्णीयादविचारेणविकल्पःसमयोर्भवेत् ॥ समग्रानुग्रहाभावात्सत्यकामःस्वकंगुरुम् ॥

ऋषभाद्यनुज्ञयाचैवप्रापतस्माद्धियुज्यतइतिबृहत्तंत्रे ॥ समग्रानुग्रहंकश्चित्स्वयमेवत्रसमो

यदि ॥ कुर्यात्पुनश्चगृह्णीयादविरोधेनकामतः ॥ ध्यानयोःसमयोर्यद्वद्विकल्पःकामतोभ

वेत् ॥ एवंगुरोर्द्वितीयस्यविकल्पोग्रहणेपिचेतिमहासंहितायाम् ॥ ४६ ॥

र्तुरुत्तमस्य ॥ सत्यकामस्समग्रानुग्रहाभावान्नोत्तमानृजग्राहेत्यतःपूर्वपरित्यागेनोत्तमःसमोवास्वीकार्य इतियुज्यतइतिभावः ॥ साम्येपूर्वानुज्ञापेक्षितेतिभावेनतत्रस्मृतिंचाह ॥ समग्रेति ॥ अविरोधेनपूर्वानुज्ञया ॥ अनेनदोषवचनस्यविषयोदर्शितोभवति ॥अधमस्वीकारविषयंवाव्यर्थस्वीकारविषयंवाऽनुज्ञाभावविषयंवेति ॥ ४६ ॥

अत्रब्रह्मज्ञानसाधनोपासनेतिकर्तव्यतायत्प्रसादस्तद्विचारादस्तिशास्त्रादिसंगतिः ॥उत्तमगुरोरस्वीकारेसार्व
ज्ञ्याभावेनभाविफलानुसारेणोपासनानुपपत्तिप्रसंगाद्विचारणीयमेवतत् ॥ प्रकृतोगुरुरेवविषयः ॥ किंपूर्व
प्राप्तएवेतिनियमउतपूर्वतनंत्यक्त्वाअन्योपिग्राह्यइतिसंदेहः ॥ उभयथादर्शनंसंदेहबीजम् ॥ प्रथमप्राप्तए
वेतिपूर्वःपक्षः ॥ प्रथमप्राप्तत्यागेकारणाभावात् ॥ गुरुपरिग्रहमात्रेणशुभलाभोपपत्तेः ॥ विनैवकारणं
प्रथमप्राप्तसंत्यागेदोषप्राप्तेश्च ॥ गुरुमंत्रपरित्यागीरौरवंनरकंव्रजेदित्यादिवचनात् ॥अतःपूर्वप्राप्तएवगुरुरि

नचपूर्वप्राप्तएवगुरुरितिनियमः॥समग्रानुग्रहंचेत्पश्चात्तनःकरोतिस्वयमेव॥ तदाविकल्पःस्यात् ॥

## ॥ ॐपूर्वविकल्पःप्रकरणात्स्यात्क्रियामानसवत्ॐ ॥ ४६ ॥

तिनियमात्कचित्सर्वज्ञगुरोःप्रथमप्राप्तत्वाभावेप्रागुक्तंनयुज्यतइति॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ पूर्वे
ति॥नपूर्वप्राप्तएवगुरुरितिनियमः॥पश्चात्तनोपिस्वीकार्योभवति ॥ नचवैयर्थ्यम् ॥ गुरुपरिग्रहस्यचसमग्रा
नुग्रहार्थत्वात् ॥ सचपूर्वतनेनसमोऽधिकोवासमग्रानुग्रहंकरोतिचेत्स्वीकार्योनाधमः ॥ समग्रानुग्रहस्याक
र्तोत्तमोपिनस्वीकार्यः ॥ समस्यचसमग्रानुग्रहकर्तुःस्वीकारेविकल्पःस्यात्॥ पूर्वानुज्ञयास्वीकार्योनवा ॥
नतुस्वीकार्यएवेतिविधिः ॥ विकल्पश्चयदृच्छयाप्राप्तौनतुतदर्थंप्रयतितव्यम् ॥ समग्रानुग्रहकर्तोत्तमश्चे

त्तदानविकल्पःस्यात् ॥ पूर्वानुज्ञांविनैवासंशयंस्वीकार्यःस्यादितिभावः ॥ साम्येविकल्पइत्यत्रोक्तंदृष्टांतं व्याचष्टे ॥ मानसेति ॥ तदेवव्यनक्ति ॥ यथेति ॥ विकल्पःस्यादितिसंबंधः ॥ अत्रस्मृतिंचाह ॥ पूर्व स्मादिति ॥ यदिपूर्वस्मादुत्तमोऽविचारेणस्वीकार्यस्तर्हिकथमृषभादयःसत्यकामेननगृहीताः ॥ पूर्वतनए वप्रामोऽतोनैतद्युक्तमित्यतआह ॥ समयेति ॥ नास्माभिरुत्तममात्रपरिग्रहउच्यते किंतुसमग्रानुग्रहक

मानसक्रियावत् ॥ यथोभयोर्ध्यानयोःसमयोः ॥ पूर्वस्मादुत्तमोलब्धःस्वयमेवगुरुर्यदि॥
गृह्णीयादविचारेणविकल्पःसमयोर्भवेत् ॥ समग्रानुग्रहाभावात्सत्यकामःस्वकंगुरुम् ॥
ऋषभाद्यनुज्ञयाचैवप्रापतस्माद्धियुज्यतइतिबृहत्तंत्रे ॥ समग्रानुग्रहंकश्चित्स्वयमेवसमो
यदि ॥ कुर्यात्पुनश्चगृह्णीयादविरोधेनकामतः ॥ ध्यानयोःसमयोर्यद्वद्विकल्पःकामतोभ
वेत् ॥ एवंगुरोर्द्वितीयस्यविकल्पोग्रहणेपिचेतिमहासंहितायाम् ॥ ४६ ॥

र्तुरुत्तमस्य ॥ सत्यकामस्समग्रानुग्रहाभावान्नोत्तमानूजग्राहेत्यतःपूर्वपरित्यागेनोत्तमःसमोवास्वीकार्य इतियुज्यतइतिभावः ॥ साम्येपूर्वानुज्ञापेक्षितेतिभावेनतत्रस्मृतिंचाह ॥ समयेति ॥ अविरोधेनपूर्वानुज्ञ या ॥ अनेनदोषवचनस्यविषयोदर्शितोभवति ॥अधमस्वीकारविषयंवाव्यर्थस्वीकारविषयंवाऽनुज्ञाभाव विषयंवेति ॥ ४६ ॥

हेत्वंतरेणसमोत्तमगुरुस्वीकारंसमर्थयत्सूत्रंपठित्वाव्याचष्टे ॥ अतिदेशाच्चेति ॥ पूर्वंगुरुणैवसमोत्तमगुरुस्वीकारायातिदिश्यमानत्वाद्युक्तमेतदितिभावः ॥ श्रेयसःश्रेयांसः ॥ अतःसर्वज्ञगुरुस्वीकारस्योपपन्नत्वात्तदुक्तप्रकारेणोपासनंकर्तव्यमितिसिद्धम् ॥ ४७ ॥ अ० २८ ॥ अत्रेश्वरदर्शनसाधनोपासनस्यकर्तव्यतासमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथोक्तंव्यर्थंस्यादितिसमर्थनीयमेतत् ॥ प्रकृतंभगवदुपासनंविषयः ॥

ब्रह्मोपास्यब्रह्मोपचरस्यतच्छृणुहितत्त्वामवतुयथाब्रह्मोपचरेर्यथामामुपचरेर्यैचान्येऽस्म द्विधाःश्रेय

## ॥ ॐअतिदेशाच्च ॐ ॥ ४७॥

सश्वतानुपास्यतानुपचरस्यतेभ्यःशृणुहितेत्वामवंत्वितिपौष्यायणश्रुतावतिदेशाच्च॥४७॥अ०२८॥

नचकर्मणैवहिसंसिद्धिमास्थिताजनकादयइत्यादिनाऽन्यन्मोक्षसाधनम् ॥

कर्तव्यंननेतिसंदेहः॥ द्विविधक्रियादर्शनंसंदेहबीजम् ॥ नभगवदुपासनंकर्तव्यमितिपूर्वःपक्षः॥व्यर्थत्वात् ॥ नचज्ञानार्थमुपासनंतस्यापिवैयर्थ्यात् ॥ नचमोक्षार्थं तदनिश्चयात् ॥ यथाखलुतरतिशोकमात्मविदितिज्ञानस्यमोक्षसाधनत्वंप्रतीयतेतथाकर्मणैवहीत्यादिनाकर्मापिमोक्षसाधनंप्रतीयते ॥ नचभाक्तंवानात्मवित्त्वादित्युक्तमितिवाच्यम् ॥ तृतीयायाःसाक्षात्करणार्थत्वात् ॥ संसिद्धिपदेनचसाक्षान्मोक्षाभिधानाच्च ॥ अतोज्ञानस्यमोक्षसाधनत्वानिश्चयान्नतदर्थोपासनाकर्तव्येत्युक्तंव्यर्थमिति ॥ पूर्वपक्षंप्रतिषेधति॥ नचेति

तदुपपादनायसूत्रमुपन्यस्यव्याचष्टे ॥ विद्येति ॥ कर्मणैवेत्यादिनान्यन्मोक्षसाधनंप्रतीयतइतिमोक्षसाधनानिर्णयादनुपासनमितिनवाच्यम् ॥नान्यःपंथाइतिसावधारणविद्यावचनस्यकर्मवचनादपिप्राबल्येनतद्बलाद्विद्यैवमोक्षसाधनमितिनिर्णयोपपत्तेरितिभावः ॥ ४८ ॥ नन्वेवंविद्याचेन्मोक्षसाधनंतथापिनध्यानोपासनंकार्यम् ॥ विद्यायाःश्रवणादेवसंभवादित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ दर्शनाच्चेति ॥

तमेवंविदित्वाऽतिमृत्युमेतिनान्यःपंथाविद्यतेअयनायेतिनिर्धारणाद्विद्ययैवमोक्षः ॥ ४८॥

## ॥ ॐविद्यैवतुनिर्धारणात् ॐ ॥ ४८ ॥ ॐदर्शनाच्च ॐ ॥ ४९ ॥

नकेवलंविद्ययाऽ‍पित्वपरोक्षज्ञानेनच ॥ सर्वान्परोमाययायंसिनोतिदृष्ट्वैवतंमुच्यतेनापरेणेतिकौशिकश्रुतेः ॥ ४९ ॥ अ० २१ ॥

नास्माभिरत्रकेवलविद्ययामोक्षउच्यतेयेनध्यानाभावआपद्येतकिंतुभगवत्साक्षात्कारादपि ॥ अतस्तदर्थंध्यानंकार्यमेवेतिभावः ॥ नन्वेवंविद्वानितिपरोक्षविद्ययामोक्षश्रवणात्कथमुच्यतेदर्शनान्मोक्षइतितत्राह ॥ सर्वानिति ॥ विशेषश्रुतिबलात्सापिश्रुतिस्तदर्थेतिभावः॥ अनेनदर्शनादित्येतद्भगवत्साक्षात्काराच्छ्रुतेरितिद्विधाव्याख्यातंज्ञातव्यम् ॥ माययाप्रकृत्या ॥ अतोज्ञानस्यमुक्तिसाधनत्वनिश्चयात्तदर्थोपासनस्यकर्तव्यत्वादुक्तंसार्थकमितिसिद्धम् ॥ ४९ ॥ अ० २१ ॥

अन्वयत्साधनंभगवदुपास्तिस्तस्यज्ञानस्यमोक्षसाधनत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथोपासनवैयर्थ्यापातादेतःसमर्थनीयम् ॥ प्रकृतोमोक्षएवविषयः॥ किंज्ञानेनसाध्यउतकर्मसाध्यइतिसंदेहः ।।विप्रतिपत्तिःसंदेहबीजम् ॥ कर्मसाध्यएवमोक्षइतिपूर्वःपक्षः ॥ कर्मणैवेतिवचनात् ॥ नचवाच्यंविद्यावचनस्यसावधारणत्वेनप्राबल्यात्तद्विरोधःस्मृतेरिति ॥ स्मृतेरपिसावधारणत्वात् ॥ नचैतावतासाम्यम् ॥ भगवद्वाक्यसावधारणाबलवतीश्रुतिः ॥ इंद्रोश्वमेधांच्छतमिष्ट्वापिराजाब्रह्माणमीड्यंसमुवाचोपसन्नः ॥ न

## ॥ ॐ श्रुत्यादिबलीयस्त्वाच्चनबाधः ॐ ॥ ५० ॥

कर्मभिर्नधनैर्नैवचान्यैःपश्येसुखंतेनतत्त्वंब्रवीहीतिबलवल्लिंगम् ॥ नास्त्यकृतःकृतेनेत्युपपत्तिश्च॥ त्वेनप्राबल्यात् ॥ एतेनश्रुतिस्मृत्योःश्रुतिर्बलवतीतितदपेक्षत्वात्स्मृतेरितिचापहृतंभवति ॥ अतोज्ञानस्यमोक्षसाधनत्वाभावान्नतदर्थोपासनाकर्तव्येति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ श्रुतीति ॥ मोक्षोज्ञानसाध्यएव ॥ नचैवंप्रमाणांतरबाधः ॥ ज्ञानस्यमोक्षसाधनत्वोपपादकबलवच्छ्रुत्यादिसद्भावात् ॥ तथाहि ॥ मोक्षस्यज्ञानसाध्यत्वेतमेवमित्यादिश्रुतिःस्मृतेर्बलवती ॥ निरवकाशावधारणयुक्तत्वात् ॥ तथाबहुकर्मकृतोपींद्रस्यदुःखासंभिन्नसुखरूपमोक्षार्थंतत्त्वज्ञानप्रार्थनलिंगंचबलवत्॥निरवकाशत्वात् ॥ उत्पत्तिनाशवत्फलत्वेनावधृतकर्मणानित्यपुरुषार्थोनभवतीत्युपपत्तिश्चबलवती ॥ दूषणशून्यत्वात्श्रौतत्वाच्च ॥

तथाकर्मणाबध्यतेजंतुरितिवचनंचबलवत् ॥ भगवद्वाक्यत्वेनसाम्याद्युक्तिमत्वेनाधिक्यात् ॥ यतएवंमोक्षस्यज्ञानसाधनत्वेप्रत्येकंबलवच्छ्रुत्यादिभावोऽतोविद्यैवमोक्षसाधनमित्यस्यनस्मृतिबाधइतिभावः ॥नन्वेवंचेत्सास्मृतिरप्रमाणमेवेतिप्राप्तमित्यतश्चशब्दसूचितार्थमाह॥ कर्मणेति॥क्रियतइतिशेषः॥ कर्मयोगश्चमोक्षातिशयार्थइतिज्ञातव्यम् ॥ अतोज्ञानस्यैवमोक्षसाधनत्वात्कर्तव्योपासनेतिसिद्धम् ॥ ५० अ० ३०॥

अत्रब्रह्मज्ञानसाधनोपासनस्यभक्तिपूर्वकत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथोक्तवैयर्थ्यप्रसंगा

कर्मणाबध्यतेजंतुर्विद्ययाचविमुच्यते ॥ तस्मात्कर्मनकुर्वंतियतयःपारदर्शिनइतियुक्तिम

द्भगवद्वचनम् ॥ अतोनप्रमाणांतरबाधः ॥ कर्मणैवेत्ययोगव्यवच्छेदः ॥ ५०॥अ०३०॥

नकेवलंश्रवणादिभिर्गुरुप्रसादेनचब्रह्मदर्शनं किंतुभक्त्यादिभिश्च ॥

त्समर्थनीयम् ॥ प्रकृतंज्ञानमेवविषयः ॥ किंभगवद्भक्त्यादिसापेक्षंनवेतिसंदेहः ॥ज्ञानसाधनेष्वनुक्तिरुभयथासंभवतीतिदर्शनंसंदेहबीजम् ॥ नभक्त्यादिकंज्ञानार्थमपेक्षितमितिपूर्वःपक्षः ॥ गुरुप्रसादासाध्यस्यैवाभावात् ॥ सम्यग्लक्षणसंपन्नोयद्वद्यात्सुप्रसन्नधीः ॥ शिष्यायसत्यंभवतितत्सर्वंनात्रसंशयइतिवचनात् ॥ नचैवमुपासनाभावः ॥ ज्ञानस्यतदन्वयव्यतिरेकदर्शनात् ॥ नचोपासनंभक्तिमंतरेणनभवतीतिवाच्यम् ॥ द्वेषेणापिध्यानसंभवात् ॥ स्मर्यतेखलुद्वेषेणध्यायतामपिमुक्तिर्द्वैषाच्चैद्यादयोनृपाइत्यादि ॥ मुक्तिश्च

नज्ञानंविनेत्युक्तम् ॥ अतोगुरुप्रसादसहितोपासनेनयथाकथंचिज्ज्ञानोपपत्तेर्व्यर्थंभक्त्यादीत्यतीतपादानुप
पत्तिरिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ अनुबंधेति ॥ नकेवलंश्रवणादिनाप्रबलेनापिगुरुप्रसादेन
भगवद्दर्शनंकिंनुहरिगुरुभक्तिशमदमादिभिश्च ॥ प्राबल्येपिगुरुप्रसादस्यभक्त्यादिकंविनाऽसिद्धेः ॥ तद्वि
नाध्यानासिद्धेश्च ॥ द्वेषयुतध्यानस्यानर्थहेतुत्वेनश्रुतिस्मृत्यादिसिद्धत्वात् ॥ वचनांतराणांस्वभावभक्त

सर्वलक्षणसंपन्नःसर्वज्ञोविष्णुतत्परः ॥ यद्गुरुःसुप्रसन्नःसन्दद्यात्तन्नान्यथाभवेत् ॥
तथाप्यनादिसंसिद्धभक्त्यादिगुणपूगतः ॥ लभेद्गुरुप्रसादंचतस्मादेवचतद्भवेदिति ॥

## ॥ ॐ अनुबंधादिभ्यः ॐ ॥ ५१ ॥

भक्तिर्विष्णौगुरौचैवगुरोर्नित्यप्रसन्नताम् ॥ दद्याच्छमदमादींश्चतेनचैतेगुणाःपुनः ॥
तैःसर्वैर्दर्शनंविष्णोःश्रवणादिकृतंभवेदितिनारायणतंत्रे ॥ ५१ ॥ अ० ३१ ॥

विषयत्वादितिभावः ॥ अनुबंधस्तुभक्तिःस्याद्बंधःस्नेहउदाहृतइत्यभिधानम् ॥ अत्रार्थेनियामिकांस्मृति
माह॥सर्वैरिति ॥ तथापिभक्त्याद्यपेक्षितमितिशेषः॥ तर्हिभक्त्यादिकंनज्ञानार्थमित्यतआह ॥ तस्मादिति॥य
दनादिसिद्धमव्यक्तंभक्त्यादितेनगुरुप्रसादस्तेनभक्त्याद्यभिव्यक्तिरभिव्यक्तभक्त्यादिनाचज्ञानमित्यर्थः ॥
एतदेवस्पष्टयति ॥ भक्तिरिति ॥ अतोभक्त्यादेर्ज्ञानार्थमपेक्षितत्वादुक्तंयुक्तमितिसिद्धम् ॥५१॥अ०३१॥

अन्वयत्साधनंभगवदुपासनमुक्तंतस्मिन्ज्ञानेविशेषसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अविशेषेमोक्षविशेषा
संभवप्रसंगात्समर्थनीयमेतत् ॥ प्रकृतंभगवद्दर्शनमेवविषयः ॥ किंसर्वेषामेकप्रकारमुतानेकप्रकारमितिसं
देहः ॥ धर्मद्वैविध्यदर्शनंसंदेहबीजम् ॥ एकप्रकारमेवेतिपूर्वःपक्षः ॥ दृष्ट्वैवतंमुच्यतेनापरेणेतिसर्वेषामवि
शेषितज्ञानेनमोक्षश्रवणात् ॥ तथाभक्त्यामामभिजानातियावान्यश्चास्मितत्त्वतः ॥ इतिमांतत्त्वतोज्ञा
त्वाविशतेतदनंतरमिति सर्वेषांभक्त्यादिनापूर्णज्ञानोत्पत्तेःसंपूर्णज्ञानेनैवमोक्षस्मरणात् ॥ सामान्यवच्च

उपासनाभेदवद्दर्शनभेदः ॥ तच्चोक्तंकमठश्रुतौ ॥ अंतर्दृष्टयोबहिर्दृष्टयोऽवतारदृष्टयःसर्वदृष्टयइ

॥ ॐ प्रज्ञांतरपृथक्त्ववद्दृष्टिश्चतदुक्तम् ॥ ॐ ॥५२॥

तिदेवावावसर्वदृष्टयस्तेषुचोत्तरोत्तरमाब्रह्मणोऽन्येषुयथायोगंयथाह्याचार्याआचक्षतइति ॥

नत्वादेवसर्वविषयत्वंज्ञायते ॥ अतस्सर्वेषांदर्शनसाम्यादुक्तंमुक्ततारतम्यमयुक्तमिति ॥ सिद्धांतयत्सूत्रमु
पन्यस्यव्याचष्टे ॥ प्रज्ञेति ॥ अनेकप्रकारमेवाधिकारिणांभगवद्दर्शनम् ॥ तत्साधनोपासनस्यानेकप्रकार
त्वात्फलस्यचसाधनानुसारित्वादितिभावः ॥ प्रज्ञांतरंप्रज्ञाविशेषः ॥ अविच्छिन्नपरोक्षसंततिर्हिध्यानम्॥
नन्वनेकविधसाधनवतामपिकदाचित्कर्षकाणामिवसाध्यसाम्यंकिंनस्यादित्यतआह ॥ तच्चेति ॥ सर्वदृष्ट
योव्याप्तिदर्शिनः ॥ अन्येष्ववतारादिदर्शिषु ॥ योग्यतैवकथंज्ञायते ॥ यथाह्याचार्याआचक्षते ॥

यद्यस्तिदर्शनभेदस्तर्हिनसर्वेषांमोक्षःस्यात्संपूर्णज्ञानेनैवमोक्षस्यश्रुत्यादिसिद्धत्वादित्यतआह ॥ अध्यात्मेचेति ॥ एवंविशेषबलाच्छ्रुतिर्यथायोग्यंद्रष्टेत्युपपन्ना ॥ यावान्यश्चास्मीतिहिरण्यगर्भविषयतयोपपन्नम् ॥ सामान्यतःसर्वज्ञानमितिसर्वविषयंवा ॥ अतोज्ञानेविशेषसद्भावाद्युक्तंमोक्षतारतम्यमितिसिद्धम् ॥ ५२ ॥ अ० ३२ ॥ अत्रयत्साधनमुपासनंतज्ज्ञानस्यांबिंबविषयस्यमोक्षसाधनत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथानबिंबोपासनमावश्यकमितिसिध्यतीत्येतत्समर्थनीयम ॥ भगवद्दर्शनमेवविषयः॥

अध्यात्मेच॥दृष्ट्वैवस्ववताराणांमुच्यंतेकेचिदंजसा ॥दर्शनेनांतरेणान्येदेवाःसर्वत्रदर्शनात्॥तेषांविशेषमाचार्योवेतिसर्वज्ञतांगतइति॥५२॥अ०३२॥ नसामान्यदर्शनमात्रेणमुक्तिर्यथामृत्युमात्रात् ॥

## ॥ ॐनसामान्यादप्युपलब्धेर्मृत्युवन्नहिलोकापत्तिः ॐ ॥ ५३ ॥

किंबिंबरूपविषयंमुक्तिसाधनमुतयत्किंचिद्रूपविषयमितिसंदेहः ॥ ब्रह्मविदाप्नोतिपरमित्याद्युक्तेस्साधारण्यंसंदेहबीजम् ॥ यत्किंचिद्रूपविषयंमोक्षसाधनमितिपूर्वःपक्षः ॥ भगवतःसर्वपुरुषेष्वपिसाम्यात् ॥ नहिकस्यचिद्रूपस्यमोक्षदातृत्वशक्तिःकस्यचिन्नेतिविशेषोस्ति ॥ तथात्वेचोक्तविरोधःस्यात् ॥ अतोयत्किंचिद्रूपविषयज्ञानस्यमोक्षसाधनत्वान्नबिंबोपासनानियतिरपेक्षितेतिसिध्यतीति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ नेति ॥ नभगवद्रूपाणांसाम्येनसामान्यतोदर्शनेनसर्वेषांमुक्तिःकिंनामस्वस्वबिंबदर्शना

देव ॥ यथाखलुमृत्युत्वसाम्येपिनमृत्युमात्रानंतरंमुक्तिः किंतुमृत्युविशेषादनंतरमेवंभगवद्रूपाणांसाम्येपि रूपविशेषज्ञानमेवमोक्षसाधनंनसामान्यदर्शनमितिभावः ॥ तथाचश्रुतिः ॥ समोपिभगवान्स्वांबिंबदर्शन एवैनंमोचयतीति ॥ यदिनसामान्यदर्शनेनमुक्तिस्तर्हितस्यवैयर्थ्यंस्यात् ॥ नचतद्युक्तम् ॥ अतोयत्फलं समोक्षइतिमुक्तयेसामान्यदर्शनंभवतीत्यतआह ॥ नहीति ॥ नभगवद्दर्शनस्यैवंसतिवैफल्यम् ॥ नापिते

नहिलोकाप्तिमात्रंमुक्तिः ॥ सामान्यदर्शनाल्लोकामुक्तिर्योग्यात्मदर्शना
दितिनारायणतंत्रे ॥ मुच्यतेनात्रसंदेहोदृष्ट्वातुस्वात्मयोग्ययेतिच ॥ दर्शने
नात्मयोग्येनमुक्तिर्नान्येनकेनचिदितिचाध्यात्मे ॥ ५३ ॥ अ० ३३ ॥

नमोक्षः ॥ तस्यमहरादिलोकप्राप्तिसाधनत्वात् ॥ नहिलोकप्राप्तिरेवमुक्तिरितिभावः ॥सामान्यदर्शनेनलोकप्राप्तिरेवनमुक्तिरितिकुतइत्यतआह ॥ सामान्येति ॥ दर्शनेपिविकल्पाद्बिंबदर्शनेपिसस्यादित्यतआह ॥ मुच्यतइति ॥ सामान्यदर्शनेनलोकाप्तिःक्वचिन्मुक्तिश्चकिंनस्यादित्यतआह ॥ दर्शनेनेति ॥ अतोबिंबदर्शनस्यैवमुक्तिहेतुत्वाद्बिंबमेवावश्यमुपास्यमितिसिद्धम् ॥ ५३ ॥ अ० ३३ ॥

अत्रभगवद्दर्शनसाधनोपासनसाहित्येनोक्तभक्तेःस्वातंत्र्यनिरासादस्तिशास्त्रादिसंगतिः ॥ अन्यथाऽव्यक्तत्वाभावप्रसंगात्तन्निरसनीयमेव॥ प्रकृतंज्ञानमेवविषयः ॥ किंभक्तिसामर्थ्येनोतपरमात्मनेतिसंदेहः॥कृष्यादौराजसेवादौचतथादर्शनंसंदेहबीजम् ॥ पूर्वपक्षयति ॥ भक्तिरिति ॥ भक्तिसामर्थ्येनैवापरोक्षज्ञानंनपरमात्मप्रसादेन ॥ भक्तिरेवैनंमितिश्रुतौभक्तेरेवस्वातंत्र्येणदर्शनादिसाधनत्वदर्शनात् ॥ एवंसाधनसामर्थ्या

भक्तिरेवैनंनयतिभक्तिरेवैनंदर्शयति भक्तिवशःपुरुषोभक्तिरेवभूयसीति

## ॥ ॐपरेणचशब्दस्यताद्विध्यंभूयस्त्वात्त्वनुबंधः ॐ ॥ ५४॥

माठरश्रुतेर्नपरमात्मनोदर्शनमितिचेन्न ॥ तस्यैषआत्माविशतेब्रह्म

धामेतिश्रुतेः ॥ कथंतर्ह्येषाश्रुतिः ॥ परमात्मैवभक्त्यादर्शनंप्राप्यमु

देवतद्दर्शनान्नतस्याव्यक्तत्वमितिभावः ॥ सिद्धांतयति ॥ नेति ॥ नभक्तेरेवस्वातंत्र्येणदर्शनादिसाधनत्वंवाच्यं किंतुतयाप्रसन्नस्यपरमात्मनएव ॥ एतैरुपायैर्यततेयस्तुविद्वांस्तस्यैषआत्माविशतेब्रह्मधामेतिश्रुतेरित्यर्थः ॥ एतैःप्रवचनाद्युपायैर्योदर्शनार्थंयततेतस्यार्थेतैःप्रसन्नःपरमात्माब्रह्मधामवायुंविशतितस्यतत्राऽऽविर्भवतीत्यर्थः ॥ परमात्मनैवचेद्दर्शनंकथंतर्हिभक्तेरेवतत्साधनत्वाभिधायकश्रुतिरुपपद्यतइतिशंकते ॥ कथमिति ॥ परिहारायसूत्रंपठित्वाव्याचष्टे ॥ परेणचेति ॥ परमात्मनैवदर्शनादिकंनतुभक्त्या ॥

तथापिभक्तिश्रुतिरुपपद्यते ॥ कथं॥दर्शनमोक्षयोःकर्तापरमात्माभक्त्यैवकरोतीत्यतोऽन्नभक्तेर्दर्शनादौकरण
त्वेनोच्यमानत्वात् ॥ नचवाच्यंसाधनांतराण्यनुक्त्वाकिंविशिष्याभिधीयतेभक्तिरिति॥तस्याःसाधनेषुप्रधा
नत्वात्॥कर्तृत्वांगीकारेतूक्तविशेषश्रुतिविरोधइतिभावः ॥ अत्रैवस्मृतिमाह॥मायेति ॥ सैवेत्यस्यापिपूर्वव

त्किंददातीतिप्रधानसाधनत्वात्भक्तिःकरणत्वेनोच्यते ॥ मायावैभवेच॥
भक्तिस्थःपरमोविष्णुस्तयैवैनंवशंनयेत् ॥ तयैवदर्शनंयातःप्रदद्यान्मु
क्तिमेतया ॥ स्नेहानुबंधोयस्तस्मिन्बहुमानपुरस्सरः॥ भक्तिरित्युच्यतेसै
वकरणंपरमीशितुरिति ॥ सर्वशब्दानांब्रह्मणिप्रवृत्तेश्च॥५४॥अ०३४॥

त्संगतिः ॥एवंहंतारामशरइतिकरणेकर्तृत्वव्यपदेशदर्शनात्करणार्थत्वेनश्रुतिमुपपाद्यप्रकारांतरेणाप्युपपाद
यति ॥ सर्वेति ॥ भक्त्यादिसर्वशब्दानांपरब्रह्मणिवृत्तेर्ब्रह्मैवैनंनयतीत्यर्थोपपत्तेश्चोपपन्नाश्रुतिरितिभावः ॥
अनेनपरेणैववाच्येननिमित्तेनशब्दस्यतद्व्यमुक्तमितिसूत्रांशस्यार्थांतरमुक्तंभवति॥ अतोदर्शनादेःपुरुष
शक्तिसाध्यत्वाभावाद्युक्तमव्यक्तत्वंब्रह्मणइतिसिद्धम् ॥ ५४ ॥ अ० ३४ ॥

अत्रभगवद्दर्शनसाधनोपासनस्ययोग्यतासापेक्षत्वसाधनादस्तिशास्त्रादिसंगतिः ॥ अन्यथोपास्यव्यवस्थाप्रसंगात्समर्थनीयम् ॥ प्रकृतोपासनादिविषयः ॥ योग्यतापेक्षंनवेतिसंदेहः ॥ योग्यायोग्यक्रियादर्शनंसंदेहबीजम् ॥ पूर्वपक्षयति ॥ जीवेति ॥ नोपासनाद्यर्थंयोग्यतापेक्षाऽस्ति ॥ योग्यताहिभवंतीअनादिर्भवेत् ॥ अन्यथातदुपासनादेरप्यागंतुकत्वसंभवात् ॥ नचानादित्वंयोग्यतायायुज्यते ॥ इंद्रादिजीवांशानामर्जुनादीनांयोग्यतायास्तदभावात् ॥ तेषामेवोत्पत्तिमत्त्वेनतद्धर्मस्यानादित्वायोगात् ॥ नचांशिनो

जीवांशानांपृथगुत्पत्तेर्नानादियोग्यतापेक्षेतिनमंतव्यम् ॥ कुतः ॥ अंशांशिनो

## ॥ ॐएकआत्मनःशरीरेभावात् ॐ ॥ ५५ ॥

रेकत्वमेव ॥ अंशिकर्मविनिर्मितेशरीरएवांशस्यभावात् ॥ ५५ ॥

नादित्वादंशस्योत्पत्त्यभावः ॥ अंशांशिनोःपृथक्त्वात् ॥ कुतः ॥ अंशिनिज्ञानिनिसुखिनिदुःखिनिचांशेज्ञानाद्यभावेनांशस्यांशिवर्त्मनागंतृत्वात् ॥ अन्यथाज्ञानादिभेदोनस्यात् ॥ अतोंऽशांशिनोःपृथक्त्वादंशस्योत्पत्तेरनादियोग्यताभावादुपासनादेर्योग्यतापेक्षानास्तीतितदव्यवस्थितमितिभावः ॥ पूर्वपक्षंप्रतिषेधति ॥ नेति ॥ कुतोनमंतव्यमित्याक्षिपति ॥ कुतइति ॥ तत्परिहारायसूत्रमुपन्यस्यव्याचष्टे ॥ एकइति॥ अस्त्येवसर्वेषामुपासनादौयोग्यतापेक्षा ॥ नचांशस्योत्पत्तिमत्त्वेनानादियोग्यताभावः ॥ अंशोंऽशीत्येक

एवेत्यंशस्योत्पत्त्यभावात् ॥ तदैक्यमेवकुतः॥आत्मनोऽशिनःकर्मनिमितशरीरेंऽशस्यवर्तमानत्वात् ॥ नचभेदेतद्युक्तम् ॥ अकृताभ्यागमकृतविप्रणाशप्रसंगात् ॥ नचांशस्यपृथक्कर्मास्ति ॥ नचाकर्मनिमित्तशरीरसंयोगोयुक्तः ॥ अपवर्गाभावप्रसंगादितिभावः ॥ ५५ ॥ ज्ञानादिभेदादंशांशिनोर्भेदएव ॥ अतोनांशस्योत्पत्तिमतोऽनादियोग्यतायुक्तेत्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ व्यतिरेकइति॥ यथोपलब्ध्यादौव्यति

ज्ञानादिभेदेविद्यमानेपिनांशांशिनोःपृथक्भावएव ॥तदुपासनादिभोगादंशस्य ॥

**॥ ॐव्यतिरेकस्तद्भावभावित्वान्नतूपलब्धिवत् ॐ ॥ ५६ ॥**

परमसंहितायांच ॥ अंशिनस्तुपृथक्जाताअंशास्तस्यैवकर्मणा ॥ पुनरैक्यं
प्रपद्यंतेनात्रकार्याविचारणेति ॥ ५६ ॥ अ० ३५ ॥

रेकस्तथांशांशिनोरपिभेदएवेतिनवाच्यम् ॥अल्पेज्ञानादावनुसंधानाभावेपिप्रधानसाधनोपासनादिफलानुसंधानात् ॥ अंशगतज्ञानादेरंशिनानुसंधीयमानत्वात् ॥ अंशिगतस्यचांशेनसर्वस्याननुसंधानमीश्वराचिंत्यशक्त्यायत्तमितिभावः ॥ अत्रस्मृतिंप्रमाणयति ॥ परमेति ॥ अतोऽस्त्येवसर्वेषामुपासनादावनादियोग्यतापेक्षेतियुक्तातद्व्यवस्थेतिसिद्धम् ॥ ५६ ॥ अ० ३५ ॥

अत्रब्रह्मज्ञानसाधनोपासनस्ययथायोग्यांगदेवतोपासनयुक्तत्वेनकर्तव्यताप्रतिपादनादस्तिशास्त्रादिसंग
तिः॥ अन्यथातत्प्रतिपादकवेदवैयर्थ्यस्योक्ततारतम्याभावस्यचप्रसंगात्प्रतिपादनीयमेतत् ॥ प्रकृतभगवदु
पासनमेवविषयः ॥ अन्यदेवतोपासनयुक्तंवाकर्तव्यंकेवलंवेतिसंदेहः ॥ ब्रह्मोपासनविधेःसाधारण्यंसंदेह
बीजम् ॥ अन्यदेवतोपासनेचतस्यगुणोपसंहारपूर्वकत्वात्किमेकस्यश्रुतिप्रतीतगुणाःसर्वेषूपसंहर्तव्यानवे
तिसंदेहः ॥ लौकिकपुरुषपूजादौद्वैविध्यदर्शनंसंदेहबीजम् ॥ केवलमेवब्रह्मोपासनंकर्तव्यमितिपूर्वःपक्षः॥

ब्रह्माद्यंगदेवतावबद्धोपासनादिप्रतिशाखंप्रतिवेदंचनोपसंक्रियते

## ॥ ॐ अंगावबद्धास्तुनशाखासुहिप्रतिवेदम् ॐ ॥ ५७॥

नमेवैकंजानथात्मानमन्यावाचोविमुंचथपूजयेन्नान्यदेवताइत्यादेरन्यदेवतोपासनेचैकस्यप्रतीतगुणाःस
र्वेषूपसंहर्तव्याः ॥ देवत्वादिगुणानांसर्वेषूपसंहारदर्शनात् ॥ अतोऽन्यदेवानामनुपास्यत्वात्तदभिधायकवे
दवैयर्थ्यम् ॥ उपास्यत्वेवासाम्येनोपास्यत्वान्नोक्ततारतम्योपपत्तिरिति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याच
ष्टे ॥ अंगेति ॥ ब्रह्मादिदेवतोपासनपरिचर्यादिकार्यमेव ॥ नचश्रुत्यादिविरोधः ॥ तत्रप्राधान्येनोपासन
स्यैवनिषिद्धत्वात् ॥ अंगत्वेनोपासनस्याभ्युपगतत्वात् ॥ उपसंहारेतुविशेषोस्ति ॥ सर्ववेदानांसर्वशाखासू
क्तंयद्ब्रह्माद्यंगदेवतासंबंधिगुणजातंतत्सर्वंरुद्रादिषुनोपसंहार्यंकिंतुयोग्यमेवोपास्यम् ॥ यथाखलुभगवद्वा

चकवाक्यानांनसर्वेषामन्यत्रान्वयोऽपितुयोग्यानामेवेतिभावः ॥ कुतएतदित्यतआह ॥ हिशब्दादि ति ॥ सूचितादितिशेषः ॥ अंगदेवताद्युपासनंकार्यम् ॥ यावद्ब्रह्मादीनांगुणजातंतत्सर्वंरुद्रादिषुनोपसंहा र्यम् ॥ कुतः ॥ भवेत्साम्येनोपासनंयुक्तंयदितेषांसाम्यमेवस्यात् ॥ नैतदस्तिकेषांचित्समत्वात्केषां चिदुत्तमत्वात् ॥ तत्कुतः ॥ वेदसिद्धांतिनानागुणत्वेनतेषांदृष्टेरितिभावः॥५७॥ एवमेकत्रप्रतीतानांसर्वगुणा

हिशब्दात् ॥ समत्वाद्वोत्तमत्वाद्वानांगदेवाद्युपासनम् ॥ उपसंहार्यमित्याहुर्वेदसिद्धांतवे

## ॥ ॐ मंत्रादिवद्वाविरोधः ॐ ॥ ५८ ॥

दिनइतिब्रह्मतर्कवचनात् ॥ ५७ ॥ सर्वदेवतामंत्रायथाधीयंतेएवमविरोधोवा ॥

नामन्यत्रोपसंहाराभावमुक्त्वोपसंहारमभ्युपगच्छत्सूत्रंपठित्वाव्याचष्टे ॥ मंत्रेति ॥ यथाग्न्याद्यधमदेवता विषयंमंत्रविद्यादिकंब्रह्माद्युत्तमदेवताविषयत्वेनाधीयतेऽध्येतृभिरुत्तमानांतत्प्रतिपाद्यत्वात् ॥ एवमधम गुणानामुत्तमेषूपसंहारेनकश्चिद्विरोधः ॥ तेषुतद्गुणित्वादितिभावः ॥ उक्तंचैतत् ॥ देवतासर्वविद्यानांस्वयं नारायणःप्रभुः ॥ ऋतेतत्रप्रसिद्धाश्चदेवताश्रीस्तथाऽत्रच ॥ ऋतेप्रसिद्धाब्रह्मैवततस्तेनक्रमेणच ॥ पूर्वप्र सिद्धवर्जंतुशक्रांतादेवतामताः ॥ इंद्रावराविशेषेणलिंगेनैवपृथक्पृथगिति ॥ यदुक्तंदेवतोपासनंकार्यं

यथायोग्यगुणोपसंहारश्चकर्तव्यइतितत्किंसर्वैःकार्यंनवेत्यपेक्षायामाह ॥ उपासनेति ॥ भवेत्सर्वैः कार्यैतिशेषः ॥ फलविशेषेऽतिशयितफलार्थंपुरुषविशेषउत्तमाधिकारित्वम् ॥ फलविशेषस्तेषामेव ॥ उपासकप्रतिपत्तौसाधनएवायंविकल्पः ॥ यथायोग्यमेवचसाभवति ॥ अतोयथायोग्यमंगदेवताना मुपास्यत्वात्सर्वंयुक्तमितिसिद्धम् ॥ ५८ ॥ अ० ३६ ॥ अत्रईश्वरदर्शनसाधनस्यभूमगुणोपासनस्य सर्वोपासकसाधारण्यसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथालौकिकतयोपासनप्रसंगात्समर्थनीयम् ॥

उपासनांगदेवानांपरमांगतयाभवेत् ॥ उपसंहृतिर्विशेषेतुफलाना
मन्यथानतु ॥ पुरुषाणांविशेषाद्वायथायोगंभविष्यतीतिबृहत्तंत्रे
॥ ५८ ॥ अ० ३६ ॥

प्रकृतभगवद्गुणांतर्गतोयोवैभूमेत्यादौश्रुतोभूमगुणएवविषयः ॥ सर्वोपास्योनवेतिसंदेहः ॥ गुणद्वैविध्य दर्शनंसंदेहबीजम् ॥ तत्रोपासकंप्रतिभूमगुणस्यसंभृत्यादिगुणेभ्योनविशेषः ॥ नसर्वोपास्योभवतीतिपूर्वः पक्षः ॥ वैयर्थ्यात् ॥ आनंदादिकंहिसर्वाधिकारिणामिष्टम् ॥ तच्चतद्गुणोपासनेनोपपद्यते ॥ नहि निरतिशयत्वापरपर्यायंभूमत्वंकस्यापीष्टंयेनतदुपासनंसार्थकंस्यात् ॥ नचभूमत्वस्यानंदादिविशेषणत्वा त्सर्वोपास्यत्वम् ॥ विशेषणत्वेपिप्रियशिरस्त्वादीनामिवफलानुपयोगित्वेनानुपास्यत्वात् ॥ अतोभूमत्वस्य

सर्वोपास्यत्वाभावान्नालौकिकतयोपासनमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ भूम्नइति ॥ सर्वै रुपास्योभूमगुणःसर्वगुणेषुतस्यज्यायस्त्वात् ॥ कस्मात् ॥ यथाखलुदीक्षाप्रायणीयोदनीयसवनत्रयाव भृथात्मकस्यक्रतोःसर्वयागेष्वनुवर्तनएवसाफल्यादन्यथावैफल्याज्ज्यायस्त्वंततश्चसर्वैःकर्तव्यत्वम् ॥ त

सर्वगुणेषुभूमगुणस्यज्यायस्त्वंक्रतुवत्सर्वत्रसहभावात् ॥ दीक्षाप्रायणी
योदयनीयसवनत्रयावभृथात्मकःक्रतुः ॥ भूमैवदेवःपरमोह्युपास्योनैवा

**॥ ॐ भूम्नःक्रतुवज्ज्यायस्त्वंतथाचदर्शयति ॐ ॥ ५९ ॥**

भूमाफलमेषांविधत्ते ॥ तस्माद्भूमागुणतोवैविशिष्टोयथाक्रतुःकर्ममध्ये
विशिष्टइतिगौपवनश्रुतिः ॥ ५९ ॥ अ० ३७ ॥

थाभूमत्वस्यसर्वत्रानंदादिषुसहभावेनोपासनएवेष्टफलसिद्धिः ॥ तदपिकुतः ॥ भूमैवदेवइतिश्रुतेरिति भावः ॥ देवःसर्वैर्भूमत्वेनोपास्यः ॥ कस्मात् ॥ भूमागुणोगुणराशितोयतःक्रतुवद्विशिष्टः॥ कथम् ॥ यस्मा द्भूमैवोपासितःफलंविधत्तेनैवाभूमातस्मादित्यर्थः ॥ अतःसर्वैरानंदाद्याःपूर्णत्वेनोपास्याइतिनलौकिकतयो पासनमितिसिद्धम् ॥ ५९ ॥ अ० ३७ ॥

अत्रब्रह्मसाक्षात्कारसाधनभूमोपासनेऽधिकारिणांविशेषसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अविशेषेनूक्ता नुपपत्तेरसौसमर्थनीयः ॥ प्रकृतभूमगुणएवविषयः ॥ किमधिकारिणामुपासनेतारतम्येनप्रतीयतेएकप्रकारेणवेतिसंदेहः ॥ उभयविधवस्तुप्रतीतिःसंदेहबीजम् ॥ सर्वेषांभूमत्वमेकप्रकारेणप्रतीयतइतिपूर्वःपक्षः ॥

शब्दोऽनुमातथैवाक्षोयोग्यताभेदतःसदा ॥ ब्रह्मादीनामेकमर्थंबहुधादर्शयंतिहि ॥ अतः

## ॥ ॐ नानाशब्दादिभेदादिभेदात् ॐ ॥ ६० ॥

पूर्णत्वमीशस्यनानैवेषांप्रदृश्यते ॥ अतःफलस्यनानात्वंनानैवोपासनंयतइतिब्रह्मतर्के ॥
अतोभूमत्वमपिनानैवोपास्यते ॥ ६० ॥ अ० ३८ ॥

भूमत्वेविशेषकल्पनायोगात् ॥ नहिकेषांचित्सम्यक्पूर्णानंदइतिकेषांचित्किंचित्पूर्णानंदइत्युपासनंयुक्तम् ॥ तथात्वेमिथ्योपासनप्रसंगात् ॥ मिथ्योपासनस्यानर्थहेतुत्वात् ॥ अतःसर्वेषामेकप्रकारेणभूमत्वोपासकत्वान्नोक्ततारतम्यःमिति ॥सिद्धांतयत्सूत्रंपठित्वास्मृत्युदाहरणपूर्वकंव्याचष्टे ॥ नानेति ॥ भूमत्वमुपासने

ऽधिकारिणांनानाप्रकारेणैवप्रतीयते॥शब्दादिभिःप्रमाणैस्तत्प्रतीतिरेष्टव्या॥शब्दादीनांचप्रमाणानामधिका
रिभेदनानेकधैकैकार्थप्रतीतिजनकत्वान्नानोपासनाच्चफलतारतम्यमुपपद्यतइतिभावः ॥ तत्त्वनिर्णयोवेदा
र्थनियमोऽपरोक्षज्ञानंचेतिक्रमभावीनीतिशब्दादिजन्यानीतिशब्दादिक्रमः॥नचभूमत्वेविशेषानुपपत्तिः ॥
अतीतवत्सराणांमासानामानंत्येपिविशेषवदत्राप्युपपत्तेः॥ अन्यानिषेधान्नान्यथोपासनम्॥ अतोभूमत्व
दृष्टावधिकारिणांविशेषसद्भावाद्युक्तंतारतम्यमितिसिद्धम्॥६०॥अ०३८॥ अत्रहरिदर्शनसाधनोपयोग्य
बिंबोपासनस्याकर्तव्यतानिरासादस्तिशास्त्रादिसंगतिः ॥अन्यथातापनीयादिविद्यावैयर्थ्यप्रसंगात्समर्थनी
यमेतत् ॥ तत्प्रकृतोपासनंविषयः ॥ मुमुक्षुणास्वबिंबातिरिक्तरूपविषयंकर्तव्यंनवेतिसंदेहः ॥बिंबोपासनो
क्तेरनवधारणादुभयथाप्रतीतिःसंदेहबीजम् ॥ नकर्तव्यमितिपूर्वःपक्षः॥तथाहि ॥ किमेतदुपासनंमोक्षार्थं
कर्तव्यंफलांतरार्थंवा ॥ नाद्यः ॥ तदभावात् ॥ अन्यथोक्तंव्याहन्येत ॥ नद्वितीयः ॥ तस्यमोक्षार्थत्वाभा
वादधिकारिणोमुमुक्षुत्वात्प्रत्युतबिंबोपासनविघ्नायचेति ॥ अतोमुमुक्षुणातदुपासनंकार्यमितितद्विद्यावै

यर्थ्यमिति ॥ सिद्धांतयन्सूत्रमुपन्यस्यव्याचष्टे ॥ विकल्पइति ॥ स्वमोक्षसाधनातिरिक्तंचनरसिंहाद्यु
पासनंकर्तव्यंनवा ॥ नतुनकर्तव्यमेव ॥ तस्यमोक्षार्थोपासनाऽनंतरभावित्वेनदुरितादिनिवृत्तिलक्षणमोक्षो
पयोगिफलसाधनत्वेनचोक्तदोषाभावात् किंतुविकल्पश्चयस्यविशिष्टफलापेक्षास्तितेनकर्तव्यम् ॥ य



स्वयोग्योपासनानंतरंसामान्यस्यापिकस्यचिदुपासनंविकल्पेनभवति
विशिष्टफलापेक्षया ॥ मुक्त्यर्थमात्मयोग्यंहिकार्यमेवह्युपासनम् ॥

## ॥ ॐ विकल्पोविशिष्टफलत्वात् ॐ ॥ ६१ ॥

नृसिंहादिकमन्यच्चदुरितादिनिवृत्तये ॥ उपासतेयथायोगंनवाफलवि
भेदतइतिब्रह्मतर्के ॥ ६१ ॥ अ० ३१ ॥

स्यतुनास्तितेननेति ॥ स्वयोग्योपासनयैवतीव्रयादुरितादिनिवृत्त्युपपत्तेरितिभावः ॥ अत्रैवस्मृतिमाह ॥
मुक्त्यर्थमिति ॥ नृसिंहादिकमन्यच्चेतिसामानाधिकरण्यम् ॥ अतोऽन्योपासनस्यापिकर्तव्यत्वान्नविद्या
वैयर्थ्यमितिसिद्धम् ॥ ६१ ॥ अ० ३१ ॥

अत्रब्रह्मज्ञानसाधनस्यैवोपासनस्यावश्यकत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ काम्योपासनस्याप्यावश्यकत्वेप्रथमपादानुपपत्तिप्रसंगात्समर्थनीयम् ॥ प्रकृतोपासनमेवविषयः ॥ कामसाधनभगवद्रूपगुणविषयं तावत्कर्तव्यमेव ॥ अन्यथातद्विद्यावैयर्थ्यात् ॥ किमावश्यकंवैकल्पिकंवेतिसंदेहः ॥ द्विविधोपासनप्रतीतिःसंदेहबीजम् ॥ आवश्यकमितिपूर्वःपक्षः ॥ मोक्षोपयोगिफलत्वात् ॥ अर्थादिकंहितत्फलम् ॥ तेनचज्ञानसिद्धेः ॥ अतःकाम्योपासनस्यावश्यकत्वेनवैराग्यस्यानपेक्षितत्वाद्व्यर्थःप्रथमपादइति ॥ सि

यस्ययस्यहियःकामस्तस्यतस्यह्युपासनम् ॥ तादृशानांगुणानांचसमाहारंप्रकल्पयेत् ॥

**॥ॐकाम्यास्तुयथाकामंसमुच्चीयेरन्नवापूर्वहेत्वभावात् ॐ॥६२॥**

अकामत्वान्मुमुक्षूणांनवातेषामुपासनम् ॥ तुष्ट्यर्थमीश्वरस्यैवनचोपासाविदुष्यतीतिवृहत्तंत्रे ॥ ६२ ॥ अ० ४० ॥

द्धांतयत्सूत्रंपठति ॥ काम्यास्त्विति ॥ कामसाधनरूपेकामसाधनगुणाःस्वस्वकामानुसारेणोपसंहर्तव्यानवेतिविकल्पएवनतुनियतिः ॥ विकल्पश्चामुमुक्षुभिःकार्योमुमुक्षुभिर्नेति ॥ मुमुक्षूणांकामाख्यहेत्वभावात् ॥ मुमुक्षुष्वेववाविकल्पः ॥ फलार्थंनकार्यमीश्वरप्रसादार्थंकार्यमिति ॥ कुतः ॥ कामाख्यहेत्वभावात्प्रबलहेत्वभावाच्च ॥ नह्यर्थादिकंविनाज्ञानाभावोनापितेननियत्याभवतीतिसूत्रार्थः ॥ अत्रैवस्मृतिमाह ॥ यस्येति ॥ यस्ययस्यपुंसोयोयोवित्तादिकामोऽसावसौतस्यतस्यतत्कामप्रदरूपस्योपासनं

प्रकल्पयेत् ॥ तादृशानांतत्तत्कामप्रदानांगुणानांतत्रोपसंहारंचप्रकल्पयेत्कुर्यादमुमुक्षुरित्यर्थः ॥ अत उक्तरीत्याकाम्योपासनस्यवैकल्पिकत्वात्सार्थक्यंवैराग्यपादस्येतिसिद्धम् ॥ ६२ ॥ अ० ४०॥ अत्रभगवत्साक्षात्कारसाधनांगदेवतोपासनस्यकर्तव्यतासमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथातद्विद्यावैयर्थ्यात्तत्समर्थनीयम्॥प्रकृतंब्रह्मादिदेवतोपासनंविषयः ॥ भगवदंगाश्रितत्वेनमुमुक्षुणाकर्तव्यंनवेतिसंदेहः ॥ आश्रितत्वेनश्रुत्युक्तेरुभयथासंभवःसंदेहबीजम् ॥ नतथोपासनंमुमुक्षुणाकर्तव्यमितिपूर्वःपक्षः ॥ तथाहि ॥

अंगदेवतानांयथापरमेश्वरांगाश्रयत्वंचक्षोःसूर्योअजायतेत्यादितथाभावनाकर्तव्या ॥ ६३ ॥

## ॥ अंगेषुयथाश्रयभावः ॐ ॥६३॥

किंतत्सर्वैःकर्तव्यंदेवैर्वा ॥ नाद्यः ॥ उक्तव्याघातात् ॥ नद्वितीयः ॥ ब्रह्माशिरसिललाटेरुद्रइत्यादितत्तत्प्रकरणेषुदेवानामेतदित्यनुक्तेः ॥ नचानुक्तावप्यधिकारिविशेषःकल्पयितुंशक्यते ॥ कल्पकाभावात् ॥ अन्यथाचोदनाद्यविशेषादित्युक्तव्याघातात् ॥ अतोनिरधिकारित्वादंगाश्रितत्वेनदेवतोपासनंनकार्यमिति तद्विद्यावैयर्थ्यमिति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ अंगेष्विति ॥ सूर्यादिदेवानांचक्षोःसूर्योअजायतेत्यादिनायथायथाभगवदंगाश्रयत्वमुक्तंतथैवोपासनंकार्यमेव ॥ अन्यथातदुक्तिवैयर्थ्यप्रसंगादितिभावः ॥ यत्रजन्मतत्रैवस्थितिरित्यदोषः ॥ तदाश्रिताश्चतेसर्वइतिवचनात् ॥ ६३ ॥

नकेवलमंगाश्रितत्वेनोत्त्यन्यथानुपपत्त्यातथोपासनस्यकर्तव्यताकिंतुश्रुतौतथाविधानाच्चेत्यर्थप्रतिपाद कंसूत्रंपठित्वातांश्रुतिमुदाहरति ॥ शिष्टेश्चेति ॥ शिष्टिःशिक्षाविधिरितियावत् ॥ ६४ ॥ नांगाश्रितत्वेन देवतोपासनंयुक्तंनिरधिकारित्वात् ॥ तद्विधानादेर्वैयर्थ्यस्यौचित्यादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्या चष्टे ॥ समाहारादिति ॥ युक्तमेवांगाश्रितत्वेनदेवतोपासनंतत्रदेवानामधिकारित्वात् ॥ नचतदनुक्तिदोषः॥

यस्मिन्यस्मिन्योह्यिचांगेनिविष्टःपरस्यांचिंत्यःसतथातथैवेतिपौत्रायणश्रुतेः ॥ ६४ ॥

## ॥ ॐ शिष्टेश्च ॐ ॥ ६४ ॥

## ॥ ॐ समाहारात् ॐ ॥ ६५ ॥

अंगैःपराद्येहिदेवाविसृष्टास्तत्तद्गुणान्परमेसंहरेत ॥ तांश्चापितत्रैवविचिंत्यदेवान्स्थानंमु मुक्षुःपरमंव्रजेतेतिकाषायणश्रुतौसमाहारवचनाच्च ॥ ६५ ॥

तस्योपासनस्यहितत्स्थानप्राप्तिःफलंश्रूयते ॥ तच्चदेवतानांनैवयोग्यमितिफलपर्यालोचनयामधुविद्या दाविवदेवानामधिकारित्वकल्पनोपपत्तेरितिभावः ॥ तथाचश्रुतिः ॥ ध्यायेदंगेष्वंगदेवताःपरस्यविशिष्टा हिगुणामुक्तौदेवानांभवंतीति ॥ अत्रसूत्रभाष्ययोःसमाहारपदंश्रुतिसूचकमूष्मेतिवत् ॥ ६५ ॥

हेत्वंतरेणैतदुपासनस्यकर्तव्यतांप्रतिपादयत्सूत्रंपठित्वातदुपात्तश्रुतिमेवोदाहरति ॥ गुणेति ॥ कर्तव्यमेवत दुपासनंसूर्याद्याश्रयचक्षुरादीनांभगवद्गुणत्वात् ॥ उपास्यत्वेचभगवद्गुणानांसाधारण्येनसर्वेषामुपास्यत्व स्यश्रुतत्वादितिभावः ॥ अतोदेवानामंगाश्रितत्वेनोपास्यत्वात्सार्थक्यमेवतद्विद्यानामितिसिद्धम् ॥ ६६ ॥

अ० ४१ ॥ अत्रब्रह्मज्ञानसाधनस्यांगाश्रितत्वेनदेवतोपासनस्यकर्तव्यतासमर्थनादस्तिशास्त्रादिसंगतिः ॥

साधारण्यात्सर्वगुणाःपरस्यसमाहार्यास्तत्त्वदृशोमुमुक्षोरितिमांडव्यश्रुतेश्च ॥ ६६ ॥

**॥ ॐ गुणसाधारण्यश्रुतेश्च ॐ॥६६॥ ॐनवाऽतत्सहभावश्रुतेः ॐ॥६७॥**

अ० ४१ ॥ नवांगदेवतोपसंहारःकार्यः ॥ उपसंहारस्यसहाऽश्रवणात् ॥ ६७ ॥

अन्यथोक्तानुपपत्तेस्तत्समर्थनीयम् ॥ प्रकृतंदेवानांभगवदंगाश्रयत्वेनोपासनंविषयः ॥ कर्तव्यंनवेतिसं देहः ॥ उभयविधोपासनप्रतीतिःसंदेहबीजम् ॥ नकर्तव्यमितिपूर्वःपक्षः ॥ तथोपासनस्यसर्वशाखास्वनु क्तत्वात् ॥ कर्तव्यत्वेक्रियात्वादग्निष्टोमादिवत्सर्वशाखागतोपासनेनसहभावप्रसंगात् ॥ अतोस्योपासन स्याकर्तव्यत्वादुक्तमयुक्तमिति ॥ गूढाभिसंधिनासिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ नवेति ॥ भगवदंगे

ष्वंगदेवतोपसंहारउपसंहृत्योपासनंनकर्तव्यमितियदुक्तंतत्सत्यमेव ॥ तथोपासनस्यसर्वशाखागतोपासने
नसहाश्रवणादित्यर्थः ॥ अयमभिसंधिः ॥ सर्वशाखासुतथोपासनस्यकर्तव्यताऽश्रवणादकर्तव्यत्वंभवत्ये
व ॥ सर्वैःकर्तव्यतानभ्युपगमात् ॥ नचकेनाप्यकर्तव्यता ॥ क्वचिदुक्तत्वात् ॥ अन्यथोक्तिवैयर्थ्यप्रसं

सत्योज्ञानःपरमानंदरूपआत्मेत्येवंनित्यदोपासनंस्यात् ॥ नान्यत्किंचि
त्समुपासीतधीरःसर्वैर्गुणैर्देवगणाउपासतइतिकमठश्रुतौ ॥ ६८ ॥ अ०

॥ ॐ दर्शनाच्च ॐ ॥ ६८ ॥

४२ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थ
भगवत्पादाचार्यविरचितेतृतीयाध्यायस्यतृतीयःपादः ॥ ७ ॥

गात् ॥ अतःक्वचिदुक्तत्वात्सर्वत्रानुक्तत्वाद्देवैःकर्तव्यमेतन्नान्यैरिति ॥ ६७ ॥ एतमेवार्थंश्रुत्यासमर्थय
त्सूत्रंपठित्वातांश्रुतिमुदाहरति ॥ दर्शनाच्चेति ॥ अतोदेवानांभगवदंगाश्रयत्वेनोपासनंयुक्तमित्युक्तमुपपन्न
मितिसिद्धम् ॥ ६८ ॥ अ० ४२ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमद्ब्रह्मसूत्रभाष्य
स्यटीकायांश्रीमज्जयतीर्थमुनिविरचितायांतत्त्वप्रकाशिकायांतृतीयाध्यायस्यतृतीयःपादः ॥ ३ ॥ ॥७॥

श्रीगुरुराजायनमः ॥ एतत्पादार्थंदर्शयति ॥ ज्ञानेति ॥ भगवदपरोक्षज्ञानार्थमुपासनोक्तातज्ज्ञानंतयाभवतीतिचोक्तम् ॥ तस्यज्ञानस्यसामर्थ्यमत्रोच्यतइत्यर्थः ॥ अत्रादौब्रह्मप्राप्तिसाधनज्ञानस्यसर्वपुरुषार्थसाधनत्वमहिम्नोवर्णनादस्तिशास्त्रादिसंगतिः ॥ अन्यथानतत्रातिशयेनप्रवृत्तिःस्यादितितद्वर्णनीयम् ॥ उपासनसाध्यतयाप्रकृतंज्ञानमत्रविषयः ॥ किंमोक्षमात्रसाधनमुतफलांतरस्यापिसाधनमितिसंदेहः ॥ निरवधारणमुक्तिसाधनत्वोक्तेरुभयथासंभवःसंदेहबीजम् ॥ ज्ञानंमोक्षमात्रसाधनमितिपूर्वःपक्षः ॥ ज्ञानिनां

ज्ञानसामर्थ्यमस्मिन्पादउच्यते ॥ यद्दर्शनार्थमुपासनोक्तातस्माद्दर्शनात्सर्वपुरुषार्थप्राप्तिरितिबादरायणोमन्यते ॥ यंयंलोकंमनसासंविभातिविशुद्धसत्त्वःकामयतेयांश्वकामान् ॥

## ॥ ॐ पुरुषार्थोऽतःशब्दादितिबादरायणः ॐ ॥ १ ॥

तंतंलोकंजयतेतांश्वकामान्तस्मादात्मज्ञंह्यर्चयेद्भूतिकामइतिशब्दात् ॥ १ ॥

मोक्षेतरपुरुषार्थेषुविरक्तत्वेनतदिच्छायाएवाभावात् ॥ परीक्ष्यलोकान्कर्मचितान्ब्राह्मणोनिर्वेदमायात् ॥ प्रजहातियदाकामानित्यादेः ॥ इच्छाभावेपितत्प्राप्तौपुरुषार्थत्वमेवनस्यात् ॥ अतोज्ञानस्यमोक्षमात्रसाधनत्वान्नतत्सर्वथाऽऽपाद्यमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ पुरुषार्थइति ॥ यस्यदर्शनस्यार्थेपूर्वमुपासनोक्तातद्दर्शनतःपुरुषैरर्थ्यमानंयावच्छुभंतत्सर्वमाप्यतएवनतुमोक्षमात्रम् ॥ कुतः ॥ यंयमितिशब्दा

दितिभगवान्बादरायणोमन्यतइत्यर्थः॥संविभातिइच्छति॥जयतेप्राप्नोति॥ नचश्रुत्यादिनाज्ञानिनांमोक्षेतरपुरुषार्थेच्छाभावान्नज्ञानात्सर्वपुरुषार्थप्राप्तिरितियुक्तम् ॥श्रुत्यादेःप्रायेणज्ञानिनामन्येच्छाभावपरत्वात्॥ अस्माभिस्तुश्रुत्यवलंबेनयस्यसौभरिकर्दमादिवद्भवतीच्छातस्यज्ञानादेवसर्वपुरुषार्थप्राप्तिर्भवतीत्यभ्युपगमात् ॥ १ ॥ एतमर्थमाक्षिपत्सूत्रमुपन्यस्यव्याचष्टे ॥शेषत्वादिति ॥ यदुक्तंमोक्षादिसमस्तपुरुषार्थसाधनंज्ञानमितितत्रास्तुज्ञानस्यमोक्षसाधनत्वं नतुस्वर्गादिसाधनत्वम् ॥ तत्साधनंतुकर्मैव ॥ नचैवंयंयंलोक

अस्येवमोक्षसाधनत्वंज्ञानस्यस्वर्गादिषुतत्साधनकर्मशेषत्वेन ॥ स्वर्गंध

॥ ॐ शेषत्वात्पुरुषार्थवादोयथान्येष्वितिजैमिनिः ॐ ॥ २ ॥

नादेहतोविग्रहाच्चप्राप्स्यंतिधीरानत्वधीराःकुतश्चिदितिवदितिजैमिनिः ॥ २ ॥

मितिज्ञानस्यसर्वपुरुषार्थसाधनत्ववादविरोधः ॥ ज्ञानस्यापिकर्मशेषत्वेनस्वर्गादिसाधनत्वाभ्युपगमात् ॥ नचवाच्यंज्ञानस्यकर्मशेषत्वाभ्युपगमेपिपुरुषार्थवादविरोधानिवृत्तिः ॥ पुरुषार्थवादेज्ञानस्यप्राधान्यदर्शनात् ॥ नहिशेषत्वेतथाप्रयोगोदृष्टइति ॥ स्वर्गसाधनकर्मशेषेपिधनादौस्वर्गंधनादितिप्राधान्यप्रयोगदर्शनात् ॥ तद्वदत्राप्युपपत्तेरितिजैमिनिराचार्योमन्यतइतिभावः ॥ अत्रज्ञानस्यकर्मशेषत्वंनामकर्मणैवसिध्यत्स्वर्गस्याधिक्यापादकत्वम् ॥ २ ॥

ननुज्ञानस्यैवसर्वपुरुषार्थसाधनत्वंकिंनस्याच्छ्रुतिबलात् ॥ कुतःश्रुतेरर्थांतरपरिकल्पनेत्याशंकांपरिहरत्सू
त्रंपठित्वाव्याचष्टे॥ आचारेति ॥ देवास्तावज्ज्ञानिनः ॥ नैवदेवपदंप्रापाब्रह्मदर्शनवर्जिताइतिवचनात् ॥ ते
षांचकर्मानुष्ठानंदृश्यते यज्ञेनयज्ञमयजंतदेवाइत्यादौ ॥ तथाचज्ञानस्यैवसर्वपुरुषार्थसाधनत्वेकर्मानुष्ठा

ज्ञानिनामेवदेवादीनामाचारदर्शनात् ॥ ३ ॥ यदेवविद्ययाकरो

**॥ ॐ अचारदर्शनात् ॐ ॥ ३ ॥ ॐ तच्छ्रुतेः ॥ ४ ॥**

तिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवतीतिशेषत्वश्रुतेः ॥४ ॥

नंवैयर्थ्यंस्यात् ॥ अतोनज्ञानादेवसर्वपुरुषार्थप्राप्तिरितिभावः ॥ ३ ॥ नन्वेवमस्तुज्ञानकर्मणोरुभयोरपि
स्वर्गादिसाधनत्वंज्ञानस्यकर्मशेषत्वंकुतइत्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ तदिति ॥ नज्ञानस्यकर्म
शेषत्वाभावः ॥ यदेवविद्ययेतितदभिधायकश्रुतेरितिभावः ॥ उपनिषदास्वयोग्यया ॥ वीर्यवत्तरमधिकफ
लसाधनम् ॥ ४ ॥

ननुयथाज्ञानस्यप्राधान्यंश्रुतमपिनस्वीक्रियतेकिंतुशेषत्वमेवैवंयदेवविद्ययेतिश्रुतमपिकर्मणःप्राधान्यंनां
गीकार्यंकिंनामज्ञानशेषत्वंकर्मणःसाम्यंवाभवतुविशेषप्रमाणाभावादित्याशंकांपरिहरत्सूत्रंपठित्वातदभि
मतश्रुतिमुदाहरति ॥ समिति॥ नस्वर्गादिसाधनकर्मणःशेषत्वंसाम्यंवाज्ञानेनाऽपितुप्राधान्येनारंभकत्वम् ॥
कुतः ॥ कर्मैवेतिकर्मणएवप्राधान्येनस्वर्गाद्यारंभकत्वश्रुतेरितिभावः ॥ नापरस्तत्रहेतुरिति ॥ कर्मशेषतयै

कर्मैवदेहंदैविकंमानुषंवाप्यन्वारभेन्नापरस्तत्रहेतुः ॥ भोगांस्तदीयांश्चयथाविभागंददातिकर्मैवशु

## ॥ ॐ समन्वारंभणात् ॐ ॥ ५ ॥ ॐ तद्वतोविधानात् ॐ ॥ ६ ॥

भाशुभंयदितिमाठरश्रुतेश्च ॥ संशब्दःप्राधान्यंदर्शयति ॥ ५ ॥ ज्ञानीचकर्माणिसदोदितानिकुर्या
दकामःसततंभवेतेतिकमठश्रुतौज्ञानवतोपिविधानात् ॥ ६ ॥

वहेतुर्भवतिनप्राधान्येनहेतुरस्तीत्यर्थः ॥ ननुकर्मणःस्वर्गाद्यारंभकत्वमेवसूत्रितंनप्राधान्यंतच्चपरस्यापि
सिद्धमित्यतआह ॥ संशब्दइति ॥ ५ ॥ तथापिनज्ञानस्यकर्मशेषत्वंयुक्तंकिंतुस्वयमेवपुरुषार्थहेतुः ॥
कस्मात् ॥ ज्ञानिकृतकर्मणःफलाभावात् ॥ फलाभावेप्याचारस्तुमुक्तवल्लीलयैवेत्याशंकांपरिहरत्सूत्र
मुपन्यस्यव्याचष्टे ॥ तद्वतइति ॥ नज्ञानिनांकर्मलीलयामुक्तवत् ॥ येनफलाभावः ॥ ज्ञानीचकर्माणी
तिज्ञानिनःकर्मविधानात् ॥ विहिताचरणस्यलीलात्वाभावादितिभावः ॥ ६ ॥

नकेवलंविहितत्वाज्ज्ञानिनःकर्मलीलामात्रमपित्वकरणेचप्रत्यवायश्रुतेश्चेत्यर्थप्रतिपादकंसूत्रंपठित्वातांश्रु तिमुदाहरति ॥ नियमाच्चेति॥ एवंकर्मकरणेत्वयिकर्मनलिप्यते ॥ इतोन्यथाकरणेनरेज्ञानिन्यपित्वयिपापं कर्मनलिप्यतइतिनास्तीत्यर्थः ॥७॥ एवंजैमिनिमतावलंबेनचोदितेस्वमतंसमर्थयत्सूत्रमुपन्यस्यव्याचष्टे॥ अधिकेति ॥ यदुक्तंज्ञानादेवसर्वपुरुषार्थप्राप्तिरितितदेवंतथैवनतुज्ञानंकर्मशेषतयापुरुषार्थसाधनम् ॥

कुर्वन्नेवेहकर्माणिजिजीविषेच्छतंसमाः ॥ एवंत्वयिनान्यथेतोस्तिनकर्मलिप्यतेनरइति ॥७ ॥ ज्ञानादेवस्वर्गोज्ञानादेवापवर्गोज्ञानादेवसर्वेकामाःसंपद्यंते ॥ तथापियथायथाकर्म

## ॥ ॐनियमाच्च ॐ ॥ ७॥ ॐ अधिकोपदेशा त्तुबादरायणस्यैवंतद्दर्शनात् ॐ ॥ ८ ॥

करोतितथातथाऽधिकोभवतीतिकौठरव्यश्रुतेः ॥ युधिष्ठिरादीनांराजसूयादिनाफलाधि क्यदर्शनाच्चेतिबादरायणमतम् ॥ ८ ॥

नचैवंज्ञानिनामाचारवैयर्थ्यंविध्याद्यनुपपत्तिश्चेतिवाच्यम् ॥ ज्ञानादेवजायमानेपुरुषार्थेकर्मणोऽतिशया पादकत्वेनज्ञानशेषत्वात् ॥ ज्ञानादेवपुरुषार्थप्राप्तिःकर्मणस्तुफलेऽतिशयाधायकत्वेनशेषत्वमितिकुतः ॥ ज्ञानादेवेतिश्रुतेर्लिंगदर्शनाच्चेतिभगवतोवादरायणस्यमतमितिभावः ॥ ८ ॥

नन्वस्तुज्ञानस्यपुरुषार्थहेतुत्वंकर्मणस्तुतच्छेषत्वम् ॥शेषत्वंचनज्ञानफलेऽतिशयाधायकत्वेनकिंतुज्ञानेऽति
शयाधायकत्वेनकिंनस्यादित्याशंकांपरिहरन्सूत्रंपठित्वाव्याचष्टे ॥ तुल्यंत्विति ॥ नज्ञानिकर्मणोज्ञानेऽति

राजसूयादिकृतावकृतौचसममेवतेषांविज्ञानम् ॥ विज्ञातमेतत्सर्वेषांमुनीनांब्रह्मदर्शनात् ॥ स्या
देवमोक्षोनान्यस्मादितितत्रापिचित्रता ॥ स्वर्गादयःकर्मणैवनान्येनेत्यपरेविदुः ॥ ज्ञानेनाधिक्य
मित्याहुर्जैमिन्याद्यास्तुकेचन ॥ अदृष्टमेवज्ञानेनदृष्टंनैवोपलभ्यते ॥ इतिकेचिद्विदःप्राहुर्व्यास
शिष्याइमेऽखिलाः ॥ यस्माद्व्यासमतंसर्वंसत्यमेवततोऽखिलम् ॥ यथाकाशस्त्वनंतोपिव्यामोह

॥ ॐ तुल्यंतुदर्शनम् ॐ ॥ ९ ॥

स्तावधिस्तथा ॥ प्रादेशोपिहिसत्येनतथैतेषांमतानितु ॥ स्वयंतुभगवान्व्यासोव्यामज्ञानमहांशुमा
न् ॥ अनंताकाशवत्पश्यन्निखिलंपुरुषोत्तमः ॥ ज्ञानेनैवाप्यतेसर्वंकर्मणात्वधिकंभवेत् ॥ इतिप्राह
महायोगीपुमर्थानांविनिर्णयमितिभविष्यत्पर्वणि ॥ ज्ञानिनामपिदेवानांविशेषःकर्मभिर्भवेत् ॥
चीर्णेकृतेवाज्ञानस्यनविशेषोऽस्तिकर्मणीतिचब्रह्मतर्के ॥ ९ ॥ अ० १ ॥

शयाधायकत्वंकिंतुज्ञानफलएव ॥ कुतः ॥ कर्मकरणाकरणयोर्ज्ञानस्यतुल्यत्वात् ॥ अन्यथाकर्मकर
णेज्ञानंपुरुषार्थसाधनेसमर्थमकरणेऽसमर्थमितिज्ञानेविशेषःस्यात् ॥ एतच्चोपपादयिष्यतइतिभावः ॥

नन्वेवंतर्हिभगवन्मतविरोधेनजैमिनिमतस्याप्रामाण्यंप्रसज्जेत ॥ नचमुनिमतस्यतद्युक्तम् ॥ प्रामाण्येनुभग
वन्मतस्याप्रामाण्यमित्याशंकांस्मृत्यापरिहरति॥ विज्ञातमिति ॥ संमतमितियावत॥ अनेनैतदपिनिरस्तम्॥
यत्तैरुच्यतेपुरुषार्थादिसूत्रैर्भगवताकेवलज्ञानस्यमोक्षसाधनत्वमुच्यतेशेषत्वादित्यादिसूत्रैस्तुकर्मशेषत्वं
ज्ञानस्येतिजैमिनिमतस्याप्रामाण्यमुच्यतइति ॥ तत्रापितेषांमतेष्वपिचित्रताविषयांतरे ॥ आधिक्यंकर्म
फले ॥ विचित्रतायामपिनमुनिमतानामसत्यत्वंभगवन्मतांतर्भूतत्वादित्यत्रदृष्टांतमाह ॥ यथेति॥ यथाऽनं
ताकाशःसत्येनसत्यत्वेनवर्ततेतदवांतरभेदाश्च ॥ तथाभगवन्मतंतदंतर्गतमतान्यपिसत्यानीत्यर्थः ॥ ननुज्ञा
नादेवसर्वपुरुषार्थःकर्मणातदाधिक्यमितिभगवन्मतमतःकथमनंताकाशवदंतर्भावितान्यमतत्वंतस्येत्यत
आह ॥ स्वयंत्विति ॥ निखिलंस्वमतत्वेनपश्यन्नपिव्यासःकेनचिद्विशेषेणैवंपुरुषार्थनिर्णयंप्राहेत्यर्थः ॥
अनंताकाशवदित्यनन्वयदृष्टांतोयथाऽऽकाशोव्याप्तस्तथाज्ञानमिति ॥ तथाचोक्तम् ॥ व्यत्यासोऽन
न्वयश्चैवप्रसिद्धोभूतएवच ॥ सर्वसंहारिकश्चेतिदृष्टांतःपंचधास्मृतइति ॥ नन्वेवंमतानांस्मृत्याप्रामाण्यो
क्तावपिपरस्परविरुद्धत्वात्कथंतत्स्यादित्यतोभगवन्मतंदेवताविषयंजैमिन्यादिमतंतुतदन्यविषयमिति
भावेनात्रस्मृतिमाह ॥ ज्ञानिनामिति ॥ अतएवसूत्रकृतादेवताचारस्यतद्विषयकर्मविध्यादेरेवगतिरुक्ता
नतुयदेवविद्ययाकरोतिकर्मैवदेहमितिश्रुत्योस्तयोर्मानुषविषयत्वोपपत्तेः ॥ प्रतिबंधकयुक्तदेवताविषयत्वो
पपत्तेश्च ॥ अतोज्ञानस्यसर्वपुरुषार्थसाधनत्वादत्यंतापेक्षितंतदितिसिद्धम् ॥ ९ ॥ अ० १ ॥

अत्रभगवत्प्राप्तिसाधनज्ञानेसर्वेषामधिकाराभावमहिम्नोवर्णनादस्तिशास्त्रादिसंगतिः ॥ सर्वाधिकारिक त्वेनतस्यसाधनाद्यतिशयःसिध्यतीत्येतद्वर्णनीयम् ॥प्रकृतंज्ञानमेवविषयः॥ किंतत्रसर्वेषामधिकारोऽस्तिन वेतिसंदेहः॥ लोकेसाधनद्वैविध्यप्रतीतिःसंदेहबीजम् ॥ पूर्वपक्षयति ॥ सर्वेषामिति ॥ सर्वेषामप्यस्तिज्ञानेऽ धिकारः ॥ फलार्थीसमर्थोविद्वान्हिसाधनेऽधिक्रियते ॥ तत्रास्त्येवसर्वेषांज्ञानफलेमोक्षेऽर्थिता ॥ नि

सर्वेषामपिपुरुषार्थापेक्षित्वाऽज्ञानाधिकारिते

**॥ ॐ असार्वत्रिकी ॐ ॥ १० ॥**

स्यतआह ॥ नसर्वेषामधिकारः ॥ १० ॥

दुःखानंदात्मकत्वात्तस्य ॥ तादृशस्यचपुरुषार्थत्वात् ॥ अस्तिचसर्वेषांश्रवणादौसामर्थ्यंतदुपयोगिनीवि द्वत्ताच ॥ एवंचसर्वेषामधिकाराभावेनिरधिकारित्वंज्ञानस्यस्यात् ॥ अतःसर्वेषांज्ञानेऽधिकारित्वान्नतद तिशयवदितिभावः॥ वक्ष्यमाणसूत्रमनुकरोतिस्त्रीलिंगप्रयोगेन ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अत इति ॥ १० ॥

नन्वर्थित्वादेःसर्वेषामपिसद्भावात्कथंनाधिकारितेत्याशंकांपरिहरन्सूत्रमुपन्यस्यव्याचष्टे ॥ विभागइति ॥
यथाखलुदेवत्वसाम्येपिनवकोटीनांनसाधारण्येनसोमाधिकारःकिंतुपरावरब्रह्मद्वयाधिकशतस्यैतिविभा

नवकोट्योहिदेवानांतेषांमध्येशतस्यतु॥सोमाधिकारोवे
दोक्तोब्रह्मणीद्विशताधिके ॥ यथातथैवासंख्येयाःप्रजा

॥ ॐविभागःशतवत् ॐ ॥ ११ ॥

स्तासुकियान्जनः ॥ ज्ञानाधिकारीसंप्रोक्तोविष्णुपादै
कसंश्रयइतिवचनात्सुखापेक्षासाम्येपिविभागइष्यतेऽ
धिकारार्थम् ॥ ११ ॥

गएव ॥ तथासर्वेषांपुरुषार्थापेक्षासाम्येपिनसर्वेषांज्ञानाधिकारःकिंतुज्ञानाधिकारार्थंपुरुषविभागोऽगी
कार्यः ॥ यद्युच्येतनदेवत्वंसोमाधिकारोपयोगीतितर्हिनार्थित्वादिमात्रंज्ञानाधिकारोपयोगीतिवक्तव्यमि
तिभावः ॥ ११ ॥

यद्यर्थित्वादिसाम्येपिनसर्वेषामधिकारस्तर्हिकस्याप्यसौनस्यात् यदिकेषांचिदस्तितर्ह्यर्थित्वाद्यतिरिक्तंविशेषणंवक्तव्यं ॥ नचतदस्तीतिभावेनाक्षिपति ॥ कस्येति ॥ अर्थित्वाद्यतिरिक्तेनकेनविशेषणेनयुक्तस्येत्यर्थः ॥ परिहारायसूत्रंपठति ॥ अध्ययनेति ॥ नार्थित्वादेरधिकाराप्रयोजकत्वेतत्प्रयोजकविशेषांतराभावात्कस्याप्यधिकाराभावः ॥ यथाशक्त्याऽखिलवेदाध्ययनवत्त्वेनविशेषांतरेणयुक्तस्यज्ञानाधिकार

कस्याधिकारः॥ अवैष्णवस्यवेदेपिह्यधिकारोनविद्यते ॥ गुरुभक्तिविहीनस्यशमादिरहित
स्यच ॥ नचवर्णावरस्यापितस्माद्ध्ययनान्वितः॥ब्रह्मज्ञानेतुवेदोक्तेह्यधिकारीसतांमतइति

## ॥ ॐ अध्ययनमात्रवतः ॐ ॥ १२ ॥

ब्रह्मतर्के॥पठेद्वेदानथार्थानधीयीताथविचार्यब्रह्मविंदेदितिचकौषारवश्रुतिः॥ १२॥अ० २॥

संभवादितिभावः ॥ यद्यध्ययनवतोधिकारस्तर्ह्युक्तविभागभंगःस्यात्॥सर्वैरपिवेदस्याध्येतुंशक्यत्वादित्यत आह॥अवैष्णवस्येति ॥ यस्माद्ध्ययनेभगवद्भक्त्यादिमतामेवाधिकारोनान्येषांतस्माद्ध्ययनान्वितोब्रह्मज्ञानेऽधिकारीतियुक्तम्॥ विभागभंगाभावादितिभावः॥अध्ययनवतोवैदिकेब्रह्मज्ञानेऽधिकारइतिस्मृतिसिद्धम्॥तत्रश्रुतिंचाह॥पठेदिति ॥अतोज्ञानेसर्वेषामधिकाराभावादतिशयितंतदितिसिद्धम् ॥ १२॥अ० २॥

साध्यत्वंमोक्षस्यनापिज्ञानिनोमोक्षाभावोयोसत्प्रवृत्त्याभविष्यति ॥ अतःसदसत्प्रवृत्तिभ्यांज्ञानिनोवि
शेषाभावादाद्याधिकरणोक्तमयुक्तमिति ॥ सिद्धांतयत्सूत्रमवतार्यव्याचष्टे ॥ अतइति ॥ अस्येवज्ञानि
नःसदसत्प्रवृत्त्योर्विशेषस्तर्हिकथमयंयथेष्टाचरणविधिः॥ मैवम् ॥ केनस्यादित्यस्यविधित्वाभावात् ॥ त
र्हिकथमुच्यते ॥ यथाकंचित्भृत्यंप्रतितत्स्तुतयेकथ्यतेयथेष्टंकुर्वितिनतुविधिस्तथैतदपिज्ञानिनस्तुतय
एवोच्यते ॥ अथवायथेष्टाचारेऽनुज्ञामात्रमेतत् ॥ सर्वथातुनविधिरितिभावः ॥ नसदसत्प्रवृत्तिभ्यांज्ञा

अतआह ॥ नविधिर्ज्ञानिनःस्तुतयेऽनुमतिमात्रंवायुज्यतेच ॥ १४ ॥ कामचाराःकामभ

## ॥ ॐ कामकारेणचैके ॐ ॥ १५ ॥

क्षाःकामवादाःकामेनैवेमंदेहमुत्सृज्याऽथपरात्परमीयुरनारंभणमितिचैकेपठंति ॥ १५ ॥

निनोविशेषोयुज्यते ॥ तथासत्यसत्प्रवृत्त्याकुंठितस्यज्ञानस्यमोक्षसाधनत्वाभावप्रसंगात् ॥ तथाचानिय
मइत्युक्तव्याघातःसत्प्रवृत्तिसमुच्चितस्यमोक्षसाधनत्वप्रसंगादित्यतआह ॥ युज्यतेचेति ॥ सदसत्प्रवृत्ति
भ्यांविशेषइतिशेषः ॥ १४ ॥ असत्प्रवृत्त्याकुंठितशक्तेर्ज्ञानस्यमोक्षसाधनत्वाभावप्रसंगात्कथंयुज्यतेइ
त्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ कामेति ॥ नासत्प्रवृत्त्याकुंठितत्वेनज्ञानस्यमोक्षसाधनत्वाभावः
प्रसज्जते ॥ यतोयथेष्टाचारेणापिज्ञानिनोमोक्षमेकेशाखिनःपठंतीतिभावः ॥ अनारंभणमनादि ॥ १५ ॥

कैमुत्येनैतमर्थंसमर्थयत्सूत्रंपठित्वातत्सूचितांश्रुतिमुदाहरति ॥ उपमर्दंचेति ॥ ज्ञानिनांहिविषभक्षणा न्मृतेरिवानिवर्त्यतयाप्राप्तस्यारब्धकर्मणोपिकिंचिद्भुक्तस्यज्ञानेनोपमर्दमेकेशाखिनःपठंति ॥ तदोत्तरका लीनासत्कर्मनमोक्षप्रतिबंधकमितिकिंवर्णनीयमितिभावः ॥ तदुक्तम् ॥ नवैजनोजातुकथंचनाव्रजेन्मुकुं दसेव्यन्यवदंगसस्तृतिमिति ॥ ॐमित्युच्चार्येतिश्रवणाद्युपलक्षणम् ॥ अंतर्हृदयस्येत्येतदप्युपलक्षणम् ॥ १६ ॥ यदिकामचारिणामपिज्ञानिनांमुक्तियोग्यतातर्हितद्वज्जिज्ञासूनामपिकामचाराणांज्ञानाधि

ॐमित्युच्चार्यांतरितमात्मानमभिपश्योपमृद्यपुण्यंचपापंचकाममाचरंतोब्रह्माऽनुव्रजंती

**॥ॐ उपमर्दंच ॐ॥ १६॥ ॥ॐ ऊर्ध्वरेतःसुचशब्देहि ॐ॥ १७॥**

तिचतुरश्रुतौ ॥ १६ ॥ नतावताकामचाराणांज्ञानाधिकारः ॥ यइमंपरमंगुह्यमूर्ध्वरेतः

सुभाषयेत् ॥ नतथाविद्यतेभूयान्यंप्राप्यान्येपिभूयसइतिमाठरश्रुतौ ॥ १७॥

कारःस्यादविशेषात्तथाचाध्ययनमात्रवतइत्युक्तबाधइत्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ ऊर्ध्वे ति ॥ कामचाराणामपिज्ञानिनांमुक्तियोग्यताऽस्तीत्येतावतातद्वत्कामचाराणांज्ञानाधिकारोनमंतव्यः ॥ यइममितिशब्देश्रुतौऊर्ध्वरेतस्त्वादिगुणवत्स्येवज्ञानोपदेशविधानात् ॥ अपरोक्षदर्शनस्यपरोक्षज्ञानपूर्वक त्वादितिभावः ॥ भूयसोभूयांसः ॥ १७॥

एवंकेनस्यादित्यस्याविधित्वमंगीकृत्यार्थउक्तः ॥ तथाजैमिनिमतेनार्थांतरंप्रतिपादयत्सूत्रमुपन्यस्यव्याचष्टे ॥ परामर्शमिति ॥ नायंश्रुत्याकामचारोविहितोनाप्ययंसदसत्प्रवृत्तिविषयःकिंतुसदाचारस्यैवनियमेनाचरणमेवश्रुत्योच्यमानःकामचारः ॥ नचाचारानुक्तिदोषः ॥ प्रातरुत्थायेत्यादिश्रुतिस्मृत्युक्ताचारपरामर्शेनश्रुत्यातच्चरणविधानात् ॥ नचैवंनियमेनचरणेकेनेतिकामचारोक्त्ययोगः ॥ विधिबंधवर्जितत्वे

प्रातरुत्थायाथसंध्यामुपासीतयत्संध्यामुपासतेब्रह्मैवतदुपासतेऽथदेवान्नमेज्जुहुयाद्वेदानावर्तयीत नान्यत्किंचिदाचरेन्नसुरांपिबेन्नपलांडुंभक्षयेन्नभृशंवदेन्नविस्मरेदात्मानंसोमंपिबेद्धुतशेषेणवर्तये

## ॥ ॐ परामर्शंजैमिनिरचोदनाचापवदतिहि ॐ ॥ १८ ॥

दित्युक्ताचारपरामर्शेनविधिबंधवर्जितत्वेनकामतएवतस्यचरणंकामचारइतिजैमिनिर्मन्यते ॥ नचनिषिद्धंकर्मकर्तव्यमेवेतिचोदना ॥ ब्राह्मणोनहंतव्यइत्याद्यपवादश्च ॥ १८ ॥

नत्वेच्छयैवचरणादितिजैमिनिराचार्योमन्यतइतिभावः ॥ किमर्थंसर्वसत्प्रवृत्तौकामचरणंनियमेनात्रोक्तमित्युच्यते ॥ निषिद्धप्रवृत्तिरप्यत्रोक्ताकिंनस्यादितिचेत् ॥ किंनिषिद्धंज्ञानिनाकर्तव्यमितिस्फुटविधिसद्भावादेतदुच्यतेनिषेधाभावाद्वा ॥ आद्यंपराचष्टे ॥ नचेति ॥ द्वितीयंपराह ॥ ब्राह्मणइति ॥ अयंच सामान्यनिषेधोज्ञानिष्वपिवर्तते ॥ १८ ॥

एवमस्यवाक्यस्यजैमिनिमतानुसारेणासदाचारविषयत्वमेवोक्त्वायत्स्तुतयेऽनुमतिर्वेत्युक्तंतदेवप्रतिपादय त्सूत्रमुपन्यस्यव्याचष्टे ॥ अनुष्ठेयमिति ॥ केनस्यादितियथेष्टाचारेविधिर्नभवति नापिसर्वस्यकर्तव्यता विधिःकिंतुश्रुत्याद्युक्तानामनुष्ठेयानांमध्येस्वेच्छयाकेषांचिच्चरणंकेषांचिदचरणमित्यनुज्ञानमेवकामचा रश्रुत्यर्थइतिभगवान्बादरायणोमन्यतइतिभावः ॥ कामेनसर्वचरणमेवार्थःकिंनस्यादित्यतआह ॥ केने ति ॥ अनुष्ठेयानांमध्यएवायंकामचारोनसर्वेषांकेनापिप्रकारेणप्रवृत्तावपिज्ञानिनःसाम्योक्तेः ॥ साम्यो

अनुष्ठेयानांमध्यएवकामतश्चरणंकामतोनिवृत्तिरितिबादरायणोमन्यते ॥ केनस्याद्येन

॥ ॐ अनुष्ठेयंबादरायणःसाम्यश्रुतेः ॐ ॥ १९ ॥

स्यात्तेनेदृशएवेतिसाम्यश्रुतेः ॥ यस्त्वात्मरतिरेवस्यादात्मतृप्तश्चमानवः ॥ आत्मन्येवच संतुष्टस्तस्यकार्यंनविद्यतइतिभगवद्वचनाच्च ॥ १९ ॥

क्तिश्चोक्तकामचरणएवसम्यक्संबध्यतेप्राप्तिसद्भावात् ॥ सर्वाचरणपक्षेतुसंभवमात्रज्ञापनंस्यात् ॥ संभवज्ज्ञापनादप्यसंभवनिवृत्तेर्ज्यायस्त्वादितिभावः ॥ सत्यमस्मिन्पक्षेसाम्योक्तिःसम्यक्संबध्यतइतितथापिनयुज्यते ॥ कर्तव्यपरित्यागेसाम्यायोगात् ॥ अतोऽमुख्यस्यापियोजनासाध्वीत्यतआह ॥ यस्त्विति ॥ ज्ञानिनांकार्याभावोक्तेर्नतत्परित्यागेसाम्यायोगइतिभावः ॥ आत्मरतिःपरमात्मदर्शननिमित्तसुख

माप्तः ॥ आत्मतृप्तः परमात्मप्रसादेनविषयेष्वलंबुद्धिमाप्तः ॥ तत्कृतः ॥ परमात्मनिसंतोषवत्त्वात्तद्दर्शनादि निमित्तसुखवत्त्वादितिभावः॥ एवंकेनस्यादितिवाक्यस्ययथेष्टाचरणविधित्वाभावमभ्युपेत्यार्थद्वयमुक्तम् ॥१९॥ अथायंस्वेच्छाचरणविधिर्वाभवतीत्यर्थप्रतिपादकंसूत्रंपठित्वाव्याचष्टे ॥ विधिर्वेति ॥ विधिर्यथेष्टाचरणविधिरित्यर्थः ॥ नज्ञानिनांस्वेच्छाचरणविधिर्युक्तोऽज्ञानिनामपितथात्वप्रसंगादित्यतआह ॥ य

केनस्याद्येनस्यादितिविधिर्वायथावेदधारणंत्रैवर्णिकानांविहितंनान्येषामेवंस्वमतानुसा रिणीप्रवृत्तिर्ज्ञानिनांविहिता ॥ नतत्राधर्मशंकाकार्या ॥ नान्येषामितिवा ॥ स्वेच्छयैवप्र

॥ ॐ विधिर्वाधारणवत् ॐ ॥ २० ॥

वृत्तिस्तुब्रह्मणोविधिचोदिता॥ नाशंक्यंतन्मतंक्कापिविष्णोःप्रत्यक्षचोदना ॥ इतरेषांनविहि तास्वेच्छावृत्तिःकथंचनेतिब्राह्मे ॥ २० ॥

थेति ॥ विहितानान्येषामित्यन्वयः ॥ उक्तस्यैवविवृतत्वात्पुनर्वाशब्दः ॥ नायंयथेष्टाचरणविधिःसंभवति ॥ अचोदनेत्युक्तविरोधात् ॥ अधर्मकरणस्यापिसंभवादित्यतआह ॥ नतत्रेति ॥ कुतोनतत्राधर्मशंकाकार्येत्यतआह ॥ स्वेच्छयेति ॥ अत्रब्रह्मणइत्युक्तेपिज्ञानिनामितिज्ञातव्यंविषयविभागस्यवक्ष्यमाणत्वात् ॥ चोदनायतइतिशेषः ॥ २० ॥

उक्तमाक्षिप्यसमादधत्सूत्रमुपन्यस्याक्षेपांशंतावद्याचष्टे ॥ स्तुतिमात्रमिति ॥ यदुक्तंकेनस्यादितिस्वेच्छा
चरणंज्ञानिनांविधीयतइति॥ मैवम्॥ किंतुपूर्वोक्तस्तुतिरेव ॥ कुतः॥ज्ञानिभिरपिसंध्यामुपासीतेत्यादिसर्वज
नसाधारणविधिस्वीकारात् ॥ स्वेच्छाचरणविधौतद्योगादितिभावः॥परिहारांशंव्याचष्टे ॥ नेति ॥ ज्ञानि
नांस्वेच्छाचरणविधिर्नास्तिकिंतुस्तुतिमात्रमेतदितिनयुक्तम् ॥ ज्ञानिनांस्वेच्छाचरणविध्यभावेनस्तुतिवि

स्तुतिमात्रमेवस्वेच्छाचरणंनविधिस्तैरपिसामान्यविधिस्वीकारादितिचेन्न ॥ अपूर्वत्वा
त्परवशत्वात् ॥ सर्वविध्यतिक्रमेणस्तुतिमात्रविषयत्वंपरब्रह्मणएवहि ॥ विधीनांविष

## ॥ ॐस्तुतिमात्रमुपादानादितिचेन्नापूर्वत्वात् ॐ ॥ २१ ॥

यास्त्वन्येब्रह्मणःस्वेच्छयाकृतौ ॥ परस्यब्रह्मणोह्येवसर्वविध्यतिदूरतेतिब्रह्मतर्के ॥ २१ ॥

षयत्वेसर्वविध्यतिदूरत्वेनस्तुतिमात्रविषयत्वप्रसंगात् ॥ नचतद्युक्तंपरमात्माधीनत्वादितिभावः ॥ परमा
त्माधीनत्वेपिसर्वविध्यतिदूरत्वेनस्तुतिमात्रविषयत्वंज्ञानिनांकिंनस्यादित्यतआह ॥ सर्वेति ॥ ज्ञानिनांसा
मान्यविधिसद्भावात्स्वेच्छाविध्यभावेपिनसर्वविध्यतिदूरत्वमित्याशंकांपरिहर्तुमुक्तार्थेस्मृतिंचाह ॥ विधी
नामिति ॥ २१ ॥

ननुज्ञानिनांस्वेच्छाचरणविधेःस्फुटप्रमाणसिद्धत्वेभवेदेतद्वाक्यंतदर्थं तदेवकुतइत्याशंकांपरिहरत्सूत्रमुप
न्यस्यतत्सूचितश्रुतिमेवोदाहरति ॥ भावेति ॥ भाःइच्छायाम् ॥ अतीतसूत्रेस्वेच्छाचरणविधेरर्थसिद्ध
त्वाच्चशब्दः ॥२२॥ उक्तमाक्षिप्यसमादधत्सूत्रंपठित्वाऽऽक्षेपांशंतावद्व्याचष्टे ॥ पारिप्लवार्थाइति ॥ प्रथमं
जैमिनिमतानुसारेणज्ञानिभिःसमस्तंकार्यमितिप्रातरुत्थायेत्यादिविधिवाक्यान्यनुसृत्योक्तम् ॥ अथय

यथाविधानमपरेविधिर्भावेप्रजापतेः ॥ ब्रह्मणःपरमस्यैवसर्वविध्यातिदूरतेतिचतुरश्रुतौ ॥ २२ ॥
केनस्याद्येनस्यादित्याद्यःस्थिरत्वनिवृत्त्यर्थाइतिचेन्न ॥ त्रेधाहिज्ञानिनोविधिर्नियताअनियताः

**॥ॐ भावशब्दाच्च ॐ॥२२॥ ॐ पारिप्लवार्थाइतिचेन्नविशेषितत्वात् ॐ॥२३॥**

स्वेच्छानियताइति ॥ विधिनियतामनुष्याअनियताहिदेवाः ॥ ब्रह्मैवस्वेच्छानियतइतिगोपब
नश्रुतौविशेषितत्वात् ॥ २३ ॥

स्वात्मरतिरित्याद्यनुसारेणस्वेच्छाचरणमनुज्ञातम्॥पुनश्चयथाविधानमित्याद्यनुसारेणस्वेच्छाचरणविधि
रुक्तः ॥ त्रयंचकेनस्यादित्याद्यर्थतयोक्तम्॥एवंसतिकेनस्यादित्यादिव्यपदेशानयथावस्तुबोधकाभवंति॥
प्रकारत्रयप्रतिपादकवाक्यानांपरस्परविरुद्धत्वात् ॥ वस्तुनिविकल्पासंभवादितिभावः ॥ परिहारांशंव्या ॥ १४॥
चष्टे ॥ नेति ॥ अनियताअनुष्ठेयानांमध्येकामचारानुज्ञावंतः ॥ २३ ॥

ज्ञानिनामनेकप्रकारत्वेपिकिमासीदित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ तथाचेति ॥ एवंज्ञानिनांत्रैवि

ध्येसिद्धेप्रातरुत्थायेत्यादिविधिवाक्यानांयस्त्वात्मरतिरितिस्वेच्छाचरणानुज्ञावाक्यानांयथाविधानमिति

स्वेच्छाचरणविधिवाक्यानामविरोधोभवतिभिन्नविषयत्वसंभवात् ॥ तथाचकेनस्यादितिवाक्यस्यापि

तदनुसारेणास्थिरत्वाभावइतिभावः ॥ अनेनजैमिनिमतंमानुषविषयंद्वितीयंदेवताविषयंतृतीयंहिरण्यगर्भ

एवंसतिविधिवाक्यानांस्वेच्छाप्रवृत्तिवाक्यानांचसंबंधोभवति ॥ २४ ॥ अतएवज्ञानस्यमोक्षदानेनाग्नि

॥ ॐ तथाचैकवाक्योपबंधात् ॐ ॥ २४ ॥

॥ ॐ अतएवचाग्नींधनाद्यनपेक्षा ॐ ॥ २५ ॥

होत्राद्यपेक्षा ॥ ब्रह्मतर्कंच ॥ येषांज्ञानंसमुत्पन्नंतेषांमोक्षोविनिश्चितः ॥ शुभकर्मभिराधिक्यंविपरीते

विपर्ययः॥स्वेच्छानुवृत्त्यैवभवेद्ब्रह्मणःप्रायशस्तथा ॥ देवानामपिसर्वेषांविशेषादुत्तरोत्तरमिति ॥२५॥

विषयमित्युक्तंभवति ॥ नचदेवतानांस्वेच्छाचरणेविध्यभावप्राप्तेरुक्तमयुक्तम् ॥प्रायस्तेषांस्वेच्छाचरणवि

धिसद्भावात् ॥ स्वेच्छाचरणेऽनुज्ञामात्रत्वाच्चेति॥२४॥ एवंज्ञानिनांश्रुतिबलेनसदसत्प्रवृत्त्योरविशेषःपरिहृ

तः॥तत्रयदुक्तंज्ञानिनांसदसत्प्रवृत्त्योर्विशेषेज्ञानस्यासत्प्रवृत्तिकुंठितशक्तेर्नमोक्षसाधनत्वंस्यात् ॥ मोक्षसा

धनेचसत्प्रवृत्तिसापेक्षत्वंस्यादित्यत्राद्यंचोद्यंपरिहृतम्॥द्वितीयपरिहारायसूत्रंपठित्वाव्याचष्टे ॥ अतएवे

ति॥ज्ञानिनःसदसत्प्रवृत्तिभ्यांविशेषसद्भावेपिनाग्निहोत्रादिसत्प्रवृत्तिसापेक्षत्वंज्ञानस्यमोक्षसाधनत्वे॥कुतः॥
काम चाराणामपिमोक्षस्यपठितत्वादेवेतिभावः॥ ननुयदिसत्प्रवृत्त्यानमोक्षोनासत्प्रवृत्त्यातत्प्रतिबंधःकथं
तर्हिताभ्यांज्ञानिनोविशेषइत्यतआह ॥ ब्रह्मतर्केचेति ॥ २५ ॥ अस्तुज्ञानिनःसत्प्रवृत्त्याविशेषान्मोक्षप्रा
प्तिःकिमाधिक्येन॥कामचाराणांमोक्षश्रुतिस्तुनबाधिका ॥ असत्प्रवृत्तेरप्रतिबंधकत्वेपिसत्प्रवृत्तेर्मोक्षहेतु
सर्वधर्मापेक्षाचज्ञानस्योत्पत्तौ ॥ विविदिषंतियज्ञेनदानेनतपसानाश

॥ ॐसर्वापेक्षाचयज्ञादिश्रुतेरश्ववत् ॐ ॥ २६ ॥

केनेतिश्रुतेः ॥ यथागतिनिष्पत्त्यर्थमश्वादयोऽपेक्ष्यंतेननिष्पन्नगतेर्या
मादिप्राप्तौ ॥ २६ ॥

त्वोपपत्तेरित्याशंकांपरिहरन्सूत्रमुपन्यस्यव्याचष्टे ॥ सर्वेति ॥ नज्ञानस्यमोक्षसाधनेसत्प्रवृत्त्यपेक्षा ॥ सर्व
सत्प्रवृत्तीनांज्ञानोत्पत्त्यर्थमपेक्षितत्वात् ॥ विविदिषंतीतिश्रुतेरितिभावः ॥ अनाशकेनाऽनशनेन ॥ननुसत्क
र्मणोज्ञानार्थस्यापिमोक्षार्थमपेक्षितत्वंकिंनस्यादित्यतआह ॥ यथेति ॥ यथागतिसाधनाश्वादयोनि
ष्पन्नायांगतौगतिसाध्यफलेनापेक्ष्यंतेतथाकर्माणिज्ञानसाधनानिज्ञानेनिष्पन्नेनतत्फलार्थमपेक्षितानीति
भावः ॥ २६ ॥

यदिसदसत्प्रवृत्तिभ्यांमोक्षतदभावाभावः॥नतर्हिताभ्यांविशेषोज्ञानिनइतिनेतेनसर्त्स्वोकार्यमसत्त्याज्यम्॥
नचमोक्षाधिक्यादिविशेषः॥ ज्ञानादेवतदुपपत्तेरित्याशंकांपरिहरन्सूत्रमुपन्यस्यव्याचष्टे ॥ शमेति ॥ य
द्यप्यस्तिज्ञानिनोमोक्षस्तथापिज्ञानिनःशमदमादिसत्प्रवृत्त्याभवितव्यम्॥नथाविधिसद्भावादित्यर्थः ॥ ज्ञा

यद्यपिज्ञानेनैवमोक्षोनियतस्तथापिज्ञानीशमदमाद्युपेतःस्यात्॥ आचार्याद्विद्यामवाप्यै
तमात्मानमभिपश्यन्शांतोभवेद्दांतोभवेदनुकूलोभवेदाचार्यंपरिचरेत्परिचरेदाचार्यमिति
माठरश्रुतौज्ञानिनोपितद्विधेः॥ब्राह्मींचावतउपनिषदमब्रूमेतितस्यैतपोदमःकर्मेतिप्रतिष्ठावे

**॥ॐशमदमाद्युपेतःस्यात्तथापितुतद्विधेस्तदंगतयातेषामवश्यानुष्ठेयत्वात्ॐ२७॥**

दाःसर्वांगानिसत्यमायतनंयोवाएतामुपनिषदंवेदेतिज्ञानांगतयातेषामवश्यानुष्ठेयत्वात् ॥
यस्यज्ञानंतस्यमोक्षइतिमात्रविचारणा ॥ तस्यशांत्यादयोऽगानितस्मात्तेषामनुष्ठितिः ॥

नादेवमोक्षसिद्धेर्व्यर्थोविधिरित्यतआह॥ब्राह्मीमिति ॥ नज्ञानिनःशमदमादिवैयर्थ्यम् ॥ ज्ञानप्रतिष्ठापकत्वे
नतेषामवश्यानुष्ठेयत्वादितिभावः ॥ तपआदिप्रतिष्ठेति ॥ तद्वत्सुविद्याप्रतितिष्ठतीत्यर्थः॥ सत्यंमीमांसा॥
आयतनमुत्पत्तिकारणम्॥ ननुज्ञानादेवमोक्षसिद्धौकिंप्रतिष्ठयेत्यतआह ॥ यस्येति ॥ ज्ञानमात्रेणमो

क्षसिद्धावपिशमाद्यंगयुक्तेनसंपूर्णोभवतिनान्यथाऽतस्तदनुष्ठेयमितिभावः ॥ एतत्सूत्रएवंकिनोक्तमित्यत
आह ॥ तुशब्दइति ॥ २७ ॥ ननुयदिसदसत्प्रवृत्तिभ्यामस्तिज्ञानिनोविशेषस्तर्हिकथंतस्यनिषिद्धान्नभो
जनेपिक्लेशाभावोक्तिःसंभवति ॥ अतोनविशेषइत्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ सर्वेति ॥ नैत
च्छ्रुतिबलेनज्ञानिनोऽसत्प्रवृत्त्याविशेषाभावोवक्तव्यः ॥ एतच्छ्रुतेःप्राणात्ययविषयत्वात् ॥ यदिप्राणात्य
यकालेज्ञानीनिषिद्धंभुंजीततर्हिनतेनतस्यविशेषइतिसाधारणश्रुतेःकुतःप्राणात्ययविषयत्वकल्पनम् ॥

अवश्यकरणीयास्यादन्यथाऽल्पफलंभवेदितिचाग्रेये ॥ तुशब्दःपूर्णफलार्थत्वंसूचयति
॥२७॥ यदिहवाअप्येवंविन्निखिलंभक्षयीतैवमेवसभवतीतिसर्वान्नानुमतिश्चप्राणात्यय

## ॥ ॐ सर्वान्नानुमतिश्चप्राणात्ययेतद्दर्शनात् ॐ ॥ २८ ॥

विषयानवाऽध्यजीविष्यामिमानखादन्नितिहोवाचकामोमउदपानमितिदर्शनात् ॥२८॥

लिंगदर्शनादेव ॥ चाक्रायणेनेभ्योच्छिष्टकुल्माषान्खादतोच्छिष्टजलपानेप्रार्थितेनोक्तमुच्छिष्टंवैमेपीतं
स्यादिति॥ तत्रेभ्योबभाषे॥ नस्विदेतेपिकुल्माषाउच्छिष्टाइति ॥ तत्रमुनिरुवाचयदीमान्कुल्माषान्नाभक्ष
यंतर्हिनमेजीवनंभवति ॥ अतःप्राणात्ययेदोषाभावात्तेभक्षिताः ॥ जलपानंतुममेच्छाधीनमिदानीमपि
वर्तते॥ तथोच्छिष्टस्वीकारेदोषप्राप्तेर्नैतत्पिबामीति ॥अतोनकर्तव्यमेवज्ञानिनापिनिषिद्धमितिभावः ॥२८

किंच किंज्ञानिनांनिषिद्धाकरणेबाधकसद्भावाद्वातदुच्यतेअथकरणेप्रमाणाभावाद्वुतनिषेधकप्रमाणाभा
वादथकरणेबाधकाभावाद्वा ॥ आद्यंपराकुर्वत्सूत्रंपठित्वास्मृत्यैवव्याचष्टे ॥ अबाधाच्चेति ॥ २९ ॥
नद्वितीयः॥असिद्धत्वात् ॥ निषेधकस्मृतिसद्भावान्नतृतीयोपीत्यर्थप्रतिपादकंसूत्रंपठित्वातांस्मृतिमुदाहर

अन्यायचरणाभावेनहिज्ञानस्यबाधनम् ॥ अतोविद्वानपिन्याय्यंवर्तेतोत्कर्षसिद्धयइति
ब्रह्मतर्के ॥ २९ ॥ अतीतानागतज्ञानीत्रैलोक्योद्धरणक्षमः ॥ एतादृशोपिनाचारंश्रौतं

**॥ॐ अबाधाच्च ॐ॥२९॥ॐ अपिस्मर्यते ॐ॥३०॥ॐ शब्दश्चातोकामचारे ॐ॥३१**

स्मार्तंपरित्यजेदितिहरिवंशेषु ॥ ३० ॥ सयएतदेवंविदेवंमन्वानएवंपश्यन्नकामचरितंचरे
न्नकामंभक्षयीतनकाममनुवर्तेतेतिकौंडिन्यश्रुतौ ॥ अतइत्यल्पफलत्वंसूचयति ॥ नानिपि
द्धानिवर्तेतपूर्णज्ञानफलेच्छयेतिपाद्मे ॥ ३१ ॥

ति ॥ अपीति ॥ ३० ॥ नकेवलंस्मृतिरेवनिषेधिकाश्रुतिश्चास्तीत्यर्थप्रतिपादकसूत्रमुपन्यस्यतांश्रुतिमुदा
हरति ॥ शब्दश्चेति ॥ चरतिर्गतिः ॥ चतुर्थंनिराकर्तुमाह ॥ अतइति ॥ तदेवकुतइत्यतआह॥ नेति॥३१॥

नन्वेवंनिषिद्धाचरणेफलह्रासादिबाधकसद्भावादस्तुज्ञानिनोनिषिद्धवर्जनंनतुसत्कर्मकरणम् ॥ ह्रासकारणा
भावेज्ञानादेवपूर्णफलसिद्धेरित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ विहितत्वाच्चेति ॥ सुमियतंवर्णा
श्रमोचितम ॥ सूत्रेऽनुक्तोवर्णधर्मःकिमर्थंभाष्यतइत्यतआह ॥ अपीति ॥ ३२ ॥ विहितत्वेपिनसत्कर्म
ज्ञानिनाकार्यम् ॥ फलाभावात् ॥ संपूर्णफलस्यह्रासकारणाभावेस्वतएवसिद्धेः ॥ अन्यथासमुच्चयवा

नकेवलंनिषिद्धाकरणेनपूर्यते ॥ कर्तव्यंचवर्णाश्रमविहितंकर्म ॥ पश्यन्नपीममात्मानंकुर्यात्कर्मा
विचारयन् ॥ यदात्मनःसुनियतमानंदोत्कर्षमाप्नुयादितिकौषारवश्रुतौविहितत्वाच्च ॥ अपिशब्दो

**॥ ॐ विहितत्वाच्चाश्रमकर्मापि ॐ ॥ ३२ ॥ ॐ सहकारित्वेनच ॐ ॥ ३३ ॥**

वर्णधर्मसमुच्चयार्थः ॥ ३२ ॥ यथाराज्ञःसहकार्येवमंत्रीतथाप्यृतेतंक्षितिपःकार्यमृच्छेत् ॥ एवं
ज्ञानंकर्मविनापिकार्यंसहायभूतंनविचारःकुतश्चिदितिकमठश्रुतौसहकारित्वोक्तेश्च ॥

दापत्तेरित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ सहकारित्वेनेति ॥ कर्तव्यमेवज्ञानिनासत्कर्मसंपूर्णफ
लसिद्धौकर्मणोज्ञानसहकारित्वेनोक्तत्वात् ॥ नचैवंसमुच्चयवादापत्तिः ॥ विनापिकर्मज्ञानमात्रेणमोक्षस्व
रूपसिद्धेरितिभावः ॥ यद्यपिक्षितिपोमंत्रिणमृतेकार्यंप्राप्नोतितथापिमंत्रीसहकारीसंपूर्णकार्यसिद्धेः ॥

एवंयद्यपिज्ञानंकर्मविनापिमोक्षकार्यंसाधयेत्तथापिकर्मसहायभूतंफलाधिक्यहेतुत्वादित्यर्थः ॥ अत्र स्मृतिचाह ॥ ज्ञानादिति ॥ यदिसंपूर्णानंदप्राप्तौकर्मसहकृतंज्ञानंसाधनंतर्हिसमुच्चयवादापत्तिर्दुर्वारा ॥ संपूर्णानंदप्राप्तिमंतरेणमोक्षस्वरूपस्यज्ञानमात्रसाध्यस्यपृथगभावादित्यतआह ॥ सर्वेति ॥ सर्वदुःखनिवृ

ज्ञानान्मोक्षोभवत्येवसर्वाकार्यकृतोऽपितु ॥ आनंदोक्कसतेऽकार्याच्छुभं
कृत्वातुवर्धतइतिब्रह्मांडे ॥ सर्वदुःखनिवृत्तिश्चज्ञानिनोनिश्चितैवहि ॥ उ
पासयाकर्मभिश्चभक्त्याचानंदचित्रतेतिबृहत्तंत्रे ॥ धर्मस्वरूपचित्रत्वा
द्योयोदेवमनोगतः ॥ सएवधर्मोविज्ञेयोनह्येतेलोकसंमताइतिचपाद्मे
॥ ३३ ॥ अ० ४ ॥

त्तिर्ज्ञानसाध्योमोक्षइतिभावः ॥ यदुक्तमसत्प्रवृत्त्याऽऽनंदह्रासइतिनतद्युक्तम् ॥ ब्रह्मादीनांपुत्रिकाकामाद्य सत्प्रवृत्त्याह्रासाभावादित्यतआह ॥ धर्मेति ॥ अन्येषामेवमभावात्तेषामेवायंविशेषःकथमित्यतआह ॥ नहीति ॥ अतोज्ञानिनांसदसत्प्रवृत्तिभ्यांविशेषसद्भावेपिमोक्षोनियतएवेतिसिद्धम् ॥ ३३ ॥ अ० ४ ॥

अत्रभगवत्प्राप्तिसाधनज्ञानस्याधिकारिमात्रप्राप्यत्वमहिम्नोवर्णनादस्तिशास्त्रादिसंगतिः ॥ अनधिकारि प्राप्यत्वेमुक्त्ययोग्यानामपिमोक्षप्रसंगात्समर्थनीयमेतत् ॥ प्रकृतंज्ञानमत्रविषयः ॥ किमधिकारिभिरेवा प्यतउतानधिकारिभिरपीतिसंदेहः ॥ उभयथापिलोकदर्शनंसंदेहबीजम् ॥ अनधिकारिभिरपिज्ञानमाप्य तइतिपूर्वःपक्षः ॥ अधिकाराभावेपिमहाप्रयत्नेनप्राप्तुंशक्यत्वात् ॥ वेदानधिकारिणामपिप्रयत्नेनतत्प्राप्ति

सर्वप्रकारेणोत्साहेपियेज्ञानयोग्यास्तएवज्ञानंप्राप्नुवंतिनान्ये ॥ यआ

त्मापहतपाप्माविजरोविमृत्युर्विशोकोऽविजिघत्सोपिपासःसत्यकामःस

## ॥ ॐ सर्वथाऽपितुतएवोभयलिंगात् ॐ ॥ ३४ ॥

त्यसंकल्पःसोन्वेष्टव्यःसविजिज्ञासितव्यइतिश्रुत्याआचार्योपदेशसाम्ये

पिविरोचनोविपरीतज्ञानमापेंद्रःसम्यग्ज्ञानमित्युभयविधलिंगात् ॥ ३४ ॥

दर्शनात् ॥ अतोऽयोग्यैरपिज्ञानस्यप्राप्तुंशक्यत्वादयोग्यानामपिमोक्षइति ॥ सिद्धांतयत्सूत्रमुपन्यस्य व्याचष्टे ॥ सर्वथाऽपीति ॥ देशकालगुरूपसत्तिश्रवणाद्यनेकोत्साहेपियोग्यानामेवज्ञानप्राप्तिर्भवतिनायो ग्यानाम् ॥ कुतः ॥ यआत्मेतिश्रुतिरूपेणेंद्रविरोचनयोःप्रजापतेराचार्यस्योपदेशसाम्येपियोग्यत्वादिं द्रएवसम्यग्ज्ञानंप्राप्तोनत्वयोग्योविरोचनःप्रत्युतविपरीतज्ञानमेवापायमात्मापहतपाप्मत्वादिलक्षणःस

जिज्ञास्यइतिप्रजापतिनोपदिष्टेकोऽसावितिताभ्यांपृष्टेनप्रजापतिनोक्तम् ॥ यएऽषोऽतरक्षिणिपुरुषोदृश्यतेएषआत्मेति ॥ तच्छुत्वेंद्रेणापहतपाप्मत्वादिलक्षणोऽक्षिस्थोहरिरात्मेतिज्ञानत्वात् ॥ विरोचनेनतुचक्षुषिप्रतीयमानप्रतिबिंबएवापहतपाप्मत्वादिलक्षणात्मेतिकल्पितत्वादितिभावः ॥ अविजिघत्सोपिपासइतिबुभुक्षादिनापीडाभावउच्यते ॥ नन्वस्यघटादेरिवान्वेषणंयुज्यतइत्यतःसविजिज्ञासितव्यइति ॥३४॥

दैवीमेवसंपत्तिंदेवाअभिगच्छंत्यासुरीमेवचासुरानैतयोरभिभवःकदा

## ॥ ॐ अनभिभवंचदर्शयति ॐ ॥ ३५ ॥

चित्स्वभावएवव्यवतिष्ठतइतिस्वभावानभिभवंचदर्शयति ॥ ३५ ॥

ननुमहाप्रयत्नेनायोग्यतायाअभिभवितुंशक्यत्वादयोग्यानामपिज्ञानप्राप्तिःकिंनस्यात् ॥ दृष्टंहिविश्वामित्रस्यमहताप्रयत्नेनविप्रत्वमित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ अनभिभवंचेति ॥ भवेदयोग्यताभिभवेनायोग्यानामपिज्ञानप्राप्तिः ॥ यदिक्षत्रियत्वादिवदयोग्यत्वमस्वाभाविकंस्यात् ॥ नैतदस्ति ॥ तस्यस्वभावत्वात् ॥ स्वभावत्वेप्यभिभवःकिंनस्यादितिनवाच्यम् ॥ स्वभावानभिभवस्यश्रुतिसिद्धत्वादितिभावः ॥ संपत्तिस्वभावम् ॥ ३५ ॥

अस्त्वत्यंतायोग्यानामसुरादीनांज्ञानप्राप्त्ययोगोदेवादीनांचमिथ्याज्ञानाप्राप्तिरतिदार्ढ्येनाभिभवायोगात्॥ मध्यममानुषाणांतुज्ञानादिप्राप्तिर्भवतु ॥ तत्स्वभावाभिभवस्यकर्तुंशक्यत्वादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ अंतरेति ॥ मानवानांसम्यग्विपरीतज्ञानयोरंतरास्थितत्वमेवमिश्रज्ञानित्वमेवनतुकेवलज्ञानादिप्राप्तिस्तेषामपिस्वभावाभिभवोनास्ति ॥ कुतः ॥ तेषांमिश्रज्ञानएवविशेषेणदार्ढ्यदृष्टेः ॥ अति

सम्यग्ज्ञानविपरीतज्ञानयोरंतरास्थितानामपिदेवासुरभावयोर्दार्ढ्यदृष्टेः ॥ ३६ ॥ असुराआसुरेणैवस्वभावेनचकर्मणा ॥ ज्ञानेनविपरीतेनतमोयांतिविनिश्चयात् ॥ देवादैव

**॥ॐ अंतराचापितुतद्दृष्टेः ॐ॥ ३६ ॥ॐ अपिस्मर्यते ॐ॥ ३७॥**

स्वभावेनकर्मणाचाप्यसंशयम् ॥ सम्यग्ज्ञानेनपरमांगतिंगच्छंतिवैष्णवीम् ॥ नानयोरन्यथाभावःकदाचित्क्वापिविद्यते ॥ मानुषामिश्रमतयोविमिश्रगतयोपिचेतिस्कांदे ॥ ३७॥

दृढस्यचाभिभवायोगादितिभावः ॥ ३६ ॥ ननुदेवदानवमानवानांतत्तत्स्वभावत्वेभवेदभिभवः ॥ तदेव कुतः ॥ तादृशस्वभावत्वेचतथाफलेनभाव्यम् ॥ तदपिकुतइत्याशंकांस्मृत्यापरिहरत्सूत्रमुपन्यस्यतांस्मृतिमुदाहरति ॥ अपीति ॥ स्वभावेनेतिज्ञानकर्मणोर्विशेषणम् ॥ ज्ञानादेर्दैवत्वादिकंचसर्वभूतेषुयेनैकामित्यादिनाज्ञातव्यम् ॥ ३७ ॥

हेत्वंतरेणदेवानामेवसम्यग्ज्ञानफलेनान्येषामित्यर्थप्रतिपादकंसूत्रमुपन्यस्यव्याचष्टे ॥ विशेषेति ॥
ज्ञानादितावद्भगवत्प्रसादाधीनम् ॥ अज्ञानांज्ञानदोविष्णुरित्यादेः ॥ भगवदनुग्रहश्चदेवेष्वेवविशेषतोना
न्येषुश्रुतिसिद्धोऽतस्तेषामेवसम्यग्ज्ञानादिनान्येषामितिभावः ॥ अध्यवसायांतगामीपरमेश्वरःसर्वानुग्रान्

श्रण्वेवीरउग्रमुग्रंदमायन्नन्यमन्यमतिनेनीयमानः ॥ एधमानद्विळुभय
स्यज्ञानस्यराजाचोष्कूयतेविशइंद्रोमनुष्यानितिविशेषानुग्रहंचदर्शय

## ॥ ॐ विशेषानुग्रहंच ॐ ॥ ३८ ॥

तिदेवेषुपरमेश्वरस्य ॥ असुरान्दमयन्विष्णुःस्वपदंचसुरान्नयन् ॥ पुनः
पुनर्मानुषांस्तुस्रतावावर्तयत्यसाविति भविष्यत्पर्वणि ॥ ३८ ॥

दैत्यान्दमयंस्तद्भिरुद्धान्देवान्संसारमतिक्रम्यस्वपदंनयन्वेद्यादिपुश्रूयतेसएवमनुष्यप्रजास्संसारएवावर्तय
तीत्यर्थः ॥ इंद्रपदव्याख्यानंपरमेश्वरस्येति ॥ श्रुत्यर्थनिश्चायिकांस्मृतिंचाह ॥ असुरानिति ॥ ३८ ॥

यदुक्तंनदैत्यानांतत्स्वभावाभिभवेनदेवत्वप्राप्तिरितितदेवयुक्त्यासमर्थयत्सूत्रंपठित्वाव्याचष्टे ॥ अतइति ॥
यद्यसुराणांस्वभावाभिभवेनदेवत्वप्राप्तिस्तर्हिकदाचित्तेषांदेवभागादूनतास्यात् ॥ नचैवम् ॥ अतोदे



देवभागादसुरभागएवबहुलः ॥ तस्मान्नजनतामियादितिलिंगात् ॥ च

## ॥ ॐ अतस्त्वितरज्यायोलिंगाच्च ॐ ॥ ३१ ॥

शब्दात्ततःकनीयसएवदेवाज्यायसोअसुराइतिश्रुतेश्च ॥ असुराबहुला
यस्मातस्मान्नजनतामियादितिचब्राह्मे ॥ ३१ ॥

वभागादितरस्यासुरभागस्यैवज्यायस्त्वात् ॥ तदेवकुतः ॥ जनताऽप्रवेशोक्त्यन्यथानुपपत्तेःश्रुतेश्चेति
भावः ॥ ततस्तयोर्देवासुरभागयोःकनीयांसोज्यायांसश्चेत्यर्थः ॥ ननुजनताप्रवेशनिषेधोऽसुरबाहुल्यनि
मित्तएव ॥ कुतइतितत्राह ॥ असुराइति ॥ ३१ ॥

जैमिनिमतेनाप्येतमर्थंसमर्थयत्सूत्रंपठित्वाव्याचष्टे ॥ तद्भूतस्येति ॥ देवस्यैवदेवभावोऽसुरस्यैवासुरभावो
जैमिनेरपिसिद्धएव ॥नचात्रपुरुषार्थाद्यधिकरणवद्व्यवस्थितविकल्पोस्ति ॥ केनहेतुनाजैमिनेस्तत्सिद्धिः ॥
नियमादिश्रुतेरेवेतिभावः ॥ गतिजातिशब्दौस्वभावार्थौ ॥ रूपमितिसम्यग्ज्ञानादि॥देवासुराणांपरस्परविप

असुरजातेरेवासुरत्वंदेवजातेरेवदेवत्वंजैमिनेरपिसिद्धमेव॥ नासुरांदैवींनदेवाआसुरींनमनुष्यादैवीमासु
रींचगतिमीयुरात्मीयामेवजातिमनुभवंतीतिनियमश्रुतेः॥ नासुराणांदैवंरूपंनदेवानामासुरंनचोभयंमनु
ष्याणांयोयद्रूपःसतद्रूपोनिसर्गोंह्येषभवतीत्यतद्रूपत्वश्रुतेः ॥ तंभूतिरितिदेवाउपासांचक्रिरेतेबभूवुस्त

॥ ॐ तद्भूतस्यतुतद्भावोजैमिनेरपिनियमात्तद्रूपाभावेभ्यः ॐ ॥ ४० ॥

स्माद्धाप्येतर्हिसुप्तोभूर्भूरित्येवप्रश्वसत्यभूरित्यसुरास्तेहपराबभूवुरितिदेवासुराणांभावाभावश्रुतेश्च ॥
देवानांभूतिरित्येवमनोविष्णौस्वभावतः॥ असुराणामभूतिस्त्वेनैतन्नेयमतोन्यथा॥देवाःशापाभिभूतत्वा
त्प्रल्हादाद्याबभूविरे ॥ अतःसुगतिरेतेषांनान्यथाव्यत्ययोभवेदितिचाध्यात्मे ॥ ४० ॥ अ० ५ ॥
रीतोपासनफलनियमस्तंभूतिरित्यनेनोच्यते ॥ अन्यथासनस्यात् ॥ बभूवुर्भूतिमंतः ॥ सुप्तःसुप्तेषुस्थितोवा
युः ॥ ननुप्रल्हादादीनांदैत्यानामेवसम्यग्ज्ञानफलयोर्दर्शनात्कथमेतदित्यतउक्तार्थेस्मृतिंचाह ॥ देवाइति॥
नचैतावतादेवानामसुरत्वप्राप्तिः ॥ हेतुतःसोन्यथाभावोरक्ततास्फटिकेयथेतिवचनात् ॥ अतोभगवज्ज्ञान
स्ययोग्यैकसाध्यत्वाद्योग्यानामेवमोक्षइतिसिद्धम् ॥ ४० ॥ अ० ५ ॥

अत्रभगवत्प्राप्तिसाधनज्ञानस्यदेवादिपदाकांक्षाशून्यैरेवप्राप्यत्वमहिम्नोवर्णनादस्तिशास्त्रादिसंगतिः ॥ अ
न्यथायागाद्यतिशयासिद्धेरेतत्साध्यंदेवादिपुनियतंज्ञानंतदन्यैर्नप्राप्यमित्युक्तम् ॥ तत्संगतंदेवतापदंविष
यः ॥ किमन्यैःप्राप्यंनवेतिसंदेहः ॥ लोकदृष्टिरतीताधिकरणन्यायश्चसंदेहबीजम् ॥ देवतापदमन्य
प्राप्यमितिपूर्वःपक्षः ॥ स्वधर्मनिष्ठःशतजन्मभिःपुमान्विरिंचतामेतीत्यादेः ॥ देवत्वस्यस्वाभाविकत्वा
न्नान्यैस्तत्प्राप्यमितिचेन्न ॥ प्रयत्नसाध्यत्वश्रवणात्तस्यस्वभावत्वानुपपत्तेः ॥ यद्धिचेतनेपुचेतनत्वंत

नचपरमात्मैश्वर्यादिकमाकांक्ष्यम् ॥ ब्रह्मादीनामपिनाकांक्ष्यंकिमुपरस्येति

## ॥ ॐ नचाधिकारिकमपिपतनानुमानात्तदयोगात् ॐ ॥ ४१ ॥

सूचयितुमपिशब्दः ॥ चशब्दस्तुज्ञानार्थिनांपूर्वोक्तादित्थंभावांतरसूचकः ॥

देवस्वाभाविकंतच्चसर्वेषांसममेवेतिनकश्चिद्देवत्वादिःस्वभावः ॥ किंबहुना ॥ प्रयत्नेनभगवदैश्वर्यमपिप्रा
प्तुंशक्यतेकिमुदेवपदमित्यतोज्ञानमप्ययोग्यप्राप्यमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ नचेति ॥
यदुक्तंदेवतापदंभगवदैश्वर्यंचान्यैःप्राप्यमिति ॥ नतद्युक्तम् ॥ तदाकांक्षायाएवायोगेनतत्प्राप्तेर्दूरोत्सा
रितत्वादितिभावः ॥ सूत्रेब्रह्मादिपदानाकांक्षैवोच्यतेऽतःकथंनपरमात्मैश्वर्यादिकमाकांक्ष्यमितिभाष्यत ॥१०१॥
इत्यतआह ॥ ब्रह्मादीनामिति ॥ नन्वेतत्प्रतिपादनंनपादसंगतमित्यतआह ॥ चशब्दस्त्विति ॥ ननु

भगवदैश्वर्याद्याकांक्षायोगःकुतइतितत्राह ॥ अयोग्यमिति ॥ अत्रायंप्रयोगः ॥ ब्रह्मादिपदाकांक्षावा नूपतति ॥ अयोग्यारोहप्रयत्नवत्त्वात्॥अयोग्यवृक्षारोहप्रयत्नयुक्तवदिति ॥ इच्छायाअपिप्रयत्न विशेषत्वांगीकारान्नासिद्धिः ॥ नचजीवानांचैतन्यमेवनिजस्वभावइत्ययोग्यत्वविशेषणासिद्धिः ॥ देवासुरनरत्वाद्याजीवानांतुनिसर्गतइतिवचनात् ॥ प्रयत्नस्यस्वभावाभिव्यक्तिहेतुत्वान्निर्मूलानुमानंनमानमिति

अयोग्यमारोढुंप्रयतन्पतन्हिदृश्यते॥ एवमयोग्यस्यपरमात्मैश्वर्यस्यब्रह्मादिपदस्यचाकांक्षायांप
तनमनुमीयते ॥ नदेवपदमन्विच्छेत्कुतएवहरेर्गुणान् ॥ इच्छन्पततिपूर्वस्मादधस्ताद्यत्रनोत्थितिरि
तिब्रह्मांडे॥स्वकीयमिच्छमानंतुराजाद्याःपातयंतिहि ॥एवमेवसुराद्याश्चहरिश्चस्वपदेच्छुकमित्या
द्यनुमानरूपवाक्याच्च॥मायाभिरुत्सिसृप्सतइंद्रद्यामारुरुक्षतः॥अवदस्यूँरधूनुथाइतिश्रुतिः॥४१॥

तत्राह ॥ नेति ॥ यत्रपतितस्य ॥ नन्वयोग्यारोहप्रयत्नस्यपतनकारणत्वेपीच्छामात्ररूपस्यतददर्शनान्नतावन्मात्रंबाधकमित्यतइच्छायाअपिपातकारणत्वंस्मार्तानुमानेनदर्शयति ॥ स्वकीयमिति ॥ अयमत्रप्रयोगः ॥ विमतोदेवादिभिःपात्यते ॥ अशक्तत्वेसतितत्पदेच्छुत्वात् ॥ राजपदेच्छुवदिति॥ अत्रमूलभूतांश्रुतिंचाह ॥ मायाभिरिति ॥ हेपरमेश्वरत्वंकुविद्याभिरुत्तमत्वंप्राप्तुमिच्छतःस्वर्गमारोढुंचेच्छतोदस्यूनधेतमस्यवाक्षिपइत्यर्थः ॥ ४१ ॥

कैमुत्येनापिदेवतापदाकांक्षाऽयोगंसमर्थयत्सूत्रंपठित्वाव्याचष्टे।।उपेति।।यदामुनीनांदेवानामुपवर्तमानानां गंधर्वादीनामपिपदंनाकांक्ष्यंकिमुतदावाच्यंदेवपदंनाकांक्ष्यमिति ॥ ऋष्यादिपदाकांक्षाऽयोगएवकुतः ॥ श्रुतेरेवेतिभावः ॥ ऋषीनित्यार्षांनित्यादिज्ञेयम् ॥ मुनिपदस्यदृष्टांतत्वेनोक्तिःश्रुत्यनुसारेण ॥ सूत्रद्वयार्थं

उपदेवपदंचनाकांक्ष्यमित्येकेभावशमनवत् ॥ ऋषिपदवदेवतच्चोक्तमिद्रद्युम्नश्रुतौ ॥ यथाऋषीन्प्रजापतीन्नाकांक्षेदेवंगंधर्वान्नविद्याधरान्नसिद्धानिति ॥ बृहत्संहितायांच ॥नदेवानभिकांक्षेतकुतएवहरेर्गुणान् ॥ प्राजापत्यान्नचार्षांश्चगंधर्वादीनपिकचित् ॥ ऋष्यादिषुविशेषेतुदोषोनैवाविशेषितइतिविशेषदर्शनार्थमेकइत्युक्तम् ॥ ४२ ॥

## ॥ ॐ उपपूर्वमपीत्येकेभावशमनवत्तदुक्तम् ॐ ॥ ४२ ॥

स्मृतिंदर्शयंस्तच्छेषंप्रमाणीकृत्यैकइत्यस्याभिप्रायमाह ॥ बृहदिति ॥ अहंकश्चिदृषिःस्यामित्यविशेषाकांक्षायांनविरोधः॥ वसिष्ठःस्यांविश्वामित्रःस्यामितिविशेषाकांक्षायामस्त्येवदोषइतिदेवादिपदेभ्योमुन्यादिपदाकांक्षायांविशेषज्ञापनायैकइत्युक्तंनत्वेकस्मिन्नेवविषयेविप्रतिपत्तिसूचनार्थमन्यतरस्यानिर्धारित्वाद्वस्तुविकल्पासंभवाच्चेतिभावः ॥ ४२ ॥

यथादेवादिपदंनाकांक्ष्यमेवंज्ञानभक्त्यादिकमाकांक्ष्यंनवेतिसंदेहंपराकुर्वत्सूत्रंपठित्वाव्याचष्टे॥ बहिरिति॥ आकांक्षायामनाकांक्षायांचेत्यनियमसूचनम् ॥ ननुविहायकामान्यःसर्वानितिसर्वकामप्रहाणविधाना त्कथंशुभकामेनपतनमित्यतआह ॥ नानात्वमिति ॥ पुमानविरुद्धकामःस्यादेव ॥ नचाकामत्वविधिवि

देवर्षिगंधर्वादिपदेभ्योऽन्यत्रशुभविषयेआकांक्षायामनाकांक्षायांचनपतनम् ॥दे
वऋषिगंधर्वाणांपदाकांक्षीपतेद्ध्रुवम् ॥ अन्यत्रशुभमाकांक्षन्नपतेदविरोधतइति

## ॥ ॐ बहिस्तूभयथापिस्मृतेराचाराच्च ॐ ॥ ४३ ॥

स्मृतेः ॥ नानात्वमेवकामानांनाकामःक्वचद्दृश्यते॥ अतोऽविरुद्धकामस्यादकाम
स्तेनभण्यतइत्याचाराच्च ॥ ४२ ॥ अ० ६ ॥

रोधः ॥ अविरुद्धकामित्वेनाप्यकामोभण्यते॥ कुतः ॥ यतःकामानांनानात्वंविलक्षणत्वमतोऽविरुद्धत्वमे वयुज्यतेनत्वकामत्वमेवतादृशस्यादर्शनादित्यर्थः ॥ आचारवाचकंवाक्यमाचारः ॥ अतोब्रह्मादिपदस्यत द्योग्यैकलभ्यत्वादुक्तंयुक्तमितिसिद्धम् ॥ ४२ ॥ अ० ६ ॥

अत्रभगवत्प्राप्तिसाधनज्ञानस्यास्वामिनोपिसन्निधिमात्रेणफलदानमहिम्नोवर्णनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाज्ञानिनांमोक्षनियमइत्युक्तमयुक्तंस्यादतस्तद्वर्णनीयम्॥प्रकृतंज्ञानमेवविषयः॥ किंदेवानांफलप्रदं प्रजानांवेतिसंदेहः ॥ प्रयोजकत्वंकर्तृत्वंचसंदेहबीजम् ॥ किंतावत्प्राप्तमितितत्रसूत्रमुपन्यस्यव्याचष्टे ॥ स्वामिनइति ॥ ब्रह्मविदाप्नोतिपरमित्यादिश्रुतिसिद्धंयद्भगवत्प्राप्त्यादिज्ञानफलंतद्देवानामेवभवतिनप्रजा

ब्रह्मविदाप्नोतिपरमित्यादिफलंस्वामिनांदेवानामेवभवति ॥ यदुकिंचेमाःप्रजाःशुभमाच रंतिदेवाएवतदाचरंतियदुकिंचेमाःप्रजाविजानतेदेवाएवतद्विजानतेदेवानांह्येतद्भवति ॥

## ॥ ॐस्वामिनःफलश्रुतेरित्यात्रेयः ॐ ॥ ४४ ॥

स्वामीफलमश्नुतेनास्वामीकर्मकुर्वाणइतिमाध्यंदिनायनश्रुतेरित्यात्रेयोमन्यते ॥ ४४ ॥

नाम् ॥ कस्मात् ॥ तेषामेवेंद्रियादिप्रेरकत्वेनज्ञानस्वामित्वात् ॥ लोकेचस्वामिनएवफलदर्शनात् ॥ नच कर्तृत्वेनप्रजानांफलम् ॥ कर्तुरप्यस्वामिनःफलाभावदर्शनात् ॥ नचवेतनादिरूपेणफलम् ॥ अन्नादेर्दी यमानत्वात् ॥ श्रुतिसिद्धंचैतत् ॥ एवमाचार्यआत्रेयोपिमन्यतइतिभावः ॥ कुतोदेवानांकर्मादिदेवानांह्ये तत्कर्मादिफलंभवतीत्यर्थः ॥ ४४ ॥

एवमात्रेयमतावलंबेनपूर्वपक्षितेसिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ आर्त्विज्यमिति ॥ नकेवलंदेवानामेव फलंकिंतुप्रजानामप्यस्ति ॥ नचास्वामित्वात्फलाभावः ॥ यथाखलुसत्रयागेष्वयजमानानामप्यृत्विजांचयज्ञफलम् ॥ तथाऽस्वामित्वेपिप्रजानांज्ञानफलसंभवात् ॥ नचश्रुतिमुनिमतविरोधः ॥ प्रजानामल्पफलाभ्युपगमात् ॥ तदभिप्रायत्वाच्चश्रुत्यादेः ॥ अल्पस्वेनिःस्वप्रयोगदर्शनादित्यौडुलोमिराचार्योमन्य

सत्रयागेषुऋत्विजामपिफलदर्शनादल्पफलंप्रजानामपिभवतीत्यौडुलो

॥ ॐ आर्त्विज्यमित्यौडुलोमिस्तस्मैहिपरिक्रियते ॐ ॥ ४५ ॥

मिर्मन्यते ॥ तदर्थंदेवैःक्रियमाणत्वात् ॥ ४५ ॥

तइतिभावः ॥ भवेदेतत् यदिप्रजानांफलभावःसिद्ध्येत् ॥ सएवकुतइत्यतआह ॥ तदर्थमिति॥ ननुऋत्विजामस्वामित्वेप्यगृहीतदक्षिणत्वेनकर्तृत्वात्कथंतद्दृष्टांतेनप्रजानांफलंसिध्यतीत्यतोवाह ॥ तदर्थमिति ॥ देवैरपिप्रजार्थमेवज्ञानस्यापाद्यमानत्वाद्युक्तंतासांज्ञानफलम् ॥ तथालोकेदर्शनादितिभावः॥उक्तंच ॥ त्वरयैवमनुष्याणांसिद्धिरत्वरयैवतु ॥ देवानांतत्प्रसादेनमुक्तिरेवसतांनृणामिति ॥ ४५ ॥

यदिदेवैःप्रजार्थंज्ञानादिसाध्यतेतर्हितत्फलंप्रजानामेवभवेन्नकिंचिद्देवानामित्याशंकांपरिहरत्सूत्रमुपन्य
स्यव्याचष्टे॥ सहकारीति ।: एतद्वक्ष्यमाणंनौडुलौमिनाऽज्ञातंकिंतुपक्षत्वेन॥तृतीयंतृतीयःपक्षः॥ सचभग
वतोबादरायणस्य ॥ कोसौ॥प्रजार्थंज्ञानसाधनेऽपिनदेवानांफलाभावः॥ देवानांहिज्ञानदानंकर्तव्यंदेवैस्त
स्मिश्चस्वविहितेप्रजानामनुग्रहायसहकारित्वेनप्रजाःक्रियंते ॥ अतोदेवानामेवमुख्यकारणत्वान्महाफलं

तृतीयःस्वपक्षोदेवानांज्ञापनादिकर्मणिसहकार्यंतरत्वेनप्रजाविधीयते ॥

## ॥ ॐसहकार्यंतरविधिःपक्षेणतृतीयंतद्वतोविध्यादिवत् ॐ ॥४६॥

यथाप्रजावतोराज्ञःप्रजाःसहकारित्वेनविधीयंते ॥ यथावाचार्यस्यशिष्याः ॥

प्रजानांसहकारिमात्रत्वादल्पफलमिति ॥ यथाखलुपालनस्यराज्ञाप्रजार्थंक्रियमाणत्वेपिनप्रजानामेवपा
लनफलंकिंतुराज्ञएवमुख्यंतासांसहकारिमात्रत्वात्॥ यथाऽऽचार्येणशिष्यार्थमेवव्याख्यानस्यक्रियमाण
त्वेपिनतत्फलंशिष्यस्यैवकिंतुगुरोरेवमुख्यंशिष्यस्यसहकारिमात्रत्वात्॥ एवमेवात्रापिप्रजार्थंदेवैर्ज्ञानस्या
ऽऽपाद्यमानत्वेऽपिनतासामेवफलंकिंतुदेवानामेवेतिभावः॥ तद्वतइत्येतत्प्रजावतइतिव्याख्यायराज्ञइतिवि

च्चतम् ॥ अत्रैवस्मृतिमाह॥वाराहेचेति ॥ श्रुतमिति ॥ यावत्तासांप्रामाणिकंतावद्भवतीत्यर्थः ॥ अतःप्रजा
नामपिज्ञानफलसद्भावादुक्तंयुक्तमितिसिद्धम् ॥ ४६ ॥ अ० ७॥ अत्रहरिप्राप्तिसाधनज्ञानेविशेषाऽधि
कारिणांयतीनांसर्वाश्रमिभ्योऽतिशयसमर्थनेनज्ञानमहिम्नोवर्णनादस्तिशास्त्रादिसंगतिः॥कर्माधिकारिभ्यो
ज्ञानाधिकारिणामतिशयाभावेज्ञानस्यैवातिशयाभावप्रसंगात्समर्थनीयमेतत् ॥ प्रकृतज्ञानाधिकारिषुदेव

वाराहेच ॥ ज्ञानादिदानंदेवानांविष्णुनासाधुचोदितम् ॥ देवेचतेषांविहितंतत्राचार्योमहत्तरः ॥
विहितःसहकारित्वेसहकार्यंतरंप्रजाः ॥ पातृत्वेनयथाराज्ञोयथाशिष्यागुरोरपि ॥ तस्माच्छ्रुतंफ
लंतासामाचार्याणांमहत्तरम् ॥ ततोमहत्तरंप्रोक्तंदेवानामुत्तरोत्तरमिति ॥ ४६ ॥अ० ७॥ कुटुंबी
शुचौदेशेस्वाध्यायमधीयानोधार्मिकान्विदधदित्युक्त्वानचपुनरावर्ततइतिगृहिणोपसंहारःक्रिय
ते ॥तस्माद्गृहस्थस्यैवोत्तमत्वमितिनवाच्यम् ॥यतःकृत्स्नगृहस्थान्देवानपेक्ष्यैवोपसंहारःक्रियते॥

षिमानुषेषुमनुष्याआश्रमभेदभिन्नाएवविषयः॥ किंसर्वेपिमोक्षेसमाउतकस्यचिदुत्तमत्वमितिसंदेहः॥ द्वे
धापिदर्शनंसंदेहबीजम्॥तत्रगृहस्थोमुक्तावुत्तमइतिपूर्वःपक्षः ॥ तस्यसर्वसत्कर्मस्वधिकारित्वात् ॥नह्यन्या
श्रमिणांकृत्वादावधिकारोस्ति ॥ किंचछंदोगोपनिषदिगृहस्थस्यैवमोक्षमुक्त्वोपसंहारःक्रियते ॥.आचार्य
कुलाद्वेदमधीत्ययथाविधानंगुरोःकर्मातिशेषेणाभिसमावृत्यकुटुंबीशुचौदेशेस्वाध्यायमधीयानोधार्मिका

न्विदधदात्मनिसर्वेंद्रियाणिप्रतिष्ठाप्याहिंसन्सर्वाणिभूतान्यन्यत्रतीर्थेभ्यःसखल्वेवंवर्तयन्यावदायुषंब्रह्म लोकमभिसंपद्यतेनचपुनरावर्ततइति ॥ तेनज्ञायतेगृहस्थस्यैवमुक्तावाधिक्यमिति ॥ नह्याधिक्याभावेस र्वेषामपिमोक्षेसमानेविशिष्योक्तिर्युक्ता ॥ उपसंहाराच्चतात्पर्यमवगम्यते ॥ अतःकर्मिणामेवोत्तमत्वान्न ज्ञानमतिशयितमिति॥सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ कृत्स्नेति॥यतेरेवसर्वाश्रमेषूत्तमत्वंनगृहिणः॥यति मोक्षस्यगृहिमोक्षादपिचिरकालसाध्यत्वादल्पकालापादितसाधनसाध्यान्मोक्षाद्बहुकालीनसाधनसाध्य स्याधिक्यनियमात् ॥ गृहिणांबहुकर्माधिकारमात्रसद्भावेपितदाचरणनियमाभावात् ॥ नचैवंगृहिणो

कृत्स्नाह्येतेगृहिणोदेवाःकृत्स्नाह्येतेयतयोऽतएतेषांनपुत्रादायमुपयंति ॥ नचैतगृहान्वि

## ॥ॐकृत्स्नभावात्तुगृहिणोपसंहारः ॐ॥ ४७॥

सृजंतिअरागाअद्वेषाअलोभाःसर्वभोगाःसर्वज्ञाःसर्वकर्तारइतिपौत्रायणश्रुतिः ॥ ४७ ॥

प्युपसंहारविरोधः ॥ तस्यदेवताविषयत्वात् ॥ तेषांसंपूर्णगृहस्थधर्मवत्त्वेनतद्योग्यत्वात् ॥ नचदेवानाम पियेतरुत्तमत्वंकथमितिवाच्यम् ॥ संपूर्णयतिधर्मस्यापितेषुसद्भावात् ॥ अतोगृहिभ्योयतीनामेवोत्तमत्वंते भ्योदेवानामेवेत्याशयः ॥ भवेदेतद्यद्याश्रमद्वयंसंपूर्णंदेवेषुभवेत्तदेवकुतइत्यतआह॥कृत्स्नाहीति ॥ येषां नपुत्रादायमुपयंत्यरागाअद्वेषाअलोभाःसर्वज्ञाइतियतित्वस्योपपादकमन्यद्गार्हस्थ्यस्य ॥ तथाचोक्तम् ॥ गार्हस्थ्यंचयतित्वंचदेवेष्वेकत्वमागतम् ॥ प्राधान्योक्तिर्यतित्वस्यगार्हस्थ्यस्यकचित्कचिदिति ॥ ४७ ॥

युक्त्यंतरेणैतत्समर्थयत्सूत्रमुपन्यस्यव्याचष्टे ॥ मौनवदिति ॥ नदेवानामुक्ताश्रमद्वयकर्मित्वमेवकिंतुसर्वा
श्रमकर्मित्वमपिश्रुतिबलात् ॥ तथाचयदाश्रमद्वयकर्मित्वेनैवदेवानांयतिभ्यउत्तमत्वंसिध्यतिकिमुवाच्यं
तदासर्वाश्रमकर्मित्वेइतिभावः ॥ सर्वाश्रमाइतिदार्ष्टांतिकोक्तिः ॥ नकेवलमेतावत्सर्ववर्णाः ॥ सर्वंसर्ववर्णा

नचाश्रमद्वयमेवदेवानाम् ॥ देवाएवब्रह्मचारिणोदेवाएवगृहस्थादेवाए

## ॥ ॐ मौनवदितरेषामप्युपदेशात् ॐ ॥ ४८ ॥

ववनस्थायथाह्येतेमुनयएवंसर्ववर्णाःसर्वाश्रमाःसर्वेह्येतेकर्मकुर्वंतीतिकौ
ठरव्यश्रुतौयतित्वदृष्टांतेनान्येषामप्युपदेशात् ॥ ४८ ॥ अ० ८ ॥

श्रमोचितम् ॥ अयंतत्रहेतुः ॥ अतोऽधमाधिकारिषुज्ञानप्रचुराणांयतीनामेवोत्तमत्वाद्युक्तोज्ञानस्याति
शयइतिसिद्धम् ॥ ४८ ॥ अ० ८ ॥

अत्रभगवत्प्राप्तिसाधनज्ञानस्यातिगोप्यत्वमहिम्नःसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाऽतिशयाभाव
प्रसंगात्समर्थनीयमेतत्॥प्रकृतापरोक्षज्ञानसंगतंपरोक्षज्ञानमत्रविषयः॥तत्किमाविष्कारेणोपदेष्टव्यंनवेतिसं
देहः ॥ उभयथासंभवस्संदेहबीजम् ॥ आविष्कारेणेतिपूर्वःपक्षः ॥ आविष्कारेणोपदेशेऽशेषज्ञानयोग्या
नांज्ञानलाभसंभवात् ॥ बहूनामुपदेशेचोपदेष्टुःफलाधिक्यसिद्धेः ॥ यथायथाहवैब्रूयात्तथात्तथाऽधिको

एतांविद्यामधीत्यब्रह्मदर्शीवावभवतिसएतामनुष्येषुविब्रूयाद्यथायथाहवैब्रूयात्तथातथा

## ॥ ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥ ४९ ॥

ऽधिकोभवतीतिमाठरव्यश्रुतौविद्यादानंश्रूयते ॥ तच्चबहूनांस्वीकरणार्थमाविष्कारेणेतिन

मंतव्यम् ॥ अन्वयात् युक्तेः ॥ आविष्कारेऽयोग्यानामपिस्वीकारप्राप्तिः ॥

भवतीतिश्रुतेः ॥ अतआविष्कारेणज्ञानस्योपदेष्टव्यत्वात्तस्यरहस्यत्वातिशयोनसिध्यतीति ॥ सिद्धांत
यत्सूत्रमुपन्यस्यव्याचष्टे ॥ अनाविष्कुर्वन्निति ॥ यतःश्रुतौविद्यादानस्याधिक्यानुसारेणफलप्रदमुच्यते
ऽतोऽधिकफलार्थंबहूनांस्वीकरणायतदाऽऽविष्कारेणकार्यमितिनमंतव्यंकिंत्वनाविष्कुर्वन्नेवोपदिशेदित्ये
तत्कुतइत्यतःसौत्रंहेतुमुपादायव्याचष्टे ॥ अन्वयादिति ॥ कासावुपपत्तिरित्यतआह ॥ आविष्कारइति ॥ ॥१०६॥
भवेदेतत् ॥ यथाऽऽविष्कारेणोपदेशेयोग्यानामेवज्ञानप्राप्तिर्भवेत् ॥ नचैवंसभाचत्वरादावुपविश्योपदेशेऽ

योग्यानामपितत्प्रसंगादितिभावः ॥ नन्वयोग्यानांग्रहणप्रसंगेपिकुतोनाविष्कारेणवाच्यमित्यतआह ॥ तच्चेति॥तच्चायोग्येभ्यःकथनम् ॥ एतद्वायुंप्रतिविद्यादेवतानांप्रार्थनम् ॥ येअभितोद्रोहास्पदेंऽधेतमसिस्थातुंयोग्याराअविरुद्धास्ततएवतस्यरिपवोभोगेष्वेवाकांक्षावंतोयेषामेतत्परंब्रह्मतदवरंजगच्चनास्ति ॥ किंतु किंचनएकंनिर्गुणंब्रह्मअनिर्वाच्यंचजगत्तेभ्यस्तेनेभ्योऽस्मान्माब्रूहि ॥ किंनामयेविष्णुनिष्ठयातस्मिन्नेवर

तच्चनिषिद्धम् ॥ मानस्तेनेभ्योयेअभिद्रुहस्पदेनिरामिणोरिपवोन्नेषुजागृधुः ॥ येषांनैत
न्नापरंकिंचनैकंब्रह्मणस्पतेब्रूहितेभ्यःकदाचित् ॥अथोशमेनोपरतामनुष्यायेधर्मिणोब्रूहि
तेभ्यःसदानः ॥ ओंदेवानामोहतेविव्रयोत्त्वदिबृहस्पतेनपरःसाम्नोविदुः ॥ विद्याहवैब्राह्म
णमाजगामगोपायमांशेवधिष्टेहमस्मि ॥ अनार्यकायानृजवेशठायनमांब्रूयाऋजवेब्रूहि
नित्यमितिच ॥ ४१ ॥ अ० १ ॥

तायेचदेवानांवरत्वेसतिनियामकंब्रह्मत्वदिवहंतिततःपरंचनविदुस्तेभ्योब्रूहीत्यर्थः ॥ ब्राह्मणंवायुम् ॥ शेवधिर्निधिः ॥तितिक्षवःकारुणिकाइत्याद्यार्यलक्षणरहितोऽनार्यकः ॥ ऋजवइत्यार्यकाद्युपलक्षणम् ॥ अविपरीतचित्तादिप्रवृत्तिमानृजुः ॥ अतोनाविष्कारेणज्ञानस्योपदेष्टव्यत्वाद्युक्तस्तस्यातिशयइतिसिद्धम्
॥ ४१ ॥ अ० १ ॥

अत्रेश्वरप्राप्तिसाधनज्ञानस्यप्रतिबंधाभावेसाधनसंपत्तिजन्मन्येवोदयसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अ
न्यथाकदापितदनुदयप्रसंगादेतत्समर्थनीयम् ॥ प्रकृतंज्ञानमेवविषयः ॥ किंसाधनसंपूर्तिजन्मन्येवभवति
किंवाजन्मांतरइतिसंदेहः॥ कृष्यादौयागादौचोभयथादर्शनंसंदेहबीजम् ॥साधनसंपूर्तिजन्मन्येवदर्शनंभ
वतीतिपूर्वःपक्षः॥ साधनसंपूर्तावपिज्ञानानुदयेकारणाभावात् ॥ नचस्वर्गादिवदुपपत्तिः ॥ तस्यैतच्छरीरेण

आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइतिदर्शनार्थश्रवणादिविधीयतेतत
द्दर्शनमैहिकमेवप्रारब्धप्रतिबंधाभावे ॥ श्रुत्वात्मानंमतिपूर्वंह्युपास्यइहैवदृष्टिपरमस्य

## ॥ ॐ ऐहिकमप्रस्तुतप्रतिबंधेतद्दर्शनात् ॐ ॥ ५० ॥

विंदेत् ॥ यद्यारब्धंकर्मनिर्बंधकंस्यात्प्रेत्यैवपश्येद्योगमेवान्ववेक्ष्येतिसौपर्णश्रुतौदर्शनात्॥
अनादिजन्मसंबंधंनिर्भेत्तुंपापपंजरम् ॥ यावत्यासेवयाशक्यंतावत्कार्यंनसंशयः ॥

भोगायोमात्तत्पातानंतरंप्राप्त्युपपत्तेः ॥ नचात्रतादृशंकारणमस्ति॥ अतोज्ञानस्यैहिकत्वेनप्राप्तत्वात्तदभा
वाच्चतदनुदयएवेति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ ऐहिकमिति ॥ श्रुतौयद्ब्रह्मदर्शनार्थंयच्छ्रवणादि
विधीयतेतत्तद्दर्शनंतेषांश्रवणादीनांसंपूर्तिजन्मन्येवभवतीतिननियमःकिंतुजन्मांतरेपिभवति ॥ नचोक्तदो
षः ॥ प्रारब्धकर्मसद्भावेजन्मांतरेतदभावेत्वैहिकमित्यभ्युपगमात् ॥ तत्कुतः ॥ श्रुत्वेतिश्रुतेरेवेतिभावः ॥यो
गमेवान्ववेक्ष्येतिपुनःकिंचिच्छ्रवणादिकमपेक्ष्यैवेत्यर्थः ॥ अत्रस्मृतिंचाह ॥ अनादीति ॥कथंसेवयाज्ञानै

कसाध्यःपापपंजरनिर्भेदइतितत्राह॥ इहेति॥ श्रवणाद्येकसाध्यंज्ञानंकथंसेवयास्यादित्यतआह ॥ श्रवण मिति ॥ नचायमेवसर्वत्रसेवाशब्दार्थःकिंतुज्ञानसाधनविषयएवेत्युच्यतेययेति ॥अतोज्ञानस्यैहिकत्वान्नो क्तानुपपत्तिरितिसिद्धम् ॥ ५० ॥ अ० १० ॥ अत्रभगवत्प्राप्तिसाधनज्ञानस्यस्वोत्पत्तिजन्मानंतरमेवप्रति बंधाभावेमुक्तिसाधनत्वमहिम्नोवर्णनादस्तिशास्त्रादिसंगतिः॥ अन्यथाज्ञानस्यमुक्तिसाधनत्वाभावप्रसंगा

यावद्दूरेस्थितोगम्यात्तावद्गंतव्यमेवहि ॥ इहजन्मांतरेवापितावत्यैवतुदर्शनम् ॥

श्रवणंमननंचैवनिदिध्यासनमेवच ॥ परेगुरौचयाभक्तिःपरिचर्यादिकंहरेः ॥

**॥ ॐ एवंमुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ ॥५१॥**

एषासेवेतिसंप्रोक्ताययातद्दर्शनंभवेदितिबृहत्संहितायाम् ॥५०॥ अ १० ॥ एव

मेवप्रारब्धकर्माभावेशरीरपातानंतरमेवमोक्षः ॥ तद्भावेजन्मांतराणीत्यनियमः॥

त्तत्समर्थनीयम् ॥प्रकृतज्ञानसाध्योमोक्षोऽत्रविषयः ॥ किंयच्छरीरेज्ञानमुत्पन्नंतत्पातानंतरमेवभवत्युतने तिसंदेहः ॥ उभयथाप्यदृष्टफलदृष्टिःसंदेहबीजम् ॥ तद्देहानंतरमेवेतिपूर्वःपक्षः ॥ कारणेसतिकार्यानुदये कारणाभावात् ॥ नचज्ञानवदुपपत्तिः ॥ तत्रप्रतिबंधकसद्भावात् ॥ नचात्रप्रतिबंधकंपश्यामः ॥ निष्कार णकारणेसतिकार्यानुदयेकदाप्यनुदयःस्यात् ॥ एवंचानियमइत्युक्तव्याघातइति ॥ सिद्धांतयत्सूत्रमुपन्य स्यव्याचष्टे ॥ एवमिति ॥ यथाज्ञानेऽनियमस्तथामुक्तिफलेपितच्छरीरपातानंतरमेवमोक्षइतिनियमोना

स्तिं किंतुशरीरपातानंतरंजन्मांतरंप्राप्यवा ॥ नचनिष्कारणमनियममेकदापिमोक्षाभावप्रसंगःप्रारब्धप्रतिबं धकभावाभावयोरनियमकारणत्वात् ॥ कुतोऽत्रप्रतिबंधककल्पनम् ॥ श्रुतौहिब्रह्मसंस्थस्यमोक्षावधार णात् ॥ प्रतिबंधकाभावेतदनुपपत्तेरितिभावः ॥ अनियममेकदापिमोक्षाभावइत्येतद्युक्त्यापरिहृतम् ॥तत्रै षाश्रुतिःप्रमाणम् ॥ मोक्षानियमेवाज्ञानिनोमोक्षएवावधार्यतेनतुशरीरपातानंतरमेवेतिनियमइतिभावः ॥

धर्मीस्वर्गंविधर्मीनिरयमेत्येवब्रह्मसंस्थोमृतमेत्येवब्रह्मसंस्थोमृतमेत्येवेतिब्रह्मसंस्थस्यमोक्षस्यैवाव धारणात्॥विद्वानमृतमाप्नोतिनात्रकार्याविचारणा॥ अवसन्नंयदारब्धंकर्मतत्रैवगच्छति ॥नचेद्बहू निजन्मानिप्राप्यैवांतेनसंशयइतिचनारायणाध्यात्मे ॥५१॥ अ० ११॥ ॥इतिश्रीकृष्णद्वैपायन कृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितेतृतीयाध्यायस्यचतुर्थःपादः ॥ ४ ॥

नियमानुक्तिमात्रंनानियमसाधकमित्यतआह॥विद्वानिति ॥ बहूनीतिजन्मांतरेतात्पर्यम॥सर्वस्यप्रामाणि कत्वसूचनायद्विरुक्तिः ॥ तदुक्तं सर्वप्रमाणसिद्धत्वंवक्तुमाध्यायमूलतः ॥ अध्यायांतेद्विरुक्तिःस्यात्पूर्वो क्तस्यावधारणइत्यतोज्ञानिनांप्रतिबंधकाभावेमोक्षस्याविदूरत्वादुक्तंयुक्तमितिसिद्धम् ॥ ५१॥अ० ११॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमद्ब्रह्मसूत्रभाष्यस्यटीकायांजयतीर्थमुनिविरचितायां तत्त्वप्रकाशिकायांतृतीयाध्यायस्यचतुर्थःपादः ॥ ४॥

इति श्रीमद्ब्रह्मसूत्रतद्भाष्यसहितायां तत्त्वप्रकाशिकायां

टीकायां तृतीयाध्यायः समाप्तः

अथ श्रीमद्ब्रह्मसूत्रतद्भाष्यसहितायां तत्त्वप्रकाशि
कायां टीकायां चतुर्थाध्यायः प्रारभ्यते.

श्रीवासुदेवायनमः ॥ हरिः ॐ ॥ एतदध्यायप्रतिपाद्यंदर्शयति ॥ फलमिति ॥ विरक्त्यादिसाधनैर्ब्रह्मदर्श
नमापाद्यमित्युक्तंपूर्वाध्याये ॥ तत्रदर्शनस्यकिंफलंयेनतदापाद्यंस्यादित्याशंकानिवृत्त्यर्थंयत्तस्यभगवत्प्र
सादद्वाराफलंभवतितदस्मिन्नध्यायेसूत्रकृतानिगद्यतइतिभावः ॥ ननुपुरुषार्थाधिकरणेज्ञानात्सर्वेपुरुषा
र्थाभवंतीत्युक्तत्वात्किमत्रवक्तव्यमस्तीति ॥ मैवम् ॥ मोक्षेतरपुरुषार्थानामसाधारण्येनज्ञानफलत्वाभा
वात् ॥ मोक्षोपिज्ञानेनभवतीत्युक्तमितिचेत् ॥ सत्यम् ॥ सएवकीदृशइतिविचार्यतेऽत्रेति ॥एतत्पादार्थंदर्श

श्रीगुरुभ्योनमः ॥ हरिः ॐ ॥ फलंनिगद्यतेऽस्मिन्नध्याये ॥ कर्मनाशाख्यंफलमस्मिन्पादे ॥ नि
त्यशःकार्यंसर्वथाभाव्यंसाधनंप्रथमतउच्यते ॥ प्रायिकत्वाच्चाध्यायानांपादानांचनविरोधः ॥

यति ॥कर्मेति ॥ ज्ञानफलंमोक्षलक्षणंचतुर्विधंभवति॥ कर्मक्षयोत्क्रांतिमार्गभोगभेदात् ॥ तत्रकर्मक्षयाख्य
फलस्यप्राथम्यात्तत्प्रथमपादेनिगद्यतइतिभावः ॥ नन्वावृत्तिरित्यादिसूत्रेषुकर्मक्षयोक्त्यप्रतीतेःकथमेतदि
त्यतआह ॥ नित्यशइति ॥ नैतेषुसूत्रेषुकर्मक्षयोनिगद्यतेकिंतुज्ञानसाधनमेव ॥ तत्तृतीयएवांकिनोच्यते ॥
उक्तमेवपुनःकिमुच्यते ॥ तस्यैवनित्यशःकार्यत्वमिति ॥ किमितितद्विनामोक्षलेशाभावात् ॥ अतोऽ
त्रकर्मक्षयोक्त्यप्रतीतिर्युक्तैवेतिभावः ॥ यदिफलाध्यायेकर्मक्षयपादेचसाधनमेवोच्यतेतर्ह्यध्यायपादा
नामर्थव्यवस्थाभावःस्यादित्यतआह ॥ प्रायिकत्वाच्चेति ॥ नार्थांतरोक्तावपिव्यवस्थाभावविरोधः ॥

योऽर्थोयत्रप्रायेणोच्यतेसोध्यायादिस्तदर्थइतिव्यवस्थोपपत्तेः ॥ अतएवएतेष्वधिकरणेषुना ध्यायादिसंग
तिरन्वेषणीया ॥ तत्रादौभगवज्ज्ञानायश्रवणाद्यावृत्तेःकर्तव्यतोपपादनादस्तिशास्त्रसंगतिः ॥ अन्यथाश्रव
णादीनांज्ञानसाधनत्वासिद्धेःसाधनीयमेतत् ॥ श्रवणादिकंविषयः ॥ किंसकृदनुष्ठेयमुततदावृत्तिरितिसं
देहः ॥ उभयविधसाधनदर्शनंसंदेहबीजम् ॥ सकृदेवेतिपूर्वःपक्षः ॥ सकृदनुष्ठिताग्निष्टोमादिनास्वर्गफलद

आत्मावाअरेद्रष्टव्यःश्रोतव्योमंतव्योनिदिध्यासितव्यइत्यादीनांनाग्निष्टोमादिवदेकवारेणैवफल

## ॥ ॐ आवृत्तिरसकृदुपदेशात् ॐ ॥ १ ॥

प्राप्तिःकिंत्वावृत्तिःकर्तव्या ॥ सएषोऽणिमैतदात्म्यमिदंसर्वमित्याद्यसकृदुपदेशात् ॥ १ ॥

र्शनात्तद्वदेवसकृदनुष्ठितश्रवणादिनापिज्ञानसंभवात् ॥ श्रवणादिविधेश्चाग्निष्टोमादिविधिवत्सकृदनुष्ठानेन
चरितार्थत्वात् ॥ साधनावृत्तेरपिदर्शनादत्रापितथास्यादितिचेन्न ॥ उभयथादर्शनेप्यनावृत्त्यैवापरोक्षज्ञा
नाभ्युपगमेसर्वसुशक्यत्वंज्ञानस्येतिगुणलाभादनावृत्त्याश्रवणस्यैवज्यायस्त्वात् ॥अतोऽनावृत्त्यैवज्ञानंसंभ
वति॥नचतथाभवति॥अतोनश्रवणादिज्ञानसाधनमिति॥सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे॥आवृत्तिरिति ॥

अग्निष्टोमादिवदेकवारेणैवफलसिद्धेरात्मेतिश्रुत्युक्तानांश्रवणादीनामनावृत्तिरितियदुक्तंनतद्युक्तंकिंतुश्रव
णादीनामावृत्तिरेवकर्तव्या ॥ उद्दालकेननवकृत्वःश्वेतकेतुंप्रतितत्त्वस्योपदिष्टत्वात् ॥ श्रवणादेःस
कृदेवकर्तव्यत्वेकिमर्थमसावसकृदुपदिशेत् ॥ नचाग्निष्टोमादिवदनावृत्तिः ॥ तस्यादृष्टफलत्वेनसकृद
नुष्ठानसंभवात् ॥ तावतैवतद्विधिपूर्तेश्च ॥ श्रवणादेःपुनरज्ञाननिवृत्त्यादिदृष्टफलसाधनत्वेनयावत्फलंकर्त
व्यत्वात् ॥ आवर्तनएवतद्विधिपर्यवसानाद्व्रीह्यवघातविधिवत् ॥ नचसुशक्यत्वगुणलाभादनावृत्तिः ॥ म

सतपोतप्यत॥पुनरेववरुणंपितरमुपससारेत्याद्यावर्तनलिंगाच्च ॥ नित्यशःश्रवणंचैवमननं

## ॥ ॐ लिंगाच्च ॐ ॥ २॥

ध्यानमेवच ॥ कर्तव्यमेवपुरुषैर्ब्रह्मदर्शनमिच्छुभिरितिबृहत्तंत्रे ॥ २ ॥ अ० १ ॥

हाफलस्यतदभावगुणत्वात् ॥ सर्वेषांमोक्षप्रसंगाच्चेतिभावः ॥ १॥ हेत्वंतरेणश्रवणाद्यावृत्तिसाधयत्सूत्रंप
ठित्वाव्याचष्टे ॥ लिंगाच्चेति ॥ तस्माएतत्प्रोवाच॥अन्नंप्राणंचक्षुःश्रोत्रंमनोवाचमितिश्रुतावन्नादिरूपवि
षयएवपुनःपुनर्भृगोःप्रश्नात्तथैववरुणस्योक्तेःश्रुतस्यपुनरालोचनेनापरोक्षितत्वमित्येतल्लिंगदर्शनाच्चश्रव
णाद्यावृत्तिःकर्तव्येतिभावः ॥ अत्रस्मृतिंचाह ॥ नित्यशइति ॥ अतोज्ञानार्थंश्रवणाद्यावृत्तेःकर्तव्यत्वा
द्युक्तंश्रवणादीनांज्ञानसाधनत्वमितिसिद्धम् ॥ २ ॥ अ० १ ॥

अत्रभगवज्ज्ञानसाधनात्मत्वोपासनस्यनित्यशःकार्यत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ स्वस्वामिभावसंबं
धस्यनित्यमुपास्यत्वाभावेवेदानांतत्रमहातात्पर्यमयुक्तंस्यादितिसमर्थनीयमेतत् ॥ प्रकृतात्मत्वंविषयः ॥
नित्यशउपास्यंनवेतिसंदेहः ॥ उपासनस्यनित्यशःकर्तव्यत्वंगुणांतरसाम्यप्रतीतिश्चसंदेहबीजम् ॥ तत्रा
त्मत्वंनसर्वथासदोपास्यमितिपूर्वःपक्षः ॥ हरेर्जगत्स्वामित्वस्यशश्वदतिप्रसिद्धत्वात् ॥ शश्वदतिप्रसिद्धस्य
नित्यमुपासनंव्यर्थमेवकिंत्वप्रसिद्धगुणोपासनस्यज्यायस्त्वेनतदेवनित्यशःकर्तव्यम् ॥ अतःस्वामित्वस्यनि

आत्मेत्युपदेशउपासनंचमोक्षार्थिभिःसर्वथाकार्यमेव ॥ नान्यंविचिंतयेआत्मान

॥ ॐ ॥ आत्मेतितूपगच्छंतिग्राहयंतिच ॐ ॥ ३ ॥

मेवाहंविजानीयामात्मानमुपासेआत्माहिममैषभवतीतित्युपगच्छंति ॥ आत्मेत्येवो
पास्यात्मेत्येवविजानीहिनान्यंकिंचनविजानीथाआत्माह्येवैषभवतीतिग्राहयंतिच ॥

त्यमनुपास्यत्वाद्वेदानांतत्रमहातात्पर्यंव्यर्थमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ आत्मेति ॥ वि
ष्णुरात्मेत्युपासनंसदासर्वथाकार्यमेव ॥ तस्यैवमोक्षसाधनत्वात् ॥ अन्यथातदसिद्धेः ॥नकेवलंतथोपास
नमावश्यकंकिंतुतथोपदेशश्चकर्तव्यः ॥ तदभावेपिमोक्षासिद्धेः ॥ नकेवलमात्मत्वोपासनोपदेशान्वय
व्यतिरेकित्वात्तस्यसर्वदासर्वथोपास्यत्वंकिंतर्हिनान्यंविचिंतयइतितस्यसर्वथोपास्यत्वोपदेश्यत्वयोःश्रुति
सद्भावाच्चेतिभावः ॥ आत्माहिममैषभवतीत्याद्यविद्यमानोपासनंनैतदितिवक्तिउपगच्छंत्युपासते ॥ ग्राह

यंत्युपदिशंति ॥ नचशश्वदतिप्रसिद्धत्वात्सदासर्वथोपास्यत्वाभावः ॥ उपासनस्यफलार्थस्यप्रसिध्यप्रसिद्धिभ्यांकर्तव्यत्वाद्यसिद्धेः ॥ आत्मत्वोपासनस्यमुक्तिहेतुत्वात्तत्सर्वथाकर्तव्यमित्येतत्कुतइत्यतआह ॥

आत्मेत्युपासनंकार्यंसर्वथैवमुमुक्षुभिः ॥ नानाक्लेशसमायुक्तोप्येतावन्नैवविस्मरेदितिभविष्यत्पर्वणि ॥ आत्माविष्णुरितिध्यानंविशेषणविशेष्यतः ॥ सर्वेषांचमुमुक्षूणामुपदेशश्वतादृशः ॥ कर्तव्योनास्यहानेनकस्यचिन्मोक्षइष्यतइतिब्राह्मे ॥ ३ ॥ अ० २ ॥

आत्मेति ॥ विष्णुरात्मतयाजीवत्वेनोपास्यइत्याग्रहंकेचनात्रवर्णयंतितदयुक्तमितिभावेनाह ॥ आत्मेति ॥ आत्मत्वंविष्णुविशेषणमित्येवोपासनंकार्यंनतुतज्जीवत्वविधानेनेतिभावः ॥ अतोविष्णोःसर्वस्वामित्वस्य सर्वदासर्वथोपास्यत्वाद्युक्तंतत्रवेदानांतात्पर्यमितिसिद्धम् ॥ ३ ॥ अ० २ ॥

अत्रभगवज्ज्ञानसाधनस्यविष्णुप्रतीकैक्योपासनवर्जनस्यावश्यकत्वसाधनादस्तिशास्त्रसंगतिः ॥ तथो
पासनेयदुक्तंसर्वस्यामित्वेनोपासनंकार्यमितितदयुक्तंस्यादतःसाधनीयमेतत् ॥ यन्नामवागादिकंभगवत्प्र
तिमारूपंप्रकृतंतदत्रविषयः ॥ ब्रह्मतयोपास्यंनवेतिसंदेहः ॥ श्रुतिरन्यत्वंचसंदेहबीजम् ॥ ब्रह्मतयोपास्य
मितिपूर्वःपक्षः ॥ नामब्रह्मेत्युपासीतेत्यादिश्रुतेः ॥ नचब्रह्मप्रतीकयोर्भिन्नत्वादभेदेनोपासनायोगः ॥ य

नामब्रह्मेत्युपास्तइत्यादिनाशब्दभ्रांत्यानप्रतीकेब्र

## ॥ ॐनप्रतीकेनहिसः ॐ ॥ ४ ॥

ह्मदृष्टिःकार्याकिंतुतत्स्थत्वेनैवोपासनकार्यम् ॥

थाखलुपूर्वत्रप्रसिद्ध्यादेरप्रयोजकत्वमुक्त्वाफलमात्रस्योपासनाप्रयोजकत्वेनात्मत्वोपासनंसमर्थितंतथा
ऽत्रापिप्रतीकेब्रह्मत्वोपासनसंभवात् ॥ फलस्योपासनाप्रयोजकत्वेनभेदादेरप्रयोजकत्वात् ॥ श्रूयतेखलुप्र
तीकेब्रह्मत्वोपासनस्यफलंनामब्रह्मेत्युपास्तेयावन्नाम्नोगतंतत्रास्यकामचारोभवतीत्यादि ॥ अतःप्रतीके
ब्रह्मत्वोपासनस्यकर्तव्यत्वादुक्तमयुक्तमिति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ नप्रतीकइति ॥ नाम
ब्रह्मेत्यादिनासामानाधिकरण्येनजातयाऽैक्योपासनंविधीयतइतिशब्दभ्रांत्यायत्परेणोक्तंप्रतीकेब्रह्मदृष्टिः

कार्यंतिननतद्युक्तम् ।। यतःसविष्णुःप्रतीकंनभवति ॥ नहिभिन्नयोरभेदेनोपासनंयुक्तम् ॥ नचवाच्यंफल
स्यैवप्रयोजकत्वाद्युक्तमुपासनमिति ॥ अन्यथोपासनस्यनिष्फलत्वात्प्रत्युतानर्थफलत्वाच्चेतिभावः ॥
ननुयदिनाभेदेनोपासनंयुक्तंकथंतर्हिकार्यम् ॥ नतुनकार्यमेव॥ श्रुतेरप्रामाण्यप्रसंगादित्याशंकांपरिहरति ॥
किंत्विति ॥ कार्यमेवश्रुत्युक्तमुपासनंतच्चब्रह्मणःप्रतीकस्थितत्वेनैव ॥ नचनैतच्छ्रुतिर्वक्तीतिवाच्यम् ॥ अ

ब्रह्मतर्कैच ॥ नामादिप्राणपर्यंतमुभयोःप्रथमत्वतः ॥ ऐक्यदृष्टिरिति
भ्रांतिरबुधानांभविष्यति ॥ नामादिस्थितिरेवात्रब्रह्मणोहिविधीयते ॥
सर्वार्थाप्रथमायस्मात्सप्तम्यर्थाततोमतेति ॥ ४ ॥ अ० ३ ॥

पवादेनप्रथमादिविभक्तेरेवसप्तम्यर्थत्वोपपत्तेः ॥ सप्तसुप्रथमाषट्सुद्वितीयेत्यादेरत्रेतिभावः ॥ उक्तार्थेस्मृ
तिंचाह ॥ ब्रह्मतर्केचेति ॥ उभयोर्नामादिब्रह्मपदयोरैक्यदृष्टिरत्रकर्तव्यतयोच्यतइतिभ्रांतिः ॥ कस्मादि
यंभ्रांतिरितितत्राह ॥ नामादीति ॥ प्रथमायास्तर्हिकागतिरित्यतआह ॥ सर्वेति॥नचवाच्यंक्षत्तरिराजदृ
ष्ट्याफलदर्शनादत्राप्येवंस्यादिति ॥ क्षत्तैवराजेत्यस्योपचारत्वात् ॥ तथाज्ञानेऽनर्थदर्शनाच्चेति ॥ अतःप्र
तीकब्रह्मत्वोपासनस्यायोगादुक्तंयुक्तमितिसिद्धम् ॥ ४ ॥ अ० ३ ॥

अम्रब्रह्मदर्शनसाधनब्रह्मत्वोपासनस्याऽऽवश्यकत्वसमर्थनादस्तिशास्त्रसंगतिः ॥ अन्यथाभूम्नोज्यायस्त्व
मित्युक्तहानिप्रसंगात्समर्थनीयमेतत् ॥ भूम्नइत्यत्रप्रकृतब्रह्मत्वमेवविषयः ॥ किंसदासर्वथोपास्यंनवेतिसंदे
हः ॥ उभयथापिदर्शनंसंदेहबीजम् ॥ नब्रह्मत्वंसदासर्वथोपास्यमितिपूर्वःपक्षः ॥ भगवत्प्रसादायहितदुपा
सनंकर्तव्यंसचप्रतिदिनंविविधगुणोपसंहारेणोपासनेसिध्यति॥ तथाचकिंब्रह्मत्वस्यैकस्यैवविशिष्यसदोपा
सनेकारणमस्ति॥तदुपासनमपिभगवत्प्रसादजनकमितिचेत्तथापिगुणांतरसाम्यमेवस्यात्॥नचात्मत्ववद्गुण
ब्रह्मदृष्टिश्चसर्वथाकार्यैवपरमेश्वरेउत्कृष्टत्वात् ॥ ब्रह्मदृष्ट्यासदोपास्योविष्णुःसर्वैरपिध्रु

॥ ॐब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ ५ ॥

वम् ॥ महत्त्ववाचीशब्दोयंमहत्त्वज्ञानमेवहि ॥ सर्वतःप्रीतिजनकमतस्तत्सर्वथाभवेत् ॥
त्वाविशेषेपिनित्योपास्यत्वेविशेषहेतुरस्ति॥अतोब्रह्मत्वस्यनित्योपास्यत्वाभावादुक्तंज्यायस्त्वमयुक्तमिति॥
सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ ब्रह्मेति ॥ परमेश्वरेसदासर्वथाब्रह्मत्वोपासनंकार्यम् ॥ तत्रसर्वगुणांतर्भावि
नभगवदुत्कृष्टत्वसिद्धेः ॥ भगवदुत्कृष्टत्वंहिब्रह्मत्वंतथाचब्रह्मत्वोपासनंनामउत्कृष्टत्वोपासनमेव ॥ सर्वोत्कृ
ष्टत्वोपासनंचान्योपासनेभ्योऽतिशयेनभगवत्प्रसादहेतुरितिभावः ॥ ब्रह्मदृष्टिःप्रतीकेकार्यैतिकेचित्तदनेन
सूत्रेणैवनिरस्तमितिभावेनोक्तंपरमेश्वरइति ॥ अत्रस्थार्थंचाह॥ब्रह्मेति॥ शब्दोयंयतइतिशेषः॥सर्वतोमहत्त्व

ज्ञानमित्यन्वयः ॥ गुणांतरोपासनादाधिक्येनेतिवा ॥ आत्मत्वोपास्तिवत्तु ब्रह्मत्वोपासनंविनापिमोक्षासं
भवाच्चतत्कार्यमितिभावेनाह ॥ आत्मेति ॥ ब्रह्मत्वस्याप्यावश्यकत्वेचतुर्गुणोपासननियमभंगःस्यादित्य
तोवाह ॥ आत्मेति ॥ आत्मत्वविशेषणत्वेनोपासनाददोषइतिभावः ॥ अतोब्रह्मत्वस्यविशिष्योपास्यत्वा
दुक्तंयुक्तमितिसिद्धम् ॥ ५ ॥ अ० ४ ॥ अत्रभगवदपरोक्षसाधनस्यांगाश्रितत्वेनदेवतोपासनस्यावश्यक
त्वसमर्थनादस्तिशास्त्रसंगतिः ॥ अन्यथातन्न्यायेनात्मत्वस्याप्यावश्यकत्वाभावप्रसंगात्समर्थनीयमेतत् ॥

आत्मेत्येवयदोपासातदाब्रह्मत्वसंयुता ॥ कार्यैवसर्वथावि
ष्णोर्ब्रह्मत्वंनपरित्यजेदितिच ब्रह्मतर्के ॥ ५ ॥ अ० ४ ॥

भगवदंगाश्रितत्वेनदेवतोपासनंदेवानामुक्तम्॥तत्रस्वस्यस्वोत्पत्त्यंगाश्रितत्वेनोपासनंविषयः ॥ सदासर्वथा
कार्यंनवेतिसंदेहः ॥ द्विविधोपास्तिदर्शनंसंदेहबीजम् ॥ नसदासर्वथातथोपासनंदेवैःकार्यमितिपूर्वःपक्षः ॥
सूर्यादीनांविविधस्थानेषुसंचरणेनसदाभगवच्चक्षुराद्याश्रितत्वाभावात् ॥ सदाचक्षुराद्याश्रितत्वाभावेपि
तथोपासनस्यानर्थफलत्वात्॥गुणांतरेषुसत्सुभगवदंगाश्रितत्वेनविशिष्यस्वचिंतनेकारणविशेषाभावाच्च ॥
अतःसत्यप्याश्रयाश्रयिभावसंबंधेतस्यसर्वथोपास्यत्वाभावात्तद्वत्स्वस्वामिभावेसत्यपिनात्मत्वोपासनमा

वश्यकमिति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ आदित्यादीति ॥ चक्षोःसूर्योअजायतेत्यादिनायदुक्तं
स्याश्रयत्वेनभगवदंगोपासनंतदादित्यादिदेवैःसदासर्वथाकार्यमेव ॥ कोविशेषहेतुः ॥ मुक्तौतत्रलयस्या
॥ ५ ॥ पेक्षितत्वात् ॥ उपासनस्यफलसाम्येनकार्यत्वात् ॥ मुक्तौतत्रलयएवकुतः ॥ स्वोत्पत्तिस्थानत्वात् ॥

चक्षोःसूर्योअजायतेत्युपासनंदेवानांकार्यमेवस्वोत्पत्तिस्थानत्वात्स्वाश्रयत्वान्मुक्तौतत्र
लयस्यापेक्षितत्वाच्चोपपन्नंतेषांतथोपासनम् ॥ नारायणतंत्रेच ॥ आधिव्याधिनिमित्ते
नविक्षिप्तमनसोऽपितु ॥ गुणानांस्मरणाशक्तौविष्णोर्ब्रह्मत्वमेवतु॥ स्मर्तव्यंसततंतत्तुनकदा

## ॥ ॐ आदित्यादिमतयश्चांगउपपत्तेः ॐ ॥ ६ ॥

चित्परित्यजेत् ॥ अत्रसर्वगुणानांचयतोंऽतर्भाविष्यते ॥ स्वोत्पत्त्यंगंचदेवानांविष्णोश्चि
त्यंसदैवतु ॥ तेषांतत्रप्रवेशोहिमुक्तिरित्युच्यतेबुधैः ॥ तदाश्रिताश्चते नित्यंनताश्चित्यंविशे
षतइति ॥ ६ ॥ अ० ५ ॥

यतोयस्योत्पत्तिस्तत्रतस्यलयनियमात् ॥ नचान्यथोपासनप्रसंगादेतदयुक्तम् ॥ नित्यंरूपांतरेणांगानां
स्वाश्रयत्वादितिभावः॥अतीताधिकरणसहितैतदधिकरणार्थेस्मृतिंचाह ॥ नारायणेति ॥ स्वोत्पत्त्यंगंस्वाश्र ॥ ५ ॥
यत्वेनचिंत्यम् ॥ अतएतदुपासनस्यावश्यकत्वादुक्तमपियुक्तमितिसिद्धम् ॥ ६ ॥ अ० ५ ॥

अत्र भगवद्दर्शनसाधनध्यानेआसनादिनियमसमर्थनादस्तिशास्त्रसंगतिः ॥ अन्यथातदुपदेशानर्थक्यप्रसंगात्समर्थनीयमेतत् ॥ प्रकृतभगवदुपासनार्थमासनाद्युच्यते ॥ उपविश्यासनेयुंज्याद्योगमात्मविशुद्धय इत्यादौ ॥ तदासनमत्रविषयः ॥ सर्वथाऽपेक्षितंनवेतिसंदेहः ॥ द्विविधसाधनदर्शनंसंदेहबीजम् ॥नासनंसर्वथाऽपेक्षितमितिपूर्वःपक्षः ॥ तत्कृत्याभावात् ॥ भगवत्संदर्शनार्थंहिसर्वमुपासनाद्यन्वेष्टव्यंप्रयोजनांतराभावात् ॥ तस्यचज्ञानस्यमनसोभगवद्विषयत्वमात्रेणसंभवात्किमस्यासनादिनाकृत्यम् ॥ नचवाच्यंमनसः सर्वदोपासनंकुर्वन्नप्यासीनोविशेषतःकुर्यात् ॥ तदाविक्षेपाल्पत्वेनसंभवात् ॥ ७ ॥

## ॥ ॐ आसीनःसंभवात् ॐ ॥ ७ ॥

सम्यग्भगवद्विषयत्वस्यैवज्ञानसाधनत्वेपितदर्थमेवासनमिति ॥ आसनंविनामनसोभगवतिनिवेशनासंभवे स्मर्तव्यःसततंविष्णुरित्यादिविधीनामनुपपत्तिप्रसंगात् ॥ तस्मादासनादेरावश्यकत्वाभावात्तदुपदेशाप्रामाण्यमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ आसीनइति ॥ जिज्ञासुरासीनएवोपासनंविशेषतःसर्वथा कुर्यात् ॥ उपासनस्यैवज्ञानसाधनत्वेपितस्याऽऽसनेसत्येवसंभवादन्यथाऽसंभवात् ॥आसीनस्यचित्तविक्षेपासंभवादन्यस्यतन्नियमात् ॥ नन्वासीनस्योपासनेसर्वदोपासनाभावः ॥ मैवम् ॥ सदोपासनंकार्यम् ॥ आसनंचापेक्षितमितिभावः ॥ ७ ॥

नन्वेतद्विरुद्धंसर्वदोपासनमासनस्यसर्वथाऽपेक्षितत्वंच ॥ तत्रसर्वदोपासनमेवोपादेयंविहितत्वात् ॥अतोना सनमावश्यकमित्याशंकांपरिहरत्सूत्रमुपन्यस्यसप्रमाणकंव्याचष्टे ॥ ध्यानाच्चेति ॥ नसर्वदोपासनासननि यत्योर्विरोधादासनस्यनावश्यकत्वम् ॥ उपासनंहिद्वेधाभवतिस्मरणंध्यानमिति ॥ तत्रस्मरणस्यसर्वदायो

स्मरणोपासनंचैवध्यानात्मकमितिद्विधा ॥ स्मरणंसर्वदायोग्यंध्यानोपासनमासने ॥ नैरं तर्यमनोवृत्तेर्ध्यानमित्युच्यतेबुधैः ॥ आसीनस्यभवेत्तत्तुनशयानस्यनिद्रया ॥ स्थितस्य

## ॥ ॐ ध्यानाच्च ॐ ॥ ८ ॥

गच्छतोवापिविक्षेपस्यैवसंभवात् ॥ स्मरणात्परमंज्ञेयंध्यानंनास्त्यत्रसंशयइतिनारायणतं त्रे ॥ अतोध्यानत्वाच्च ॥ ८ ॥

ग्यत्वात्सर्वदोपासनविधेस्तद्विषयतयोपपत्तेः ॥ उपासनविशेषस्यचध्यानत्वात्तस्यचासनमंतरेणासंभवा दासनस्यावश्यकत्वंसिध्यति ॥ नचस्मरणेनैवालम् ॥ ध्यानस्यततोऽधिकत्वात् ॥ कुतएतत् ॥ यतःस्मृता वुक्तमतएवेतिभावः ॥ ८ ॥

ननुध्यानार्थमपिनासनमावश्यकंप्रत्याहारादिनाचित्तविक्षेपपरिहारादित्याशंकांपरिहरत्सूत्रंपठित्वास्मृत्यै
वव्याचष्टे ॥ अचलत्वंचेति ॥ नकेवलंप्रत्याहारादिनाविक्षेपाभावोभवतिकिंतुशरीराचलत्वंचापेक्ष्यतच्चा

अचलंचेच्छरीरंस्यात्मनसश्चाप्यचालनम् ॥ चलनेतुशरीर
स्यचंचलंचमनोभवेदितिब्रह्मांडे ॥ ९ ॥ समंकायशिरोपी

॥ ॐ अचलत्वंचापेक्ष्य ॐ ॥ ९ ॥

॥ ॐ स्मरंतिच ॥ ॐ ॥ १० ॥

वंधारयन्नचलंस्थिरः ॥ संप्रेक्ष्यनासिकाग्रंस्वंदिशश्चानवलो
कयन्नित्यादि ॥ १० ॥

सनेसत्येवेतितद्वाऽऽवश्यकमितिभावः ॥ ९ ॥ स्मृतिभिरप्यासनस्यावश्यकत्वंसाधयत्सूत्रमुपन्यस्यताःस्मृती
रुदाहरति ॥ स्मरंतिचेति ॥ स्थिरःस्थिरमनाः ॥ अस्योपविश्यासनइत्यनेनसंबंधाद्विवक्षितसिद्धिः ॥ १० ॥

आसनादिं नियतिवद्देशकालादीनामपिनियतिरस्ति पर्वताग्रेनदीतीरेब्राह्ममुहूर्तेउत्थायेत्यादेरित्याशंकां
निवारयितुंसूत्रंपठित्वाव्याचष्टे ॥ यत्रेति ॥ देशकालादीनांकिमासनादिवद्ध्यानोपयोगितयाऽऽवश्यकत्वं
स्यादुतपृथगेवज्ञानोपयोगित्वात् ॥ नाद्यः ॥नियतदेशकालादिनाध्याने विशेषाभावात् ॥ अतोयत्रदेशादौ
ध्यानस्यैकाग्रताविशेषःसएवदेशादिराश्रयणीयः ॥ नापिद्वितीयः ॥ स्वतंत्रदेशादिनाज्ञानेविशेषाभावादेवे
तिभावः ॥ स्थातव्यमित्युपलक्षणम् ॥ अस्मिन्नेवार्थेस्मृतिमाह ॥ तमेवेति ॥ अत्रापिपूर्ववद्विकल्पः ॥तमे

देशकालावस्थादिषुयत्रैकाग्रताभवतितत्रैवस्थातव्यम् ॥ तमेवदेशंसेवेततंकालंतामवस्थितिम् ॥

## ॥ ॐ यत्रैकाग्रतातत्राविशेषात् ॐ ॥ ११ ॥

तानेवभोगान्सेवेतमनोयत्रप्रसीदति ॥ नहिदेशादिभिःकश्चिद्विशेषःसमुदीरितः ॥ मनःप्रसादनार्थं
हिदेशकालादिचिंतनेतिवाराहे ॥ ११ ॥ अ० ६ ॥

वेतिप्रथमस्यदूषणम् ॥ तत्रहेतुर्नहीति ॥ नियतदेशादिनाध्यानेनकश्चिद्विशेषइत्यर्थः ॥ द्वितीयस्यापिनही
त्यनेनदूषणम् ॥ केवलदेशादिनाज्ञानेनविशेषइत्यर्थः ॥ तत्रहेतुर्मनःप्रसादनार्थमिति ॥ प्रायेणमनःप्रसा
दनार्थत्वात्पर्वताग्राद्युक्तिः ॥ अवस्थितिरासनंतच्चवीरंपद्ममेवेतिननियतिरितिभावः ॥ अतआसनस्या
वश्यकत्वात्तदुपदेशावैयर्थ्यमितिसिद्धम् ॥ ११ ॥ अ० ६ ॥

अत्रभगवज्ज्ञानसाधनध्यानस्यप्रायणांतत्वसमर्थनादस्तिशास्त्रसंगतिः॥ अन्यथाज्ञानिनांध्यानफलाभाव प्रसंगेनमुक्तौतारतम्याभावप्रसंगात्समर्थनीयमेतत्॥प्रकृतंध्यानमेवविषयः॥किंज्ञानपर्यंतमेवाऽऽवश्यकमुत मुक्तिपर्यंतमपीतिसंदेहः॥ज्ञानसाधनत्वंज्ञानिनामपितद्दर्शनंसंदेहबीजम्॥ज्ञानपर्यंतमेवाऽऽवश्यकमितिपूर्वः पक्षः॥दर्शनार्थमेवश्रवणादिविधानात् ॥ ज्ञानार्थंविहितस्यमुक्तिपर्यंतमनुष्ठानेकारणाभावात् ॥ नचज्ञान साधनस्यापिध्यानस्यमोक्षोपयोगित्वात्तावदावश्यकत्वमितिवाच्यम् ॥ ज्ञानमात्रस्यैवमोक्षेसामर्थ्यात् ॥

यावन्मोक्षस्तावदुपासनादिकार्यम् ॥ सयोहवैतद्भगवन्मनुष्येषुप्रायणांतमोंकारमभिध्या

## ॥ ॐ आप्रायणात्तत्रापिहिदृष्टम् ॐ ॥ १२ ॥

यीतेतिहिश्रुतिः ॥ सर्वदैनमुपासीतयावद्विमुक्तिर्मुक्ताअपिह्येनमुपासतइतिसौपर्णश्रुतिः ॥

नचानंदातिशयार्थंध्याननियतिः ॥ आनंदातिशयार्थंश्रवणादिसाधनांतरस्यापिकर्तुंशक्यतयातन्नियमा योगात् ॥ ज्ञानएवध्यानस्यप्राबल्यात् ॥नत्वेकत्रयस्यप्राधान्यंतस्यसर्वत्रापीति ॥ अतोयावन्मोक्षंध्यान स्यकर्तव्यत्वाभावाज्ज्ञानिनांशुकादीनांतद्यर्थमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ आप्रायणादि ति ॥ मुमुक्षुणामोक्षपर्यंतंध्यानमवश्यंकर्तव्यमेव ॥ ध्यानंविनाऽपरोक्षज्ञानाभावेनतावज्ज्ञानपर्यंतमावश्य कत्वादितिभावः ॥ तथापिमुक्तिपर्यंतंतदनुवृत्तिःकुतइत्यतोदृष्टंहीतिसूचितश्रुतिंदर्शयति ॥ सइति ॥ एत देतेषु ॥ ॐकारोहरिः ॥ कैमुत्येनापिध्यानस्यमुक्तिपर्यंतत्वंसाधयन्नाह ॥ सर्वदेति ॥ ज्ञानापूर्वंश्रवणादि

युतध्यानस्यकर्तव्यत्वाज्ज्ञानानंतरंचसम्यग्ध्यानालाभेश्रवणादीत्यतउपासनादीत्यादिपदम् ॥ उक्तंहि ॥ भोक्तव्यकर्मण्यक्षीणेजपेनकथयापिवा ॥ वर्तयंतिमहात्मानस्तन्निष्ठास्तत्परायणाइति ॥ ज्ञानपर्यंतंश्रवणादियुक्तंध्यानम् ॥ ततःप्रायेणकेवलंकर्तव्यमेवेत्यत्रस्मृतिंचाह ॥ शृणुयादिति नेक्षाक्वचनबाध्यतइति॥ कादाचित्क्यपिमोक्षसाधनंभवतीत्यर्थः॥ दृष्टतत्त्वस्यचध्यानंनिरवधिकम् ॥ ज्ञानोत्तरमपिनिरवधिकंध्या

शृणुयाद्यावदज्ञानंमतिर्यावदयुक्तता ॥ ध्यानंचयावदीक्षास्यान्नेक्षाक्वचनबाध्यते ॥ दृष्टतत्त्वस्य चध्यानंयदादृष्टिर्नविद्यते ॥ भक्तिश्चानंतकालीनापरमेब्रह्मणिस्फुटा ॥ आविमुक्तेर्विधिर्नित्यं स्वतएवततःपरमितिब्रह्मांडे ॥ १२ ॥ अ० ७ ॥

नंकिंविहितत्वात्क्रियतेऽन्यथावा ॥ नाद्यः ॥ मोक्षविरोधात् ॥ नद्वितीयः ॥ करणानुपपत्तेरित्यतआह ॥ आविमुक्तेरिति॥ स्वतएवस्वभावेनेत्यर्थः॥ नचवाच्यंज्ञानोत्तरध्यानस्यफलाभावादकर्तव्यत्वमिति ॥ आनंदातिशयफलत्वात् ॥ नचोक्तदोषः ॥ योगारूढस्यतस्यैवशमःकारणमुच्यतइतिवचनादानंदवृद्धौध्यानस्यैवप्रधानसाधनत्वात् ॥ अतोमोक्षपर्यंतंध्यानस्यकर्तव्यत्वेनज्ञानिनामपितद्विचित्रफलेनमुक्तौतारतम्यसिद्धिरितिसिद्धम् ॥ १२ ॥ अ० ७ ॥

अत्रप्रासंगिकंसमाप्यभगवज्ज्ञानेनकर्मक्षयलक्षणफलसिद्धिसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथा मोक्षाभावप्रसंगेनोक्तव्याहतेःसमर्थनीयमेतत् ॥ प्रकृतंज्ञानमेवविषयः ॥ मोक्षंसाधयतिनवेतिसंदेहः ॥ उभयविधार्थदृष्टिःसंदेहबीजम् ॥ नज्ञानेनमोक्षइतिपूर्वःपक्षः ॥ प्रागापादितकर्मणांभावात् ॥ नचतानि

ब्रह्मदर्शनेउत्तराघस्याऽश्लेषःपूर्वस्यविनाशश्च॥ तद्यथापुष्करपलाशआपोनश्लिष्यंतए

**॥ ॐतदधिगमउत्तरपूर्वाघयोरश्लेषविनाशौतद्व्यपदेशात्॥ १३॥**

वमेवंविदिपापंकर्मनश्लिष्यते ॥ तद्यथैषीकातूलमग्नौप्रोतंप्रदूयेतैवंहैवास्यसर्वेपाप्मानः प्रदूयंतइतितद्व्यपदेशात् ॥ १३ ॥

ज्ञानजन्मनिभुज्यंते ॥ बहुशरीरफलकर्मणांभावात् ॥ नचतानिक्रमेणभुज्यंतइतिवाच्यम् ॥ तथासतिबहुकालांतरितज्ञानस्यजीर्णबीजवदमोक्षहेतुत्वापातात् ॥ नचयुगपत्कायव्यूहेनभोगसंभवः ॥ अनियतदेशकालविपाकत्वात् ॥ नचयोगप्रभावेननादृशानामपिभोगः ॥ तथासतिभोगस्याप्यभावप्रसंगात् ॥

तद्भोगकालेचपुनःकर्मांतरसंभवेनासमाप्तेश्च ॥ नचज्ञानीनकरोति ॥ नहिकश्चित्क्षणमपिजातुतिष्ठत्यकर्मकृदित्यादिविरोधात् ॥नचबाध्यंज्ञानेनैवप्राचीनकर्मणांक्षयःपश्चात्तनानामलेपइति ॥ नाभुक्तंक्षीयतेकर्मेतिस्मृतिविरोधात् ॥नचप्रायश्चित्तेनेवज्ञानेनकर्मक्षयइति ॥ विप्रतिपत्तेः॥ब्रह्महाद्वादशाब्दव्रतंचरेदित्यादेर्दग्धगेहेष्टिविधिवदुपपत्तेः ॥ अस्तुवाप्रायश्चित्तेनकर्मक्षयोविशेषप्रमाणबलात् ॥ नचात्रतथाप्रमाणमस्तियेनस्मृतिबाधःस्यात् ॥ किंचज्ञानेनैवकर्मक्षयेज्ञानोदयानंतरंमोक्षःस्यात् ॥ अथनज्ञानानंतरमेवमोक्षस्तर्हिकर्मक्षयएवनप्राप्नोतिनिष्कारणावस्थानायोगात् ॥ नचवक्तव्यमुत्पन्नंज्ञानंनतदेवकर्मक्षिणोतीति॥तथासतिकदापिकर्मक्षयाभावप्रसक्तेः ॥ नहिज्ञानस्यविरम्यव्यापारःसंभवति ॥ अतोज्ञानेनमोक्षासिद्धेरुक्तमयुक्तमिति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ तदिति॥संभवत्येवज्ञानेनमोक्षः ॥ ब्रह्मदृष्टिरितिप्रकृतब्रह्माधिगमादेवपूर्वपापविनाशादुत्तरस्याश्लेषाच्च ॥ नाभुक्तंक्षीयतेकर्मेतिस्मृतिविरोधइतिचेन्न ॥ यथाखलुप्रायश्चित्तविधिबलादेतत्स्मृतेरकृतप्रायश्चित्तविषयत्वंकल्प्यतेतथाऽज्ञविषयत्वस्यापिसंभवात् ॥ नचात्रबाधकाभावः ॥ तद्यथेतिश्रुतिसद्भावादेवेतिभावः ॥ यदप्युक्तंप्रायश्चित्तविधिर्दग्धगेहेष्टिविधिवदतत्परिहारार्थइतितन्न ॥ प्रयोजनांतराभावेनतद्वैयर्थ्यप्रसंगात् ॥ दग्धगेहपदेनाग्निनाशनिमित्तप्रत्यवायवतउपलक्षणात् ॥ १३ ॥

एवंब्रह्मज्ञानिनोमुक्तिसिध्यर्थंज्ञानादेवाघविनाशाश्लेषावुक्कातत्समानन्यायत्वाद्भगवद्वेषिपुण्यस्यापिमि
थ्याज्ञानादेवविनाशाश्लेषौतमःसिध्यर्थंवदत्सूत्रमुपन्यस्यव्याचष्टे ॥ इतरस्यापीति ॥ भगवद्वेषिणः
पातेप्रत्यासन्नेयथाज्ञानिपापस्यैवंपुण्यस्याऽश्लेषोविनाशश्च भवतीतिभावः ॥ पातार्थमितितादर्थ्येदासप्त
मी॥पातेप्राप्तेपितदनुभवानंतरंपुण्यभोगसंभवात्किंतदश्लेषादिनेत्यतआह ॥ तुशब्दइति ॥ अनुत्थानपाते

पुण्यस्याप्येवमसंश्लेषःपाते।।नुशब्दोऽनुत्थानवाची ॥ यथाऽश्लेषोविना

॥ ॐइतरस्याप्येवमसंश्लेषःपातेतु ॐ ॥ १४ ॥

॥ ॐअनारब्धकार्येएवतुपूर्वेतदवधेः ॐ ॥ १५ ॥

शश्चमुक्तस्यतुविकर्मणः ॥ एवंसुकर्मणश्चापिपततस्तमसिध्रुवमित्या।
ग्नेये ॥ १४ ॥ अनारब्धकार्येएवपूर्वेपुण्यपापेविनश्यतः ॥

प्रत्यासन्नेतदर्थमावश्यकावेवभगवद्विषांपुण्याऽश्लेषविनाशावितिभावः ॥ सूत्रार्थेस्मृतिंचाह ॥ यथेति
॥ १४ ॥ नन्वेवंयदिब्रह्मज्ञानिद्वेषिणोज्ञानादिनैवपापपुण्यक्षयेज्ञानाद्युदयएवमोक्षादिप्रसंगइत्याशंकांप
रिहरत्सूत्रंपठित्वाव्याचष्टे ॥ अनारब्धेति ॥ नास्माभिःसर्वपापादिक्षयोज्ञानादिनोच्यतेयेनतदैवमुक्त्या।

दिप्रसंगः किंतु यस्य पापस्य कार्यं दुःखं भोक्तुं नारब्धं तस्यैव ज्ञानेन विनाशो यस्य च पुण्यस्य कार्यं सुखं न भोक्तु मारब्धं तस्यैव मिथ्याज्ञानेन नाश इति भावः ॥ ज्ञानानंतरं प्रारब्धप्रतिबंधकसद्भावः कुत इत्यत आह ॥ तस्ये ति ॥ अत्र यावत्प्रतिबंधेन न विमोक्षे तत तावदेव ज्ञानिनो मोक्षाय चिरमिति मोक्षस्य प्रतिबंधनिवृत्त्यवधित्वश्रव

तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्यत इति तदवधेः ॥ तुशब्दः स्व
तिद्योतकः ॥ यदनारब्धपापं स्यात्तद्धि नश्यति निश्चयात् ॥ पश्यतो ब्रह्म
निर्द्वंद्वं हीनं च ब्रह्म पश्यतः ॥ द्विषतो वा भवेत्पुण्यनाशो नास्त्यत्र संशयः ॥
तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचित् ॥ आरब्धयोश्च नाशः स्या
दल्पयोः पुण्यपापयोरिति च नारायणतंत्रे ॥ १५ ॥

णाज्ज्ञानोत्तरमपि कर्मसद्भावो ज्ञायत इति भावः ॥ तथापि प्रारब्धकर्मसद्भावोऽत्र स्फुटं न प्रतीयत इत्यत आह ॥
तुशब्द इति ॥ चार्थस्तुशब्द इत्युक्तं भवति ॥ कासौ स्मृतिरित्ति तामुदाहरति ॥ यदिति ॥ एतेन नाभुक्तमिति
स्मृतिः प्रारब्धविषयेत्यपि लभ्यते ॥ १५ ॥

ननुज्ञानिकृतपुण्यस्यपूर्वोत्तरस्यविनाशाश्लेषौविद्येतेनवा ॥ आद्येऽघशब्दवैयर्थ्यम् ॥ द्वितीयेमोक्षासिद्धिः ॥ पुण्यस्यापिबंधकत्वादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ अग्नीति ॥ किंपूर्वोत्तरपुण्यस्याकाम्यस्यनाशाश्लेषौविकल्प्येतेउतकाम्यस्य ॥ आद्येननाशाश्लेषावितिब्रूमः ॥ नचतावताबंधानिवृत्तिः ॥ पूर्वकृताग्निहोत्राद्यकाम्यकर्मतदधिगमाख्यकार्यायभवत्युत्तरकालकृतंचज्ञानकार्यमोक्षा

अग्निहोत्राद्यपिमोक्षानुभवायैव ॥ तुशब्दात्ब्रह्मदर्शनवतः॥सएनमविदितोनभुनक्तियथा वेदोवाऽननूक्तोऽन्यद्वाकर्माकृतम् ॥यदिहवाअप्यनेवंविन्महत्पुण्यंकर्मकरोतितद्धास्यां

॥ ॐ अग्निहोत्रादितुतत्कार्यायैवतद्दर्शनात् ॐ ॥ १६ ॥

ततःक्षीयतएवात्मानमेवलोकमुपासीतसयआत्मानमेवलोकमुपास्तेनहास्यकर्मक्षीयते ऽस्माद्ध्येवात्मनोयद्यत्कामयतेतत्तत्सृजतइतिदर्शनात् ॥ १६ ॥

तिशयानुभवायभवतीत्युभयस्यापिमोक्षानुप्रवेशितत्वादितिभावः ॥ पूर्वंज्ञानिद्विषिणोरनुवृत्तत्वादत्राप्युभयोरेतदुच्यतइतिशंकामाभूदितिभावेनाह ॥ तुशब्दादिति ॥ इतितमन्यस्माद्विशिनष्टीतिशेषः ॥ ननुब्रह्मदर्शिकृतस्यैवपूर्वोत्तरपुण्यस्यमोक्षानुप्रवेशेनाबंधकत्वंकुतइत्यतआह ॥ सइति॥अत्रसएनमित्यादिनाऽज्ञकृतकर्मणोल्पफलत्वमुक्त्वासयइतिज्ञानिनःपूर्वोत्तरपुण्यस्योक्तरीत्यामोक्षानुप्रवेशउच्यते ॥ योजिज्ञा

सुरुपास्तेतस्यपुण्यंज्ञानद्वारेणाक्षयमोक्षफलदंभवतीतितथायउपास्तेजानीतेतस्यपुण्यमक्षयमोक्षातिश
यायभवतीति ॥ एतच्चकर्माकाम्यमेव॥काम्यस्यस्वल्पफलप्रदत्वात् ॥ १६ ॥ द्वितीयपक्षोत्तरत्वेनसूत्रंपठि
त्वाव्याचष्टे ॥ अतइति ॥ यदकाम्यपुण्यतोऽन्यत्पूर्वोत्तरकाम्यपुण्यंतदपिनाशाश्लेषौप्राप्नोति ॥तत्राप्य
स्तिविशेषः ॥ पूर्वतनंकाम्यकर्मद्विविधंप्रारब्धमप्रारब्धंच॥तत्रप्रारब्धंननश्यति ॥ अप्रारब्धंद्विविधम् ॥ इ

मुक्तावनुभवकारणाद्यदन्यत्तत्पुण्यमपिविनश्यत्यप्रारब्धमनभीष्टंच ॥
तथाह्येकेषांपाठउभयोस्त्यागेन ॥ तस्यपुत्रादायमुपयंतिसुहृदःसाधुकृ

## ॥ ॐ अतोऽन्यदपीत्येकेषामुभयोः ॐ ॥ १७॥

त्यांद्विषंतःपापकृत्यामिति ॥ अनभीष्टमनारब्धंपुण्यमस्यविनश्यति ॥
किमुपापंपरब्रह्मज्ञानिनोनात्रसंशयइतिपाद्मे ॥ १७ ॥

ष्टमनिष्टंच ॥ तत्रेष्टमपिननश्यति ॥ अनिष्टमेवनश्यति ॥ तथोत्तरकालीनमपिद्विविधम् ॥ इष्टमनिष्टंच ॥
तत्रेष्टस्यसंश्लेषोऽनिष्टस्याऽश्लेषइतिभावः ॥ कुतएतदित्यतआह ॥तथाहीति ॥ अत्रापिसाधुकृत्याशब्दे
नकाम्यप्रारब्धमनिष्टंपुण्यमुच्यते ॥ अकाम्यस्यविनियुक्तत्वात्प्रारब्धस्यभोक्तव्यत्वात् ॥ इष्टनाशस्या
पुरुषार्थत्वात् ॥ तथाप्ययंविशेषोऽत्रस्फुटंनप्रतीयतेऽतआह ॥ अनभीष्टमिति ॥ १७॥

कथंज्ञानिकृतोत्तरकालीनाकाम्यपुण्यस्यमोक्षानुप्रवेशःकर्मणोनाशशिरस्काल्पफलत्वादित्याशंकांपरि
हरत्सूत्रंपठित्वाव्याचष्टे ॥ यदेवेति ॥ यद्यप्यज्ञकर्मणोनाशशिरस्काल्पफलत्वंतथापिज्ञानिकृताकाम्यक
र्मणोमहानंतफलत्वाद्युक्तस्तस्यमोक्षानुप्रवेशइतिभावः ॥ कुतइत्यतउक्तार्थंक्रमेणश्रुतिस्मृतीदर्शयति ॥

ब्रह्मदर्शिकृतमल्पमपिपुण्यंमहत्तममनंतंचभवति ॥ यदेवविद्ययाकरो
तिश्रद्धयोपनिषदातदेववीर्यवत्तरंभवतीतिश्रुतेः॥ नह्यस्यकर्मक्षीयतइति

॥ ॐ यदेवविद्ययेतिहि ॐ ॥ १८ ॥

च ॥ अल्पमात्रकृतोधर्मोभवेज्ज्ञानवतोमहान् ॥ महानपिकृतोधर्मो
ह्यज्ञानांनिष्फलोभवेदितिचभारते ॥ १८ ॥

यदेवेति ॥ एतत्सूत्रत्रयन्यायोद्वेषिपुण्येपापेचानुसर्तव्यः ॥ तत्पूर्वपुण्यस्याप्रारब्धस्यविनाशउत्तरस्या
श्लेषउक्तः ॥ तत्रानिष्टंचेन्ननश्यतीत्यादिग्राह्यम् ॥ तेषामपिकिंचित्पुण्यसंश्लेषदर्शनात्पापस्यनुपूर्वक्ल
स्यकियतश्चिद्द्वेषाभिवृद्धिहेतुत्वेनोत्तरस्यतुसाक्षात्तमोऽनुप्रवेशइति ॥ १८ ॥

तथापिनब्रह्मज्ञानिविद्वेषिणोमुक्तितमसीसिध्यतः ॥ उभयोरपिप्रत्येकंप्रारब्धपुण्यपापसद्भावादित्याशंकां परिहरत्सूत्रंपठित्वाव्याचष्टे ॥ भोगेनेति ॥ नप्रारब्धकर्मसद्भावेनमोक्षाद्यभावः ॥ प्रारब्धंभोगेनक्षपयित्वामोक्षादिप्राप्तिसंभवादितिभावः ॥ ज्ञानिनःप्रारब्धभोगेविशेषसूचकस्तुशब्दः ॥ यदुक्तमुपमर्दंचेति ॥ यथाज्ञानाद्यनंतरमपिनमोक्षादिनियमस्तथाकर्मक्षयानंतरमपीतिशंकामाभूदितिभावेनाह ॥ अथेति ॥शब्दइतिशेषः ॥ कुतोनियमइत्यतआह॥आरब्धेति ॥ आरब्धभोगस्यनिरवधिकत्वेब्रह्मादिप्राप्त्यनुपपत्तिरिति

आरब्धपुण्यपापेभोगेनक्षपयित्वाब्रह्मसंपत्स्यते॥अथेतिनियमसूचकः॥आरब्धपुण्यपापस्यभोगेनक्षपणादनु ॥ प्राप्नोत्येवतमोघोरंब्रह्मवानात्रसंशयः ॥ ब्रह्मणांशतकालात्तुपूर्वमारब्धसंक्षयः॥

## ॥ ॐ भोगेनत्वितरेक्षपयित्वाथसंपत्स्यते ॐ ॥ १९ ॥

नियमेनभवेन्नात्रकार्याकाचिद्विचारणेतिचनारायणतंत्रे ॥ १९ ॥ अ० ८ ॥ इतिश्रीमद्ब्रह्मसूत्रभाष्येचतुर्थाध्यायस्यप्रथमःपादः ॥ १ ॥

तत्राह ॥ ब्रह्मणामिति ॥ब्रह्मणांशतस्ययःकालस्तत्समाप्तेःपूर्वमेवेत्यर्थः॥नचवाच्यंपुनःपुनरिष्टकाम्यपुण्यापादनादमुक्तिरिति ॥ प्रजहातियदाकामानित्यादेस्तदापादनस्यकादाचित्कत्वात् ॥ अतोज्ञानेनक्षीणकर्मणांमोक्षसंभवादुक्तंयुक्तमितिसिद्धम् ॥१९॥अ० ८॥इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमद्ब्रह्मसूत्रभाष्यस्यटीकायांजयतीर्थमुनिविरचितायांतत्त्वप्रकाशिकायांचतुर्थाध्यायस्यप्रथमःपादः ॥१॥

श्रीगुरुभ्योनमः ॥ हरिःॐ ॥एतत्पादार्थंदर्शयति ॥ देवानामिति ॥ज्ञानभोगाभ्यांक्षीणकर्मणामत्रदेहक्षय क्रमोवक्तव्योभवति ॥ सचद्विविधः ॥ देवानांस्वोत्तमप्रवेशेनतत्रदेहलयः ॥ अन्येषांतुब्रह्मनाड्यादेहोत्क्रांतिरिति ॥ तदुभयमस्मिन्पादेऽधिकार्याधिक्यक्रमेणैवनिगद्यतइतिभावः ॥ नचैवंसतिपादभेदप्रसंगः ॥उपा

श्रीगुरुभ्योनमः ॥ हरिः ॐ ॥ देवानांमोक्षउत्क्रांतिश्चास्मिन्पादउच्यते ॥ वागभिमानिनी उमामनोभिमानिनिरुद्रेलीयते॥वाचोमनोवशत्वदर्शनात् ॥तस्ययावन्नवाङ्मनसिसंपद्यत

॥ ॐ वाङ्मनसिदर्शनाच्छब्दाच्च ॐ ॥ १ ॥

इतिशब्दाच्च ॥ उमैवैवाक्समुद्दिष्टामनोरुद्रउदाहृतः ॥ तदेतन्मिथुनंज्ञात्वानदांपत्याद्विहीयतइतिस्कांदे ॥ १ ॥

सनावदेकस्यैवार्थस्याधिकारिभेदेनद्वैविध्यात् ॥तत्रयत्रदेवतालयेविवादस्सविचार्यते ॥ अत्रादौभगवत्प्राप्तिलक्षणमोक्षार्थंवाचोमनसिलयसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथामोक्षाभावप्रसंगेनोक्तविरोधः स्यादतःसाधनीयमेतत् ॥ प्रकृतज्ञानिनामंतर्गतावाग्विषयः॥ मनसिलीयतेनवेतिसंदेहः ॥ तत्पूर्वकत्वादिति

मनोजातत्वोक्तिर्विशेषप्रमाणादर्शनंचसंदेहबीजम् ॥नवाङ्मनसिलीयतइतिपूर्वःपक्षः॥तथाहि॥तदधीनस्य
तत्रलयोवक्तव्यः ॥ नचवाङ्मनसयोर्नियम्यादिनिश्चेतुंशक्यते ॥ वाक्पूर्वरूपंमनउत्तररूपम्॥मनःपूर्वरूपं
वागुत्तररूपमितिव्यामिश्रत्वोक्तेः ॥ नचान्यतरग्रहणंयुक्तंवचनद्वयस्यापिसाम्यात् ॥ अतोवाचोमनसिल
याभावेनमोक्षाभावादनियमइत्युक्तव्याघातइति॥सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ वागिति ॥ अस्त्येव
वाचोमनसिलयः॥ प्रत्यक्षतएववाचोमनोवशत्वदर्शनात् ॥ नचोक्तेर्व्यामिश्रत्वेनमनःप्राधान्यानिश्चयः ॥
अत्रखलुवाक्पूर्वरूपमित्यादिनावाङ्मनसयोःपूर्वोत्तरवर्णदेवतात्वेगुणप्रधानभावेचमुनिमतविवादउच्य
ते ॥ तत्रवर्णदेवतात्वविषयेतूक्तयोःसाम्यम् ॥ अन्यतरपक्षेविशेषादर्शनात् ॥ नचतत्रव्यामिश्रतापि ॥ उ
भयोरपिवर्णदेवतात्वोपपत्तेः॥गुणप्रधानभावेतुसाम्यमेवनास्ति ॥ मनसावाअग्रेसंकल्पयत्यथवाचाव्याह
रतीतियुक्त्यामनःपूर्वकत्वस्यविशेषश्रवणात्प्रत्यक्षानुसारित्वाच्चेतिभावः ॥ नचवाचोमनोधीनत्वेपिदेवत
योःकुतस्तदितिवाच्यम् ॥ अचेतनस्यान्योन्यवशत्वस्यदेवतानिमित्तत्वात् ॥ अस्तुवाचोमनोधीनत्वं
तथापितत्रकुतोलयोनियामकानामनेकत्वेननिश्चयायोगादित्यतआह ॥ तस्येति ॥ नन्वेतच्छ्रुतिसूत्रगतौ
वाङ्मनःशब्दावुमारुद्रपरौकुतइत्यतआह ॥ उमेति ॥ अत्रोमापदेनवारुणीसुपर्णीचोच्यते ॥ रुद्रपदेनच
शेषसुपर्णावितिज्ञातव्यम् ॥ १॥

अस्त्वेवंवाचोलयनिर्णयस्तथापिनसर्वदेवानांमोक्षोलयानिश्वयादित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ अतएवेति ॥ नदेवानांमोक्षाभावः ॥ सर्वेषामपिदेवानांस्वनियम्यनियामकभावानुसारेणलयानिश्वयात् ॥ नचनियामकबाहुल्येनानिश्चयः ॥ श्रुत्यानिर्णयोपपत्तेरितिभावः ॥ कासौश्रुतिरित्यतस्तामुदाहरति ॥ अग्नाविति ॥ अग्नोमारुद्रपदाभ्यांसुपर्णीसुपर्णावुच्येते ॥ अग्नेस्तुसूर्यद्वारेणेंद्रेलयोज्ञातव्यः ॥ अतोवागादीनां

अतएवचशब्दात्सर्वाणिदेवतानियथाऽनुकूलंविलीयंते ॥ अग्नौ

## ॥ॐ अतएवचसर्वाण्यनु ॐ ॥२॥

सर्वेदेवाविलीयंतेअग्निरिंद्रेइंद्रउमायामुमारुद्रेविलीयतएवम
न्यानिदैवतानियथाऽनुकूलमितिगौपवनश्रुतिः ॥ २ ॥ अ० १ ॥

मनआदिषुलयनियमाज्ज्ञानिनांमुक्तिनियमइतिसिद्धम् ॥ २ ॥ अ० १ ॥ अत्रमनसोब्रह्मप्राप्त्यर्थंप्राणेलयसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथामोक्षाभावप्रसंगेनोक्तव्याहतिरेवस्यादतःसमर्थनीयमेतत् ॥ प्रकृतंमनएवविषयः ॥ प्राणेलीयतेनवेतिसंदेहः ॥ तस्यप्राणोत्पन्नत्वंविशेषादर्शनंचसंदेहबीजम् ॥ नप्राणेमनोलीयतइतिपूर्वःपक्षः ॥ मनसःप्राणादनूनत्वात् ॥ सर्वप्रवृत्तिहेतुर्हिप्राणः ॥ मनोपिप्रत्यक्षतएवान्वयव्य

तिरेकाभ्यांसर्वप्रवृत्तिकारणंदृश्यते ॥ नचैयदामननादितिमनसःप्राणादूनत्वमुक्तमितिवाच्यम् ॥तत्रमनःश ब्दस्यान्यपरत्वात् ॥ नचस्मरशब्देनतद्ग्रहणम् ॥ मनःप्राणयोरुक्तन्यायेनसाम्यात् ॥ तत्पदस्याप्यन्यपर त्वोपपत्तेः ॥ नचमनसःप्राणोत्पन्नत्वात्तत्रलयः ॥ तस्माकूश्रुतेश्चेतिमनसोभगवदुत्पन्नत्वस्योक्तत्वात् ॥ अतोमनसोलयाभावेनमोक्षाभावादनियमइत्युक्तहानिरिति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ तदिति॥

मनःप्राणइत्युत्तराद्वचनान्मनोऽभिमानीरुद्रःप्राणेवायौविली

## ॥ ॐ तन्मनः प्राणउत्तरात् ॐ ॥ ३ ॥

यते ॥ वायोर्वावरुद्रउदेतिवायौविलीयतेतस्मादाहुर्वायुर्देवानां

श्रेष्ठइतिचकौंडिन्यश्रुतिः ॥ ३ ॥ अ० २ ॥

मनःप्राणेलीयतएव ॥ मनःप्राणइतिवाङ्मनसिसंपद्यतइतिपूर्वोदाहृतोत्तरवाक्यसद्भावादितिभावः ॥ अत्र प्राणपदेनचतुर्मुखः॥तत्रचमनसोलयोवाणीद्वारा ॥ ननुकथंप्राणादनुत्पन्नस्यमनसःप्राणेलयइत्यतआह॥ वायोरिति ॥ नचभगवदुत्पन्नत्वोक्तिविरोधः ॥ प्राणद्वारातदुपपत्तेः ॥ नचतयोश्श्रेष्टकत्वसाम्यम् ॥ मनउ दक्रामन्मीलितइवाश्नन्पिबन्नास्तैवप्राणउदक्रामत्तत्प्राणउत्क्रांतेअपद्यत ॥ मनःप्राविशदशयदेवप्राणःप्रा विशत्तत्प्राणेप्रपन्नउदतिष्ठदित्यादेः ॥ अतोमनसःप्राणेलयसद्भावादुक्तंयुक्तमितिसिद्धम् ॥ ३ ॥ अ० २ ॥

अत्रप्राणस्यमोक्षसिध्यर्थंपरमात्मनिलयसमर्थनादस्तिशास्त्रादिसंगतिः॥ अन्यथाकस्यापिमोक्षाभावप्रसं
गात्समर्थनीयमेतत् ॥ प्रकृतःप्राणोऽत्रविषयः॥किंपरमात्मनिलीयतेनवेतिसंदेहः ॥ पूर्वोक्तंसंदेहबीजम्॥प्रा
णोनपरमात्मनिलीयतइतिपूर्वःपक्षः ॥ तस्यतदधीनत्वानिश्चयात् ॥ नचवाच्यंचक्षुरादिवदित्यादौतदुक्त

सप्राणःपरमात्मनिविलीयते ॥ सर्वेप्राणमुपगच्छंतिप्राणःपरमुपगच्छतिप्राणंदे

## ॥ ॐ सोध्यक्षेतदुपगमादिभ्यः ॐ ॥ ४ ॥

वानुप्राणंतिप्राणःपरमनुप्राणितितस्मादाहुःप्राणस्यप्राणइति॥प्राणःपरस्यांदेवतायां॥
मुक्ताःसंतोग्निमादिश्यदेवाःसर्वेपिभुंजते ॥ अग्निरिंद्रंतथेंद्रश्चवायुमादिश्यसोपितु ॥

मिति ॥ तस्यानन्याधीनत्वेपिश्रुतिसद्भावात् ॥ नचतस्यागत्यंतरंचोक्तमितिवाच्यम् ॥ अनन्याधीनत्वेप्रा
णस्यश्रुतिबाहुल्यसद्भावात् ॥ बाहुल्यस्यप्राबल्यहेतुत्वात् ॥ नहिप्रबलस्यदुर्बलेनबाधः ॥ वैपरीत्यस्यैवो
चितत्वात् ॥ महांतमस्यमहिमानमाहुरनद्यमानोयदनन्नमत्तीतिप्राणस्यलयाभावोक्तेश्च ॥ अतःप्राणस्य
परमात्मनिलयाभावेनकस्यापिमोक्षाभावइति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ सइति ॥ प्राणोहि

रण्यगर्भःपरमात्मनिलीयतएवतस्यतदधीनत्वात् ॥ नचतदनिर्णयः ॥ तदधीनत्वेपिश्रुत्यादिबाहुल्यसद्भावात् ॥ नचसाम्यम् ॥ तदधीनत्वश्रुतीनांनिरवकाशत्वात्॥ स्वातंत्र्यश्रुतीनांतुसर्वेप्राणमुपगच्छंतीतिन्यायेनसावकाशत्वात् ॥ सावकाशनिरवकाशयोश्चनिरवकाशस्यप्राबल्यात् ॥ अनघमानइतिचान्यैरनघमा

आविश्यपरमात्मानंभुंक्ते भोगांस्तुबाह्यकान् ॥ नह्यानंदोनिजस्तेषांपरैर्लभ्यःकथंचन ॥
किमुविष्णोःपरानंदोनतेविष्णावितिश्रुतेः ॥ प्राणस्यतेजसिलयोमार्गमात्रमुदाहृतम् ॥
सर्वेशितुश्चसर्वादेस्तस्यान्यत्रलयःकथमित्यादिश्रुतिस्मृतिभ्यः ॥ ४ ॥ अ० ३॥

नइत्यर्थोपपत्तेरितिभावः ॥ बाह्यकानित्येतदेवोपपादयति ॥ नहीति ॥ ननुप्राणस्तेजसीतिश्रुतेःप्राणस्यरमायांलयोनपरमात्मनीत्यतआह ॥ प्राणस्येति ॥ चतुर्मुखस्यतेजसिलयोनामतत्प्राप्तिमात्रंनतुतत्रदेहलयः ॥ तस्यसाक्षात्परमात्मनिलययोग्यत्वादितिभावः ॥ प्राणत्वेऽस्येवतेजसिलयः॥ अतोविरिंचस्यहरौलयसद्भावाद्युक्तःसर्वज्ञानिनांमोक्षइतिसिद्धम् ॥ ४ ॥ अ० ३ ॥

अत्रदेवानांपरमात्मप्राप्त्यर्थंसमस्तभूतेषुलयसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अग्नावेवसर्वलयेप्रागुक्तन्यायबाधःस्यादतःसमर्थनीयमेतत् ॥ अग्नौसर्वेदेवाविलीयंतइत्युक्तदेवाविषयः ॥ किमेकस्मिन्नग्नावेवलीयंतेउतभूतांतरेपीतिसंदेहः ॥ श्रुतिरन्याधीनत्वंचसंदेहबीजम् ॥ अग्नावेवसर्वदेवानांलयइतिपूर्वःपक्षः ॥ अग्नौसर्वेदेवाविलीयंतइतिश्रुतेर्विपर्ययेप्रमाणाभावाच्च ॥ नचान्याधीनत्वादन्यत्रलयः ॥ नियामकानां

भूतेष्वन्येषांदेवानांलयः ॥ भूतेषुदेवाविलीयंतेभूतानिपरेनपरउदे

**॥ ॐ भूतेषुतच्छ्रुतेः ॐ ॥ ५ ॥**

तिनास्तमेत्येकलएवमध्येस्थातेतिबृहच्छ्रुतेः ॥ ५ ॥ अ० ४ ॥

बाहुल्येनतस्यानिर्णायकत्वात् ॥ अतोऽशेषदेवानामग्नावेवलयाद्यदुक्तमधमानामुत्तमेषुलयइतितदयुक्तमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ भूतेष्विति ॥ येऽत्रविशिष्योक्तेभ्योऽन्येदेवास्तेषांपंचस्वपिभूतेषुलयोनत्वेकस्मिन्नग्नावेव ॥ भूतेषुदेवाइतिश्रुतेरेवेत्यर्थः ॥ अत्रभूतानिपरइतिनसाक्षात् ॥ आकाशोव्योर्बृहस्पतिद्वाराभूतवायोःप्रवहस्येंद्रद्वाराअपांसोमद्वारेति ॥ अतःसर्वेषामग्नौलयाभावादुक्तंयुक्तमिति सिद्धम् ॥ ५ ॥ अ० ४ ॥

अत्रपुनर्देवानांमुक्त्यर्थंसर्वभूतेषुलयसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथोत्तमानामधमेषुलयप्रसंगा त्समर्थनीयमेतत् ॥ प्रकृतदेवाएवात्रविषयः ॥ किंसर्वभूतेषुलीयंतउताग्नावेवेतिसंदेहः ॥ उक्तमेवसंदेहबीजम् ॥ अग्नावेवसर्वेषांलयइतिपूर्वःपक्षः ॥ अग्नौसर्वेदेवाविलीयंतइतिश्रुतेः॥ नचभूतेषुदेवाविलीयंतइति श्रुतिविरोधः ॥ एकस्मिन्नग्नावेवसर्वदेवलयांगीकारेपितदुपपत्तेः ॥ अस्तितावद्भूतानामुत्पत्तिक्रमवैपरीत्ये

नैकस्मिन्भूतेसर्वेषांदेवानांलयः ॥ पृथिव्यामृभवोविलीयंतेवरुणेऽश्विनावग्नावग्नयोवा

या।विंद्रःसोमआदित्योबृहस्पतिरित्याकाशएवसाध्याविलीयंतेऋभवःपृथिव्यांवरुणआ

## ॥ ॐ नैकस्मिन्दर्शयतोहि ॐ ॥ ६ ॥

पोग्नयस्तेजसिमरुतोमारुतइतिआकाशेविनायकाविलीयंतेइतिमहोपनिषच्चतुर्वेदशि

खाचदर्शयतः ॥ अतोऽग्नौसर्वेदेवाविलीयंतइत्यग्निर्निर्दिष्टानामेव ॥ ६ ॥ अ० ५ ॥

नलयः॥उत्पत्तिश्चाकाशादिक्रमेणात्मनआकाशइतिश्रुतेः॥ मुक्तिश्चप्रलयविशेषः॥ तथाचाग्नावेवसर्वदेवानांलयांगीकारेपिभूतेष्वित्युपपद्यते॥अग्नेर्वायौवायोराकाशेविलयात्॥नचवाच्यंमुख्यार्थःकिंनस्यादिति॥अग्नौसर्वेदेवाविलीयंतइत्येतच्छ्रुत्यन्यथानुपपत्तेर्निरवकाशत्वात् ॥नचात्रविशेषप्रमाणमस्ति॥अतोऽग्नावेवसर्वदेवानांविलयादुक्तव्यवस्थानुपपत्तिरिति॥सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे॥ नैकस्मिन्निति॥नैक

स्मिन्नग्नावेवभूतेसर्वदेवानांलयोवाच्यः ॥ पृथिव्यामृभवइत्यादिश्रुतिभ्यांप्रत्येकंभूतेषुदेवतालयस्योक्तत्वा
त् ॥ एषांदेवानांयस्मिन्भूतेलयउच्यतेतत्तद्देवानांतत्तद्भूतोद्भूतत्वाच्च ॥ नचाश्विप्रभृतीनांवरुणाद्यनुत्पन्न
त्वान्नतत्रलयोपपत्तिरितिवाच्यम् ॥ तेषांतदुत्पन्नत्वाभावेपिविशेषवचनाभावाच्चस्वसमानाबादिदेवता
लयस्थानेवरुणादौलयोपपत्तेः ॥ अतोयदन्यथाव्याख्यानंतदयुक्तमितिभावः ॥ अत्रवायुमारुतपदाभ्यां
हिरण्यगर्भउच्यते ॥ तत्रेंद्रस्यलयउक्तक्रमेणसोमस्यचानिरुद्धकामवारुणीशेषवाणीद्वारेणसूर्यस्यबृहस्प
तिशक्रसौपर्णीसुपर्णवाणीद्वारेणमरुतामपींद्रादिद्वारा ॥ भूताभिमानिनांचान्योन्यलयाभावादन्यथाव्या
ख्यानमयुक्तम् ॥ नचोत्पत्तिश्रुतिविरोधः ॥ अत्रजडानांमुख्योत्पत्त्यभिधानात् ॥ देवतानांत्वनुसर्गप्रतिपा
दनात् ॥ ननुतत्राग्नौसर्वेदेवाविलीयंतइतिश्रुतेःकागतिरित्यतआह ॥ अतइति ॥ यतएवंपृथक्प्रत्येकं
भूतेषुलयःसिद्धःअतोग्नौसर्वेदेवाविलीयंतइतिश्रुत्योदाहृतश्रुतावग्नौविलीयमानत्वेननिर्दिष्टानामेवलयोऽ
भिधीयतइत्यंगीकार्यमितिभावः ॥ उपलक्षणमेतत् ॥ [illegible]सर्वेषांभूतानांगप्रवेशिनांतत्रैवल
यः ॥ अतोग्नावेवसर्वेषांलयात्तात्राद्युक्तव्यवस्थायुक्तेतिसिद्धम् ॥ ६ ॥ अ० ५ ॥ अग्रप्रकृतौविष्णौल
याभावसमर्थनाद्दस्तिशास्त्रादिसंगतिः ॥ [illegible] गवानि[illegible] प्रसंगादुक्तवाथन्युपपादनीयमेतत् ॥
प्राणादुत्तमाप्रकृतौविपर्ययः ॥ परमात्मानिलीयंतेनेतिनेतिसिद्धम् ॥ [illegible] त्वंचमेवद्वीजम् ॥
लीयतइतिपूर्वःपक्षः ॥ भगवद्धीनत्वात् ॥ नचतत्[illegible] ॥ [illegible]

अन्यथावागादीनांमनःप्रभृतिषूक्तलयोपिनस्यात् ॥ नचप्रकृतेरसंसारित्वस्योक्तत्वाल्लयाभावः॥असंसारित्वस्यैवानुपपत्तेः॥ तथात्वेभगवतासर्वसाम्यापातात्॥नचगुणांतरवैषम्यम्॥नित्यसंसारराहित्येसर्वगुणोपपत्तेः॥ नचसर्वसाम्यमंगीकर्तुंशक्यम्॥सिद्धांतविरोधात् ॥अतस्तस्याःसंसारित्वाद्भगवतिलयसद्भावादधिकारित्वेनाधिकारिणांप्राणावसानत्वोक्तिरयुक्तेति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ समनेति ॥ अत्राद्यश्चशब्दःपूर्वसूत्रान्नञोनुकर्षार्थः॥नप्रकृतिर्लीयते॥ यतस्तस्याअनुपोष्यानुपास्यस्वतएवामृतत्वम्॥नहिनि

देशतःकालतश्चव्याप्त्यासमोनापरमपुरुषोयस्याःसासमना ॥ संसारानुपक्रमात्स्वतएवा

## ॥ ॐसमनाचास्त्युपक्रमादमृतत्वंचानुपोष्य ॐ ॥ ७ ॥

मृतत्वंतस्याः ॥ बृहच्छ्रुतिश्च ॥ द्वौवावसत्यनुपक्रमौप्रकृतिश्चपरमश्च ॥ द्वावेतौनित्यमुक्तौनित्यौचसर्वगतौचैतौज्ञात्वाविमुच्यतइति ॥ नैतावतासाम्यम ॥ ७ ॥

त्यमुक्तायालक्ष्म्यालयःसंभवति॥नित्यमुक्तत्वमेवतस्याःकुतः ॥ कदापिसंसारोपक्रमणाभावात् ॥ तदपिकुतः ॥ परमपुरुषवन्नित्यत्वात्सर्वगतत्वाच्च ॥ नहिसंसारित्वेतदुपपत्तिरितिभावः ॥ एतेनतदधीनत्वादितिप्रत्युक्तम् ॥ नचश्रुतिविरोधः॥अतिसामीप्यार्थतयोपपत्तेः ॥ हरेरत्यंतसामीप्यंलयोलक्ष्म्याःप्रकीर्तितइतिवचनात् ॥ यदुक्तंप्रकृतेरीश्वरवन्नित्यसर्वगतत्वेनानुपक्रांतसंसारित्वान्नित्यमुक्तत्वंतत्कुतइत्यतआह ॥ बृहदिति ॥ नन्वेवंप्रकृतेरपिनित्यमुक्तत्वांगीकारेभगवतासर्वसाम्यमापतितमित्यतआह ॥ नेति ॥ ७ ॥

नित्यमुक्तत्वाद्यस्तीत्येतावतानप्रकृतिपुरुषयोःसर्वसाम्यमित्येतत्कुतइति ॥ तत्रहेतुतयासूत्रंपठित्वातदुपात्तश्रुतिमेवोदाहरति॥तदिति ॥ प्रकृतिपुरुषयोर्नित्यत्वादिनासाम्यमेवनतुसर्वसाम्यम् ॥ प्रकृतौविलय

समावेतौप्रकृतिश्चपरमश्चनित्यौसर्वगतौनित्यमुक्तौअसमावेतौप्रकृतिश्च
परमश्चविलीनोह्रिप्रकृतौसंसारमेतिविलीनःपरमेत्वमृतत्वमेतीतिसौपर्ण

॥ ॐतदपीतेसंसारव्यपदेशात् ॐ ॥ ८ ॥

॥ ॐसूक्ष्मंप्रमाणतश्चतथोपलब्धेः ॐ ॥ ९ ॥

श्रुतेः ॥ ८ ॥ सूक्ष्मत्वंचाधिकंब्रह्मणःप्रकृतेः ॥ ज्ञानानंदैश्वर्यादिप्रमाणाधिक्यंच॥ सर्वतःप्रकृतिःसूक्ष्माप्रकृतेःपरमेश्वरः॥ज्ञानानंदौतथैश्वर्यंगुणाश्चान्येऽधिकाःप्रभोरितिचतुरश्रुतिः ॥ ९ ॥

स्यसंसारहेतुत्वेनेश्वरेलयस्यमुक्तिहेतुत्वेनश्रुतिसिद्धत्वात् ॥ मोचकत्वामोचकत्ववतोःसर्वसाम्यायोगादितिभावः ॥ ८ ॥ हेत्वंतरेणप्रकृतिपुरुषयोःसर्वसाम्यंप्रतिषेधयत्सूत्रंपठित्वाव्याचष्टे ॥ सूक्ष्ममिति ॥ प्रकृतेरपिब्रह्मसूक्ष्मंज्ञानानंदादिगुणपरिमाणेनचाधिकंसर्वतइतिश्रुतेः ॥ ततोपिनसर्वसाम्यमितिभावः ॥ ९ ॥

यदिप्रकृतेर्नपुरुषेणसर्वसाम्यंतर्हिनित्यमुक्तत्वादिसाम्यमपिनस्यात्‌ब्रह्मादिवत्‌ ॥ तथाचलयसद्भावइत्या
शंकांपरिहरत्सूत्रमुपन्यस्यव्याचष्टे ॥ नेति ॥ अतःसाम्यतदभावयोरेवसाधितत्वाद्येपरमेश्वरस्यासाधार
णगुणाःस्वातंत्र्यादयस्तेषामसाधारण्यमनुपमृद्यास्यैवप्रकृतेःपुरुषेणनित्यमुक्तत्वादिसाम्यमितिभावः ॥





अतस्तस्ययेविशेषगुणास्तेषामनुपमर्देनैवसाम्यम्‌ ॥ देशतःकालतश्चै
वसमाप्रकृतिरीश्वरे ॥ उभयोरप्यबद्धत्वंतदबंधःपरात्मनः ॥ स्वतए

## ॥ ॐनोपमर्दनातः ॐ ॥ १० ॥

वपरेशस्यसाचोपास्तेसदाहरिम्‌ ॥ प्रकृतेःप्राकृतस्यापियेगुणास्तेतुवि
ष्णुना ॥ नियतानैवकेनापिनियताहिहरेर्गुणाइतिभविष्यत्पर्वणि॥१०॥

यदिनित्यमुक्तत्वादिसाम्यंतर्ह्यस्यैवविशेषगुणोपमर्दः ॥ नित्यमुक्तत्वेप्रकृतेःस्वातंत्र्यादेरप्यापातादित्यत
आह ॥ देशतइति ॥ ईश्वरेईश्वरेण ॥ एवंनित्यमुक्तत्वादिसाम्येपिनस्वातंत्र्यादिप्रकृतेरित्येतदुच्यते ॥ त
दबंधइति ॥ १० ॥

युक्त्यंतरेणकिंचित्साम्यंसमर्थयत्सूत्रंपठित्वाव्याचष्टे ॥ अस्यैवेति ॥ ईश्वरस्योष्मावत्त्वम् ॥ प्रकृतेरू

ष्मावत्त्वमनूष्मावत्त्वंचवदंतीश्रुतिरस्यैवार्थस्यकिंचित्साम्यस्योपपत्तेरर्थेभवत्युपपादिकाभवति ॥ अतो

प्यस्तिकिंचित्साम्यमितिभावः ॥ ११ ॥ किंचित्साम्यमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंतावद्व्या

चष्टे ॥ प्रतिषेधादिति ॥ नप्रकृतिपुरुषयोर्देशकालव्याप्त्यादिनापिसाम्यम् ॥ असमोवाएषपरमइतिश्रुतौ

द्विधाहीदमवदृश्यते ॥ ऊष्मावदनूष्मावच्च॥ तत्रोष्मावत्परंब्रह्म ॥ यन्नजिघ्रंतिनपश्यंतिनशृण्वंति

नविजानंति ॥ अथानूष्मावत् ॥ प्रकृतिश्चप्राकृतंचयन्नजिघ्रंतिजिघ्रंतिचयन्नपश्यंतिपश्यंतिचय

न्नशृण्वंतिशृण्वंतिचयन्नजानंतिजानंतिचेतिसौपर्णश्रुतेःकिंचित्साम्योपपत्तेः ॥११॥ असमोवाए

॥ ॐ अस्यैवचोपपत्तेरूष्मा ॐ ॥ ११ ॥ ॐ प्रतिषेधादितिचेन्नशारीरात् ॐ ॥ १२ ॥

षपरोनहिकश्चिदेवंदृश्यतेसर्वेह्येतेऽणवोजायंतेचम्रियंतेचच्छिद्राह्येतेभवंत्यथपरोनजायतेनम्रियते

पूर्णश्चैवभवतीतिचतुर्वेदशिखायांसाम्यप्रतिषेधादितिचेन्न॥शारीराद्धिसाम्यंप्रतिषिध्यते ॥ १२॥

परमेश्वरस्यैवनित्यसर्वगतत्वादि॥अन्येषांतदभावमुक्त्वाप्रतिषिद्धत्वात् ॥अतोस्तिप्रकृतेर्लयइतिभावः॥छि

द्रादोषिणः॥पूर्णःसर्वगतः॥चशब्दाददोषश्च ॥ परिहारांशंव्याचष्टे ॥ नेति ॥ भवेदेतद्यद्येतस्यांश्रुतौप्रकृतेर्भ

गवत्साम्यप्रतिषेधोभवेत् ॥ नैतदस्तिकिंतर्हिशारीरेणैवसाम्यमीश्वरस्यप्रतिषिध्यते ॥ तस्यशारीरत्वेननि

त्यसर्वगतत्वाद्ययोगादितिभावः ॥ १२ ॥

नन्वस्याःश्रुतेःसामान्यरूपत्वादत्रशारीरेणसाम्यंप्रतिषिध्यतेपरमात्मनोनप्रकृतेरिति ॥ कुतइत्याक्षिपति ॥
कुतइति ॥ तत्परिहारायसूत्रंपठित्वाव्याचष्टे ॥ स्पष्टइति ॥ सत्यमियंसामान्यश्रुतिरिततथाप्युक्तंयु
ज्यते ॥ यतःस्पष्टश्रुतौजीवानामेवासमत्वमुक्त्वाप्रकृतेःसमासमत्वमुच्यते ॥ विशेषश्रुत्याचसामान्यश्रुते

कुतः॥अथातःसमाश्वासमाश्वाभिधीयंतेसमाऽसमाश्वाथसमानिब्रह्मणोरूपाणियैरुत्पत्तिः
स्थितिर्लयोनियतिरायतिश्चैकंह्येवैतद्भवति॥ अथाऽसमाब्रह्मेंद्रोरुद्रःप्रजापतिर्बृहस्पतिर्ये

॥ ॐस्पष्टोह्येकेषाम् ॐ ॥ १३ ॥ ॐस्मर्यतेच ॐ॥ १४ ॥

केचदेवागंधर्वामनुष्याःपितरोसुरायत्किंचेदंचरमचरंच ॥ अथसमासमाप्रकृतिर्वात्रसमा
समैषाहिनित्याऽजरातद्वशाचेतिस्पष्टोहिमाध्यंदिनायनानांसमादिवादः ॥ १३ ॥ मत्स्य
कूर्मवराहाद्याःसमाविष्णोरभेदतः ॥ ब्रह्माद्यास्त्वसमाःप्रोक्ताःप्रकृतिश्चसमासमेतिचवा
राहे ॥ १४ ॥ अ० ६ ॥

र्बाधोपपत्तेरितिभावः ॥ आयतिःप्रकृतिः॥प्रजापतिर्दक्षः ॥१३ ॥ नकेवलंसामान्यश्रुतेर्विशेषश्रुत्याबाधो
ऽपितुविशेषस्मृत्याचेत्यर्थप्रतिपादकंसूत्रमुपन्यस्यतांस्मृतिमुदाहरति ॥ स्मर्यतेचेति ॥ अतःप्रकृतेरीश्वरव ॥ ११ ॥
न्नित्यमुक्तत्वादिनालयाभावाद्युक्तंप्राणावसानत्वमधिकारिणामितिसिद्धम् ॥ १४ ॥ अ० ६ ॥

अत्रचतुर्मुखेतरदेवानांमोक्षेभगवत्प्राप्तिसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाज्ञानिनांमोक्षाभावप्रसं
गात्समर्थनीयमेतत् ॥ सर्वेदेवाभूतेषुविशंतीत्युक्तंतेदेवाअत्रविषयः ॥ भगवतिलीयंतउतनेतिसंदेहः ॥
उभयथापिसंभवःसंदेहबीजम् ॥ नदेवानांहरौलयइतिपूर्वःपक्षः ॥ प्रतिबिंबोहरेःप्राणःप्राणस्यान्याः
कलाःक्रमादितिवचनात्सर्वदेवानांक्रमेणप्राणप्रतिबिंबत्वात्तस्यैकस्यैवपरमात्मप्रतिबिंबत्वात्प्रतिबिंबस्यैव
बिंबेलयनियमात् ॥ अतोवेदगर्भेतरदेवानांपरमात्मनिलयाभावाज्ज्ञानिनामपिमोक्षाभावइति ॥ सिद्धां
प्राणद्वारेणसर्वाणिदैवतानिपरमात्मनिविलीयंते ॥ सर्वेदेवाःप्राणमा

## ॥ ॐ तानिपरेतथाह्याह ॐ ॥ १५ ॥

विश्यदेवेमुक्तालयंपरमेयांत्यचिल्यइतिकौषारवश्रुतिः ॥ १५ ॥ अ० ७ ॥

तयत्सूत्रंपठित्वाव्याचष्टे ॥ तानीति ॥ येषांदेवानांपूर्वभूतप्रवेशोनिगदितस्तानिसर्वाणिदैवतानिपरमात्मनि
विशंत्येव॥नचप्राणप्रतिबिंबत्वविरोधः ॥ तत्प्रतिबिंबत्वेनतद्वारापरमात्मनिलयांगीकारात् ॥ नचदेवानांनद
आवएव ॥ सामान्यतोऽशेषजीवानांभगवत्प्रतिबिंबत्वात् ॥ विरिंचप्रविष्टानांविरिंचस्यचेश्वरप्रवेशेपरमा
त्मप्रवेशस्यापरिहार्यत्वात् ॥ नचात्रप्रमाणाभावः ॥ सर्वेदेवाइतिविशेषश्रुतिसद्भावादेवेतिभावः ॥ अतोदे
वानांपरमात्मनिलयसद्भावाद्युक्तमुक्तमितिसिद्धम् ॥ १५ ॥ अ० ७ ॥

अत्रदेवानांमुक्तौभगवद्वशत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाभगवतःसर्वोत्तमत्वहानिप्रसंगात्सम
र्थनीयमेतत् ॥ देवाएवप्रकृताविषयः ॥ किंमुक्तौस्वतंत्रावर्तंतउतास्वतंत्राइतिसंदेहः ॥ मुक्तत्वंस्वातंत्र्यस्य
भगवद्धर्मत्वंचसंदेहबीजम् ॥ स्वतंत्राएववर्तंतइतिपूर्वःपक्षः ॥ मुक्तत्वादेव ॥ अस्वातंत्र्येसंसारिवद्दुःखादि
प्राप्तेः ॥ एतेदेवाइतिसायुज्यंप्राप्तानांदेवानांसत्यकामत्वादिश्रुतेश्च॥ नहिपरतंत्रेषुसत्यकामत्वादिसंभवति॥

एतेदेवाएनमात्मानमनुविश्यसत्याःसत्यकामाःसत्यसं

## ॥ ॐ अविभागोवचनात् ॐ ॥ १६ ॥

कल्पायथानिकाममंतर्बहिःपरिचरंतीतिगौपवनश्रुतिः ॥

अतोमुक्तानामपिस्वातंत्र्यात्परमात्मनःसर्वोत्तमत्वोक्तिर्विरुद्धेति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥
अविभागइति ॥ परमात्माऽधीनाएवमुक्तानतुस्वतंत्राः॥नचैवंश्रुत्यादिविरोधः॥श्रुतिर्यत्सत्यकामत्वंवक्ति
तत्तेषांसत्यकामत्वंपरमेश्वरेच्छानुसारेणैवेत्यंगीकारात् ॥ अतएवनदुःखादिप्राप्तिः॥ यदाखलुभगवदिच्छा
ऽननुसारेणेच्छतितदातदलाभेनदुःखादिस्यात् ॥ मुक्तास्तुभगवत्कामानुसारेणैवकामयंतेऽतोभगवत्का
मनिमित्तेनमुक्तकामानंतरमेवकामितप्राप्तेरस्वतंत्राणामपिसत्यकामत्वाददुःखित्वाद्युपपन्नमितिभावः ॥

सत्यानित्याः ॥ सत्यकामत्वश्रुतेःकुतोमुख्यार्थतेत्यतआह ॥ कामेनेति ॥ मृत्योःकामेनेच्छयामेकामःका
मित मागात् ॥ आगतंतदिच्छानंतरप्राप्तत्वात् ॥ कथमिश्वरेच्छयाममेच्छाभगवदिच्छानुसारिणीत्यर्थः ॥
अत्रस्मृतिंचाह ॥ मुक्तानामिति ॥ सामर्थ्यंचेश्वराधीनमितिशेषः ॥ अतोमुक्तानामस्वातंत्र्याद्विष्णोरेवस
र्वोत्तमत्वमितिसिद्धम् ॥ १६ ॥ अ० ८ ॥ अत्रेदेवानांमोक्षमुक्त्वामनुष्याणांमुक्त्यर्थंदेहोत्क्रमणस्याज्ञ

तत्परमेश्वरकामाद्यविभागेनैवतेषांसत्यकामत्वम् ॥ कामेन
मेकामआगाद्धृदयाद्धृदयंमृत्योरितिवचनात् ॥ मुक्तानांस
त्यकामत्वंसामर्थ्यंचपरस्यतु ॥ कामानुकूलकामत्वंनान्यत्ते
षांविधीयतइतिब्राह्मे ॥ १६ ॥ अ० ८ ॥

मरणविलक्षणत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाज्ञानस्यातिशयासिद्धेःसाधनीयमेतत् ॥ देवा
नामन्योन्यप्रवेशेनदेहलयोभवतीत्युक्तंतेनेतरज्ञानिनांदेहादुत्क्रमणंसिध्यति ॥ तज्ज्ञानिनांदेहादुत्क्रमणं
विषयः ॥ किंपृथक्जनमरणवदेवभवत्युतवैलक्षण्येनेतिसंदेहः ॥ मरणत्वंज्ञानिसंबंधित्वंचसंदेहबी
जम् ॥ पृथक्जनवदेवेतिपूर्वःपक्षः ॥ तस्याप्यन्यमरणवत्प्रारब्धनिबंधनत्वात् ॥ नचतदाप्रारब्धाभावः ॥
तस्यदेहत्यागाद्यवसानत्वात् ॥ नचसत्यपिप्रारब्धकर्मणिविलक्षणम् ॥ ज्ञानिमरणंविशेषकारणाभावात् ॥

अतोज्ञानिमरणस्यान्यमरणाविशिष्टत्वान्नज्ञानस्यसामर्थ्यातिशयइति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ तदिति ॥ नज्ञानिमरणस्याज्ञमरणाविशिष्टता ॥ अस्त्येवविशेषः ॥ यतउत्क्रांतिकालेभमवदोकसो हृदयस्याग्रंप्रकाशतइत्यर्थः ॥ तत्कुतइत्यतआह ॥ तस्येति ॥ हृदयाग्रप्रकाशनेपिज्ञान्युत्क्रमणस्यान्यमरणस्यकोविशेषइत्यतआह ॥ तदिति ॥ यतोज्ञानीतेनप्रकाशेनप्रकाशितनाडीद्वारःसन्देहान्निष्क्रामति

उत्क्रांतिकालेहृदयस्याग्रज्वलनंभवति ॥ तस्यहैतस्यहृदयस्याग्रंप्रद्योततइतिश्रुतेः ॥ त

**॥ ॐ तदोकोग्रज्वलनंतत्प्रकाशितद्वारोविद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्चहार्दानुगृहीतःशताधिकया ॐ ॥ १७॥**

त्प्रकाशितद्वारोनिष्क्रामति ॥ विद्यासामर्थ्यात् ॥ यंयंवापिस्मरन्भावंत्यजत्यंतेकलेवरम ॥ नतुतथाऽज्ञानी ॥ अतोस्तिविशेषइतिभावः ॥ ननुज्ञानिनःप्रारब्धकर्मवतःकथमयंविशेषइत्यतआह ॥ विद्येति ॥ प्रारब्धकर्मसद्भावेपिभगवत्साक्षात्कारसामर्थ्याद्विशिष्टोत्क्रांतिर्ज्ञानिनोयुज्यते ॥ ज्ञानस्यस्वोदयमारभ्यैवफलप्रदत्वादितिभावः ॥ तदुक्तम ॥ प्रारब्धकर्मशेषस्तुविरजातरणावधिः ॥ स्वोदयात्फलदंज्ञानमादेहंकर्मवारयेदिति ॥ यदिज्ञानसामर्थ्यादेवमुत्क्रमणंभवतितर्हिज्ञानिनःप्रथममरणएवैवंकिंनस्यादित्यतआह ॥ यंयमिति ॥ नकेवलंज्ञानसामर्थ्येनैवंविधोत्क्रमणंयेनातिप्रसंगःकिंनामस्वहृदयमारभ्ययाब्रह्मप

र्थंतागतिस्तस्याःशरीरत्यागकालेऽनुस्मरणाच्च ॥ नचैवंसतिज्ञानिनामुत्क्रमणं ज्ञानफलंनभवति ॥ गत्यनुस्मरणस्यज्ञानशेषत्वात् ॥ नहीतिकर्तव्यतामपेक्षमाणोहेतुरहेतुर्भवति॥गत्यनु स्मृतिश्चकर्मावसानसमयएव नमरणांतरे ॥ ज्ञानिनांकर्मयुक्तानांकायत्यागक्षणोयदा ॥ विष्णुमायातदातेषां जनोबाध्यंकरोतिहीतिस्मृतेः॥ गत्यनुस्मरणंतत्प्राप्तिकारणमित्येवकुतः ॥ यंयंवापीतिस्मृतेरेवेतिभावः ॥ ननुतथापिगत्यनुस्मरणंतत्प्राप्तिका

तंतमेवैतिकौंतेयसदातद्भावभावितइतिस्मृतेर्विद्याशेषगत्यनुस्मरणयोगाच्च॥ आचार्यस्तुने
गतिंवक्तेतिलिंगम् ॥ हृदिस्थेनैवहरिणातस्यैवानुग्रहेणतु ॥ उत्क्रांतिर्ब्रह्मरंध्रेणतमेवोपास
तोभवेदितिचाध्यात्मे ॥ शतंचैकाचहृदयस्यनाड्यस्तासांमूर्धानमभिनिस्सृतैका ॥ तयोर्ध्व
मायन्नमृतत्वमेतिविष्वगन्याउत्क्रमणेभवंतीतिच ॥ १७ ॥

रणमितिनविशेषप्रमाणमित्यतआह ॥ आचार्यस्त्विति ॥ यदिगतिस्मरणमंतरेणैवतत्प्राप्तिस्यात्तर्ह्याचार्यस्तुतेगतिंवक्तेतिस्मरणार्थंगतिस्मरणंव्यर्थंस्यात् ॥ अतःस्मरणार्थंगतिश्रवणलिंगेनास्तिगतिस्मरणस्यतत्प्राप्त्यर्थत्वमितिज्ञायतइतिभावः ॥ ननुकिंज्ञानसामर्थ्येनगत्यनुस्मरणयुक्तेनस्वतंत्रेणैवमुत्क्रमणंभवति ॥ नेति ब्रूमः॥किंतर्हिज्ञानादिनाप्रसन्नस्यभगवतोऽनुग्रहेणैवेत्याह ॥ हृदीति॥हरिणासहप्रकाशितनाडीद्वारोनिष्क्रामतीत्युक्तम् ॥ तत्रनाड्यामपिविशेषोस्तीतिभावेनाह॥शतमिति॥विष्वगुत्क्रमणेलोकांतरगमनार्थम् ॥१७॥

ननुयदिप्रकाशितनाडीद्वारोनिष्क्रामतितर्ह्यज्ञवन्नाड्यंतस्तमसैवगमनंस्यात् ॥ यद्यंतरेप्यस्तिप्रकाशस्तर्हि
द्वारपदवैयर्थ्यमित्याशंकांपरिहरत्सूत्रंपठित्वातच्छेषमेवपूरयति ॥ रश्मीति ॥ नज्ञानिनोनाड्यंतस्तमसोत्क्र
मणंयेनाज्ञमरणसाम्यंस्यात् ॥ नाड्यंतराततसौररश्म्यनुसारेणोत्क्रमणात् ॥ अतएवनाड्यंतर्गतस्यप्रकाशां

निष्क्रामति ॥ सहस्रंवाआदित्यस्यरश्मयआसुनाडीष्वाततास्त

## ॥ ॐ रश्म्यनुसारी ॐ ॥ १८ ॥

त्रश्वेतःसुषुम्नोब्रह्मयानःसुषुम्नायामाततस्तत्प्रकाशेनैषनिर्गच्छती
तिपौत्रायणश्रुतिः ॥ १८ ॥

तरत्वाद्वारपदावैयर्थ्यमितिभावः ॥ तदुक्तम् ॥ तदाविष्णोःस्वतेजसा॥द्योततेहृदयाग्रंचतेनद्वारेणकेशवः ॥
निष्क्रामेज्जीवमादायप्राणएनमनुव्रजेदिति ॥ नाड्यंतराततसौररश्म्यनुसारेणोत्क्रामतीत्येतत्कुतइत्यतआह॥
सहस्रमिति ॥ १८ ॥

उत्क्रमाक्षिप्यसमादधत्सूत्रंपठित्वाऽऽक्षेपांशंतावद्व्याचष्टे ॥निशीति ॥ किंसर्वज्ञानिनांरश्म्यनुसारेणोत्क्रमणं किंवाकेषांचित् ॥ आद्येरात्रौपर्यवसितकर्मणामपिज्ञानिनामपेक्षितोत्क्रांतिर्नस्यात्॥ रात्रौरश्म्यभावात् ॥ तथाचप्रतिबंधककर्माभावेपिसंसारानिवृत्तौसदानिवृत्तिप्रसंगः ॥ नद्वितीयः ॥ केषांचिज्ज्ञानिनामुत्क्रमणस्याऽविलक्षणत्वापातादितिभावः ॥ परिहारांशंव्याचष्टे ॥ नेति ॥ सर्वज्ञानिनामप्यस्तिरश्म्यनुसारेणो

रश्म्यभावान्निशिज्ञानिनउत्क्रमणंनयुक्तमितिचेन्न ॥

**॥ ॐ निशिनेतिचेन्नसंबंधात् ॐ ॥ १९ ॥**

सर्वदासंबंधाद्रश्मीनाम् ॥ १९ ॥ कियत्कालम् ॥

त्क्रमणाम् ॥ नचोक्तदोषः ॥ निशिबाह्यादित्याभावेप्यंतस्थाऽऽदित्यरश्मीनांसर्वदानाडीसंबंधादितिभावः ॥ १९ ॥ सर्वदेतिपदस्यसामान्यवचनत्वात्पृच्छति ॥ कियदिति ॥ नाडीरश्मिसंबंधः ॥ सर्वदास्तीतिकोर्थः ॥ किंसदातनःकिंवादेहपातपूर्वकालीनःउतयावद्देहभावी ॥ नाद्यः ॥ सदानाडीनामभावात् ॥ नद्वितीयः ॥ कदाचिज्ज्ञानिनोपितमसोत्क्रांतिप्रसंगात् ॥ नापितृतीयः ॥ तन्नियमेप्रमाणाभावादितिभावः ॥

त्परिहारायसूत्रमुपन्यस्यव्याचष्टे ॥ यावदिति ॥ नाडीरश्मिसंबंधस्ययावद्देहभावित्वांगीकारात् ॥ न
नक्षांतरदोषः ॥ नचात्राप्युक्तोदोषइतिवाच्यम् ॥ संसृष्टाइतिश्रुतिसद्भावादितिभावः ॥ २० ॥ ननुव्यर्थो
यज्ञानिनोरात्रावुत्क्रमणसंभवप्रतिपादनायासः ॥ दक्षिणेमरणादितिवचनान्मोक्षार्थज्ञानिनोदक्षिणायनो



यावद्देहोविद्यतेतावद्रश्मिसंबंधोऽस्त्येव ॥ संसृष्टावाएतेरश्मयश्चना
ड्यश्चनैषांवियोगोयावदिदंशरीरमतएतैःपश्यत्येतैरुत्क्रामत्येतैःप्रवर्त

॥ ॐ यावद्देहभावित्वाद्दर्शयतिच ॐ ॥ २० ॥

॥ ॐ अतश्चायनेपिहिदक्षिणे ॐ ॥ २१ ॥

तइतिमाध्यंदिनायनश्रुतिः ॥ २० ॥ दक्षिणेमरणाद्यातिस्वर्गंब्र
ह्मोत्तरायणइत्युक्तेविज्ञानिनोदक्षिणायनोत्क्रांतिर्युज्यते ॥

त्क्रांत्ययोगात्तद्वद्रात्रावपितदभावोपपत्तेरित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ अतश्चेति ॥ नचस्मृतिब
लेनज्ञानिनोदक्षिणायनोत्क्रांत्ययोगदृष्टांतेनरात्रावपितदभावोवाच्यः॥दक्षिणेमरणादितिस्मृतिसद्भावेपिज्ञा
निनोदक्षिणायनोत्क्रांतिसंभवात्॥कुतः॥ सौररश्मिसहस्रस्यनाडीसंबंधसद्भावादितिभावः॥ सूत्रार्थस्मृत्या

विशदयति ॥ शतमिति ॥ शतंपंचेति ॥ पंचशतानीत्यर्थः॥साक्षान्मोक्षस्यसुषुम्नैकगम्यत्वान्महर्लोकादी त्युक्तम् ॥ तेषांचापुनरावृत्तिस्थानत्वेनब्रह्मलोकत्वाद्ब्रह्मोत्तरायणइत्यनेनैकार्थता ॥ महर्लोकादीत्यतद्गुण संविज्ञानः ॥ निगद्यतेदक्षिणेमरणादितिस्मृतौ ॥ नतुकालविशेषोस्तिभवति ॥ कुतोयमर्थोदक्षिणेमरणा

शतंपंचैवसूर्यस्यदक्षिणायनरश्मयः ॥ तावंतएवनिर्दिष्टाउत्तरायणर
श्मयः ॥ तेसर्वेदेहसंबंधाःसर्वदासर्वदेहिनाम ॥ महर्लोकादिगंतारउत्तरा
यणरश्मिभिः ॥ निर्गच्छंतीतैरश्वापियैरेष्टव्येतरागतिः ॥ उत्तरंदक्षिणमि
तितएवतुनिगद्यते ॥ नतुकालविशेषोऽस्तिज्ञानिनांनियमात्फलम् ॥ द
दातिकालेऽनुगुणेफलंकिंचिद्विशिष्यते ॥ अत्युत्तमानांकेषांचिन्नविशे
षोऽस्तिकालतइतिनारायणाध्यात्मे ॥ २१ ॥ अ० ९ ॥

दितिस्मृतेरित्यतआह ॥ नत्विति ॥ उत्क्रमणायेतिशेषः॥कुतोनास्तीत्यतआह ॥ नियमादिति ॥ ज्ञानमिति शेषः ॥ ज्ञानिनामुत्क्रांतौकालनियमाभावेकथंभीष्मादीनामुत्तरायणप्रतीक्षणमित्यतआह ॥ कालइति॥ भीष्मादप्युत्तमानांसर्वकालस्याप्यतिशयकारणत्वान्नकालविशेषेणातिशयः ॥ अतोज्ञानिनामुत्क्रमण स्याज्ञमरणविलक्षणत्वादुक्तंज्ञानमाहात्म्यंयुक्तमितिसिद्धम् ॥ २१ ॥ अ० ९ ॥

अत्रब्रह्मप्राप्तौगत्यनुस्मरणादेरावश्यकत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाज्ञानस्यमोक्षहेतुत्वाभा
वप्रसंगात्समर्थनीयमेतत् ॥ प्रकृतागतिरेवविषयः ॥ किंविद्यागतिस्मृतिसापेक्षानवेतिसंदेहः ॥ पूर्वोक्तिःस्फु

नकेवलंकालादिकृतेब्रह्मचंद्रगतीस्मर्यैतेकिंतुज्ञानयोगिनःकर्मयोगिनश्च ॥ अग्नि
ज्योतिरहःशुक्लःषण्मासाउत्तरायणम् ॥ तत्रप्रयातागच्छंतिब्रह्मब्रह्मविदोजनाः॥
धूमोरात्रिस्तथाकृष्णःषण्मासादक्षिणायनम् ॥तत्रचांद्रमसंज्योतिर्योगीप्राप्यनि

## ॥ ॐयोगिनःप्रतिस्मर्यैतेस्मार्तेचैते ॐ ॥ २२ ॥

वर्ततइत्यत्रयोगीतिविशेषणात् ॥ स्मरणनिमित्तेचैतेगती ॥ गत्यनुस्मरणाद्ब्रह्मचं
द्रंवागच्छतिध्रुवम् ॥ अननुस्मरतःकालेस्मरणंप्राप्यैवगतिरित्यध्यात्मे ॥ २२ ॥
अ० १० ॥ ॥ इतिश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभ
गवत्पादाचार्यविरचितेचतुर्थाध्यायस्यद्वितीयःपादः ॥ २ ॥

टप्रमाणादर्शनंचसंदेहबीजम् ॥ नगत्यर्थंविद्यानुस्मृतीअपेक्षितेइतिपूर्वःपक्षः ॥ अग्निज्योतिरित्यादौकेवल
कालाद्यधीनत्वस्मरणात् ॥ नह्यनयोःश्लोकयोर्ब्रह्मचंद्रगत्योःप्राप्तौतत्तत्कालादिमरणंविनाऽन्यत्कारण
मुच्यते ॥ लोकेफलानुस्मृतिमंतरेणैवफलप्राप्तिदर्शनाच्च ॥ नहिलोकाननुसार्यंगीकर्तुंशक्यते ॥ नचस्मृति

विरोधः ॥ तस्यालोकाननुसारित्वेनार्थांतरेयोज्यत्वात् ॥ लिंगस्यापिज्ञानमात्राद्यर्थत्वोपपत्तेः ॥ अतो गतेःकालादिकृतत्वान्नज्ञानस्यसंपूर्णमोक्षार्थतेति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ योगिनइति ॥ यदुक्तमग्निर्ज्योतिरित्यादिनाब्रह्मचंद्रगतीकेवलकालादिकृतेस्मर्येते ॥ अतोनगत्यर्थंविद्यानुस्मृतीअपेक्षिते इतितन्नयुक्तम् ॥ यतोऽत्रविद्यादिकृतेएवस्मर्येतेनतुकालादिकृतेइतिभावः ॥ कुतएतदित्यतआह॥अग्निरि ति ॥उपलक्षणमेतत् ॥ ब्रह्मविदइतिचज्ञातव्यम् ॥ कालमरणमत्रनविवक्षितमितिसविस्तरमन्यत्रोक्तत्वाद त्रनोक्तम् ॥ अस्तुविद्यापेक्षागतौतदनुस्मृतिर्मास्त्वित्यतआह ॥ स्मरणेति ॥ कुतइत्यतआह ॥ गतीति ॥ नचलोकाननुसारिता ॥ यथाखलुच्छेदनादौनकर्षणाद्यावृत्तिरपितुपरशोरुद्यम्योद्यम्यदारुणिनिपाताद्वृ त्तिः ॥ कृष्यादौतुनासौकिंतुकर्षणाद्यावृत्तिरेव ॥ नतावतालोकाननुसारिता ॥ अवांतरविशेषाणांविल क्षण्येप्यनुवृत्तिमात्रस्योभयत्रसाम्यात् ॥ तथाप्रकृतेप्यवधारितक्रियामनोवृत्तित्वविशेषस्यानुवृत्तिमा त्रस्यलौकिकवैदिकसाधनयोःसाम्यात् ॥ अतोविशिष्टोत्क्रमणस्यविद्यादिसापेक्षत्वाद्युक्तंज्ञानस्यसंपूर्ण मोक्षसाधनत्वमितिसिद्धम् ॥ २१ ॥ अ० १० ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचि तस्यश्रीमद्ब्रह्मसूत्रभाष्यस्यटीकायांश्रीमज्जयतीर्थमुनिविरचितायांतत्त्वप्रकाशिकायांचतुर्थाध्यायस्य द्वितीयःपादः ॥ २ ॥

श्रीवेदव्यासायनमः ॥ हरिःॐ ॥ एतत्पादार्थंदर्शयति ॥ मार्गइति ॥ ब्रह्मनाड्योत्क्रांतानांयोमार्गो
ब्रह्मप्राप्तौयच्चतेनपथागतानांगम्यंतदुभयमस्मिन्पादेकथ्यतइत्यर्थः ॥ तत्रादौसूत्रमेवपठति ॥ अर्चिरा
दिनेति ॥ अत्रब्रह्मप्राप्तिमार्गस्यार्चिरादित्वप्रतिपादनादस्तिशास्त्रादिसंगतिः ॥ मार्गानिर्णयेतदनुस्मृत्यसं
भवात्समर्थनीयमेतत् ॥ गत्यनुस्मरणंतत्प्राप्त्यर्थंकार्यमित्युक्तम् ॥ सब्रह्मप्राप्तिमार्गएवंविषयः ॥ किमर्चि
मार्गोगम्यंचास्मिन्पादउच्यते ॥ तेऽर्चिषमभिसंभवंत्यर्चिषोहरह्न

**॥ॐअर्चिरादिनातत्प्रथितेःॐ ॥ १ ॥**

आपूर्यमाणपक्षमित्यर्चिषःप्राथम्यंश्रूयते ॥ यदाहवैपुरुषोऽस्माल्लो
कात्प्रैतिसवायुमागच्छतीतिवायोः ॥ तत्रार्चिषःप्राप्तिरेवप्रथमा ॥
रादिरुतवाय्वादिरितिसंदेहः ॥ संदेहबीजंश्रुतिविरोधंदर्शयति ॥ तेऽर्चिषमिति ॥ उभयोरपिप्राथम्यमिति
पूर्वःपक्षः ॥ श्रुतिद्वयस्यापिनिरवकाशत्वात् ॥ नचोभयोरपिप्राथम्यंविरुद्धम् ॥ मार्गभेदेनद्वयोरपिप्राथ
म्योपपत्तेः ॥ नचैकस्याधिकारिणोमार्गद्वयंविरुद्धम् ॥ अधिकारिभेदेनोपपत्तेः ॥ अतोमार्गनियमाभा
वादनुस्मृत्ययोगइति ॥ सिद्धांतयत्सूत्रंव्याचष्टे ॥ तत्रेति ॥ नमार्गभेदेनोभयोःप्राथम्यंकल्प्यंकिंत्वे
कएवमार्गः ॥ सचार्चिरादिस्तेनार्चिरादिनामार्गेणज्ञानीगच्छतीतिभावः ॥ नन्वेकएवमार्गःसचार्चिरा

दिरेवेत्येतत्कुतः ॥ स्मृतौप्रसिद्धत्वादेवेतिभावेनतामुदाहरति ॥ द्वाविति ॥ नन्वग्निर्ज्योतिरितिस्मृतावग्नेः प्राथम्यंश्रूयतेतत्कथमर्चिषोज्योतिःशब्दाभिहितस्यद्वितीयप्राप्तस्यप्राथम्यमुच्यतइत्यतआह ॥ अग्निरिति ॥ तथापिपृथक्किनोच्यतेतेऽर्चिषमित्यादिश्रुतावित्यतआह ॥ एकस्मिन्निति ॥ नन्वग्नेःसोमादनंतरंप्राप्तिरतःकथमेतदित्यतआह ॥ अग्नेरिति ॥ नचवायुप्राथम्यश्रुतेरप्रामाण्यम् ॥ प्रबलश्रुत्यनुसारेणार्चि

द्वावेवमार्गौप्रथितावर्चिरादिविपश्चिताम् ॥ धूमादिःकर्मिणांचैवसर्ववे
दविनिर्णयात् ॥ अग्निर्ज्योतिरितिद्वेधैवार्चिषःसंप्रतिष्ठितिः ॥ अग्निंगत्वा
ज्योतिरेतिप्रथमंब्रह्मसंव्रजन्निति ॥ एकस्मिंस्तुपुरेसंस्थोद्विरूपोऽग्नेःसुतो
महानितिचब्रह्मतर्के ॥ १ ॥ अ० १ ॥

रनंतरार्थत्वोपपत्तेः ॥ अतोमार्गनिर्णयादनुस्मृतिसंभवइतिसिद्धम् ॥ १ ॥ अ० १ ॥ अत्रब्रह्ममार्गेवायोर्द्वितीयप्राप्यत्वसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथामार्गानिर्णयादनुस्मृत्यसिद्धेःसमर्थनीयमेतत् ॥ प्रकृतोमार्गोविषयः ॥ किंतत्रवायुर्द्वितीयप्राप्यउताहरिरितिसंदेहः ॥ सवायुमागच्छतिअर्चिषोहरिरितिश्रुतिविप्रतिपत्तिःसंदेहबीजम् ॥ उभयोरपिपूर्ववदधिकारिभेदेनमार्गभेदाद्द्वितीयप्राप्यत्वमितिपूर्वःपक्षः ॥ श्रुतिद्वयस्यापिप्रामाण्यात् ॥ नचपूर्ववद्व्यवस्थाऽत्रकाचित्संभवति ॥ तादृशप्रमाणाभावात् ॥ अतोमार्गनिर्णयाभावात्त

दनुस्मृत्ययोगइति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ वायुशब्दादिति ॥ नमार्गभेदेनद्वयोरपिद्वितीयप्रा
प्यत्वंमंतव्यंकिंत्वेकएवमार्गः ॥ तत्रापिमार्गेऽर्चिषोऽनंतरमेववायुंगच्छति ॥ नचश्रुत्यंतरविरोधः ॥ वायो
रनंतरमह्नःप्राप्तिसंभवादितिभावः ॥ कुतएतदित्यतआह ॥ सइति ॥ युक्तंवायोरेवद्वितीयत्वंसामा
न्यतःप्राथम्येनवायोःप्राप्यत्वेश्रुतिसद्भावात् ॥ सामान्यश्रुतेश्चयावदर्थंविशेषश्रुतिविरोधस्तावन्मात्रस्यै

अर्चिषोवायुंगच्छति ॥ सवायुमागच्छतीतिसामान्यवचनात्सइतोगतो

॥ वायुशब्दादविशेषविशेषाभ्याम् ॐ ॥ २ ॥

द्वितीयांगतिवायुमागच्छतीतिवायोरहरह्नआपूर्यमाणपक्षमितिविशे
षवचनाच्च ॥ २ ॥ अ० २ ॥

वत्याज्यत्वेनात्रप्रसिद्धिविरोधेनप्राथम्यायोगेपिद्वितीयत्वस्यावश्यकत्वात् ॥ नहिभवतियागीयपशुहिंसा
विधिविरोधेननहिंस्यात्सर्वाभूतानीतिवाक्यस्यतदन्यहिंसानिषेधकत्वाभावइतिभावः ॥ नकेवलमेतन्न्याये
नवायोर्द्वितीयप्राप्यत्वसिद्धिरपितुविशेषश्रुतेश्चेतितामुदाहरति ॥ सइति ॥ अतोमार्गनिर्णयाद्युक्तातदनुस्मृ
तिरितिसिद्धम् ॥ वायुश्रुतेर्गतिप्रदर्शनार्थंचैतत्सूत्रम् ॥ प्राथम्यश्रुतेःसामान्यत्वात्सामान्यस्यचविशेषश्रुत्या
द्वितीयप्राप्यत्वंवदंत्याबाधोपपत्तेर्द्वितीयप्राप्यत्वंवायोस्तदर्थइति ॥ २ ॥ अ० २ ॥

अत्रसूत्रमेवादौपठति ॥ तटितइति ॥ अत्रब्रह्मप्राप्तिमार्गेतटितःसंवत्सरानंतर्यसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाऽनुस्मरणायोगस्यैवप्राप्तेःसमर्थनीयमेतत् ॥ प्रकृतोमार्गएवात्रविषयः ॥ सचार्चिरादिःसंवत्सरपर्यंतंनिर्णीतः ॥ तत्रकिंसंवत्सरलोकानंतरंवरुणलोकस्यप्राप्यत्वमुततटितइतिसंदेहः ॥ संदेहबीजं

मासेभ्यःसंवत्सरंसंवत्सराद्वरुणलोकंवरुणलोकात्प्रजापतिलोकमितिकौ
षीतकिश्रुतिः ॥ संवत्सरात्ततटितमागच्छतितटितःप्रजापतिलोकमितिचगौ

## ॥ ॐतटितोऽधिवरुणःसंबंधात् ॐ ॥ ३ ॥

पवनश्रुतिः ॥ तत्रतटितोवरुणंगच्छति ॥ तटिताह्यूर्ध्वतेवरुणलोकस्तटि
दुपरिमुक्तामयोराजतेतत्रासौवरुणोराजासत्यानृतेविविचतीत्युपरिसंबं
धत्वश्रुतेः ॥ ३ ॥ अ० १ ॥

श्रुतिविगानंदर्शयति ॥ मासेभ्यइति ॥ वरुणतटितोरुभयोरपिसंवत्सरानंतर्यमितिपूर्वःपक्षः ॥ श्रुतिद्वयस्यापिप्रामाण्यात् ॥ नचविरोधः ॥ संवत्सरलोकात्प्रजापतिलोकंगंतुमधिकारिभेदेनमार्गभेदोपपत्तेः ॥ नचात्रपूर्ववत्किंचिदन्यथयितुंप्रमाणमस्ति ॥ अतोमार्गानिर्णयात्तदनुस्मरणानुपपत्तिरिति ॥ सिद्धांतयत्सूत्रंव्याचष्टे ॥ तत्रेति॥ प्रजापतिंगंतुंमार्गभेदेनवरुणतटितोरुभयोरपिनसंवत्सरानंतरत्वंप्राप्तंकिंत्वेकएवमार्गः॥

तत्रसंवत्सरानंतरंतडितमेवगच्छति ॥ नचश्रुत्यंतरविरोधः ॥ तडितोनंतरंवरुणस्यप्राप्यत्वेनतदर्थत्वोपप
त्तेरितिभावः ॥ कुतएतदित्यतआह ॥ तडितेति ॥ मुक्तामयोवीतरोगः ॥ विविचतिविवेचयति ॥ अ
तोमार्गैक्येनानुस्मरणमुपपद्यतइतिसिद्धम् ॥ ३ ॥ अ० ३ ॥ अत्रब्रह्मप्राप्तिमार्गेऽर्चिरनंतरप्राप्यस्यवा
योरातिवाहिकत्वसाधनादस्तिशास्त्रादिसंगतिः ॥ अन्यथावायोरुत्तमत्वासिद्धेःसमर्थनीयमेतत् ॥ प्रकृतो

पूर्वोक्तस्त्वातिवाहिकोवायुःपूर्वगमनलिंगात् ॥ ४ ॥

## ॥ ॐआतिवाहिकस्तल्लिंगात् ॐ ॥ ४ ॥

वायुरत्रविषयः ॥ किमुख्यवायुरुतामुख्यइतिसंदेहः ॥ वायुशब्दःसंदेहबीजम् ॥ मुख्यवायुरितिपूर्वःपक्षः ॥
वायुशब्दस्यतत्रैवमुख्यत्वात् ॥ तस्यापिप्राप्यत्वात् ॥ नचात्रबाधकंकिंचिदस्तियेनवायुशब्दस्यामुख्या
र्थत्वंस्यात् ॥ अतोवायोरर्चिषोऽनंतरमेवप्राप्यत्वान्नतस्याधिक्यमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्या
चष्टे ॥ आतिवाहिकइति ॥ योयंपूर्वंप्राप्यतयोक्तोवायुरसावातिवाहिकएवनतुमुख्यः ॥ पूर्वप्राप्यत्वलिं
गात् ॥ तद्ध्यमुख्यस्यैवभवेन्नमुख्यस्येतिभावः ॥ ४ ॥

ननुतथापिकथंपूर्वप्राप्यस्यवायोरातिवाहिकत्वसिद्धिः ॥ मुख्यस्यप्राप्त्यभावापातात् ॥ अथोत्तरत्रापिक
श्चिद्वायुःप्राप्योस्तीत्युच्येततथाप्यनिवृत्तःसंशयः ॥ किंपूर्वोक्तआतिवाहिकोमुख्योवेत्यादि ॥ मुख्यस्या
पिप्रथमप्राप्तिसंभवात् ॥ नचविशेषहेतुरस्तियेनपूर्वोक्तस्यातिवाहिकत्वसिद्धिरितिभावेनाक्षिपति ॥ कुत

कुतः ॥ सवायुमागच्छतीतिप्रथममुच्यते ॥ उत्क्रांतोविद्वान्परमभिग
च्छन्विद्युतमेवांततउपगच्छतिद्यौर्वाविद्युत्तत्पतिंवायुमुपगम्यतेनैव

## ॥ ॐ उभयव्यामोहात्तत्सिद्धेः ॐ ॥ ५ ॥

ब्रह्मगच्छतीत्यंतेऽपिवायुगमनश्रुतेः ॥ पूर्वोक्तआतिवाहिकःपरोवेति
व्यामोहेउत्तरेदिवस्पतिरितिविशेषणात्पूर्वत्राऽऽतिवाहिकस्यैवसिद्धेः ॥

इति ॥ तत्परिहारायसूत्रंपठित्वाव्याचष्टे॥उभयेति ॥ युक्तंपूर्वोक्तस्यातिवाहिकत्वम् ॥ यथापूर्वंवायोःप्रा
प्तिःश्रूयतेतथोत्तरत्रापिवायोःप्राप्तिश्रवणान्मुख्यप्राप्तेरप्युपपत्तेर्नतूक्तमत्र ॥ सत्यम् ॥ किमयंपूर्वोक्तआति
वाहिकोमुख्योवापरत्रोक्तश्चाऽऽतिवाहिकोमुख्योवेतिसंदेहेपिपूर्वोक्तस्यातिवाहिकत्वंपरत्रोक्तस्यमुख्यत्वं
सिध्यति ॥ उत्तरस्यदिवस्पतित्वश्रवणात्तस्यचमुख्यवायुलिंगत्वादितिभावः ॥ कथंवरुणावरायाविद्युतोऽ

ततोगम्यत्वमित्यतउक्तंद्यौरिति॥ नन्वस्तून्तरस्यमुख्यत्वंतथापिपूर्वोक्तस्यातिवाहिकत्वानिश्चयोमुख्यस्यो भयत्रावस्थानसंभवादित्याशंकांपरिहर्तुंसर्वमपिमार्गस्थल्यादर्शयति ॥ ब्रह्मतर्कंचेति॥अतःप्रथमप्राप्यस्या तिवाहिकत्वाद्युक्तंमुख्यस्यमुख्यत्वमितिसिद्धम् ॥ ५ ॥ अ० ४ ॥ अत्रब्रह्मप्राप्तिमार्गेमुख्यवायोरंतिमत्व समर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथातस्यातिप्राधान्यासिद्धेःसमर्थनीयमेतत् ॥ प्रकृतोमार्गएवविष

ब्रह्मतर्कंच ॥ उत्क्रांतस्तुशरीरात्स्वाद्गच्छत्यर्चिषमेवतु॥ततोहिवायोःपुत्रं
चयोऽसौनाम्नाऽऽतिवाहिकः ॥ ततोहःपूर्वपक्षंचाप्युदक्संवत्सरंतथा ॥
तटितंवरुणंचैवप्रजापंसूर्यमेवच ॥ सोमंवैश्वानरंचेंद्रंध्रुवंदर्षीदिवंतथा ॥
ततोवायुंपरंप्राप्यतेनैतिपुरुषोत्तममिति ॥ ५ ॥ अ० ४ ॥

यः॥ किंतत्रमुख्यवायोरनंतरंब्रह्मणोर्वाग्गंतव्योऽस्तिनवेतिसंदेहः ॥ उभयथासंभवःसंदेहबीजम् ॥ ब्रह्मणो र्वाग्वायोःपरतोन्यःप्राप्योऽस्तीतिपूर्वःपक्षः॥ तथाऽभ्युपगमेपिबाधकाभावात्॥नचवाच्यंवायोःसर्वाधिका र्युत्तमत्वात्सएवांतिमप्राप्यइति॥उत्तमत्वक्रमानुसारेणप्राप्तिक्रमाभावात् ॥ सोमंवैश्वानरंचेंद्रंध्रुवमित्यादौ सोमावरस्याग्नेरिंद्रावरस्यचध्रुवस्यपश्चात्प्राप्युक्तेः ॥ अतोवायोरपिपरतोगंतव्यसद्भावान्नतस्यातिशयेनप्रा ॥ २८ ॥

धान्यमिति॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे।वैद्युतेनेति ॥ तत्रतत्रश्रुत्यादौमार्गैःप्रकारांतरेणतारतम्यक्रमं विहायश्रोभिरुच्यमानत्वाद्वायोःपरतोब्रह्मणोर्वाग्गंतव्योस्तीतिनशंकनीयंकिंतुवायुरेवांतिमप्राप्यः ॥कुतः ॥ योऽंतिमोभवतितस्यब्रह्मप्रापयितृत्वेनभाव्यम् ॥ राजादौतथादर्शनात् ॥ ब्रह्मप्राप्तिश्चवायुनैवभवति ॥

प्रकारांतरेणतत्रतत्रोच्यमानत्वाद्वायोरपिपरतोब्रह्मणोर्वाग्गंतव्योस्तीतिनाशंक
नीयम् ॥ विद्युत्पतिनावायुनैव ॥ सएनान्ब्रह्मगमयतीतिब्रह्मगमनश्रुतेः ॥ विद्यु

॥ ॐ वैद्युतेनैवततस्तच्छ्रुतेः ॐ ॥ ६ ॥

त्पतिर्वायुरेवनयेद्ब्रह्मनचापरः ॥ कुतोऽन्यस्यभवेच्छक्तिस्तमृतेप्राणनायकमि
तिबृहत्तंत्रे ॥ ६ ॥ अ० ५ ॥

अतःसएवांतिमः ॥ ब्रह्मप्रापकत्वंचवायोः ॥ कुतः ॥ तत्पुरुषोमानवःसएनान्ब्रह्मगमयतीतिश्रुतेरिति भावः ॥ वायोरिवान्यस्यापिब्रह्मप्रापकत्वेऽतिमत्वंसंभवतीत्यतआह ॥ विद्युदिति ॥ अतोवायोरेवांतिमत्वाद्युक्तंतस्यातिप्राधान्यमितिसिद्धम् ॥ ६ ॥ अ० ५ ॥

एवंमार्गंविचार्यात्रतेनमार्गेणगतानांगम्यनिरूपणादस्तिशास्त्रादिसंगतिः ॥ अन्यथाऽनुस्मृत्यनुपपत्तेर्निरूपणीयमेतत् ॥ वायुरेवब्रह्मनयतीत्युक्तंतद्ब्रह्मात्रविषयः ॥ किंचतुर्मुखाख्यंकिंवापरमुतोभयमितिसंदेहः ॥ ब्रह्मशब्दएवसंदेहबीजम् ॥ तृतीयपक्षेप्येकस्योभयप्राप्त्यसंभवात्कांश्चित्कार्यंकांश्चित्परमित्यर्थःस्यात् ॥ तत्रकिंकेनचित्क्रमेणोभयप्राप्तिरुतक्रमंविनैव ॥ क्रमोपिकश्चनयोग्यतारूपस्तदन्योवाऽसावितिसंदेहः॥ उ

सएनान्ब्रह्मगमयतीतिकार्यंब्रह्मगमयतीतिबादरिर्मन्यते।ऋतेदेवान्परंब्रह्मकः

## ॥ कार्यंबादरिरस्यगत्युपपत्तेः ॐ ॥ ७॥

पुमान्प्राप्नुयात्क्वचित् ॥ यद्यपिब्रह्मदृष्टिःस्याद्ब्रह्मलोकमवाप्नुयादित्यध्यात्म

वचनात्तस्यैवगत्युपपत्तेः ॥ ७ ॥

भयथासंभवःसंदेहबीजम् ॥ किंतावत्प्राप्तमिति तत्रसूत्रंपठित्वाव्याचष्टे ॥ कार्यमिति ॥ सएनान्ब्रह्मगमयतीत्यत्रकार्यमुत्पत्तिमद्ब्रह्मवायुर्गमयतीतिबादरिराचार्योमन्यतइत्यर्थः ॥ ब्रह्मशब्दस्यपरब्रह्मणिमुख्यत्वात्कथमयमर्थइत्यतआह ॥ ऋतइति ॥ ब्रह्मशब्दस्यपरब्रह्मणिमुख्यत्वेऽपिनात्रतत्स्वीकारोऽयुक्तः ॥ तथापिप्रकृतेर्बंधोब्रह्मणासहभिद्यतइत्यादिनाचतुर्मुखमुक्तिपर्यंतंबंधस्यसंततत्वात्ततोऽर्वाक्चतुर्मुखस्यैवगत्युपपत्तेः ॥ तथास्मृत्युक्तत्वाच्चेतिभावः ॥ ७ ॥

नकेवलंयुक्तिमात्रेणश्रुतेरन्यार्थकल्पनमपितुविशेषश्रुतेश्चेत्यर्थप्रतिपादकंसूत्रमुपन्यस्यतांश्रुतिमुदाहरति॥
विशेषितत्वाच्चेति ॥ भाष्यंस्यसूत्रेणान्वयः ॥ ८ ॥ ननुकथंज्ञानिनःकार्यप्राप्तिरुच्यते ब्रह्मविदाप्नोतिपर
मितिपरब्रह्मप्राप्तेरेवश्रुतत्वादित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ सामीप्यादिति ॥ सत्यंज्ञानिनःपरप्रा

यदिहवावपरमभिपश्यतिप्राप्नोतिब्रह्माणंचतुर्मुखंप्राप्नोतिब्रह्माणंचतुर्मु

॥ ॐ विशेषितत्वाच्च ॐ ॥ ८ ॥

॥ ॐ सामीप्यात्तुतद्व्यपदेशः ॐ ॥ ९ ॥

खमितिकौषारवश्रुतौ ॥ ८ ॥ ब्रह्मविदाप्नोतिपरमितिव्यपदेशस्तुसमी
पतएवपरमपिप्राप्नोतीत्येतदर्थएव ॥ ९ ॥

प्तिरेवश्रुत्योच्यतइति तथापिनोक्तविरोधः ॥ यतोब्रह्मविदाप्नोतिपरमितिश्रुतिरपिज्ञानीचतुर्मुखंप्राप्या
चिरेणपरमपिप्राप्नोतीत्यर्थमेववक्तिनतुचतुर्मुखप्राप्तिप्रतिषेधतिनापिप्रथमतएवपरप्राप्तिंब्रूते ॥ कुतएतत्॥
सामान्यश्रुतेरुदाहृतविशेषश्रुत्याबाधोपपत्तेरितिभावः ॥ ९ ॥

ननुसमीपतएवपरब्रह्मप्राप्नोतीतिकोर्थः॥प्रलयादर्वाक्प्रलयएववा ॥ नाद्यः ॥ बद्धत्वसाम्यात्प्रथममेवप्राप्त्युपपत्तेः ॥ नद्वितीयः॥ विशेषप्रमाणाभावादितिभावेनपृच्छति ॥ कदेति॥तत्परिहारायसूत्रमुपन्यस्यव्याचष्टे ॥ कार्येति ॥ नोक्तविकल्पावकाशः ॥ समस्तकार्याणांविनाशरूपेप्रलयेतेषांकार्याणांस्वामिनाच

कदा ॥ तेहब्रह्माणमभिपद्ययदैतद्विलीयतेऽथसहब्रह्मणापरमभिगच्छंतीतिसौपर्णश्रुतेः ॥ महाप्रलयेतदध्यक्षेणब्रह्मणासहगच्छंति ॥ १० ॥

॥ ॐ कार्यात्ययेतदध्यक्षेणसहातःपरमभिधानात् ॐ ॥ १० ॥

॥ स्मृतेश्च ॐ ॥ ११ ॥

ब्रह्मणासहतेसर्वेसंप्राप्तेप्रतिसंचरे ॥ परस्यांतेपरात्मानःप्रविशंतिपरंपदमिति ॥ ११ ॥

तुर्मुखेनसह ॥ अतश्चतुर्मुखात्परंब्रह्मज्ञानीगच्छतीत्यभ्युपगमात् ॥ नचतत्रप्रमाणाभावः ॥ श्रुतेरेवसद्भावादितिभावः ॥ १० ॥ स्मृत्याप्येतमर्थंसाधयत्सूत्रंपठित्वातांस्मृतिमुदाहरति ॥ स्मृतेश्चेति ॥ प्रतिसंचरः प्रलयः ॥ परंब्रह्मायुः ॥ परात्मानःपरमात्मनिमनोयेषांते ॥ ११ ॥

पक्षांतरंचदर्शयन्सूत्रमुपन्यस्यव्याचष्टे ॥ परमिति ॥ सएनान्ब्रह्मगमयतीत्यत्रपरंब्रह्मवायुर्गमयतीत्यर्थोंन कार्यमिति॥ कुतः॥ब्रह्मशंब्दस्यपरब्रह्मण्येवमुख्यत्वात् ॥ मुख्यार्थेंचसंभवत्यमुख्यार्थकल्पनायोगादितिजै मिनिराचार्योंमन्यतइतिभावः ॥ १२ ॥ ननुब्रह्मशब्दस्यपरब्रह्मणिमुख्यत्वेपितद्ग्रहणानुपपत्तेरमुख्यार्थ कल्पनेत्याशंकांपरिहरन्सूत्रमुपन्यस्यव्याचष्टे ॥ दर्शनाच्चेति॥नज्ञानिनःपरप्राप्तिरनुपपन्नाययाऽमुख्यार्थो

ब्रह्मशब्दस्यतत्रैवमुख्यत्वात्परमेवब्रह्मगमयतीतिजैमिनिर्मन्यते ॥ १२ ॥ दृष्टत्वाच्चपरब्र

**॥ ॐ परंजैमिनिर्मुख्यत्वात् ॐ ॥ १२ ॥ ॥ ॐ दर्शनाच्च ॐ ॥ १३ ॥**

**॥ ॐ नचकार्येंप्रतिपत्त्यभिसंधिः ॐ ॥ १४ ॥**

ह्मणः ॥ १३ ॥ नहिकार्येंप्रतिपत्तिःप्राप्नवानीत्यभिसंधिश्च ॥ १४ ॥

गीकारःकिंतूपपन्नैव ॥ श्रवणादिसाधनैरपरोक्षतयापरब्रह्मणएवदृष्टत्वात् ॥ अन्यस्यतदभावादितिभावः ॥ १३ ॥ हेत्वंतरेणैतमर्थंप्रतिपादयन्सूत्रमुपन्यस्यव्याचष्टे ॥ नचेति ॥ ज्ञानिनःकार्यप्राप्तिरेवानुपप न्नानपरप्राप्तिः ॥ तस्यकार्यविषयेप्रतिपत्त्यभावात्परविषयेचप्रतिपत्तिसद्भावात् ॥ प्राप्नवानीत्यभिसंधि श्चनकार्यविषयेकिंतुपरविषयएवातश्चपरप्राप्तिरेवयुक्तानकार्यप्राप्तिरितिभावः ॥ १४ ॥

परविषयएवदर्शनप्रतिपत्त्यभिसंधिसद्भावेपिकुतस्तत्प्राप्तिरेवनकार्यप्राप्तिरित्यतआह ॥ यदिति ॥ तृतीय पक्षेपिनकश्चित्क्रमोस्तिकिंतुयस्यकार्यप्राप्तीच्छातस्यतत्प्राप्तिर्यस्यपरप्राप्तीच्छातस्यतत्प्राप्तिरितिप्राप्तम् ॥

यद्युपास्तेपुमान्जीवन्यत्प्राप्तुमभिवांछति ॥ यच्चपश्यतितुमःसंस्तत्प्राप्नोतिस्मृतेरन्वितिपाद्मे॥प्रतीकंदेहउद्दिष्टोयेषांतत्रैवदर्शनम् ॥ नतुव्याप्ततयाक्वापिप्रतीकालंबनाऽस्तुते ॥ अप्रतीकादेवताऽस्तु ऋषीणांशतमेवतु ॥ राज्ञांचशतमुद्दिष्टंगंधर्वाणांशतंतथा॥ एतेऽधिकारिणोव्याप्तिदर्शनेऽन्येनतुक

॥ ॐ अप्रतीकालंबनान्नयतीतिबादरायणउभयथाचदोषात्तत्क्रतुश्च ॐ ॥ १५ ॥

चित् ॥ अयोग्यदर्शनेयत्नाद्भ्रंशःपूर्वस्यचापितु ॥ अप्रतीकाश्रयायेहितेयांतिपरमेवतु ॥ स्वदेहे ब्रह्मदृष्ट्यैवगच्छेद्ब्रह्मसलोकताम् ॥ब्रह्मणासहसंप्राप्तेसंहारेपरमंपदमितिगारुडवचनादुभयत्रोक्तदोषाच्चाप्रतीकालंबनान्परंनयति ॥ सयथाकामोभवतितत्क्रतुर्भवतियत्क्रतुर्भवतितत्कर्मकुरुतेयत्कर्म कुरुतेतदभिसंपद्यतइतिश्रुतेश्च ॥ अत्रकर्मोपासनमेवाऽन्यान्कार्यंनयतीतिभगवन्मतम् ॥ १५ ॥

कुतः ॥ पक्षद्वयेपिसाधकसद्भावात् क्रमस्यचादर्शनात् यत्प्राप्तुमभिवांछतीत्यादेश्चेति ॥ क्रमपक्षेपिनयोग्यतारूपक्रमःकिंतुयस्ययत्प्राप्तौसौकर्यंतस्यतत्प्राप्तिरितिप्राप्तम् ॥ कस्मात् ॥ पक्षद्वयस्याप्यपरिहार्यत्वात् महाफलेक्रमस्यन्याय्योगात् क्रमांतरस्यचादर्शनादिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ अप्रतीकेति ॥ नसर्वान्कार्यंनयतीतिश्रुत्यर्थोनापिपरमेवेतिकिंतुकांश्चित्कार्यंकांश्चित्परमिति ॥ कुतः ॥

उभयपक्षोक्तदोषात्  परप्राप्तिपक्षेगत्यनुपपत्त्यादिदोषस्योक्तत्वात्कार्यप्राप्तिपक्षेचब्रह्मशब्दामुख्यत्वादि
दोषाणामुक्तत्वात् ॥ नचोभयप्राप्तिग्रहणेदोषद्वयापातः ॥ कार्यमेवनयतीत्यन्यव्यावृत्त्याकार्यप्राप्तौवि
शेषहेत्वभावात् ॥ येषांपरप्राप्तिस्तेषांबद्धत्वेपिप्रमाणबलेनगत्युपपत्तेः ॥ श्रुत्यादीनांचान्यनिषेधकत्वा
भावात् ॥ नापिपरमेवेत्यवधारणेहेतुरस्ति ॥ केषांचित्कार्यप्राप्तेरेवप्रमाणबलेनोपपत्तेः ॥ ब्रह्मशब्द
स्यामुख्यवृत्त्यभ्युपगमस्यन्याय्यत्वात् ॥ कार्यप्राप्तिमतांचतद्दर्शनादिसद्भावात् ॥ मुनिमतयोश्चाऽन्यानि
षेधकत्वेनाविरोधात् ॥ यांतिदेवंपरंकेचित्पूर्वंकेचिल्लयेविभुमित्यादेश्च ॥ नचक्रमंविहायैतद्यथेष्टम् ॥ क्र
मानुरागीभगवान्क्रमात्पुंभिरवाप्यतइतिश्रुतेः॥ नचयत्प्राप्तुमभिवांछतितत्प्राप्नोतीतिवचनादिच्छानुसारेण
प्राप्तिर्नक्रमेणेतिवाच्यम् ॥ सयथाकामोभवतीतिश्रुतौतत्प्राप्तीच्छूनामिच्छामात्रेणतत्प्राप्तिनिषेधात् ॥ य
त्प्राप्तीच्छातज्ज्ञानोपासनापरोक्ष्यैरेवतत्प्राप्तेरुक्तत्वात् ॥ नचात्रोपासनानुक्तिः ॥ कर्मपदस्यैवतद्वाचकत्वा
त् ॥ क्रमेपिनसौकर्यंक्रमेणोभयप्राप्तिः ॥ सप्रतीकाश्चतुर्मुखमप्रतीकाःपरमुहैतेगच्छंति ॥ प्रतीकंदेहउद्दि
ष्टइत्यादिश्रुतिस्मृतिप्राप्तस्यैवग्राह्यत्वेनाप्रतीकालंबनान्परंनयत्यन्यान्कार्यंनयतीतिक्रमस्यैवयुक्तत्वादिति
भगवान्बादरायणोमन्यतइतिभावः ॥ १५ ॥

यदुक्तंनेच्छानुसारेणप्राप्तिरपित्वप्रतीकालंबनत्वादिक्रमेणैवेति ॥ तन्न ॥ प्रतीकालंबनाःकेचिदप्रतीकालं
बनाःकेचिदितिनियमाभावेनयथेष्टतदापादनस्यापिसंभवादित्याशंकांश्रुत्यापरिहरत्सूत्रंपठित्वातांश्रुतिमु

अंतःप्रकाशाबहिःप्रकाशाःसर्वप्रकाशादेवावावसर्वप्र
काशाऋषयोंऽतःप्रकाशामानुषाएवबहिःप्रकाशाइति

## ॥ ॐविशेषंचदर्शयति ॐ॥ १६ ॥

चतुर्वेदशिखायाम् ॥ १६ ॥ अ० ६॥ ॥ इतिश्री
मत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभग
वत्पादाचार्यविरचितेचतुर्थाध्यायस्यतृतीयःपादः ॥ ३ ॥

दाहरति ॥ विशेषंचेति ॥ अतोज्ञानिनांप्रलयेपूर्वंचपरब्रह्मप्राप्तिसद्भावात्तथाऽनुस्मृतिरुपपन्नेतिसिद्धम
॥ १६ ॥ अ० ६ ॥ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितस्यश्रीमद्ब्रह्मसूत्रभाष्यस्यटीकायां
जयतीर्थमुनिविरचितायांतत्त्वप्रकाशिकायांचतुर्थाध्यायस्यतृतीयःपादः ॥ ३ ॥

श्रीवेदव्यासायनमः ॥ ॥ हरिःॐ ॥ एतत्पादार्थंदर्शयति ॥ भोगमिति ॥ चतुर्विधफलेत्रयमुक्त्वाचतु
र्मुखेनसहपरंब्रह्मप्राप्तानांयस्तत्रभोगःक्रमप्राप्तस्तमत्राहसूत्रकारइत्यर्थः ॥ अत्रादौमुक्तस्यब्रह्मातिक्रमे
णैवभोगानुभवसाधनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाब्रह्मणोगम्यत्वाभावप्रसंगात्समर्थनीयमेतत् ॥ मु
क्तोब्रह्मप्राप्नोतीत्युक्तम् ॥ तस्यचभोगआवश्यकः ॥ समुक्तोऽत्रविषयः ॥ किंब्रह्मातिक्रम्यभोगान्भुङ्क्तेउत
तत्समीपएवेतिसंदेहः ॥ अर्चिराद्यतिक्रमोक्तिर्गम्यत्वोक्तिश्चसंदेहबीजम् ॥ अतिक्रामतीतिपूर्वःपक्षः ॥ त

हरिः ॥ ॐ ॥ भोगमात्राऽस्मिन्पादे ॥ सएवंविदेवंमन्वानएवंपश्यन्ना

## ॥ ॐसंपद्याविहायस्वेनशब्दात् ॐ ॥ १ ॥

त्मानमभिसंपद्यैतेनात्मनायथाकामंसर्वान्कामाननुभवतीतिसौपर्णश्रुतेः॥

थाहि ॥ परमात्मानमविहायैवावस्थानेतस्यस्वरूपाविर्भावोऽस्तिनवा॥ नाद्यः॥ एतंसेतुंतीर्त्वांऽधःसन्ननंधो
भवतीतिपरमात्मातिक्रमानंतरमेवस्वरूपाविर्भावस्योक्तत्वात् ॥ द्वितीयेनविरोधः॥अनाविर्भूतस्वरूपस्यामु
क्तत्वेनमुक्तातिक्रमाव्याघातात्॥अतोमुक्तस्यब्रह्मातिक्रमनियमान्नतद्गम्यमिति॥ सिद्धांतयत्सूत्रंपठति॥सं
पद्येति॥ज्ञानीब्रह्मप्राप्यतदविहायैवभोगान्भुङ्क्ते ॥नचैवममुक्तत्वम्॥अन्यथारूपंपरित्यज्यस्वरूपेणावस्था
नादितिसूत्रार्थः॥तत्रब्रह्मप्राप्याविहायैवभोगान्भुङ्क्तइत्येतत्कुतइत्यतःसूत्रसूचितांश्रुतिमुदाहरति॥सइति ॥

ब्रह्मानतीत्याप्याविर्भूतस्वरूपत्वेनभोगोमुक्तानामित्येतत्कुतइतितत्रापिसूत्रसूचितांश्रुतिमुदाहरति ॥ पर
मि त ॥ नन्वेवंयदिब्रह्मानतिक्रमेऽपिस्वरूपेणाविर्भावश्चेच्छ्रुतिविरोधइत्यतआह ॥ एतमिति ॥ सत्य
मेवंश्रुतिरस्तीतितथापिनोक्तस्यतद्विरोधः ॥ यतस्तत्रैतंसेतुंगंतुमन्यत्तीर्त्वेतितत्प्राप्त्ययेऽन्यतरणमेवोच्यते
ननुब्रह्मतीर्त्वास्वरूपाविर्भावइतिभावः ॥ कुतएतदित्यतआह ॥ इमामिति ॥ एतंसेतुंतीर्त्वेदंगच्छतीतिव

परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतइतिच ॥ एतंसेतुंतीर्त्वाऽधः
सन्ननंधोभवतीतिच ॥ तत्रतरणंनामतत्प्राप्त्ययेऽन्यतरणमेव ॥ इमांघो
रामशिवानंदीर्तीर्त्वैतंसेतुमाप्यैतेनैवसेतुनामोदतेप्रमोदतेआनंदीभवतीति
मौद्गल्यश्रुतेः ॥ १ ॥ अ० १ ॥

चनाभावेनैतच्छ्रुतेःसामान्यरूपत्वाद्विशेषश्रुत्यनुसारेणार्थकल्पनोपपत्तेरितिभावः ॥ अतोमुक्तस्यब्रह्मा
तिक्रमाभावात्तदवगम्यमितिसिद्धम् ॥ १ ॥ अ० १ ॥ अत्रब्रह्मप्राप्यतदविहायैवभोगभोक्तुर्मुक्तत्व
साधनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाभोगासिद्धेःसाधनीयमेतत् ॥ सतत्रपर्येतीतिश्रुत्युक्तोविषयः ॥
किंमुक्तोऽमुक्तोवेतिसंदेहः ॥ उभयथासंभवःसंदेहबीजम् ॥ नायंमुक्तइतिपूर्वःपक्षः ॥ सतत्रपर्येतीत्यादि ॥ ३२ ॥
नास्यक्रियाप्रतीतेः ॥ नहिक्रियावत्त्वंकृतकृत्यस्यमुक्तस्योपपद्यते ॥ नचवाच्यममुक्तस्याप्येवंविधभो

गासंभवइति ॥ अन्यदासंभवेपिपरमात्मप्राप्तावमुक्तस्यापितदुपपत्तेः ॥ नचामुक्तत्वेश्रुत्युक्तस्यस्वेनरूपे
णेतियाक्यविरोधः ॥ तत्रनिर्गुणोपासकस्यस्वरूपाविर्भावविधानात् ॥ सतत्रेतिदहरविद्योपासकस्यामुक्त
स्यैवभोगाभिधानात् ॥ अतःश्रुत्युक्तस्यामुक्तत्वान्नमुक्तस्यभोगइति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥
मुक्तइति ॥ सतत्रपर्येतीत्यत्रमुक्तएवोच्यते ॥ मुक्तिविनैतद्भोगानुपपत्तेः ॥ नचब्रह्मप्राप्त्यातदुपपत्तिः ॥ अ

मुक्तएवात्रोच्यते ॥ अहरहरेनमनुप्रविशत्युपसंक्रमतेचनतत्रमोदते
नप्रमोदतेनचकामाननुभवति ॥ बद्धोह्येषतदाभवति ॥ अथयदैनं

## ॥ ॐमुक्तःप्रतिज्ञानात् ॐ ॥ २ ॥

मुक्तोऽनुप्रविशतिमोदतेचप्रमोदतेचकामांश्चैवानुभवतीतिबृहच्छ्रुतौ
प्रतिज्ञानात् ॥ २ ॥ अ० २ ॥

हरहरेनमितिश्रुतौब्रह्मप्राप्तानामपिसुप्तानाममुक्ततयादिव्यभोगाभावमुक्त्वामुक्तस्यैवतत्प्राप्त्यातद्भावप्रति
ज्ञानात् ॥ अतएवतस्याक्रियावत्त्वंचपरास्तंश्रुतिविरोधादितिभावः ॥ स्वरूपाविर्भावोऽस्याश्चमुक्तत्वं
ज्ञायते ॥ नचप्रकरणभेदःकल्प्यः ॥ एकप्रकरणत्वेनप्रतीतस्यकारणंविनाभिन्नप्रकरणत्वकल्पनेऽतिप्रसंगा
त् ॥ अतोयुक्तएवमुक्तस्यभोगइतिसिद्धम् ॥ २ ॥ अ० २ ॥

अत्रमुक्तप्राप्यस्यज्योतिषोब्रह्मत्वप्रतिपादनादस्तिशास्त्रादिसंगतिः ॥ अन्यथाब्रह्मप्राप्त्यनुपपत्तेःसमर्थनी
यमेतत् ॥ परंज्योतिरितिश्रुत्युक्तंज्योतिर्विषयः ॥ विष्णुरन्यद्वेतिसंदेहः॥उभयत्रशब्दप्रवृत्तिःसंदेहबीजम्॥
नविष्णुरितिपूर्वःपक्षः ॥ ज्योतिःशब्दस्याऽऽदित्येपिप्रयोगदर्शनात्सूर्यमगन्मज्योतिरित्यादौ ॥ नचविष्णा
वपितच्छब्दसद्भावादत्राऽऽदित्यग्रहणायोगः ॥ अत्राऽऽदित्यांगीकारेसतेजसिसूर्येसंपन्नोयथापादोदर
स्त्वचाविनिर्मुच्यतएवंहैवसपाप्मनाविनिर्मुक्तइतिश्रुत्यैकवाक्यत्वलाभात् ॥ तथाचात्रसमाख्यानादादि
परंज्योतिःशब्देनपरमात्मैवोच्यते ॥ तत्प्रकरणत्वात् ॥ परंज्योतिःपरंब्रह्मपरमा

॥ ॐआत्माप्रकरणात् ॐ ॥ ३ ॥

त्यादिकागिरः ॥ सर्वत्रहरिमेवैकंब्रूयुर्नान्यंकथंचनेतिब्रह्मांडे ॥ ३ ॥ अ० ३ ॥
त्यमुपसंपद्यप्रारब्धकर्मणामुच्यतइत्यर्थःस्यात् ॥ एवंचनमुक्तस्यब्रह्मसमीपेभोगइति ॥ सिद्धांतयत्सूत्रमु
पन्यस्यव्याचष्टे ॥ आत्मेति ॥ अत्रपरंज्योतिःशब्देनपरमात्मैवोच्यते ॥ यआत्मापहतपाप्मेतिपरमात्म
नएवात्रारभ्याधीतत्वेनास्यतत्प्रकरणत्वात् ॥ नहिप्रकरणात्समाख्याबलवती ॥ तस्याःसावकाशत्वाच्चेति
भावः ॥ नन्वस्यपरमात्मप्रकरणत्वेपिप्रसंगादन्योक्तिःकिंनस्यादित्यतआह ॥ परमिति ॥ भवेदेतत्यदि
परंज्योतिःशब्दोऽन्यत्रवर्तेत ॥ नैतदस्ति ॥ स्मृतिविरोधादितिभावः ॥ अतःपरंज्योतिर्ब्रह्मैवेतितत्प्राप्यावि
हायैवमुक्तोभोगान्भुंक्तइतिसिद्धम् ॥ ३ ॥ अ० ३ ॥

अत्रसायुज्यभाजांभगवद्भुक्तभोगभोक्तृत्वसाधनादस्तिशास्त्रादिसंगतिः ॥ अन्यथेश्वरस्यसर्वभोक्तृत्वासि
द्धेःसमर्थनीयमेतत् ॥ परमात्मानंप्राप्यमुक्तोभोगान्भुङ्क्तइत्युक्तम् ॥ प्राप्तिश्चसायुज्यादिरूपा ॥ तत्रते
भोगाएवविषयः ॥ किंपरमात्मभुक्ताएवसायुज्यभाग्भिर्भुज्यंतेउतान्यइतिसंदेहः ॥ उभयथापिसंभवःसं
देहबीजम् ॥परमात्माभुक्ताइतिपूर्वःपक्षः ॥ मोक्षस्यपरमपुरुषार्थत्वेनपरमात्माभुक्तभोगानामपिसौलभ्या

येभोगाःपरमात्मनाभुज्यंतेतएवमुक्तैर्भुज्यंते ॥ याने

## ॥ ॐ अविभागेनदृष्टत्वात् ॐ ॥ ४ ॥

वाहंशृणोमियान्पश्यामियान्जिघ्रामितानेवैतइदंश
रीरंविमुच्यानुभवंतीतिदृष्टत्वाच्चतुर्वेदशिखायाम् ॥

त् ॥ परमात्मभुक्ताएवेतिनियमेकदाचित्संजातभोगेच्छानामपिमुक्तानांभोगाभावप्रसंगात् ॥ ईश्वरस्यनि
त्यपूर्णानंदत्वेनकदाचिद्भोगस्यापिसंभवात् ॥ ततश्चमोक्षस्यापुरुषार्थत्वापत्तिःस्यात् ॥ अतोभगवद्भु
क्तभोगभोक्तृत्वान्मुक्तानांनतस्यसर्वभोक्तृत्वमिति ॥सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ अविभागेनेति॥ये
भोगाःपरमात्मनाभुज्यंतेतएवमुक्तैर्भुज्यंतेनतुतदभुक्ताः॥तथाश्रुतेरित्यर्थः॥नचपरमगतित्वादेतत्कल्प्यम् ॥

मुक्तानांपरमात्मभुक्तभोगांगीकारेपितदुपपत्तेः ॥नचकदाचिदुक्तरीत्याभोगाभावः॥ पूर्णानंदःपूर्णभुक्पूर्णकर्तेतीश्वरस्यपूर्णानंदत्वेपिपूर्णभोगश्रवणात् ॥ ननुभगवद्भुक्ताशेषभोगामुक्तैर्भुज्यंतेकेचिद्वा॥ आद्ये॥तत्साम्यापातः ॥ नद्वितीयः॥योनवेतिसामान्यतःसर्वभोगश्रवणादित्यतआह ॥भविष्यदिति॥विशेषस्मृत्यासामान्यश्रुतेःसंकोचइतिभावः ॥ अतोमुक्तानांभगवद्भुक्तभोगभोक्तृत्वायुक्तंतस्यसर्वभोक्तृत्वमितिसिद्धम् ॥

भविष्यत्पुराणेच ॥ मुक्ताःप्राप्यपरंविष्णुंतद्भोगाँल्लेशतः
क्वचित् ॥ बहिष्ठान्भुंजतेनित्यंनानंदादीन्कथंचनेति
॥ ४ ॥ अ० ४ ॥

॥ ४ ॥ अ० ४ ॥ अत्रब्रह्मप्राप्तस्यमुक्तस्यभोगसमर्थनादस्तिशास्त्रादिसंगतिः ॥ अन्यथामुक्तेरपुरुषार्थत्वप्रसंगात्समर्थनीयंतत् ॥ भोगोविषयः ॥ मुक्तानांयुक्तोनवेतिसंदेहः ॥ विप्रतिपत्तिःसंदेहबीजम् ॥ नयुक्तइतिपूर्वःपक्षः ॥ तथाहि ॥ किंमुक्तानांदेहोऽस्तिनवा ॥ नाद्यः ॥ तेषांसंसारपारंगतत्वेनशरीरानुपपत्तेः ॥ अन्यथामुक्तत्वस्यैवायोगात् ॥ नद्वितीयः ॥ शरीराभावेभोगासंभवात् ॥ अतोमुक्तौभोगासंभवादपुरुषार्थ

त्वमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ ब्राह्मेणेति ॥ युज्यतेमुक्तस्यभोगः ॥ नचोक्तविकल्पः ॥ देहाभावाभ्युपगमात् ॥ सर्वदेहपरित्यागेनैवमुक्तत्वात् ॥ नचोक्तदोषः ॥ मुक्तस्यस्वदेहाभावेपिपरमात्मानं

सर्वदेहपरित्यागेनमुक्ताःसंतोब्राह्मेणैवदेहेनभोगान्भुंजतइतिजैमिनिर्मन्यते ॥ सवाएषब्रह्मनिष्ठइदंशरीरंमर्त्यमतिसृज्यब्रह्माभिसंपद्यब्रह्मणापश्यतिब्रह्मणाशृणोतिब्रह्मणैवेदंसर्वमनुभवतीतिमाध्यंदिनायनश्रुतावुप

## ॥ ॐ ब्राह्मेणजैमिनिरुपन्यासादिभ्यः ॐ ॥ ५ ॥

न्यासात् ॥ आदत्तेहरिहस्तेनहरिदृष्ट्यैवपश्यति ॥ गच्छेच्चहरिपादेनमुक्तस्यैषास्थितिर्भवेदितिस्मृतेः ॥ गच्छामिविष्णुपादाभ्यांविष्णुदृष्ट्याचदर्शनम् ॥ इत्यादिपूर्वस्मरणान्मुक्तस्यैतद्भविष्यतीतिबृहत्तंत्रोक्तयुक्तेश्च ॥ ५ ॥

प्रविष्टस्यतद्देहेनैवग्रहवत्भोगसंभवादितिजैमिनिराचार्योमन्यतइतिभावः ॥ कुतएतत् ॥ श्रुतेरेवेत्याह ॥ सइति ॥ नन्वत्रमुक्तस्यभोगोब्रह्मणाश्रूयतेनपुनस्तद्देहेनेत्यतआह ॥ आदत्तइति ॥ ननुस्वयंदेहविधुरस्य कथमन्यदेहेनभोगोयुज्यते ॥ प्रलयादावभावादित्यतआह ॥ गच्छामीति ॥ ५ ॥

एवंदेहाभावमभ्युपगम्यभोगंसमर्थ्यतद्भावमभ्युपगम्यापितंसमर्थयत्सूत्रंपठित्वाव्याचष्टे ॥ चितीति ॥ नमु-
क्तानांभोगासंभवः ॥ तेषांब्रह्मदेहातिरिक्तस्वदेहसद्भावात् ॥ नचदेहसद्भावेमुक्तत्वाभावइतिवाच्यम् ॥ तद्दे-
हस्यचितिमात्रत्वात् ॥ देहस्यचितिमात्रत्वेपिकुतःसंसारित्वाभावः ॥ चितिमात्रस्यमुक्तस्वरूपत्वात् ॥





चितिमात्रोदेहोमुक्तानांपृथग्विद्यतेतेनभुंजते ॥ सर्वंवाएतदचित्परित्यज्य

॥ ॐ चितिमात्रेणतदात्मकत्वादित्यौडुलोमिः ॐ ॥ ६ ॥

चिन्मात्रएवैषभवतिचिन्मात्रएवावतिष्ठतेतामेतांमुक्तिरित्याचक्षतेइत्युद्दा-
लकश्रुतेः ॥ चिदात्मकत्वादित्यौडुलोमिर्मन्यते ॥ ६ ॥

कृत्रिमशरीरस्यैवसंसारापादकत्वात् ॥ स्वरूपस्याकृतिमत्त्वात् ॥ जीवस्यचिन्मात्रत्वमेवकुतः ॥ श्रुतेरेवे-
त्यौडुलोमिराचार्योमन्यतइतिभावः ॥ ६ ॥

नैतौपरिहारावुपपन्नौदेहभावाभावयोर्विरुद्धत्वाद्वस्तुविकल्पासंभवादित्याशंकांपरिहरत्सूत्रमुपन्यस्यव्या चष्टे ॥ एवमपीति ॥ नैतयोःपक्षयोर्विरोधोऽस्ति ॥ औडुलोमिनोक्तस्यचिन्मात्रेणभोगस्यजैमिन्युक्त

सवाएषएतस्मान्मर्त्याद्विमुक्तश्चिन्मात्रोभवत्यथतेनैवरूपेणाभिपश्यत्यऽभिशृणोत्यभिम नुतेऽभिजानातितामाहुर्मुक्तिरितिसौपर्णश्रुतौचिन्मात्रेणाप्युपन्यासाज्जैमिन्युक्तस्यचभा वादुभयत्राप्यविरोधंबादरायणोमन्यते ॥ नारायणाध्यात्मेच ॥ मर्त्यदेहंपरित्यज्य

**॥ ॐ एवमप्युपन्यासात्पूर्वभावादविरोधंबादरायणः ॐ ॥ ७ ॥**

चितिमात्रात्मदेहिनः॥ चितिमात्रेंद्रियाश्चैवप्रविष्टाविष्णुमव्ययम्॥ तदंगानुगृहीतैश्चस्वां गैरेवप्रवर्तनम् ॥ कुर्वंतिभुंजतेभोगांस्तदंतर्बहिरेववा ॥ यथेष्टंपरिवर्ततेतस्यैवानुग्रहेरि ताइति ॥ ७ अ० ५ ॥

स्यचब्राह्मेणदेहेनभोगस्यप्रामाणिकत्वात् ॥ प्रामाणिकेचविरोधाभावात् ॥ नचौडुलोमिमतप्रमाणाभा वोऽनुक्तत्वादितिवाच्यम् ॥ सवाएषइतिश्रुतौतदुपन्यासादितिभगवान्बादरायणोमन्यतइतिभावः ॥ अ विरोधप्रकारंस्मृत्यादर्शयति॥नारायणेति॥अतोमुक्तौभोगसंभवाद्युक्तंपुरुषार्थत्वमितिसिद्धम्॥७॥अ०५॥

अत्रब्रह्मप्राप्तस्यमुक्तस्यसंकल्पमात्रसाध्यभोगवत्त्वसाधनादस्तिशास्त्रादिसंगतिः ॥ अन्यथासंसारसमान
धर्मत्वापत्तेरसाधनीयमेतत् ॥ प्रकृतोमुक्तभोगएवात्रविषयः ॥ किंतत्तदुपायसाध्यसाधनसाध्यउतसं
कल्पमात्रसाध्यइतिसंदेहः ॥ लोकदृष्टिरलौकिकत्वंचसंदेहबीजम् ॥ तत्तदुपायसाध्यसाधनसाध्यइति
पूर्वःपक्षः ॥ मुक्तस्यभगवदोकसिस्थितत्वात् ॥ भगवदोकसिचभूम्यादिवत्तत्तदुपायसाध्यसाधनसाध्यएव
भोगोभवेत् ॥ तस्याप्योकस्त्वसाम्यात् ॥ अन्यथालोकविरोधापातात् ॥ तथाचसंसारसमानधर्मत्वान्मु

नतेषांभोगादिषुप्रयत्नापेक्षा ॥ सयदिपितृलोककामोभवतिसंकल्पादे

## ॥ ॐ संकल्पादेवचतच्छ्रुतेः ॐ ॥ ८ ॥

वास्यपितरःसमुपतिष्ठंतीत्यादिश्रुतेः ॥ ८ ॥ अ० ६ ॥

क्तेरपुरुषार्थत्वमिति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ संकल्पादेवेति ॥ नमुक्तानांभोगादिषुतत्तदुपाय
साध्यसाधनापेक्षाकिंतुसंकल्पमात्रादेवतद्भोगसिद्धिः ॥ कुतः ॥ सयदीतिश्रुतेः ॥ श्रुतिविरोधादेवोक्तयु
क्तेराभासत्वमितिभावः ॥ चशब्दोविपक्षनिवृत्त्यर्थतयाव्याख्यातः ॥ नचैवंसतिलोकविरोधः ॥ निर्दोषेभ
गवदोकसितथात्वस्यैवयुक्तत्वात् ॥ अतोमुक्तभोगस्यसंकल्पमात्रसाध्यत्वाद्युक्तंमुक्तेःपुरुषार्थत्वमिति
सिद्धम् ॥ ८ ॥ अ० ६ ॥

अत्रब्रह्मप्राप्तिमतांमुक्तानांस्वाधमनियामकराहित्येनभोगसाधनादस्तिशास्त्रादिसंगतिः ॥ अन्यथामुक्तेः संसारसमानधर्मत्वप्रसंगात्समर्थनीयमेतत् ॥ प्रकृतोमुक्तएवात्रविषयः ॥ कूमपतिभ्योऽन्यपतियुक्तोनवेति संदेहः ॥ उभयथासंभवःसंदेहबीजम् ॥ मुक्तस्याधमा अप्यधिपतयःसंतीतिपूर्वःपक्षः ॥ तस्यापिपरगृहग तत्वात् ॥यथाखलुराजगृहगतानामधमा अपिप्रतीहारादयोनियामकादृश्यंते॥अन्यथालोकविरोधात् ॥ अतोमुक्तस्याधमनियम्यत्वान्मुक्तेःसंसारसमानधर्मत्वमिति॥सिद्धांतयत्सूत्रमुपन्यस्यकिंचिद्व्याचष्टे॥अत

सत्यसंकल्पत्वादेव॥ परमोऽधिपतिस्तेषांविष्णुरेवनसंशयः ॥ ब्रह्मादिमानुषांतानांसर्वेषाम

## ॥ ॐ अतएवचानन्याधिपतिः ॐ ॥ ९ ॥

विशेषतः ॥ ततःप्राणादिनामांताःसर्वेपिपतयःक्रमात् ॥ आचार्याश्चैवसर्वेपियैर्ज्ञानंसुप्र तिष्ठितम् ॥ एतेभ्योऽन्यःपतिर्नैवमुक्तानांनात्रसंशयइतिवाराहे ॥ ९ ॥ अ० ७ ॥

एवेति ॥ चशब्दोविपक्षव्यावृत्त्यर्थः ॥ नमुक्तःकूमपतिभ्योन्याऽधिपतियुक्तः ॥ सत्यसंकल्पत्वात्॥ लोके स्वावरनियम्यत्वंह्यनपेक्षितमेवभवति ॥ तच्चमुक्तस्यसत्यसंकल्पत्वादेवनयुज्यतइतिभावः ॥ अत्रस्मृतिंचा ह ॥ परमइति ॥ आचार्याश्चपतयइत्यन्वयः ॥ अतोमुक्तस्याधमाधिपतिशून्यत्वाद्युक्तंमुक्तेःसंसारवैलक्ष ण्यमितिसिद्धम् ॥ ९ ॥ अ० ७ ॥

अत्रेश्वरप्राप्तानांमुक्तानांभोगानुपपत्तिनिवारणादस्तिशास्त्रादिसंगतिः ॥ भोगानुपपत्तौमुक्तेरपुरुषार्थत्व प्रसंगान्निवारणीयमेतत् ॥ प्रकृतोमुक्तभोगएवात्रविषयः ॥ युज्यतेनवेतिसंदेहः ॥ वादिविवादःसंदेहबीजम् ॥ नमुक्तानांभोगोयुज्यतइतिपूर्वःपक्षः ॥ तथाहि॥ किंमुक्तानांबाह्यदेहोविद्यतेनवा॥ आद्येपितत्राभिमानोस्तिनवा ॥ नेतिपक्षेसुप्तस्येवभोगासंभवः ॥ अस्तिचेद्दुःखादिप्रसंगः ॥ देहिनोदुःखादिनियमदर्शनात् ॥ नहवैसशरीरस्यसतःप्रियाप्रिययोरपहतिरस्तीतिश्रुतेश्च ॥ द्वितीयेभोगासंभवः ॥ नहिशरीररहितस्य

चिन्मात्रंविनाऽन्योदेहस्तेषांनविद्यतइतिबादरिः ॥ अशरीरोवावतदाभवत्यशरीरंवावसंतं

## ॥ ॐ अभावंबादरिराहह्येवम् ॐ ॥ १० ॥

नप्रियाप्रियेस्पृशतोयाभ्यांश्लेषउन्मथ्यतइत्येवंकौठरव्यश्रुतावाहहि ॥ १० ॥

भोगोदृष्टचरः ॥ नचचिच्छरीरेणभोगोपपत्तिः ॥ तस्यसुप्त्यादौविद्यमानस्यापिभोगायतनत्वादर्शनात् ॥ नचब्राह्मेणदेहेनतदुपपत्तिः॥ सायुज्यभाजांकथंचिदुपपत्तावपितदन्येषामनुपपत्तेः॥ अतःकथमपिमुक्तानांनिर्दुःखभोगायोगादपुरुषार्थत्वंमुक्तेरिति ॥ सिद्धांतयत्सूत्रंपठित्वाव्याचष्टे ॥ अभावमिति ॥ युक्तएव मुक्तानांभोगः ॥ नचोक्तविकल्पावकाशः ॥ चिन्मात्रदेहंविनाऽन्यदेहाभावस्यांगीकारात् ॥तदभावेपिभोगसंभवादितिबादरिराचार्योमन्यतइतिभावः ॥ मुक्तस्यदेहाभावःकुतइत्यतआह ॥ अशरीरइति ॥ १० ॥

देहसद्भावमभ्युपगच्छत्सूत्रमुपन्यस्यव्याचष्टे ॥ भावमिति ॥ चिन्मात्रदेहातिरिक्तदेहोपिमुक्तानांविद्यतेश्रुत्यु क्तत्वादेवेतिजैमिनिराचार्योमन्यतइतिभावः ॥ ११ ॥ नन्वेवंमतद्वयस्यपरस्परबिरुद्धत्वात्किंतत्स्वमतमित्याशं कांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ द्वादशेति ॥ मुक्तानांदेहभावाभावाख्यमुभयमपिस्वमतमेव ॥ कुतः ॥ प्रमाण वत्त्वात् ॥ कथमुभयंविरुद्धंस्वमतमिति ॥ मैवम् ॥ यथाखलुद्वादशाहयागस्यक्रतुत्वंसत्रत्वंचाविरुद्धम् ॥ यज

सवाएषएवंवित्परमभिपश्यत्यभिश्रृणोतिज्योतिषैवरूपेणचितावाचितावानित्येनवाऽनित्येनवा थाऽऽनंदीस्रैवैषभवतिनाऽनानंदंकिंचिदुपस्पृशतीत्यौद्दालकश्रुतौविकल्पाम्नानादन्यदेहस्यापिभा

॥ ॐभावंजैमिनिर्विकल्पाम्नानात् ॐ ॥ ११ ॥

॥ ॐद्वादशाहवदुभयविधंबादरायणोऽतः ॐ ॥ १२ ॥

वंजैमिनिर्मन्यते ॥ ११ ॥ यथाद्वादशाहःक्रत्वात्मकःसत्रात्मकश्चभवत्येवंमुक्तभोगोबाह्यशरी रकृतश्चिन्मात्रकृतश्चभवतीतिबादरायणोमन्यते ॥ उपपत्तिश्च ॥ १२ ॥

मानेच्छयैकयजमानत्वेक्रतुत्वस्यानेकयजमानत्वेसत्रत्वस्यसंभवात् ॥ एवंमुक्तेच्छयाभोगार्थंदेहभावाभा वयोरविरोधेनोपपत्तेरितिभगवान्बादरायणोमन्यतइतिभावः ॥ भवतुदेहभावाभावयोरविरोधस्तथापिक थंतथात्वेभोगोपपत्तिरनुपपत्तेरुक्तत्वादित्यतआह ॥ उपपत्तिश्चेति ॥ पक्षद्वयेपिभोगस्योपपत्तिरेवेत्यर्थः १२

कथमुपपत्तिरित्याशंकांपरिहर्तुंदेहाभावेभोगोपपत्तिंप्रतिपादयत्सूत्रंपठित्वादुर्गमांशंसप्रमाणकंव्याचष्टे ॥ तन्विति ॥ नतावद्देहाभावेभोगानुपपत्तिः ॥ यथाखलुस्वप्नावस्थायांबाह्यदेहाभिमानाभावेपिभोगस्तथा मुक्तौदेहाभावेपिभोगोपपत्तेः ॥ अनभिमानस्याभावसाम्यात् ॥ स्वाप्नार्थानामकल्पितत्वस्योक्तत्वादिति

संध्यंस्वप्नःसंध्यंतृतीयंस्वप्नस्थानमितिश्रुतेः ॥ १३ ॥ ब्रह्मवैवर्तेच ॥ स्वप्नस्थानांयथाभो

## ॥ ॐतन्वभावेसंध्यवदुपपत्तेः ॐ ॥ १३ ॥

## ॥ ॐ भावेजाग्रद्वत् ॐ ॥ १४ ॥

गोविनादेहेनयुज्यते॥ एवंमुक्तावपिभवेद्विनादेहेनभोजनम् ॥ स्वेच्छयावाशरीराणितेजो रूपाणिकानिचित् ॥ स्वीकृत्यजागरितवद्भुक्त्वात्यागःकदाचनेति ॥ १४ ॥

भावः ॥ १३ ॥ देहसद्भावेपिसुतरांभोगोपपत्तिरितिभावेनसूत्रमुपन्यस्यति ॥ भावइति ॥ यथाजाग्रदव स्थायांदेहसद्भावेभोगसंभवस्तथामुक्तावपिदेहसद्भावेभोगोपपत्तिरितिसूत्रार्थः ॥ वक्ष्यमाणदूषणनिरास प्रस्तावायेदंसूत्रम्॥ प्रतिदृष्टांतस्यापिवक्तुंशक्यत्वात्कुतएतदित्यतोऽत्रस्मृतिंचाह॥ब्रह्मवैवर्तेचेति ॥ १४ ॥

ननुदेहसद्भावेभोगोपपत्तावपिदुःखमप्याप्यतइत्युक्तमेवेत्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ प्रदीपव दिति ॥ नजडशरीरप्रवेशेपिदुःखानुभवप्राप्तिःकिंतुसाधूनेवभोगाननुभवंतिप्रदीपवद्देवेतिश्रुतिस्तुकर्मारब्ध

शरीरमनुविश्यापितत्प्रकाशयंतःपुण्यानेवभोगाननुभवंतिनदुःखादीन्॥
यथाप्रदीपोदीपकादिपुप्रविष्टस्तत्स्थतैलाद्येवभुंक्तेनतुतत्काण्यादि॥ ती

## ॥ ॐप्रदीपवदावेशस्तथाहिदर्शयति ॐ ॥ १५ ॥

र्णौ हितदासर्वान्शोकान्हृदयस्यभवतीतिहिदर्शयति ॥ १५ ॥

दहविषयेतिभावः ॥ तत्प्रकाशयंतस्तद्विवेकज्ञानवंतइत्यर्थइतिप्रदीपदृष्टांतग्रहणेविवक्षोच्यते ॥ ननुदेहस द्भावेपिकुतोमुक्तस्यदुःखाभावेदृष्टांतमात्रस्यासाधकत्वादित्यतआह॥तीर्णोहीति॥देहसद्भावस्तूक्तःश्रुतिसि द्धः ॥ दुःखाभावेप्यस्तिश्रुतिरतोनदेहमात्रंदुःखहेतुरितिसिद्धांतीतिभावः ॥ १५ ॥

ननुतीर्णोहीत्येतत्स्वर्गादिविषयंकिंनस्याद्बाधकाभावात् ॥ तथाचनमुक्तानामदुःखित्वेप्रमाणम् ॥ नच वाच्यंस्वर्गेकथंदुःखाभावइतिस्वर्गेलोकइत्यादिनास्वर्गेपिदुःखाभावसिद्धेरित्याशंकांपरिहरति ॥ नचेति॥ कुतोनवाच्यमितिपृच्छति ॥ यतइति ॥ यतश्चोदेतिसूर्यइतिवत्‌यतःशब्दःप्रश्ने ॥ तत्परिहारायसूत्रंप ठित्वाव्याचष्टे ॥ स्वाप्ययेति ॥ यतएतद्वाक्यंसुप्तिमुक्तिविषयएवपठ्यतेऽतोनवाच्यमित्यर्थः ॥ कुतोऽस्य

नचस्वर्गेलोकेनभयंकिंचनास्तीत्यादिनास्वर्गादिस्थस्यैतदितिवाच्यम्॥ यतः॥ सुप्तौमोक्षेवातदुच्य ते ॥ अत्रहपिताऽपिताभवत्यनन्वागतंपुण्येनानन्वागतंपापेनेत्याद्याविष्कृतत्वात् ॥ ब्रह्मवैवर्तेच ॥

## ॥ ॐस्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतंहि ॐ ॥ १६ ॥

ज्योतिर्मयेषुदेहेषुस्वेच्छयाविश्वमोक्षिणः॥ भुंजतेसुसुखान्येवनदुःखादीन्कदाचन॥ तीर्णाहिसर्व शोकांस्तेपुण्यपापादिवर्जिताः ॥ सर्वदोषनिवृत्तास्तेगुणमात्रस्वरूपिणइतिच ॥ १६ ॥ अ० ८ ॥

सुप्त्यादिविषयतेत्यत्रआह ॥ अत्रेति॥ अपितृत्वादिपुण्यपापाद्यसंगत्वादिलिंगश्रवणादस्यसुप्त्यादिविषयत्वं स्फुटंप्रतीयते ॥ स्वर्गस्थस्यश्राद्धादिभोक्तुस्तदसंभवादितिभावः ॥ अधिकरणार्थेस्मृतिमुदाहरति ॥ ब्रह्म वैवर्तेचेति ॥ विश्वमोक्षिणःसर्वमुक्ताः ॥ पुण्यपापादिवर्जिताः ॥ सर्वदोषनिवृत्ताइत्यनुवादः ॥ अतोमुक्ता नांनिर्दुःखभोगानुभवोयुक्तएवेत्युपपन्नंमोक्षस्यपुरुषार्थत्वमितिसिद्धम् ॥ १६ ॥ अ० ८ ॥

अत्रब्रह्मप्राप्तस्यमुक्तस्यभोगेइयत्तासमर्थनादस्तिशास्त्रा दिसंगतिः ॥ अन्यथाभगवतःसर्वोत्तमत्वाभावप्र
संगात्समर्थनीयमेतत्॥ प्रकृतामुक्ताएवात्रविषयः॥ जगत्सृष्ट्यादिव्यापारानाप्नुवंतिनवेतिसंदेहः॥तस्यब्रह्म
लक्षणत्वेनोक्तिर्मुक्तस्यसत्यकामत्वंचसंदेहबीजम् ॥ आप्नुवंतीतिपूर्वःपक्षः ॥ सर्वान्कामानाप्नोतिश्रुतेः ॥
सृष्ट्यादिव्यापारस्यापिकाम्यत्वात् ॥ नचसर्वशब्दस्यसंकोचः ॥ मुक्तस्यसत्यकामत्वेनकामितसमस्तप्रा

सर्वान्कामानाप्त्वाऽमृतःसमभवदित्युच्यते ॥ त

## ॥ॐ जगद्व्यापारवर्जम् ॐ ॥१७॥

त्रसृष्ट्यादिभ्योऽन्यान्व्यापारानाप्नोति॥१७॥

प्त्युपपत्तेःसंकोचेकारणाभावात् ॥ अन्यथोक्तसत्यकामत्वव्याघातात् ॥ अतोमुक्तानांजगज्जन्मादिकर्तृ
त्वादयुक्तंलक्षणसूत्रमिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ जगदिति ॥ नमुक्तानांजगद्व्यापारःकिंतुत
द्व्यतिरिक्तकामावाप्तिरेव ॥ सर्वान्कामानितिसर्वकामावाप्तिरुच्यतइतिचेत् ॥ सत्यम्॥ तत्रापिजगद्व्यापारव
र्जमेवसर्वान्कामानाप्नोतीत्यर्थोपपत्तिरित्यर्थः ॥ १७ ॥

कुत.श्रुतेःसंकोचइत्याक्षिपति ॥ कुतइति ॥ तत्परिहारायसूत्रंपठित्वाव्याचष्टे ॥ प्रकरणादिति ॥ युक्तएव सर्वश्रुतेःसंकोचः ॥ अत्रजीवस्योच्यमानत्वादस्यजीवप्रकरणत्वेनतदवगमाच्छरीरभेदादूर्ध्वंमुक्तंम्यतिश्रव

कुतः ॥ जीवप्रकरणत्वात् ॥ जीवानांतादृक्सामर्थ्यविदूरत्वाच्च ॥ वाराहे
च ॥ स्वाधिकानंदसंप्राप्तौसृष्ट्यादिव्यापृतिष्वपि ॥ मुक्तानांनैवकामः

## ॥ ॐ प्रकरणादसन्निहितत्वाच्च ॐ ॥ १८ ॥

स्यादन्यान्कामांस्तुभुंजते ॥ तद्योग्यतानैवतेषांकदाचित्क्वापिविद्यते ॥
नचायोग्यंविमुक्तोपिप्राप्नुयान्नचकामयेदिति ॥ १८॥

णाज्जीवानांचजगद्व्यापारशक्तिरहितत्वाद्बाधकवशात्सामान्यश्रुतेःसंकोचस्यन्यायप्राप्तत्वादितिभावः॥ त दयंप्रयोगः ॥ नमुक्तोजगद्व्यापारशक्तिमान् ॥ जीवत्वात् ॥ संप्रतिपन्नवदिति ॥ संसारिणांजगद्व्यापारश क्त्यभावेपिसत्यकामानांमुक्तानांतत्संभवइत्यतआह ॥ वाराहेचेति ॥ १८ ॥

मुक्तस्यजगदैश्वर्याभावमाक्षिप्यसमादधत्सूत्रमुपन्यस्याऽऽक्षेपांशंतावद्व्याचष्टे ॥ प्रत्यक्षेति॥ अस्त्येवमुक्तानांजगदैश्वर्यम ॥ तावाएतांश्चतस्रश्चतुर्धा चतस्रश्चतस्रोव्याहृतयः तायोवेद सवेदब्रह्म सर्वेस्मैदेवाबलिमावहंतीतिस्फुटंमुक्तस्याखिलदेवतापूज्यत्वादिश्रवणात्॥नचतदमुक्तविषयम ॥ अमुक्तज्ञानिनांतददर्शनादितिभावः॥परिहारांशंव्याचष्टे ॥नेति॥ नैतच्छ्रुतिबलेनाशेषमुक्तानांजगद्विषयैश्वर्यसिद्धिः॥मुक्तहिरण्यगर्भस्यै

तायोवेद सवेदब्रह्म सर्वेस्मैदेवाबलिमावहंतीतिप्रत्यक्षोपदेशाज्जगदैश्वर्यमप्यस्तीतिचेत्॥न॥आधिकारिकमंडलाधिपतिर्ब्रह्माहितत्रोच्यते॥गारुडेच॥आत्मेत्येवपरंदेवमुपास्यहरिमव्ययम॥केचिदत्रै

## ॥ ॐ प्रत्यक्षोपदेशादितिचेन्नाधिकारिकमंडलस्थोक्तेः ॐ ॥ १०॥

वमुच्यंतेनोत्क्रामंतिकदाचन ॥ अत्रैवचस्थितास्तेषामंतरिक्षेचकेचन॥ केचित्स्वर्गेमहर्लोकेजनेतपसिचापरे ॥ केचित्सत्येमहाज्ञानागच्छंतिक्षीरसागरम॥ तत्रापिक्रमयोगेनज्ञानाधिक्यात्समीपगाः॥

वमुक्ताधिकारिकदेवतापूज्यत्वाभिधायकत्वात् ॥ माहाचमस्यःप्रवेदयतइत्युपक्रमादितिभावः ॥ अन्यदेवानामपिमुक्तस्यावरप्रेरणाधिकारित्वमस्तीतिसूचनायाधिकारिकपदम ॥ ननुमुक्तानांदेवानांस्वावरमुक्तनियामकत्वंहिरण्यगर्भस्याशेषमुक्तनियामकत्वमित्येतत्कुतइतितत्रा ॥ गारुडेचेति ॥ नचानेनानंदादयःप्रधानस्येत्युक्तिविरोधः॥तदुपासनस्यसंपूर्णमोक्षार्थत्वात् ॥ अत्रनोत्क्रामंतीतिसंपूर्णमोक्षाभावोक्तेः॥

नचबहुनात्रकिमुक्तेनेत्युक्तिविरोधः ॥ सकृच्छ्वेतद्वीपगमनाभ्युपगमात् ॥ श्वेतंद्वीपंतथागत्वादृष्ट्वाविष्णुंचते
ततः ॥ अनुज्ञाताःप्रमोदंतेनिर्दुःखास्तुधरादिष्विति वचनाद्योग्यत्वंचात्रविवक्षितमित्येतदपितत्रावस्थाना

सालोक्यंचसरूपत्वंसामीप्यंयोगएवच ॥ इमामारभ्यसर्वत्रयावत्तुक्षीरसागरे ॥ पुरुषोऽनंत
शयनःश्रीमान्नारायणाभिधः ॥ मानुषावर्णभेदेनतथैवाऽऽश्रमभेदतः ॥ क्षितिपामनुष्यगंधर्वा
देवाश्चपितरश्चिराः ॥ आजानजाःकर्मजाश्चतात्त्विकाश्चशचीपतिः ॥ रुद्रोब्रह्मेतिक्रमशस्तेषुचै
वोत्तमोत्तमाः ॥ नित्यानंदेचभोगेचज्ञानैश्वर्यगुणेषुच ॥ सर्वेशतगुणोद्रिक्ताःपूर्वस्मादुत्तरोत्तरम् ॥
पूज्यंतेचावरैस्तेतुसर्वपूज्यश्चतुर्मुखः ॥ स्वजगद्व्यापृतिस्तेषांपूर्ववत्समुदीरिता ॥ सयुजःपरमात्मानं
प्रविश्यचबहिर्गताः ॥ चिद्रूपान्प्राकृतांश्चापिविनाभोगांश्चकांश्चन ॥ भुंजतेमुक्तिरेवंतेविस्पष्टं
समुदाहृतेति ॥ ११ ॥

येतिगमयितव्यम् ॥ भूम्यादिषुमुक्तस्थितौनमोक्षोऽयंस्यात् ॥ सालोक्यादिचातुर्विध्यानंतभावादित्यत
आह ॥ सालोक्यंचेति ॥ पृथ्वीमारभ्योक्तक्रमेणयावन्नारायणस्तावत्सर्वस्थानेष्वपिसालोक्याद्यस्त्येव ॥
ईश्वरस्यसर्वत्रावस्थितेरितिभावः ॥ मानुषाइत्यादितेषांतारतम्यकथनम् ॥ ११ ॥

ननुब्रह्मादिमुक्तानांमुक्तजगद्व्यापारएवकुतःअमुक्तविषयेऽपिकिंनस्यादित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ विकारेति ॥ चशब्देननेत्यनुषज्यते ॥ विकारावर्तिंसंसारमावर्तयतीतितद्विषयव्यापरणम् ॥ मानवायत्रावर्ततेसमानवावर्तःसंसारस्तन्नावर्ततेनावर्तयंतिनप्रवर्तयंतीत्यर्थः ॥ मुक्तदेवानाममुक्तविषयव्या

विकारावर्तिव्यापारोमुक्तानांनविद्यते ॥ इमंमानवमावर्तंनावर्ततइतिश्रुतिः ॥ वाराहेच ॥ स्वाधिकारेणवर्ततेदेवामुक्तावपिस्फुटम ॥ बलिंहरंति

॥ ॐ विकारावर्तिंचतथाहिदर्शयति ॐ ॥ २० ॥

मुक्तायविरिंचायचपूर्ववत् ॥ सब्रह्मकास्तुतेदेवाविष्णवेचविशेषतः ॥ न
विकाराधिकारस्तुमुक्तानामन्यएवतु ॥ विकाराधिकृताज्ञेयायेनियुक्ता
स्तुविष्णुनेति ॥ २० ॥ अ० १ ॥

पाराभावेसंसारावस्थानमेवनस्यात्प्रवर्तकाभावादित्याशंकांपरिहर्तुमुक्तार्थेस्मृतिंचाह ॥ वाराहेचेति ॥ अतोमुक्तानांजगद्व्यापाराभावाद्युक्तंलक्षणसूत्रमितिसिद्धम् ॥ २०॥ अ० १ ॥

अत्रब्रह्मप्राप्तानांमुक्तानांभोगादिनावृद्धिह्रासनिरासादस्तिशास्त्रादिसंगतिः॥ वृद्धिह्रासवत्त्वेसंसारसमानध र्मत्वापत्तेःकर्तव्यएवतन्निरासः॥ प्रकृतमुक्तएवविषयः॥ वृद्धिह्रासवान्नवेतिसंदेहः॥लोकदर्शनमलौकिक त्वंचसंदेहबीजम् ॥ अस्त्येवमुक्तस्याऽऽनंदादिवृद्ध्यादीतिपूर्वःपक्षः॥एतत्सामगायन्नास्तइत्यादिनातस्याप्यु

एतत्सामगायन्नास्तइत्युच्यते ॥ तत्राऽऽनंदादीनांवृद्धिर्ह्रासश्चनविद्यते ॥

एकप्रकारेणैवसर्वदास्थितिः ॥ सएषएतस्मिन्ब्रह्मणिसंपन्नोनजायतेन

॥ ॐ स्थितिमाहदर्शयतश्चैवंप्रत्यक्षानुमाने ॐ ॥ २१ ॥

म्रियतेनहीयतेनवर्धतेस्थितएवसदाभवतिदर्शन्नेवब्रह्मदर्शन्नेवाऽऽत्मानंत

स्यैवंदर्शतोनापत्तिर्नविपत्तिरित्याहजाबालश्रुतौ ॥ यत्रगत्वानम्रियते

यत्रगत्वानजायते ॥ नहीयतेयत्रगत्वायत्रगत्वानवर्धतइतिमोक्षधर्मे ॥

पासनादिश्रवणात् ॥ अन्यथातद्वैयर्थ्यात् ॥ भोगानांवृद्धिह्रासवत्त्वाच्च ॥ कारणानुगुणत्वात्कार्यस्य॥ किं चमुक्तस्यवशित्वेनकामिताशेषप्राप्तेर्युक्तासुखादिवृद्धिः ॥ नचनकामयतइतिवाच्यम् ॥ आनंदादिवृद्धेरि ष्टत्वेनाकामनानुपपत्तेः ॥ अतोमुक्तानामपिवृद्ध्यादिसद्भावात्संसारसमानधर्मत्वेनमुक्तेरपुरुषार्थत्वमिति॥ सिद्धांतयत्सूत्रमुपन्यस्यव्याचष्टे ॥ स्थितिमिति॥ यद्यप्येतत्सामगायन्नास्तइत्यादिनामुक्तस्यभगवदुपास

नमुच्यतेतथापिनतस्याऽऽनंदादिवृद्धिह्रासौ विद्येतेकिंत्वेकप्रकारेणैवावस्थानम् ॥ कुतः॥सएषइत्यादिश्रुतौ वृद्ध्याद्यभावमुक्तोपासनंसद्भावमाशंक्यदर्शन्नेवात्मानमित्युपासनवतोप्यापत्तिविपत्तिशब्दोदितवृद्धिह्रासनिषेधान्महतांप्रत्यक्षेणचवृद्ध्याद्यभावस्यसिद्धत्वात्॥मुक्तोनवृद्ध्यादिमान्॥ तत्कारणशून्यत्वादित्यनुमा

विद्वत्प्रत्यक्षात्कारणाभावलिंगाच्च ॥ ब्रह्मवैवर्तेच ॥नह्रासोनचवृद्धिर्वामुक्तानांविद्यतेक्वचित् ॥ विद्वत्प्रत्यक्षसिद्धत्वात्कारणाभावतोनुमा ॥ हरेरुपासनाचात्रसदैवसुखरूपिणी ॥ नतुसाधनभूतासासिद्धिरेवात्रसायतइति ॥ २१ ॥

नसिद्धत्वाच्चेत्यर्थः ॥ दर्शन्पश्यन्नुपासीनइत्यर्थः ॥ परप्रत्यक्षस्याप्रत्यक्षत्वात्कथंतेनास्माकमर्थसिद्धिरित्यतउक्तार्थेस्मृतिंचाह ॥ ब्रह्मवैवर्तेचेति ॥ भगवदुपासनस्यकारणस्यसद्भावात्कथंकारणाभावइत्यतआह ॥ हरेरिति ॥ मुक्तिगतोपासनस्यफलत्वान्नसुखसाधनत्वमित्यर्थः ॥ २१ ॥

नमुक्तानांवृद्ध्यादौकारणाभावोभोगविशेषसद्भावात् ॥ कारणाभावाभ्युपगमेचप्रामाणिकभोगविशेषवि रोधादित्याशंकांपरिहरत्सूत्रंपठित्वाव्याचष्टे ॥ भोगेति ॥ नमुक्तस्यवृद्ध्यादिकारणाभावाभ्युपगमे भोगविशेषश्रुत्यादिविरोधः ॥ मुक्तभोगविशेषस्यानंदादिवृद्ध्याद्यकारणत्वात् ॥ कुतः ॥ एतमानंदमयमि

नचभोगविशेषादिविरोधः ॥ एतमानंदमयमात्मानमनुप्रविश्यनजायतेनम्रियतेनह्रसते नवर्धतेयथाकामंचरतियथाकामंपिबतियथाकामंरमतेयथाकाममुपरमतेइतिभोगमात्र

## ॥ॐ भोगमात्रसाम्यलिंगाच्च ॐ ॥ २२ ॥

साम्यलिंगात् ॥ अवृद्धिह्रासरूपत्वंमुक्तानांप्रायिकंभवेत् ॥ कादाचित्कविशेषस्तुनैवते षांनिषिध्यतइतिचकौर्मे ॥

तिश्रुतौमुक्तस्यवृद्ध्याद्यभावमुक्त्वाभोगभावाभावावुच्येते ॥ इदंचभोगमात्रस्यविशेषेसत्यपिमुक्तस्यसा म्यमेवनभोगविशेषः ॥ तद्वृद्ध्यादौकारणमित्यत्रलिंगमन्यथानुपपत्तिरितिभावः ॥ ननुयदिभोगो नवृद्धिहेतुस्तर्हिव्यर्थोऽसौकिमितितैःक्रियतइत्यत्रक्रीडयेतिपरिहारेस्थितेविशेषंचाह ॥ अवृद्धीति ॥

एतदेवस्मृत्यंतरेणविवृणोति ॥ प्रवाहतइति ॥ नचवशित्वाद्वृद्धिरितिवाच्यम् ॥ साकियोग्यस्यायोग्यस्यवा॥नाद्यः ॥ तस्यप्राप्तत्वात् ॥ नद्वितीयः ॥ नह्ययोग्यंविमुक्तोपिप्राप्नुयान्नचकामयेदित्ययोग्यकामनिषेधात् ॥ अतोमुक्तानांवृद्ध्याद्यभावेननसंसारसमानधर्मतामुक्तेरितिसिद्धम् ॥ २२ ॥ अ० १०

प्रवाहतस्तुवृद्धिर्वाह्रासोवानैवकुत्रचित् ॥ नाप्रियंकिंचिदपितुमुक्तानांविद्यते
क्वचित् ॥ कुतएवतुदुःखंस्यात्सुखमेवसदोदितम् ॥ भोगानांतुविशेषेतुवै
चित्र्यंलभतेक्वचिदितिनारायणतंत्रे ॥ २२ ॥ अ० १० ॥

अत्रब्रह्मप्राप्यभोगान्भुंजानस्यमुक्तस्यापुनरावृत्तिसमर्थनादस्तिशास्त्रादिसंगतिः ॥ प्रकृतोमुक्तएवात्रविषयः ॥ किंतस्यपुनरावृत्तिरस्तिनवेतिसंदेहः ॥ उभयथासंभवःसंदेहबीजम् ॥ अस्तिमुक्तस्यपुनरावृत्तिरितिपूर्वःपक्षः ॥ स्वर्गादिगतानांपुनरावृत्तिदर्शनात् ॥नचस्वर्गादिगतानांयुगमन्वंतरादिमात्रवासित्वाद्युक्तापुनरावृत्तिर्नमुक्तस्यतस्यसमस्तकालवासित्वादितिवाच्यम् ॥ समस्तस्यापिकदाचित्समाप्तिसंभवात् ॥

नचकालस्याऽनंत्वात्ततमाप्त्ययोगः ॥ भारतयुद्धेत्रयोदश्याएवपंचदशीत्वदर्शनात् ॥ तत्रतिथित्रयस्ययुग
पत्समाप्तिवदनंतत्वेपिकालस्यसमस्तस्यापियुगपत्समाप्तिसंभवात् ॥ अतोमुक्तौपुनरावृत्तिसद्भावादपुरुषा
र्थतामुक्तेरिति ॥ सिद्धांतयत्सूत्रमुपन्यस्यतदुपात्तश्रुतीरेवोदाहरति॥अनावृत्तिरिति ॥ नमुक्तस्यपुनराव

नचपुनरावर्ततेनचपुनरावर्ततेसर्वान्कामानाप्त्वाअमृतःसमभवत्समभव



## ॥ ॐ अनावृत्तिःशब्दादनावृत्तिःशब्दात् ॐ ॥ २३ ॥

दित्यादिश्रुतिभ्यः ॥ २३ ॥ अ० ११ ॥

त्तिः ॥ नचपुनरावर्ततइतिश्रुतेः ॥ किंचमुक्तस्यसर्वकामावाप्तिःश्रूयते ॥ सर्वान्कामानिति ॥ ततश्चनतस्य
पुनरावृत्तिः ॥ नहिकश्चिच्छुभात्पुनरावृत्तिकामोऽस्तीतिभावः ॥ समस्तकालसमाप्तिस्तुव्याहतत्वादुपेक्ष
णीयैव ॥ समस्तशास्त्रावधारणार्थासूत्रस्यैवद्विरुक्तिः ॥ अतोमुक्तानांपुनरावृत्त्यभावाद्युक्तंमुक्तेःपुरुषार्थ
त्वमितिसिद्धम् ॥ २३ ॥ अ० ११ ॥

तदेवंविरक्तिभक्त्युपास्तिजनितभगवत्साक्षात्कारोदिततत्प्रसादादशेषपुरुषार्थप्रवरकैवल्यसिद्धेरशेषगुणपूर्णतयानिर्दोषतयाचभगवान्नारायणोजिज्ञास्यइत्यशेषमतिमंगलम् ॥ अथायंभाष्यकारोयंगुणगणार्णवतयाप्रतिपादितवान् ॥ यच्छिष्यतयाचैतादृशीमतिविशदांसंविदंलब्धवान् ॥ यस्मिश्चात्मनोनिरुपाधिक

ज्ञानानंदादिभिःसर्वैर्गुणैःपूर्णायविष्णवे ॥ नमोऽस्तुगुरवेनित्यंसर्वथाऽति
प्रियायमे ॥ १ ॥ यस्यत्रीण्युदितानिवेदवचनेरूपाणिदिव्यान्यलंबट्तद्द
र्शनमित्थमेवनिहितंदेवस्यभर्गोमहत् ॥ वायोरामवचोनयंप्रथमकंपृक्षो
द्वितीयंवपुर्मध्वोयत्तुतृतीयकंकृतमिदंभाष्यंहरौतेनहि॥२॥ नित्यानंदोह
रिःपूर्णोनित्यदाप्रीयतांमम ॥ नमस्तस्मैनमस्तस्मैनमस्तस्मैचविष्णवे॥३॥
इतीश्रीमत्कृष्णद्वैपायनकृतब्रह्मसूत्रभाष्येश्रीमदानंदतीर्थभगवत्पादा
चार्यविरचितेचतुर्थाध्यायस्यचतुर्थःपादः ॥ ४ ॥ ॥ ॥ ॥

प्रीतिस्तमेवदेवतात्वेनगुरुत्वेनचांतेपिनमति ॥ ज्ञानेति॥१॥अथस्वभाषितभाष्यस्याप्तमूलत्वसमर्थनायश्रुतिप्रसिद्धंस्वस्यपरमाप्तत्वंदर्शयन्नाह ॥ यस्येति ॥ यस्यवायोर्देवस्यबलित्थेत्यादिवेदवचनेक्रीडादिगुणयु

क्तानित्रीणिरूपाण्युदितानितस्ययत्तृतीयंरूपंतेनेदंभाष्यंहरिविषयतयाकृतमित्यन्वयः ॥ कीदृशंचास्यमु
लरूपंकानिचत्रीणिरूपाणिकीदृशानीतितत्राह ॥ अलमिति ॥ यदस्यवायोर्मूलरूपंबट्बलात्मकंदर्शनंज्ञा
नरूपंभर्गोजगद्धरणगमनगुणंमहन्महनीयंतदित्थंभूतमेवरूपत्रयावताराय भगवतानिहितंप्रेरितमवतीर्णंच ॥
तत्रप्रथमंहनुमदाख्यंवपुःरामस्यवचांसिसीतांप्रतिनीतवतूरामविषयवचांसिमूलरामायणरूपाणिशिष्येषु
नीतवतूरामवचसियोनयोन्यायःआज्ञारूपस्तद्युक्तंवा ॥ द्वितीयंवपुर्भीमनामकंकुरुपृतनाक्षयकरम् ॥ तृती
यंतुवपुरानंदरूपस्यहरेःप्रतिपादकशास्त्रनिर्मातृमध्वाभिधमिति ॥ अतःपरमाप्ततमप्रणीतत्वादिदंभाष्यंसक
लसुजनैरादरेणांगीकार्यमितिभावः॥२॥३॥ उत्पत्तिस्थितिसंहृतिप्रभृतयोभावाभवंत्याज्ञयापद्मापद्मभवा
दिसर्वजगतोऽव्यस्तास्समस्तास्सदा ॥ यस्यागण्यगुणाकरस्यकरुणापीयूषवारांनिधेःसोयंदूरनिरस्तदोषनि
करःप्रीतोऽस्तुनारायणः॥१॥ अगाधबोधैर्विवृतातिभावभाष्यानुवादेननमेपराधः ॥ नहींदिराराध्यपदोमुकुं
दोदूर्वांकुरैर्मंदधनैरपूज्यः ॥ २ ॥ मध्वदुग्धाब्धिसंभूतभाष्येंदूदितकौमुदी ॥ भूयात्सत्कुमुदानंददात्रीतत्त्वप्र
काशिका ॥३ ॥ इतिश्रीमदानंदतीर्थभगवत्पादाचार्यविरचितश्रीमद्ब्रह्मसूत्रभाष्यस्यटीकायांश्रीमज्जयती
र्थमुनिविरचितायांतत्त्वप्रकाशिकायांचतुर्थाध्यायस्यचतुर्थःपादः ॥ ४ ॥

इदंपुस्तकं

सूरिवरैर्वैराजक्षेत्रनिवासिभिरैनापुरेइत्युपाभिधैर्भिकाचार्यैरष्टपुत्रेइत्युपाभिधैरनंताचार्यैश्चशोधितं.

लक्ष्मीनारायणचरणाब्जसेवापरःकशाळीकरोपनामारामकृष्णात्मजानंतशर्मा

मुंबय्यां

गणपतकृष्णाजीमुद्रायंत्रालयेतदध्यक्षेणात्मारामकान्होबाभिख्येनांचकत्.

समाप्तंचेदमंकनंबाणरंध्रवसुभू १८०५ मितेसुभानुनाम्निवत्सरेज्येष्ठेमासे.

